श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ नमस्तस्मैगणेशायब्रह्मविद्याप्रदायिने ॥ यस्यागस्त्यायतेनामविघ्नसागरशोषणे १ ऋषय
ऊचुः ॥ ॥ सूतसूतमहाप्राज्ञवेदशास्त्रविशारद ॥ सर्वविद्यानिधेत्वत्तोवक्तान्योनोपलभ्यते १ जन्मजन्मांतरीयंनःस्थितंपुण्यंमहत्तरम् ॥ तेनसंदर्शनंजातंसर्व
ज्ञस्यसतस्तव २ वयंधन्यतमालोकेजीवितंनसुजीवितम् ॥ पितरोवेदशास्त्राणितपांस्याश्रमएवच ३ अष्टादशपुराणानिविस्तराच्छ्राविताानिनः ॥ अन्यान्यपिहि
नःश्रोतुमिच्छानोवदसत्तम ४ शौनकेयमहासत्रेसक्ताद्वादशवार्षिके ॥ त्वत्कथामृतपानान्नोनान्यद्विश्रामकारणम् ५ ॥ सूतउवाच ॥ ॥ साधुपृष्टंमहाभागाभ
वाद्भिःपुण्यकर्मभिः ॥ साधूनांसमचित्तानांमतिर्लोकोपकारिणी ६ ममापिपरितोषोस्तिकथानांकथनेद्विजाः ॥ अतोहंसाधुवृत्तेभ्यःकथयिष्येविशेषतः ७ अ
न्यान्युपपुराणानिवर्ततेष्टादशैवच ॥ गाणेशंनारदीयंचनृसिंहादीन्यथापिच ८ गणेशस्यपुराणंयत्तत्रादौकथयाम्यहम् ॥ दुर्लभंश्रवणंयस्यमर्त्यलोकेविशेष
तः ९ यस्यस्मरणमात्रेणकृतकृत्योभवेन्नरः ॥ प्रभावमस्यगदितुंनेशःशेषश्चतुर्मुखः १० संक्षेपतोब्रवीम्येतत्तथापिभवदाज्ञया ॥ बहुजन्मार्जितैःपुण्यैरस्यतु
श्रवणंभवेत् ११ पाखंडिनांनास्तिकानांनभवेत्पापकर्मिणाम् ॥ नित्यत्वान्निर्गुणत्वाच्चअनादित्वाच्चतत्त्वतः १२ गणेशस्यस्वरूपंनवक्तुंकेनापिशक्यते ॥ तथाप्युपा
सनासक्तैर्निर्गुणंतन्निरूप्यते १३ ॐकाररूपीभगवान्योवेदादौप्रतिष्ठितः ॥ यंसदामुनयोदेवाःस्मरंतींद्रादयोहृदि १४ यंपूजयंतिसततंब्रह्मेशानेंद्रविष्णवः ॥ यो
हेतुःसर्वजगतांसर्वकारणकारणम् १५ यदाज्ञयाकःसृजतेर्थविष्णुर्यदाज्ञयापालनमातनोति ॥ यदाज्ञयासंहरतेहरोपियदाज्ञयासंचरतेदिनेशः १६ यदाज्ञया
वातिसमीरणोपियदाज्ञयापःप्रवहंतिदिक्षु ॥ यदाज्ञयाभानिपतंतिभूमौयदाज्ञयाग्निर्ज्वलतित्रिलोके १७ तस्यैयच्चरितंगुप्तंकस्यापिननिवेदितम् ॥ तदहंवःप्रव
क्ष्यामिसादरंश्रूयतांद्विजाः १८ ब्रह्मणाकथितंपूर्वंव्यासायामिततेजसे ॥ भृगवेकथितंतेनसोमकांतायतेनच १९ व्रतैर्यज्ञैस्तपोभिश्चदानैस्तीर्थैश्चकोटयः ॥
भवंतियेषांपुण्यानांतेषांबुद्धिःप्रजायते २० गणेशाख्यपुराणस्यश्रवणेद्विजसत्तमाः ॥ मायायेषांनसंसारेनदारापत्यभूमिषु २१ मयूरेशकथायांतेसादरामुनि
सत्तमाः ॥ श्रूयतामस्यमहिमासोमकांतप्रसंगतः २२ सौराष्ट्रेदेवनगरेसोमकांतोभवन्नृपः ॥ वेदशास्त्रार्थतत्त्वज्ञोधर्मशास्त्रार्थतत्परः २३ दशनागसहस्राणि
हयानांद्विगुणानिच ॥ रथिनांषट्सहस्राणिप्रयांतमनुयांतिच २४ पदातयोप्यसंख्याताअग्निशस्त्रधरास्तथा ॥ कोदंडधारिणश्चान्येनिषंगद्वयधारिणः २५
बुद्ध्याबृहस्पतिंजिग्येसंपदाधनदंचयः ॥ क्षमयापृथिवींजिग्येगांभीर्येणमहोदधिम् २६ सूर्याचंद्रमसौजिग्येभासाकांत्याचयोनृपः ॥ प्रतापेनानलंजिग्येसौंदर्ये
णमनोभवम् २७ यस्यामात्याःप्रबलिनःपंचासन्दृढविक्रमाः ॥ नीतिशास्त्रार्थतत्त्वज्ञाःपरराष्ट्रविमर्दिनः २८ रूपवान्प्रथमस्तत्रविद्याधीशस्तथापरः ॥ क्षेमं
करोज्ञानगम्यःसुबलःपंचमःस्मृतः २९ राजकार्यकरानित्यंराज्ञःप्रियतमाभृशम् ॥ एतैर्नानाविधादेशाआक्रांताःस्वपराक्रमात् ३० एतेतिसुंदरानानाभूषावस्त्रै

१ इच्छास्ति द्विजसत्तम। २ सक्तैःसगुणं तन्निरूप्यते इतिपाठान्तरम्। ३ कःब्रह्मा। ४ यस्यपचार्हंतोगुप्तमितिपाठान्तरम्। ५ मनोयशामित्यपिपाठः। ६ प्रतापेननलमितिवापाठः।

रलंकृता: ॥ तस्यराज्ञोभवद्भार्यासुधर्मागुणशालिनी ३१ यद्रूपमवलोक्यैवरतिरंभातिलोत्तमाः ॥ लज्जितानसुखंक्वापिलेभिरेनचमानर ३२ अनेकरत्नखचितेता
टंककांचनेशुभे ॥ बिभ्रतीकर्णयोःकंठेनिष्कंमुक्ताफलानिच ३३ कटौरत्नमयींकांचींताटृशेनूपुरेंघ्रिगे ॥ अंगुलीयान्युत्तमानिकरपादांगुलीषुच ३४ वासांस्यनेक
वर्णानिमहार्हाणिसहस्रशः ॥ भगवद्भजनेसक्तातथाचातिथिपूजने ३५ सेवनेहर्निशंभर्तुर्वचनेचरतासदा ॥ हेमकंठइतिख्यातःपुत्रोभूदनयोःशुभः ३६ गजायुतब
लोधीमान्विक्रमीशत्रुतापनः ॥ एवमासीत्सोमकांतःपृथिव्यांराजसत्तमः ३७सर्वान्राज्ञोवशेकृत्वाचक्रेराज्यंधरातले ॥ नित्यंधर्मरतोयज्वादातात्यागीद्विजोत्तमाः
३८ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेसोमकांतवर्णनंनामप्रथमोऽध्यायः ॥ १ ॥ ॥ सूतउवाच ॥ श्रूयतामृषयःसर्वेसोमकांतस्यदुष्कृतम् ॥ अकस्मादभवत्तस्यग
लत्कुष्ठोतिदुःखदः १ (धर्मशीलस्यराज्ञोथपूर्वकर्मविपाकतः ॥ शुभंवाप्यशुभंकर्मनमुंचतिनरंक्वचित् २ ) यस्यांयस्यामवस्थायांकृतंभवतिकर्मयत् ॥ तस्यांत
स्यामवस्थायांभुज्यतेप्राणिभिर्ध्रुवम् ३ दुःखसागरमग्नोभूदप्लवोजलधौयथा ॥ वेदनामलभद्बह्वींभुजंगेनेवदंशितः ४ नानाक्षतसमाकीर्णःस्रवद्रक्तइतस्ततः ॥ पू
यशोणितवान्राजाकृमिभिर्विह्वलीकृतः ॥ अस्थिशेषोभवद्राजायक्ष्मणेवसमावृतः ५ चिंतयाव्याकुलीभूतःसर्वेंद्रियरुजान्वितः ॥ ततोमात्यान्गौराजामनःसंरु
ध्यप्रयत्नतः ६ ॥ राजोवाच ॥ धिङ्मेराज्यंचरूपंचधिग्बलंजीवितंधनम् ॥ केनेदंकर्मबीजेनव्यसनंसमुपस्थितम् ७ कांत्यासोमोजितोयेनसोमकांतस्ततोभवम् ॥
येनमेसाधवोदीनाःश्रोत्रियाआश्रमाअपि ८ पालिताःपुत्रवज्जानपदालोकास्तथापरे ॥ येनमेनिर्जिताबाणैःशत्रवोघोररूपिणः ९ येनमेसकलापृथ्वीकृतास्वव
शवर्तिनी ॥ सम्यगाराधितोदेवःपरमात्मासदाशिवः १० दुष्टसंगमहीनेनचित्तनिग्रहकारिणा ॥ येनमेवपुषापूर्वमिष्टगंधानिषेविताः ११ तदिदानींपूतिगंधमतो
मेजीवितंवृथा ॥ अतोहंकाननंयास्येसर्वेषामभ्यनुज्ञया १२ हेमकंठंसुतंसर्वेबुद्धिविक्रमसंयुतम् ॥ सिंचंतुराज्यहेतोर्मेपालयंतुपराक्रमैः १३ इदानींनप्रदर्शिष्येमु
खंलोकेकथंचन ॥ नमेराज्यैर्नदारैर्वाजीवितेनश्रियापिवा १४ प्रयोजनंमहामात्याःकरिष्येस्वहितंवने ॥ सूतउवाच ॥ इत्युक्त्वानिपपातोर्व्यांतरुर्वातहतोयथा ॥
१५ पूयशोणितधर्मैर्वैर्व्याप्तोसौद्विजसत्तमाः ॥ कोलाहलोमहानासीदमात्यानांचयोषिताम् १६ हाहाकारश्चलोकानांक्षणमासीत्सुदारुणः ॥ वस्त्रप्रोंछनवाता
द्यैरौषधैःक्षिप्रकारिभिः १७ मंत्रिमंत्रप्रयोगैस्तंसचेतनमकारयन् ॥ स्वस्थेजातेनृपेतस्मिन्नमात्याःप्राब्रुवन्निदम् १८ ॥ अमात्याऊचुः ॥ तवप्रसादादमरेंद्रतुल्यंभु
क्तंसुखंसर्वजनेष्वसिद्धम् ॥ कथंत्विदानींत्वदृतेवसामःकथंचजीवेमपशुप्रतुल्याः १९ करोतुराज्यंतवसूनुरेकःप्रभूतकोशोबलवान्रिपुघ्नः ॥ विहायसर्वंसुखमध्वरा
न्सहैवयामस्तुवनायगंतुम् २० ॥ सूतउवाच ॥ ॥ ततःसुधर्मावचनंजगादवनेनृपंसेवितुमेकवीरा ॥ व्रजेसहानेनप्रधानवर्याप्रशिष्टराज्यंसहमेसुतेन २१
दुःखस्यभोक्तानपरोस्तिनैवसुखस्यवापूर्वकृतस्यजंतोः ॥ यथायथाकर्मफलंप्रसक्तंतदेवभोग्यंस्वयमेवताटृक् २२ मयापिनानाविधभोगवत्यासुखेनराज्यंप

१ भगवद्भजन दानेसक्ता इति पाठान्तरम् ॥ २ त्वरिता इति वा पाठः ॥ ३ नायंश्लोको लिखितपुस्तके ॥ ४ सन्तःसंन्यासिनोपिच इति पा० ॥ ५ अभिषेकं कुर्वन्तु इत्यर्थः

रिभुक्तमस्य ॥ स्त्रीणांहिभर्तागमनंसहैवपरत्रलोकेमुनिभिःप्रदिष्टम् २३ ततःपुत्रोहेमकंठोविनीतःशोकसंकुलः ॥ उवाचतस्मिन्समयेसोमकांतमिदंवचः २४ हे
मकंठउवाच ॥ नमेराज्येनदारैश्चप्राणैर्धनचयैरपि ॥ त्वांविनान्नृपशार्दूलकृत्यंनैवास्तियत्किंचित् २५ यथास्नेहंविनादीपोविनाप्राणंयथातनुः ॥ तथारा
ज्यंतथाराजंस्त्वांविनाधर्मपालक २६ ॥ सूतउवाच ॥ श्रुत्वाहृष्टमनाराजापुत्रंप्रोवाचधर्मतः ॥ अमात्यानांसुधर्मायाःपुत्रस्यवचनामृतम् २७ ॥ राजोवाच ॥
पितुर्वाक्यरतोनित्यंश्रद्धयाश्राद्धकृत्तथा ॥ पिंडदोयोगयायांतुसपुत्रःपुत्रउच्यते २८ अतोनीत्यासमायुक्तःकुरुराज्यंममाज्ञया ॥ अमात्ययुक्तःशाधित्वंपु
त्रवच्चाखिलाःप्रजाः २९ धर्मशास्त्रार्थतत्त्वज्ञोनीतिज्ञोखिलतोषकृत् ॥ पितॄनुद्धरतेयस्तुपुत्रवान्पुत्रउच्यते ३० अहंवनंगमिष्यामिगलत्कुष्ठोऽतिगर्हितः ॥
पत्न्यासुधर्मयासार्धमनुजानीहिसुव्रत ३१ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेद्वितीयोध्यायः ॥ २ ॥ सूतउवाच ॥ ततउत्थायराजासगृहीत्वादक्षिणेकरे ॥
पुत्रंविवेशहर्म्याग्र्यंयत्रमंत्रयतेसदा १ यत्रसिंहासनंदिव्यंकांचनंबहुरत्नयुक् ॥ मुक्ताप्रवालखचितंभातिशक्रपदंयथा २ तत्रासतुःपितापुत्रौभातोद्वावप्यनेक
धा ॥ प्रतिरत्नंगतौयस्मात्समुदायवृतावपि ३ आचारंप्रथमंप्राहनीतिंनानाविधांनृपः ॥ पुत्रायकरुणायुक्तोयशसेस्वकुलस्यच ४ ॥ सोमकांतउवाच ॥
याममात्रावशिष्टायांनिशायांजागृतःपुमान् ॥ त्यक्त्वाशय्यांशुचिस्थानेउपविश्यगुरुंस्मरेत् ५ देवतांचिंतयित्वेष्टांप्रणमेत्स्तुतिपूर्वकम् ॥ प्रार्थ्यपृथ्वींक्ष
मस्वेतिपादस्पर्शंजगन्मये ६ प्रातर्नमामिगणनाथमशेषहेतुंब्रह्मादिदेववरदंसकलागमाढ्यम् ॥ धर्मार्थकामफलदंजनमोक्षहेतुंवाचामगोचरमनादिमनंतरू
पम् ७ प्रातर्नमामिकमलापतिमुग्रवीर्यंनानावतारनिरतंनिजरक्षणाय ॥ क्षीराब्धिवासममराधिपबंधुमीशंपापापहंरिपुहरंभवमुक्तिहेतुम् ८ प्रातर्नमामिगि
रिजापतिमिंदुमौलिंव्याघ्राजिनावृतमुदस्तदयंमनोजे ॥ नारायणेंद्रवरदंसुरसिद्धजुष्टंसर्पास्त्रिशूलडमरूंदधतंपुरारिम् ९ प्रातर्नमामिदिननाथमपापहारंगाढां
धकारहरमुत्तमलोकवंद्यम् ॥ वेदत्रयात्मकमुदस्तसुरारिमायंज्ञानैकहेतुमुरुशक्तिमुदारभावम् १० प्रातर्नमामिगिरिजांभवभूतिहेतुंसंसारसिंधुपरपारकरींत्रि
नेत्राम् ॥ तत्त्वादिकारणमुदस्तसुरारिमायांमायामयींसुरमुनींद्रनुतांसुरेशीम् ११ एवमन्यांश्चसंस्मृत्यदेवान्मुनिगणांस्तथा ॥ मानसैरुपचारैश्चपूजयित्वाक्षमाप
येत् १२ ततोगच्छेत्सोदपात्रोग्रामस्यनैर्ऋतींदिशम् ॥ मृदंगृहीत्वासुश्वेतांब्राह्मणःक्षत्रियोरुणाम् १३ वैश्यशूद्रौतथाश्यामांननदीतीरतःखनेत् ॥ नोर्वराया
नवल्मीकाद्ब्राह्मणागारतःक्वचित् १४ तृणादिनाच्छादयित्वाधरांमूत्रपुरीषयोः ॥ कृत्वोत्सर्गंदिवारात्रावुदग्दक्षिणदिङ्मुखः १५ आदौगुदंप्रमृज्यैवतृणका
ष्ठादिनानरः ॥ पंचवारंमृदाद्भिश्चक्षालयेत्तदनंतरम् १६ दशवारंवामहस्तंसमवारमुभौकरौ ॥ लिंगंतथैकवारंतुवामहस्तंत्रिवारतः १७ मूत्रोत्सर्गेक्षालयी
तद्धौकरौचद्विवारतः ॥ पादौसदैकवारंतुगृहस्थस्यैवमीरितम् १८ व्रतवान्द्विगुणंकुर्यात्त्रिगुणंवनगोचरः ॥ यतिश्चतुर्गुणंकुर्याद्रात्रावर्धंतुमौनवान् १९

१ गृहेत् इतिपाठे आर्षम् ।

अर्धंपादंदिवारात्रौशौचंस्त्रीशूद्रएवच ॥ ततआचम्यकाष्ठंतुक्षीरकंटकवृक्षयोः २० गृहीत्वाप्रार्थनापूर्वंदंताञ्जिह्वांविशोधयेत् ॥ बलमोजोयशस्ते
जःपशुबुद्धिधनानिच २१ मेधांब्रह्मधियंचैवत्वंमेदेहिवनस्पते ॥ ततःशीतजलैःस्नानंकृत्वामलहरंपुरा २२ ततोमंत्रैश्चगृह्योक्तैःसंध्योपास्तिंततश्चरेत् ॥
जपंहोमंचस्वाध्यायंतर्पणंदेवपूजनम् २३ वैश्वदेवंतथातिथ्यंभोजनंद्विजसाक्षिकम् ॥ पुराणश्रवणंदानंपरनिंदाविवर्जनम् २४ परोपकारंकुर्याच्चद्रव्य
प्राणवचोमृतैः ॥ परापकारंनोकुर्यादात्मस्तवनमेवच २५ गुरुद्रोहंवेदनिंदांनास्तिक्यंपापसेवनम् ॥ अभक्ष्यभक्षणंचैवपरदारनिषेवणम् २६ स्वदारवर्जनंचै
वकुर्याद्दतुगतिंचरेत् ॥ मातापितृगुरूणांचगवांशुश्रूषणंसदा २७ दीनांधकृपणेभ्यश्चदद्यादन्नंसवस्त्रकम् ॥ प्राणात्ययेपिसत्यस्यत्यागंनैवसमाचरेत् २८
ईश्वरानुग्रहोयेषांसाधूनांचप्रपालनम् ॥ अपराधानुसारेणधर्मशास्त्रंविलोक्यच२९पृष्ट्वावापंडितान्दंडंकुर्यान्नीतिविशारदः ॥ विश्वासोयस्यनैवस्यात्तत्रनोविश्व
सेत्क्वचित् ३० विश्वस्तेत्यंतविश्वासोनकर्तव्योबुभूषता ॥ कृतवैरेथविश्वस्तेकदापिनचविश्वसेत् ३१ षड्गुणानांप्रयोगेणवर्धयेद्राष्ट्रमात्मनः ॥ दानंस्वश
क्त्याकुर्वीतक्षीणतामन्यथाव्रजेत् ३२ परेत्याकुलितेयानमधमंपरिचक्षते ॥ चारदृष्टिर्दूतवक्त्रउद्यद्दंडोनृपोभवेत् ३३ दंडस्यैवभयाल्लोकाःस्वेस्वेधर्मेव्यवस्थि
ताः ॥ अन्यथानियमोनस्यात्पारक्यंस्वीयमित्यदः ३४ अधमोयदिनिंदेतस्तुवीतयदिवाक्वचित् ॥ नक्रुद्धेन्नचतुष्येत्त्रकिंतयाचिंतयापिच३५पूर्वापकारीयदिच
पुनर्वाशरणंव्रजेत् ॥ पूर्वंचधनिकोयःस्यात्परिपाल्यःसदैवहि ३६ मंत्रगुप्तिःसदाकार्यातन्मूलंराज्यमुच्यते ॥ कामादिषड्रिपून्हित्वाततोन्यान्विजयीतच ॥
३७ वृत्तिच्छेदंप्रजोच्छेदंदेवतोच्छेदमेवच ॥ आरामचैत्ययोश्छेदंनकुर्यान्नृपसत्तमः ३८ पर्वकालेददेद्दानंयशसेत्यागमेवच ॥ नमित्रवंचनांकुर्यात्स्त्रीषु
गोप्यंवदेन्नच ३९ ऋणतोब्राह्मणंचैवपंकतोगांसमुद्धरेत् ॥ अनृतंनवदेत्क्वापिसत्यंक्वापिनहापयेत् ४० अमात्यानांप्रजानांचभृत्यानांचित्तहृद्भवेत् ॥ ब्रा
ह्मणेभ्योनमस्कुर्याद्देवताभ्यःसदैवच ४१ ॥ ॥ सूतउवाच ॥ ॥ इत्यन्यदपिशिक्षाप्यहेमकंठंसुतंनृपः ॥ आचारंसहधर्मेणनीतिशास्त्रंयथाश्रुतम् ४२
क्षेमंकररूपवंतंविद्याधीशंतथैवच ॥ आह्वयामासचामात्यान्सुमुहूर्तेविलोक्यच ४३ संभारानुपकल्प्यैवनानास्थानगतान्नृपः ॥ ब्राह्मणान्वेदविदुषोयज्ञकर्म
सुनिष्ठितान् ४४ राज्ञोथमहतोराजपत्नीश्चसुहृदःस्वकान् ॥ आह्वयामासनृपतिःश्रेणीमुख्यांश्चनागरान् ४५ अभिषेकावलोकायपुत्रस्यरिपुघातिनः ॥ गणेशंपू
जयित्वेष्टदेवतांचयथाविधि ४६ वाचयित्वास्वस्त्ययनंमातृपूजनपूर्वकम् ॥ कृत्वाभ्युदयिकंश्राद्धंब्राह्मणांस्तर्प्यचांधसा ४७ कारयित्वामंत्रघोषैरभिषेकंसुतस्य
सः ॥ उवाचसोमकांतस्त्रीन्मंत्रिमुख्यानिदंवचः ४८ ॥ राजोवाच ॥ ममायंसुतइत्येवममात्याबुद्धिरस्तुवः ॥ भवतामेवहस्तेषुसुतएषनिरूपितः ४९ ममानुशा
सनंयद्वत्कृतंनीतिविशारदैः ॥ तथास्यशासनंकार्यंश्रेणीमुख्यसमन्वितैः ५० इतिश्रीगणेशपुराणेउपासनाखंडेआचारादिनिरूपणंनामतृतीयोध्यायः ॥ ३ ॥

१ कृतवैरेप्यविश्वस्ते इ०पाठान्तरम् २ परेत्याकुलितमानमिति पाठान्तरम् ३ कितया किंतयापिचेतिपाठान्तरम् ४।

॥ सूतउवाच ॥ [illegible] गासौचकारद्विजपूजनम् ॥ मणिमुक्ताप्रवालानिददौसांगंगवायुतम् १ तोषयामाससर्वांस्तान्गजगोश्वधनांशुकैः ॥ नाना
देश्यानिवासांसिसुवांच [illegible] २ नानावर्णानिकाश्मीरदेशजानिमहांतिच ॥ राजभ्योराजपत्नीभ्योग्राममुख्येभ्यएवच ३ तद्भृत्येभ्योगुणिभ्यश्चददौरा
जायथार्हतः ॥ अमा [illegible] जा [illegible] ददावन्यान्ग्रामान्बहुधनान्यपि ४ ततोवनंययौराजादुःखशोकसमन्वितः ॥ पूर्वजन्मार्जितैर्दोषैरत्यंतमलिनोऽशुचिः ५ तस्मि
न्प्रयातेलोकानांहाहाकारोमहानभूत् ॥ स्वंस्वंकार्यंविहायैवप्रतिजग्मुर्जनाधिपम् ६ अमात्याराजभार्याचहेमकंठःसुहृद्वृतः ॥ उत्तिष्ठन्प्रपपाताग्रेस्खलन्व्या
वन्रुदन्नपि ७ अमात्यानागरास्तंतुदुःखिताअप्यवारयन् ॥ गव्यूतिद्वितयंगत्वातस्थौराजाश्रमान्वितः ८ दृष्ट्वावापींशीतजलांनानावृक्षसमन्विताम् ॥ उवा
चनागरान्सर्वानमात्यान्स्वजनानपि ९ अपराद्धंमयायद्यच्चिरंराज्यंप्रकुर्वता ॥ तत्क्षंतव्यंनमाम्येषबद्धांजलिपुटंजनाः १० कृपाविधेयापुत्रेमेयदिदैवात्समा
गते ॥ विज्ञापयामिवःसर्वान्मयिस्नेहोनहीयताम् ११ गच्छंतुनगरंसर्वेसस्त्रीवृद्धाःसमागताः ॥ पुत्रेणपाल्यमानामेतिष्ठंतुविगतज्वराः १२ अनुजानंतुमां
सर्वेसुचित्तोयाम्यहंवनम् ॥ युष्मासुतुप्रयातेषुमनोमेनिश्चलंभवेत् १३ उपकारंमहांतंमेकुर्वंतुकृपयाखिलाः ॥ दुःखितोनिष्ठुरंवक्तुंमर्तुकामोपिनोत्सहे १४ म
हत्पापंमयैवैतज्जन्मजन्मांतरार्जितम् ॥ यद्वियोगोहिराज्यस्यलोकानांहितकारिणाम् १५ परंतुकिंकरोम्येषयद्गलत्कुष्ठवानहम् ॥ सर्वोपिस्वकृतंभुंक्तेसुकृतंदुष्कृ
तंतथा १६ सूतउवाच ॥ इतिश्रुत्वावचोराज्ञोमूर्च्छिताःरुरुदुस्तथा ॥ घ्नंतःकेचित्पाणितलैःशिरांसिभृशदुःखिताः १७ केचित्परस्परंचक्रुरभिज्ञाःपंडिताश्चये ॥
सांत्वनंपूर्वजातानांनृपाणांचरितैर्नृपे १८ अनिर्वाच्यामवस्थांतत्समीक्ष्येयुरथापरे ॥ यथास्वरूपेविज्ञातेयोगिनोज्ञानवृत्तयः १९ दुःखितंसोमकांतंतंवनंगंतुंस
मुत्सुकम् ॥ नियम्यदुःखंधैर्येणधीराःकेचिदथाब्रुवन् २० ॥ ॥ जनाऊचुः ॥ ॥ पोषयित्वापालयित्वाननस्त्वंत्यक्तुमर्हसि ॥ यथानत्यजतेशैत्यंजलमौष्ण्यंतनू
नपात् २१ मर्यादांजलधिर्वापिमूर्यःप्राकाश्यमेवच ॥ कथंवानगरंयामस्त्वांविनाजनवत्सल २२ यथोडुपतिनाहीनंव्योमतारान्वितंनृप ॥ पुरंतद्वन्नशोभेतत्वांवि
नाशत्रुकर्षण २३ सहैवयामस्तीर्थानिद्विजाणिवयमप्युत ॥ रूपंतेकांतिमत्कांतभवितातीर्थसेवनात् २४ ततःसहैवयास्यामोनगरंध्वजसंकुलम् ॥ हर्षेणमहतायु
क्तावाद्यबंदिपुरःसराः २५ ॥ सूतउवाच ॥ ॥ इतितद्वचनंश्रुत्वाक्रोधदुःखसमन्वितः ॥ उवाचराजातान्सर्वानेवमेवंपुनःपुनः २६ ततोब्रवीद्धेमकंठःसामात्योव
त्सलंनृपम् ॥ स्नेहकारुण्यभावेनविनयेनसमन्वितः २७ ॥ पुत्रउवाच ॥ ॥ विनात्वांनोत्सहेगंतुंकर्तुंराज्यंचजीवितुम् ॥ नमयादृष्टपूर्वस्तेविरहस्तंसहेकथम् २८
॥ राजोवाच ॥ ॥ एतदर्थंमयापूर्वंधर्मशास्त्रंसुनीतिमत् ॥ उपदिष्टंतवशुभंनवृथाकर्तुमर्हसि २९ श्रूयतेजामदग्न्येनजननीनिहतापुरा ॥ पितृवाक्यानुरोधेननीति
ज्ञेनसुधीमता ३० रामस्तुराज्यंत्यक्त्वैववनंयातःसहानुजः ॥ अपृष्ट्वाकारणंसीतांतत्याजलक्ष्मणोवने ३१ हेमकंठपुरंशीघ्रममात्यैस्त्रिभिरन्वितः ॥ अतोममाज्ञयाग

१ उत्तिष्ठन्प्रपतन्यातः । इतिपाठभेदः । २ सुस्थिरोयाम्यहंवनम् इ०पा० । ३ यद्गलत्कुष्ठयहंवने इतिपाठान्तरम् । ४ वाद्यवादिपुरःसरा इतिपाठान्तरम् । ५ अदृष्ट्वाकारणमितिपाठान्तरम् ।

च्छकुरुराज्यंमयार्पितम् ३२ विज्ञेयथाकार्यसक्तेचित्तंतस्यपरात्मनि ॥ यथावस्थापितेवित्तेचित्तंलोकस्यवर्तते३३तथामायिवनंयातेस्वांतंमेत्वयिवर्तते ॥ दैवयो
गेनसुभगोजातोयास्येपुनर्गृहम् ३४ भविष्यतितथाधर्मोमद्वाक्यंकारिणस्तव ॥ नतथासहयातेनतस्माद्गच्छव्रजामिच ३५ ॥ ॥ सूतउवाच ॥ ॥ अमात्यानागरा
पुत्रःप्रयातुंकृतमानसाः ॥ कष्टेनमहतायुक्तानमश्चक्रुर्नृपंतदा ३६ अनुज्ञातास्ततस्तेनआशीर्भिरभिनंद्यच ॥ प्रदक्षिणीकृत्यनृपंनिवृत्तानगरंप्रति ३७ अग्रेकृ
त्वामहासेनांगजाश्वरथपत्तिनीम् ॥ छत्रध्वजयुतोमानीहेमकंठोऽगमत्पुरीम् ३८ इतिश्रीगणेशपुराणेउपासनाखंडेचतुर्थोध्यायः ॥ ४ ॥ ॥ सूतउवाच ॥
ततोमातरमभ्येत्यस्नेहकातरयाधिया ॥ तांजगादकथंमातस्त्यजसेऽनपराधिनम् १ पुत्रउवाच ॥ सहैवयातुपुत्रोयमितिवाच्यस्त्वयापिता ॥ तववाक्यानु
रोधेनयदिमांसहनेष्यति २ तदावांसेवनंकुर्यांनमेराज्येमतिस्तथा ॥ किंतद्राज्यंसुखंदद्याद्भवद्भ्यांरहितस्यमे ३ ॥ ॥ सुधर्मोवाच ॥ ॥ एतावद्दुःखशोकाभ्यां
युक्तोराजानमेवच ॥ करिष्यतिमहाबाहोतस्माद्गच्छममाज्ञया ४ पातिव्रत्येनधर्मेणपरवत्यस्मिबालक ॥ भर्तुरन्योनदेवोस्तियोषितांमान्यएवच ५ ॥ सू
तउवाच ॥ ॥ इत्याकर्ण्यनमश्चक्रेमातरंससुहृत्सुतः ॥ प्रदक्षिणीकृत्यततोनुज्ञांप्राप्यपुरंययौ ६ अलंकृतैर्नागरिकैःपताकाध्वजपल्लवैः ॥ सिक्तमार्गसुगंधाढ्यं
यथेंद्रनगरंतथा ७ दत्त्वाताम्बूलवासांसिविसृज्यस्वजनान्नृपः ॥ प्रविवेशगृहंश्रीमद्धर्षशोकसमन्वितः ८ चकारराज्यंधर्मेणसुतवत्पालयन्प्रजाः ॥ धर्मा
र्थकाममोक्षेषुयथाशिक्षंमनोदधे ९ ॥ ॥ ऋषयऊचुः ॥ ॥ कथंराजासोमकांतःकिंवनंसमुपागतः ॥ किंसहायश्चकिंचक्रेकर्मनोवदविस्तरात् १० सूतउवाच
हतवःकथयिष्यामिसोमकांतोयथावनम् ॥ गत्वाचकारयत्कार्मसादरंशृणुतानघाः ११ सुबलज्ञानगम्याभ्याममात्याभ्यांसुधर्मया ॥ धर्मपत्न्यायुतोरण्यंप्र
विवेशदुरासदम् १२ अग्रतःप्रकृतिर्यातामध्येराजाथपृष्ठतः ॥ धर्मपत्नीसुधर्मागात्सीतेवरामपृष्ठतः १३ एकाशनाश्चचत्वारएकचित्तासनालयाः ॥ समदुःख
सुखाश्चापिवनाद्वनमुपाययुः १४ क्षुधातृषाश्रमैर्वापिनिम्नोन्नतगताध्वभिः ॥ अत्यंतंकर्षिताश्छायामाश्रित्योपाविशन्क्वचित् १५ पुनर्वनांतरंगत्वाददृ
शुस्तेसरोमहत् ॥ यत्रमातंगसदृशानक्राभांतिसकच्छपाः १६ तालास्तमालाःसरलाःप्रियालाबकुलाःशुभाः ॥ सरलाःपनसाजंबुनिंबाश्वत्थवटादयः १७
वृक्षानानालताजालैर्वेष्टिताःपरितोबभुः ॥ यत्रास्तेतिमिरंगाढंगिरिदर्युदरेयथा १८ यत्रवायुःसुखस्पर्शःपद्मकादंबगंधवान् ॥ यस्मान्नयंतिमुनयःकुसुमानि
फलानिच १९ यत्रहंसाबकाःश्येनाःशुभाःकाकाश्चकोकिलाः ॥ सारिकाश्चक्रवाकाश्चनानारावान्विकुर्वते २० नयत्रशीतोष्णकरांशुसंधिर्नानालतापुष्प
कुंजाश्रितानाम् ॥ क्षुत्तृड्भयंयत्रनचैवमृत्युःस्वर्गेयथापुण्यवतांद्विजेंद्राः २१ तत्रगत्वाजलंसर्वेपपुःशीतंश्रमापहम् ॥ स्नात्वानित्यक्रियांकृत्वाफलानिबुभुजुश्चते
२२ सुष्वापचक्षणं[illegible]च्छेकोमलवालुके ॥ धर्मपत्नीसुधर्माचपादसंवाहनेस्थिता २३ तस्यानुमतमाज्ञायद्वावमात्यावगच्छताम् ॥ आदातुंकंदमूलानिफ

१ यथावस्थापितेचित्तं[illegible] [illegible]गः इति॰पा॰

लानिचबिसानिच २४ ददर्शाद्भुतरूपमुग्रंबालंसुधर्माप्रभयाज्वलंतम् ॥ उत्कृष्टरूपस्यकृतेस्मरंतंजातंपुराबालमितिस्ममेने २५ दृष्ट्वैवतंसाजहृषेसुधर्मा
मेनेचतंसाहितकारिणंच ॥ क्षुब्धंप्रसन्नंहृदयंसमीक्ष्यापकारिणंचोपकरांहिवक्ति २६ पप्रच्छतंकश्चकुतःप्रयातःकस्यासिपुत्रोजननीचकाते ॥ वदस्वशब्दामृतधा
रयामेसखेवकर्णौपरितोषयाशु २७॥ ॥ सूतउवाच ॥ इतिस्मपृष्टःसजगादबालस्तांराजपुत्रींसुधयागिरामे ॥ पिताभृगुर्भार्मिनिमेपुलोमामाताजलार्थीस्वगृहा
दिहागाम् २८ च्यवनःखलुनाम्नाहंपितुराज्ञाकरःशुभे ॥ त्वंचकाकतमोयंतेकथंवनामिदंगतः २९ स्रवंतिकथमंगानिवर्षाकालेगिरेरिव ॥ अतिदुर्गंधताचास्य
केनवावदकर्मणा ३० कृमिभारसमाकीर्णममुंवासेवसेकथम् ॥ स्वयंचारुतराभूत्वासुकुमारीसुलोचना ३१ चारुप्रसन्नवदनाचारुसर्वांगशोभिनी ॥ कच्चित्पू
र्वंनपित्रातेसुहृद्भिर्भ्रातृभिर्द्विजैः ३२ विज्ञातोयंवरःकुष्ठीकृमिभाराकुलोपिच ॥ कथमेनवृतवतीदुर्गमंचागतावनम् ३३॥ ॥ सूतउवाच ॥ इतिपृष्टासुधर्मा
सामुनिपुत्रेणधीमता ॥ व्याचष्टेसकलंतस्मैशोकहर्षसमन्विता ३४ ॥ सुधर्मोवाच ॥ सौराष्ट्रदेशेविख्यातंदेवताख्यंपुरंमहत् ॥ तत्रायंसोमकांतोमेभर्तारांज्यं
चकारह ३५ अतिमानीवदान्यश्चशूरोदृढपराक्रमः ॥ असंख्यातबलोपेतोरिपुराष्ट्रविमर्दनः ३६ यज्वातिसुंदरःश्रीमान्सुहृदानंदकारकः ॥ विवेक्तासर्वकार्या
णांनीतिशास्त्रविशारदः ३७ राज्यंसंबुभुजेराजाबहुकालंद्विजोत्तम ॥ इमामवस्थांसंप्राप्तःपूर्वकर्मविपाकतः ३८ अमात्यद्वयसंयुक्तोवनमेतत्समागतः ॥ अ
मंतिपृष्ठलग्नास्यपुत्रेराज्यंप्रयच्छतः ३९ सुबलज्ञानगम्याभ्यांप्रकृतिभ्याविहागता ॥ राज्ञोनुज्ञांसमादायफलार्थंतौगतौवने ४० इहास्मान्राक्षसाःप्रेताभूता
निमृगपक्षिणः ॥ नानाविधाभीषयंतिकथंनोभक्षयंतिन ४१ नजानेदुःखभोगायस्थापयंत्यग्रतोपिच ॥ दुःखस्यांतंनपश्यामिकर्मणोदुष्कृतस्यच ४२ कट्वति
काम्ललवणमधुरस्निग्धभोजने ॥ नतथारुचिरस्याभूत्परीतस्यद्विजातिभिः ४३ यथेदानींकंदमूलकषायाम्लफलादिषु ॥ दरिद्राणांमहाहारःपाकोपिभक्षित
स्यच ४४ नतथाश्रीमतांशक्तिरशनेपाकएवच ॥ यःशेतेकोमलेदिव्येशयनेस्ममनोरमे ४५ इदानींयत्रकुत्रापिपश्यकालविपर्ययम् ॥ यस्यदिग्व्यापिनश्वास
न्नानापरिमलाःशुभाः ४६ पूयशोणितदिग्धस्यपूतिगंधोपिसांप्रतम् ॥ यआनंदमयेसिंधौमग्नोभूत्पंडितैर्वृतः ४७ सइदानींदुःखमयेकृमिभिःपरिवारितः ॥ क
थंतरेमदुःखाब्धिंनजानेभृगुनंदन ४८ अवपोतइवागाधेमज्जंतंनौरिवार्णवे ४९ ॥ इतिश्रीगणेशपु०उपा०सुधर्माच्यवनसंवादोनामपंचमोध्यायः ॥ ५ ॥ ॥
सूतउवाच ॥ ॥ इतितद्वचनंश्रुत्वाच्यवनोभृगुनंदनः ॥ त्वरयास्वमुपादायकलशंजलसंभृतम् १ दुःखितःपरदुःखेनतूष्णीमेवागमद्गृहम् ॥ तंभृगुःपरिपप्रच्छ
विलंबकारिणंसुतम् २ ॥ भृगुरुवाच ॥ ॥ किमपूर्वंत्वयादृष्टंलक्ष्यसेचकितोयथा ॥ विलंबश्चकथंजातोवदपुत्रममाग्रतः ३ ॥ पुत्रउवाच ॥ ॥ सौराष्ट्रदेशेवि
ख्यातेदैवतेनगरेमुने ॥ सोमकांतइतिख्यातोराजाराजीवलोचनः ४ चक्रेराज्यंबहुतिथंधर्मेणपालयन्प्रजाः ॥ दुर्भगत्वंगतोदैवात्पुत्रेराज्यंनिवेश्यसः ५ प

१ वनस्थेइतिवापाठः । २ शाकरसनः इतिपाठान्तरम् ।

त्न्यासुधर्मयायुक्तोभर्तुराज्ञाश्वतापितः ॥ सुबलज्ञानगम्याभ्यांप्रकृतिभ्यामिहागतः ६ गलत्कुष्ठीकृमियुतोविभ्रमन्दुर्गमंसरः ॥ सहस्रभगताप्राप्तोययेंद्रोगौ
तमान्मुनेः ७ कृसासुधर्माचार्वंगीक्किगलत्कुष्ठवान्पतिः ॥ इतिमेपृच्छतोवृत्तंतदीयंगतवान्क्षणः ८ तदीयैःकरुणावाक्यैर्मनोमेकलिलंत्वभूत् ॥ ततोहंकलशं
पूर्णंकृत्वाशीघ्रमुपागतः ९ ॥ सूतउवाच ॥ ॥ सर्वचाकथयत्तस्मैतयायत्कथितंवचः ॥ श्रुत्वातच्चपुनःपुत्रंच्यवनंभृगुरब्रवीत् १० ॥ भृगुरुवाच ॥ सर्वानानय
तान्शीघ्रंपुत्रगच्छममाज्ञया ॥ द्रक्ष्यामिकौतुकंतेषांस्वीयंवादर्शयामितान् ११ ॥ सूतउवाच ॥ ॥ इत्थंसचोदितःपित्राच्यवनःकरुणानिधिः ॥ जगामसरसो
भूमिंसुधर्मांद्रष्टुमुत्सुकः १२ तस्मिन्नेवक्षणेमायौफलकंदभरान्वितौ ॥ सुबलज्ञानगम्यौतावागतौराजसंनिधिम् १३ ततऊचेसतुमुनिःसुधर्मांचारुलोचनाम् ॥
पितामेस्वाश्रमंसर्वानाकारयतिसुव्रते १४ इतितद्वचनंश्रुत्वासुधर्माशोकविह्वला ॥ तदैवसावधानाभूत्तनुःप्राणइवागते १५ सुशीलाराजपत्नीसापीत्वातद्वच
नामृतम् ॥ अगमत्सासुचार्वंगीप्रकृतिद्वयसंयुता १६ सोमकांतेनपतिनामुनिपुत्रपुरःसरा ॥ गणेशस्कंदसहिताशिवेवशिवसंयुता १७ शुशुभेमार्गमध्येसावाच
स्पतिपुरःसरा ॥ मंत्रघोषयुतंप्रापभृगोराश्रममंडलम् १८ नानापुष्पलताकीर्णंनानापक्षिविनादितम् ॥ मार्जारानकुलाःश्येनागजागावोमयूरकाः १९ भुजंगा
पक्षिणःसिंहाव्याघ्राःक्रीडंतियत्रच ॥ नचवायुर्भृशंवातिनसूर्यस्तपतेभृशम् २० नवर्षतिभृशंमेघोवर्षतेचतदिच्छया ॥ विविशुस्तेहर्षयुतामुनिपुत्रपुरःसराः २१
तत्राद्भुतंव्याघ्रमृगाजिनस्थंददर्शसूर्यप्रतिमंभृगुंतम् ॥ राजाथपत्नीप्रकृतिद्वयंचननामबद्धांजलिरब्रवीच्च २२ ॥ राजोवाच ॥ अद्याशिषोमेसफलाद्विजेंद्रद्विजेरि
ताधर्मचयस्तपोपि ॥ आजन्मतोहंपरिपूतएषपितुर्जनन्याश्चसुजीवितंमे २३ अवद्मशिःसंप्रतिहंत्यथैनःपूर्वार्जितैःपुण्यचयैःकृतापि ॥ आगामिकल्याणकरीमु
नींद्रकालत्रयेजन्मकरोतिपूतम् २४ सौराष्ट्रदेशेखलुदेवताख्येपुरेकृतंराज्यममोघदृष्टे ॥ भीतेनपापाद्द्विजदेवतादिपूजाकृतानीतिमतामुनींद्र २५ आकस्मिकं
मेदुरितंकिमेतत्प्रादुर्बभूवोग्रतरंदुरंतम् ॥ येनाहमीदृक्कुदशांप्रणीतोजानेननोकिंचित्प्रतिकारमत्र २६ अपायतांयांतिकृताउपायायुष्मत्कृतोपायमुपायमीहे ॥
निर्वैरतांयांतिहिजातिवैरास्तवाश्रमेवांशरणंप्रपन्नः २७ ॥ सूतउवाच ॥ श्रुत्वेतिवचनंतस्यभृगुस्तुकरुणायुतः ॥ उवाचसोमकांतंतंध्यानेनालोक्यसुव्रतः २८
भृगुरुवाच ॥ उपायंवच्मिनृपतेनचिंतांकर्तुमर्हसि ॥ ममाश्रमगतादुःखंनहिविंदंतिजन्मिनः २९ जन्मांतरकृतंचैवदुरितंतेनृपोत्तम ॥ येनेमांगमितोवस्थांकथ
यिष्येतदप्यहम् ३० कुर्वंतुभोजनंसर्वेचिरकालंबुभुक्षिताः ॥ वनाद्वनांतरंयाताःश्रांताःक्लांताननाभृशम् ३१ ॥ सूतउवाच ॥ इत्युक्त्वास्नापयामाससुतैलाभ्यं
गपूर्वकम् ॥ भोजयामासचान्नानिषड्रसानिस्वनेकशः ३२ बुभुजुस्तेपिविश्रांताभृगोरमिततेजसः ॥ आज्ञयामुनिवर्यस्यसुस्नाताःसुष्ठ्वलंकृताः ३३ सुषुपुर्मृदु
शय्यायांहित्वाचिंतांदुरत्ययाम् ॥ मुनिनाकल्पितायांतेस्वराज्यंगमिताइव ३४ इतिश्रीग०उ०भृगोराश्रमागमनंनामषष्ठोध्यायः ॥ ६ ॥ ऋषयऊचुः ॥ तत्रग

१ बहुदुःखप्रजापितः इतिपाठः ।

त्वांकिमकरोत्सोमकांतोनृपस्तदा ॥ उपायःकथितःकोवाभृगुणासर्ववेदिना १ कथयस्वकथामेतांशृण्वतांनोद्विजोत्तम ॥ नतृप्तिमधिगच्छामःपीत्वात्वद्वचनामृत
म् २ ॥ सूतउवाच ॥ सम्यक्पृष्टंमहाभागायूयंतुज्ञानसागराः ॥ यःकथांतंनप्रयातिश्रोतावक्ताथवाद्विजाः ३ लिख्यमानंवाचयतिपुस्तकंहरतेपिवा ॥ नपृच्छ
तिचयःशिष्योगुरुःपृष्टोनवक्तिचेत् ४ उभौतौमूकबधिरौलोकेदृष्टौद्विजोत्तमाः ॥ शृण्वंतुकथयिष्यामिसोमकांतकथामतः ५ तस्यांरात्र्यांव्यतीतायांदिननाथे
तथोदिते ॥ स्नानंसंध्यांजपंहोमंकृत्वासभृगुसत्तमः ६ स्नातायकृतजप्यायपत्नीप्रकृतिसंयुजे ॥ पूर्वजन्मकथांतस्मैराज्ञेकथितुमारभत् ७ ॥ भृगुरुवाच ॥
कोल्हारनगरेरम्येविंध्याचलसमीपतः ॥ चिद्रूपइतिविख्यातोवैश्योबहुधनोभवत् ८ तस्यभार्यातुसुभगानाम्नाख्यातासुलोचना ॥ सुशीलादानशीलाचप
तिवाक्यपरासती ९ तस्यास्त्वंपुत्रतांयातोभवेपूर्वेनृपोत्तम ॥ कामंदइतितेनामचक्रतुस्तौद्विजेरितौ १० अतिस्नेहांदिवारात्रावतिलालनमेकके ॥ वार्धक्यकाल
जेतौतुपितरौत्वयिचक्रतुः ११ विवाहंचक्रतुस्तातुधनकौतुकमंगलैः ॥ मृगाक्षीसुकुमारांगीनाम्नाख्याताकुटुंबिनी १२ अनुरक्तात्वयिसदाद्विजदेवातिथिप्रि
या ॥ बभूवयोषिद्योषित्सुरत्नभूतातिसुंदरी १३ कुटुंबिनीतिस्वंनामविदधेसार्थकंतुसा ॥ सप्तपुत्रापंचकन्यापंचबाणप्रियानुकिम् १४ ततोबहुतिथेकालेपंचत्व
मगमत्पिता ॥ मातातवसतीतेन सहदग्धादिवंगता १५ ततस्त्वंसखिवैर्गैस्तद्द्रव्यंनाशितवान्बहु ॥ नीतंनष्टंभक्षितंचविनाशमगमद्धनम् १६ चिंतयाधर्मपत्नीत्वां
निराकृतवतीभृशम् ॥ नगृहीतंतुतद्वाक्यंततोविक्रीतवान्गृहम् १७गतासाबालकैःसार्धमनुज्ञातापितुर्गृहम् ॥ अपत्यपोषणकेतस्त्वांवंशकंटकम् १८ ततउ
द्वृत्ततांयातउन्मत्तइवमद्यपः ॥ अन्यायकारीनगरेजातोमत्तइवद्विपः १९ परस्वहारीवनितासुजारोग्रामेषुचोरोजनतापकारः ॥ द्यूतेषुवीरोव्रजिनौघसारोहिंसावि
हारोबलहीनशूरः २० येयेजनास्तेसुखसंगतृप्तास्तेभ्योगृहीत्वाबहुवित्तमादः ॥ निक्षेपतःपितृकृतात्सुहृद्भ्योमिषात्कृतांश्चिन्नगरस्थितेभ्यः २१ शपथाननृतांश्चक
र्थनूनमनृतानांप्रमदाजनेषुसाक्ष्यम् ॥ इतिसर्वजनाःसुभीतिमापुरुरगात्सन्नगतादिवोग्रवीर्यात् २२ असह्यतांतेनजनस्ययातोगोक्षुरकःपायसगोयथैव ॥ रा
ज्ञोगृहीत्वानुमतिंजनास्तेनिर्वापयामासुरतोपुरात्त्वाम् २३ वनेस्थितस्त्वंबहुजंतुघातीस्त्रीबालवृद्धान्विनिहंसिनित्यम् ॥ महाजनंवीक्ष्यपलायसेचासिंहंनिरी
क्ष्येववृकोमृगोवा २४ मत्स्यान्बकान्सारसकुक्कुटांश्चवृकान्मृगान्वानरकोकिलांश्च ॥ हत्वासिखड्गानशशकांश्चगोधामुधास्वदेहंव्रजिनादपोषः २५ ॥
सिंहान्व्याघ्रांश्चजंबूकान्निःसार्यगिरिगह्वरात् ॥ नानास्थानगतांश्चोरान्मेलयित्वासुदुर्धरान् २६ काष्ठैर्लोष्टैश्चपाषाणैश्चकर्थगृहमुत्तमम् ॥ विशालंक्रोशविस्ता
रंनानाकौतुकमंडितम् २७ पित्राभीतेनपत्नीसाप्रापिताबालकैःसह ॥ गुहागतंतेसदनंराजतोजनतोपिच २८ नानालंकारवसनाबालकाअपितेजसा ॥ दे
वांगनेवशुशुभेत्वंचचोरसमन्वितः २९ त्वंचमार्गेजनान्दीनान्हत्वाहत्वागुहांगतः ॥ चोरैःसबालयोषिद्भिर्भासिराजेवतद्गतः ३० कदाचिद्ब्राह्मणोविद्वान्विख्या

१ द्यूतादिकारो इतिपाठः २ त्वमदाजनेष्वितिपाठः ३ रंजितंइतिपाठः ।

तोगुणवर्धनः ॥ मध्याह्नेमार्गमध्येतुत्वयादृष्टःसएककः ३१ गृहीत्वादक्षिणंपाणिंतंविप्रंधृतवानसि ॥ सवेपमानस्त्वद्बुद्धिंजानन्धर्षणयातया ३२ ऊचेत्वांस्त्वां
तकंमत्वामूर्च्छितोजीवितेच्छया ॥ अत्यंतंकरुणावाक्यैर्बोधयंस्त्वांसहेतुकैः ३३ ॥ गुणवर्धनउवाच ॥ धनवान्सुभगोभूत्वाकथंमांहंतुमिच्छसि ॥ द्विजंनत्वो
ढाभर्तारंशांतंचानपराधिनम् ३४ दुर्बुद्धिंवासनांत्यक्त्वासद्धर्मेषुमतिंकुरु ॥ प्रथमामेगताकांताप्राप्ताकांततरापरा ३५ स्वाचारापरमोदारासाध्वीसर्वगुणाकरा
पितॄणामनृणार्थायधर्मसंतानवृद्धये ३६ कृतामातिप्रयत्नेन गार्हस्थ्यंधर्ममिच्छता ॥ मद्विनातद्विनावांहिजन्मनीभवतोवृथा ३७ पितामेहिभवत्त्वंचमाता
पुत्रोप्यहंतव ॥ जीवदाताभयत्रातापिताशास्त्रेनिगद्यते ३८ दस्यवोपिहिरक्षंतिद्विजंवाशरणागतम् ॥ द्विजंयोग्यंशरण्यंमामतस्त्वंमोक्तुमर्हसि ३९ नो
चेत्कल्पसहस्रंत्वंनिरयान्प्रतिपद्यसे ॥ भोक्तारःसर्वएवैतेस्त्रीपुत्राःसुहृदोजनाः ४० नपापभागिनस्त्वेतेसुखिनस्त्वत्प्रतारकाः ॥ कियद्भिर्जन्मभिःपापंमोक्ष्य
सेनवितर्कये ४१ इतिश्रीगणेशपु०उपा०सोमकांतपूर्वजन्मकथनंनामसप्तमोध्यायः ॥ ७ ॥ भृगुरुवाच ॥ ॥ इतितेनोदितंवाक्यंमुहुर्ग्लानिंप्रकुर्वतः ॥ क
रुणायुतमाकर्ण्यनोद्विग्नंहृदयंतव १ वज्रात्सारतरंकिंनुब्रह्मणात्वयिनिर्मितम् ॥ हिंसनाद्बहुजंतूनांमनुष्याणांसहस्रशः २ अतिनिष्ठुरतांप्राप्तंकृतघ्नस्येव
मानसम् ॥ अवोचस्त्वंततस्तंतुकृतांतइवनिष्ठुरः ३ ॥ चोरउवाच ॥ किंतेवाक्यचयैर्विप्रवृथामयिनियोजितैः ॥ अश्रोतरिचपांडित्यंन्युब्जेकुंभेयथाजलम् ४
क्वेयंमममतिर्मूढक्वोपदेशस्तवाप्ययम् ॥ तत्त्वचिंतेवमधुपेसांप्रतंमेनरोचते ५ अर्थासक्तस्यनक्वापिपितृबंधुविचारणा ॥ यथाकामातुरस्यापिनभीतिर्नह्रीश्चवि
द्यते ६ शुद्धिःकाकेद्यूतकारेसत्यंधैर्यंनपुंसके ॥ कामशांतिस्त्रियांसर्पेक्षमादृष्टात्वयानुकिम् ७ अंतिकेत्वंनिसृष्टोसिव्यापाररहितस्यमे ॥ विधात्रादैवयोगेननत्वां
मुंचामिकर्हिचित् ८ ॥ ॥ भृगुरुवाच ॥ ॥ इत्युक्त्वानिशितंखड्गंहस्तआदायदक्षिणे ॥ चकर्ताथशिरस्तस्यबिडालइवमूषकम् ९ एवंतेब्रह्महत्यानांसंख्यां
कर्तुंनशक्यते ॥ स्त्रीबालवृद्धजंतूनांहत्यानांचविशेषतः १० संख्यातापरपापानांविभागीजायतेयतः ॥ ततोबहुतिथेकालेगतेकामंदतेजरा ११ आग
ताथकफोग्लानिःस्वेदोहिक्काथवेपथुः ॥ अभूत्तंद्रीचोपविष्टेप्रसुप्तेनचसाभवत् १२ अनादरंचचक्रुस्तेपुत्रादास्योथसेवकाः ॥ सुहृदश्चसुताश्चापिनमारोथा
पिमित्रकाः १३ एकएवाभवत्तत्रदृष्टआप्तोरहस्यकृत् ॥ अनिवार्यगतिर्विप्रःसचापिप्रेषितस्त्वया १४ आकारयितुंसर्वांस्तान्मुनीन्काननवासिनः ॥ तेचापित्व
द्भयादेवद्विजवाक्यात्समागताः १५ अब्रवीस्तान्नमस्कृत्यमत्तोदानंनिगृह्यताम् ॥ तेब्रुवन्नचगृह्णीमोदानंनिपतितस्यते १६ याजनाध्यापनाद्यौनात्संबंधा
द्भाषणादपि ॥ परंसंचरतेपापंसहयानासनाशनात् १७ इतितेभाषमाणास्त्वांगत्वाचनिजमाश्रमम् ॥ सस्नुःसचैलंसर्वेपिपावमानीस्ततोजपन् १८ ततोनु
तापोमनसिजातःकामंदतेभृशम् ॥ आमयात्स्वजनैस्त्यागाद्ब्राह्मणैःपरिवर्जनात् १९ जीर्णदेवालयोद्धारेभवत्तेमतिरूर्जिता ॥ धनंस्वंविपुलंवीक्ष्यकुप्यरत्नादि
संयुतम् २० ततोनादिःपरामूर्तिर्गणेशस्यवनेशुभा ॥ जीर्णदेवालयेक्षुद्रेस्थितातेकथिताद्विजैः २१ ततोऽतिविस्तृतंदीर्घंचतुस्तोरणसंयुतम् ॥ चतुर्द्वारंसुरु

चिरंचतुःशिखरशोभितम् २२ नानास्तंभचितंनानावेदिभिःपरिवारितम् ॥ मुक्ताप्रवालरत्नाद्यैःखचितंरुचिरांगणम् २३ नानापुष्पद्रुमयुतंनानाफलद्रुमैश्चितम्
चतुर्दिक्षुचारुवारिमयवापीविराजितम् २४ प्रासादंनिर्मितवतस्तद्व्ययंतेव्ययंगतम् ॥ किंचित्स्त्रियाचपुत्रैश्चसुहृद्भिर्बंधुभिर्हृतम् २५ ततोनातिचिरेकालेपंचत्वं
चगतोभवान् ॥ याम्यदूतैःकशाघातैर्बद्धःसंताडितोभृशम् २६ कंटकैर्विद्धसर्वांगःशिलायांपोथितोपिच ॥ मज्जितोनरकेघोरेपूयशोणितकर्दमे २७ एवंनीत
स्तुतैर्दूतैश्चित्रगुप्तयमांतिके ॥ यमेनपृष्टःकिंपुण्यमुतभोक्ष्यसिपातकम् २८ त्वमवोचःपुण्यमहंपूर्वंभोक्ष्यामिसूर्यज ॥ ततःसौराष्ट्रदेशेत्वंराजत्वेनविनिर्मितः
२९ इतितेकथितंपूर्वजन्मपापकरंमया ॥ शरणागतकारुण्यात्तपोबलसमाश्रयात् ३० कांतप्रासादकरणात्सोमकांतोऽभवोनृपः ॥ कांतयाकांततरयाभासि
कांत्याशशीयथा ३१ ॥ ॥ सूतउवाच ॥ ॥ भृगुणाभिहितंश्रुत्वासोमकांतोनृपाधमः ॥ तद्वाक्येसंशयापन्नआसीदश्मेवनिष्क्रियः ३२ वेदशास्त्रार्थ
विदुषोभूतभाविभवद्विदः ॥ तपस्विनोभृगोर्वाक्येयतःससंशयंदधौ ३३ निरगन्क्षणमात्रेणतस्यांगात्पक्षिणोभृशम् ॥ नानावर्णाकृतिधराबभक्षुर्नृपतिंतदा ३४
उड्डीयोड्डीयचंच्वग्रैर्ददंशुर्नृपशुंदृढैः ॥ उत्कृत्योत्कृत्यमांसानिजक्षुस्तेमुनिसन्निधौ ३५ ततोतिदुःखिततनुःशरणंपुनरागतः ॥ अवदद्दीनयावाचाभृगुंज्ञान
तपोनिधिम् ३६ ॥ ॥ राजोवाच ॥ ॥ त्वद्वनेजातिवैराणांपरस्परभयंनहि ॥ त्वत्समक्षंकथमिमेमृतंमांमारयंतिच ३७ त्वत्पादप्रवणंदीनंसकुष्ठंशरणागतम्
इदानींमोचयमुनेसर्वसत्त्वाभयंकर ३८ ॥ ॥ सूतउवाच ॥ ॥ इत्युक्तःपुनरप्याहभृगुस्तंदीनवत्सलः ॥ मद्वाक्यसंशयादित्थमनुभूतंनृपत्वया ३९ प्रतीकारं
वदिष्यामिस्वस्थोभवक्षणंनृप ॥ ममहुंकारमात्रेणगमिष्यंतिद्विजाइमे ४० ॥ ॥ सूतउवाच ॥ ॥ द्विजस्यहुंकृतिंश्रुत्वाद्विजाश्चांतर्हितास्तदा ॥ तुतोषनृपति
श्चापिपत्न्यमात्यसमन्विता ४१ इतिश्रीगणेशपु० उपासनाखंडेनानापक्षिनिवारणंनामाष्टमोध्यायः ८ ॥ ॥ सूतउवाच ॥ ॥ ततोभृगुःक्षणंध्यात्वापुनस्तं
प्राहभूपतिम् ॥ अत्यंतविह्वलोदुःखंवीक्ष्यतत्पूर्वकर्मजम् १ ॥ ॥ कृपापानिकरास्तेतुक्तोपायाःकथितामया ॥ तथाप्येकंब्रवीमित्वामुपायमघनाशनम् २ गणे
शस्यपुराणंत्वंश्रोष्यसेयदिसत्वरम् ॥ तदैवमोक्ष्यसेदुःखसागरान्नात्रसंशयः ३ इत्युक्त्वातंगणेशस्यनामाष्टशतमुत्तमम् ॥ जप्त्वाजलंमंत्रयित्वासिषेचनृपतिंतदा
४ सिक्तमात्रेजलेतेनतन्नासारंध्रतोलघुः ॥ कृष्णास्यःप्रापतद्भूमौववृधेतत्क्षणादसौ ५ सप्ततालप्रमाणोभूद्व्यादितास्योभयंकरः ॥ करालजिह्वोरक्ताक्षोदीर्घबाहु
र्जटाधरः ६ मुखाद्वमन्नग्निंक्षणाच्चपूयशोणिते ॥ नेत्राणामंधतांकुर्वन्नंधकारइवापरः ७ आलोक्यदुद्रुवुःसर्वेतदाश्रमनिवासिनः ॥ दंष्ट्रारावैर्दशादिशः
पूरयंतंतमद्भुतम् ८ अपृच्छत्तंद्विजवरस्तत्समक्षंतुपूरुषम् ॥ विद्वानपीतिकोसित्वंनामतेकिंवदस्वमे ९ प्रत्युवाचमुनिंतंतुपरिपृष्टोद्विजेनसः ॥ प्राणिमात्रश
रीरस्थोनाम्नाहंपापपूरुषः १० त्वन्मंत्रजलपातेनानिःसृतोराजदेहतः ॥ क्षुधातुरोभक्ष्यमीहेदेहिमह्यंनचेत्तदा ११ भक्षयिष्येमुनेलोकान्सोमकांतंतवाग्रतः ॥ वद

१कृष्णास्यः प्रापतद्भुवि इ० पा०

मेवसतिंरम्यामितोनिःसारितस्यच १२ ततस्तुबहिरभ्येत्यतमुवाचमुनिःपुनः ॥ अस्मिनरसालेसरलेविरसेवसकोटरे १३ गलितानिचपत्राणिभक्षयस्वममा ज्ञया ॥ नोचेत्त्वांभस्मसात्कुर्यांनानृतंमेवचोधम १४ ॥ सूतउवाच ॥ इतितन्मुनिवाक्यांतेशुष्कंसन्नृक्षमस्पृशत् ॥ भस्मसादभवद्वृक्षोद्विजास्तत्स्पर्शमात्रतः १५ मुनेःसंदर्शनाद्गीतस्तस्मिन्भस्मन्यलीयत ॥ तस्मिन्विलीनेसमुनिःसोमकांतंपुनर्जगौ १६ भृगुरुवाच ॥ पुराणश्रवणाद्यत्तेजातंपुण्यंनृपोत्तम ॥ अयंया वद्भूततरुरत्रचोत्तिष्ठतेपुनः १७ तावत्संपादयास्मिंस्तद्भस्मन्येवदिनेदिने ॥ विवृद्धेस्मिंस्तरौराजन्निष्पापस्त्वंभविष्यसि १८॥ राजोवाच ॥ ॥ गणेशस्यपुरा णंयन्नदृष्टंनचवैश्रुतम् ॥ कुत्रतल्लभ्यतेब्रह्मन्व्याकर्तातस्यवामुने १९ ॥ मुनिरुवाच ॥ ब्रह्मणाकथितंपूर्वंवेदव्यासायधीमते ॥ व्यासाच्चविदितंमह्यंपुराणंपाप नाशनम् २० अहंतेचप्रवक्ष्यामितीर्थेस्नानंसमाचर ॥ श्रोष्येपुराणमितिचसंकल्पंकुरुसुव्रत २१ ॥ सूतउवाच ॥ ॥ भृगुणानोदितःस्नात्वाभृगुतीर्थेतिवि श्रुते ॥ सोमकांतोमुदायुक्तस्ततःसंकल्पमाचरत् २२ गणेशस्यपुराणंयत्तच्छ्रोष्येद्यप्रभृत्यहम् ॥ संकल्पमात्रेतुकृतेबभौराजानिरामयः २३ भृगुप्रसादान्नी रक्तःकृमिक्षतविसर्जितः ॥ गृहीत्वातंभृगुरगाद्विस्मितंहर्षितंनृपम् २४ उपविश्यासनेस्वीयेदापयत्तस्यचासनम् ॥ उपविष्टोबभाषेतंदिव्यकांतिर्नृपोत्तमः २५ राजोवाच ॥ भवत्प्रसादात्सकलागरिष्ठासंकल्पमात्रेणगताव्यथामे ॥ आश्चर्यभूतंसकलंवदस्वपुराणमेतद्द्विरदाननस्य २६॥ ॥ भृगुरुवाच ॥ ॥ शृणुष्वावहि तोभूत्वातत्पुराणंवदाम्यहम् ॥ अनंतपुण्यनिचयैर्यस्यश्रवणगोचरा २७ मतिरुत्पद्यतेपुंसांनान्यथापापकारिणाम् ॥ यस्याकर्णनमात्रेणसप्तजन्मार्जितान्यपि २८ लघुशुष्कार्द्रस्थूलानिपापानिचमहांत्यपि ॥ तत्क्षणाद्विलयंयांतिगणेशस्यप्रसादतः २९ अव्ययस्याप्रमेयस्यनिर्गुणस्यनिराकृतेः ॥ मनोवागनिरूप्य स्यकेवलानंदरूपिणः ३० यस्यस्वरूपंनविदुर्ब्रह्मेशानादयःसुराः ॥ सहस्रवदनोयस्यमहिमानंनचक्षमः ३१ यावद्विशेषविदपिप्रवक्तुंराजसत्तम ॥ म यायथाश्रुतंपूर्वंतत्पुराणंसुपुण्यदम् ३२ अतींद्रियज्ञानवतोव्यासाच्चामिततेजसः ॥ यज्ञविध्वंसशोकार्तोदक्षःशुश्रावमुद्गलात् ६३ यस्यभक्तिर्दृढाराजन् गणेशेसर्वसिद्धिदे ॥ सएतच्छृणुयान्नित्यंनवाच्यंतादृशेतरे ३४ यदिसर्वेपिकुर्वीरन्विघ्नराजस्यसेवनम् ॥ कृतदाविघ्ननिचयाविहरेयुर्यथासुखम् ३५ दु खान्यनुभवेयुःकेनानाविरहजान्युत ॥ चकारेदंपुराव्यासोभूतभव्यभविष्यवित् ३६ वेदार्थज्ञानरहितान्वेदाध्ययनवर्जितान् ॥ वर्णाश्रमाचारशून्या न्जातिसंकरकारिणः ३७ कलौविलोक्यतुजनान्कुटिलान्पापकारिणः ॥ अष्टादशपुराणानिकृतवान्धर्मगुप्तये ३८ तावंत्युपपुराणानिततोर्थान्नबुबुधुर्जनाः ॥ ततएवगणेशस्यरूपंजानंत्यमीजनाः ३९ इतिश्रीगणेशपु० उपासनाखंडेराजोपदेशकथनंनामनवमोध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ भृगुरुवाच ॥ ॥ नारा यणांशसंभूतःपाराशर्योमहामुनिः ॥ अतीतानागतज्ञानीवेदशास्त्रार्थतत्ववित् १ कृत्वावेदंचतुर्भागंतदर्थज्ञानसिद्धये ॥ सविद्यामदगर्वेणपुराणंकर्तुमार भत् २ समाप्तिसाधनंनैवकृतवान्मंगलंपुरा ॥ गणेशस्यनतिंवापिस्तुतिंवातस्यवाक्वचित् ३ ततोविघ्नाभिभूतःसन्नर्थंकंचननास्मरत् ॥ भ्रांतिरेवाभ

वत्तस्यलौकिकेऽलौकिपथि ४ नित्येनैमित्तिकेकाम्येश्रौतेस्मार्तेचकर्मणि ॥ व्याख्यातुर्वेदशास्त्राणांसर्वज्ञस्यसतोपिहि ५ ओषधीभिश्वमंत्रैश्वभग्नवी
र्यइवाहिराट् ॥ तस्तंभेस्वात्मनिभ्रंशंतद्धेतुंनाध्यगच्छत ६ ततोगच्छत्सत्यलोकंधातारंप्रष्टुमादरात् ॥ विस्मयाक्रांतहृदयोह्रीणःपाराशरोमुनिः ७ नमस्कृ
त्वादेवगणान्देवर्षीन्कमलासनम् ॥ पूजितोब्रह्मणादत्तेनिषसादासनेशुभे ८ पाणिनाचास्पृशत्पादौपाराशर्योमहामुनिः ॥ प्रणयावनतोभूत्वाब्रह्माणंप्रष्टुमारभ
त् ॥ ९ ॥ ॥ व्यासउवाच ॥ ॥ ब्रह्मन्नद्भुतमेतद्धिकिंमेदैवादुपस्थितम् ॥ वेदार्थानिपुराणानिकर्तुंमेबुद्धिराहता १० आविक्षतोखिलाँल्लोकान्ज्ञाना
चारविवर्जितान् ॥ कलौकर्मजडांस्तब्धान्नास्तिकान्वेदनिंदकान् ११ विधिंचैवनिषेधंचज्ञास्यंतिममवाक्यतः ॥ ममैवतुगतंज्ञानंभ्रांतःक्षीबइवाभवम् १२
नहेतुंतत्रपश्यामिस्फूर्तिःकापिनजायते ॥ तद्धेतुंस्फूर्तिहेतुंचप्रष्टुंत्वामहमागतः १३ अन्यंकंशरणंयामिविनात्वांचतुरानन ॥ सर्वज्ञ सर्वकर्तात्वंममभ्रांतिंनि
वारय १४ वदहेतुंममभ्रांतेर्नारायणस्वरूपिणः ॥ नित्याचारवतोब्रह्मन्सर्वज्ञस्यसतोपिच १५ ॥ सूतउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंविचार्यकमलासनः ॥
प्रणतंमुनिमभ्याहप्रहसन्विस्मयन्निव १६ ॥ ब्रह्मोवाच ॥ हंततेकथयिष्यामिगतिंसूक्ष्मांहिकर्मणाम् ॥ विचार्यसम्यक्कर्तव्यंकर्मसाध्वितरच्चयत् १७ अ
न्यथाकुर्वतःपुंसःकृतंभवतिचान्यथा ॥ बुद्ध्यायुक्त्याजवेनापिगुरूणिचलघूनिच १८ कार्याणिसाधयेद्धीमान्नगर्वान्नचमत्सरात् ॥ वाहनत्वंसमापन्नोगर्वेणतु
खगेश्वरः १९ मत्सरान्नाशितंसर्वमांबिकेयसुतेनच ॥ मत्सरादेवरामेणक्षत्रमुत्सादितंपुरा २० योनादिनिधनोदेवोजगत्कर्ताजगन्मयः ॥ जगद्धाताजगद्धर्ता
सदसद्व्यक्तमव्ययम् २१ योकर्तुमन्यथाकर्तुंशक्तःकर्तुंचसर्वदा ॥ यस्याज्ञावशगानित्यंदेवाइंद्रपुरोगमाः २२ अहंविष्णुश्चरुद्रश्चसूर्याग्निवरुणादयः ॥ यो
विघ्नहर्ताभक्तानांविघ्नकर्तेतरस्यच २३ तस्मिंस्त्वंकृतवान्गर्वंस्वविद्याबलसंश्रयात् ॥ सर्वज्ञताभिमानेननकृतंपूजनंत्वया २४ स्मरणंवागणेशस्यप्रारंभेन्यस्य
वातथा ॥ नकृतंचत्वयाव्यासतेनभ्रांतिस्तवानघ २५ आरंभेसर्वकार्याणांप्रवेशेवापिनिर्गमे ॥ श्रौतेस्मार्तेलौकिकेयोस्मृतोविघ्नंकरोतिच २६ यमाहुःपरमा
नंदंयमाहुःपरमांगतिम् ॥ यमाहुःपरमंब्रह्मवेदशास्त्रार्थदर्शिनः ॥ तंगच्छशरणंवत्सद्विरदाननमादरात् २७ सचेत्प्रसन्नोभगवान्वांछितंतेकरिष्यति ॥
नोचेद्वर्षसहस्रेणनस्ववांछामवाप्स्यसि २८ ॥ व्यासउवाच ॥ ॥ कोसौगणेशःकिंचास्यरूपंवेद्यंकथंचतत् ॥ कस्यवायंप्रसन्नोभूद्ब्रूहिचतुरानन ॥
कतिवाह्यवताराश्चकिंकिंकार्यंचवैकृतम् ॥ पूर्वंचपूजितःकेनकस्मिन्कालेस्मृतोपिच ३० ममविक्षिप्तचित्तस्यपृच्छतःप्रपितामह ॥ एतत्सर्वंसुविस्ता
र्यब्रूहिमेकरुणानिधे ३१ इतिश्रीगणेशपुराणेउपासनाखंडेव्यासप्रश्नवर्णनंनामदशमोध्यायः ॥ १० ॥ ॥ भृगुरुवाच ॥ ॥ जगादभूयश्चतुरानन
स्तमेवंकृतप्रश्नंविवक्षयाथ ॥ क्रमेणसर्वंकथयामितेहंगणेशमंत्रान्बहुधाविचार्य १ ॥ ब्रह्मोवाच ॥ अनंताहिमुनेमंत्रागणेशस्यमहात्मनः ॥ उपासनंव

१ कपीश्वरद्रु०पा० । २ परमात्मानमितिपाठान्तरम् ।

दिष्यामिशीघ्रंसिद्धिकरस्यते २ सप्तकोटिमहामंत्रागणेशस्यागमेस्थिताः ॥ तद्रहस्यंशिवोवेदकिंचित्किंचिदहंमुने ३ षडक्षरैकाक्षरयोःश्रेष्ठत्वंतेषुविद्यते ॥
ययोःस्मरणमात्रेणसर्वसिद्धिःकरेभवेत् ४ जीवन्मुक्ताभवंत्येवयदुपासनयामुने ॥ तएवधन्यास्तेपूज्यास्तेनमस्याःसुरैरपि ५ यदुपासनयादा
स्यंयेषांकुर्वंतिसिद्धयः ॥ इच्छाविहाराःसर्वज्ञानानारूपाभवंतिते ६ येकुर्वंतिगणेशस्यभक्तिंभावसमन्विताः ॥ नयेषांभक्तिलेशोपितेषांजन्मनिरर्थ
कम् ७ नालोकयेन्मुखंतेषांविमुखायेगजानने ॥ तेषांदर्शनमात्रेणविघ्नानिस्युःपदेपदे ८ विघ्नान्युपशमंयांतितदुपासकदर्शनात् ॥ नमस्यंतिचभूतानिस्था
वराणिचराणिच ९ अतस्तेहंप्रवक्ष्यामिमंत्रमेकाक्षरंशुभम् ॥ तदनुष्ठानमात्रेणवांछितंसमवाप्स्यसि १० अनुष्ठानंप्रवक्ष्यामियथोक्तंशंभुनामम ॥
स्नानंकृत्वाधौतवस्त्रेपरिधायशुचिर्नरः ११ चैलाजिनंकुशैःकृत्वास्वासनंसाधकःसुधीः ॥ तस्मिन्स्थित्वाभूतशुद्धिंप्राणानांस्थापनंतथा १२ अंतर्बहि
र्मातृकाणांन्यासंकृत्वात्वतंद्रितः ॥ प्राणायामंततःकृत्वामूलमंत्रंजपन्हृदि १३ मंत्रसंध्यामुपासीतआगमोक्तांयथाविधि ॥ आपादमस्तकंदेवंध्यात्वानि
श्चलचेतसा १४ मानसैरुपचारैस्तंपूजयेत्सुसमाहितः ॥ ततोजपेद्यथाशक्तिपुरश्चरणमार्गतः १५ अनुकूलोभवेद्यावद्वरंदातुंगजाननः ॥ स्वंरूपंदर्शये
द्यावत्तावज्जपपरोभवेत् १६ ॥ भृगुरुवाच ॥ एवमुक्त्वामुनिंब्रह्माविलोक्यशुभवासरम् ॥ एकाक्षरंमंत्रराजमेकार्णंगणपस्यच १७ अशिक्षयत्तदा
सर्वसंभ्रांतंमुनिसत्तमम् ॥ ब्रह्मोवाच ॥ सूर्यकोटिप्रतीकाशंवरंदातुंसमागतम् १८ यदाद्रक्ष्यसितंदेवंतदाचित्तंस्थिरीकुरु ॥ ममैवहृदयेनित्यंस्थिरो
भवगजानन १९ वृणीष्वेतिवरंतस्मात्सतेदास्यत्यसंशयम् ॥ हृदिस्थितेतत्रदेवेदिव्यंज्ञानमवाप्स्यसि २० भूतंभाविभवच्चैवज्ञास्यसित्वमशेषतः ॥ हि
त्वाभ्रांतिंदृढांवत्सनानाग्रंथान्करिष्यसि २१ ॥ व्यासउवाच ॥ गताभ्रांतिर्ममपितरुपदेशेकृतेत्वया ॥ अनुष्ठानंकरिष्यामिपितामहतवाज्ञया २२ ॥ ब्र
ह्मोवाच ॥ एकांतेनिर्जनेदेशेव्यग्रताहेतुवर्जिते ॥ अनुष्ठानंकुरुविभोगजाननमनुस्मरन् २३ नास्तिकेनिंदकेक्रूरेनाचारेचखलेशठे ॥ नवक्तव्योमंत्रराजस्ताह
शेशरणागते २४ दृढभक्तौश्रद्दधानेविनीतेवेदवादिनि ॥ साकांक्षेनिरनुक्रोशेशास्त्रज्ञेचप्रकाशय २५ प्रापयत्येवनरकान्दशपूर्वान्दशापरान् ॥ मंत्रराज
स्तुवक्तारमप्रकाश्येप्रकाशितः २६ योजपेद्भक्तिपूर्वंतुसलभेदीप्सितंफलम् ॥ पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः २७ एकदंतप्रभावेणलब्ध्वाज्ञा
नंसुनिर्मलम् ॥ इहभुक्त्वाखिलान्भोगानंतेमोक्षमवाप्नुयात् २८ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेमंत्रकथनंनामैकादशोध्यायः ॥ ११ ॥ छ ॥
सूतउवाच ॥ इतिश्रुत्वातुवचनंनिर्गतंब्रह्मणोमुखात् ॥ हर्षेणमहतायुक्तोमुनिःपप्रच्छतंपुनः १ ॥ व्यासउवाच ॥ अवधानंमयाप्राप्तंपीत्वावागमृतंतव ॥
इदानींश्रोतुमिच्छामिमंत्रराजमिमंपितः २ कोजजापकथंसिद्धिमवापचगजाननात् ॥ एतंमेसंशयंछिंधित्वत्तोन्योनास्तिमेगुरुः ३ ॥ भृगुरुवाच ॥ इत्येवं

१ उपादिशन्मंत्रराजमितिपाठान्तरम् ।

मुनिनापृष्टोजगादवदतांवरः ॥ कृपयावनतंब्रह्मातंथासंराजसत्तम ४ ॥ ब्रह्मोवाच ॥ साधुसाधुत्वयापृष्टंपुण्यवानसिसांप्रतम् ॥ नह्यपुण्यवतांब्रह्मन्कथा
याःश्रवणेरतिः ५ उपासनामार्गमिमंसम्यक्त्वांबोधयाम्यहम् ॥ स्निग्धेप्रज्ञाधिकेशिष्येयतोगोप्यंनकिंचन ६ ॐकाररूपीभगवानुक्तस्तेगणनायकः ॥ य
थासर्वेषुकार्येषुपूज्यतेसौविनायकः ७ निर्विघ्नकामनावाह्निनोचेद्विघ्नंकरोतिसः ॥ तथोंकारबीजयुक्ताॐकारपल्लवान्विताः ८ मंत्राःसर्वागमेप्रोक्ताअन्येथे
निष्फलाश्वते ॥ सदसद्व्यक्तमव्यक्तंसर्वंहिगणनायकः ९ एवंसर्वेदेवसिद्धमुनिराक्षसकिन्नराः ॥ गंधर्वाश्चारणानागायक्षगुह्यकमानवाः १० उपासकागणे
शस्यसर्वेलोकाश्चराचराः ॥ अतएवगणेशाद्धिपरंकिंचिन्नविद्यते ॥ इदानींकथयिष्यामिकथामेकांपुरातनीम् ११ मंत्रराजजपेनायंयथातुष्टोगजाननः ॥
कदाचिद्दैवयोगेनप्रलयेसमुपस्थिते १२ वायुभिःपर्वताभिन्नाःपतिताःपरितोदिशम् ॥ तपंतिद्वादशादित्याःशोषयित्वाजलंमहत् १३ ज्वालामालीमहा
वह्निरखिलंज्वलयत्यपि ॥ संवर्त्तकामहामेघावर्षंतिपरितोजलम् १४ हस्तिहस्तोपमाभिस्तुधाराभिर्द्विजसत्तम ॥ उल्लंघयंतिमर्यादांसागराःसरितोपिच १५
एवंसर्वेविनश्यंतिआब्रह्मस्थावरादयः ॥ एवंमायामयेनष्टेविकारेसौगजाननः १६ अणुभ्योणुतरंरूपंकृत्वाक्वापिव्यवस्थितः ॥ ततःकालेबहुतरेगतेंध
तमसावृते १७ एकाक्षरंपुनर्ब्रह्मनादयुक्तमजायत ॥ वैकारिकंपुनारूपंयदानंदमयंस्थितम् १८ मायाविकारमासाद्यतदेवाभूद्गजाननः ॥ ततएवच
संभूतागुणाःसत्वंरजस्तमः १९ ततस्त्रयःसमुत्पन्नाविष्णुर्ब्रह्माहरोपिच ॥ माययारचितंसर्वंत्रैलोक्यंसचराचरम् २० ततस्तन्माययाभ्रांताबभ्रमुस्ते
सुरास्त्रयः ॥ तमेवजनकंस्वस्यद्रष्टुंप्रष्टुंसमुत्सुकाः २१ किमस्माभिःकर्मकार्यमितिजिज्ञासयामुने ॥ एकविंशतिस्वर्गाणिपूर्वमूर्ध्वंविलोक्यते २२ अंतरि
क्षंतथातिर्यक्पश्चात्पातालमाययुः ॥ अदृष्ट्वापरमात्मानंतपश्चेरुस्ततोभृशम् २३ निराहाराजपपरादिव्यवर्षसहस्रकम् ॥ श्रांताःखेदमनुप्राप्तास्ततस्तेपृथि
वींपुनः २४ विचिन्वंतोययुर्द्रष्टुंवनान्युपवनानिच ॥ सरितःसागरान्शैलान्शिखराणिगुहापिच २५ ततोजलाशयंतेतुमहांतंददृशुःपुरः ॥ नानाज
लचरैर्वृक्षैःपक्षिभिर्विविधैर्युतम् २६ बलाकाभिश्चक्रवाकैर्हंसैःकारंडकैरपि ॥ नादितंनलिनीजालंबिसखंडाशनेरतैः २७ स्नात्वाविश्रम्यतत्तीरेसमुत्ती
र्यपुरोययुः ॥ नानावीचिसमायुक्तंमहांतंतंजलाशयम् २८ सुदुस्तरतरंपुंसांझषनक्रसमाकुलम् ॥ ईक्षांचक्रुःसुदुर्दर्शंप्रलयानलसन्निभम् २९ कोटिसू
र्यप्रतीकाशंतेजोराशिंपुरोमुने ॥ चिंतामापुःपरांतेतुतेजसाहृतदृष्टयः ३० ततोगगनमार्गेणतेजोमध्याद्विनिर्गताः ॥ क्षुधातृषापरिश्रांतानिश्वसंतोमुहुर्मुहुः
३१ निंदंतश्चशपंतश्चस्वात्मानंजातसाध्वसाः ॥ ततोतिकरुणाविष्टोलोकाध्यक्षोखिलार्थवित् ३२ दर्शयामासतान्रूपंमनोनयननंदनम् ॥ पादांगुलीनख
श्रीभिर्जितरक्ताब्जकेसरम् ३३ रक्तांबरप्रभावाच्चुजितसंध्यार्कमंडलम् ॥ कटिसूत्रप्रभाजालैर्जितहेमाद्रिशेखरम् ३४ खड्गखेटधनुःशक्तिशोभिचारुचतुर्भुजम् ॥

१ ददृशुःसुरा इतिवापाठः ।

सुनासंपूर्णिमाचंद्रजितकांतिमुखांबुजम् ३५ अहर्निशंप्रभायुक्तंपद्मचारुसुलोचनम् ॥ अनेकसूर्यशोभाजिन्मुकुटभ्राजिमस्तकम् ३६ नानातारां
कितव्योमकांतिजिदुत्तरीयकम् ॥ वराहदंष्ट्राशोभांजिदेकदंतविराजितम् ३७ ऐरावतादिदिक्पालभयकारिसुपुष्करम् ॥ दृष्ट्वैवसहसादेवंप्रणेमुस्तेमुदामु
ने ॥ पादांबुजमुपस्पृश्यततःस्तोतुंप्रचक्रमुः ३८ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेगजाननदर्शनंनामद्वादशोध्यायः १२ ॥ ७ ॥ व्यासउवाच ॥ पंचा
स्यश्चतुरास्यश्चसहस्रमस्तकोपिच ॥ गजास्यंवरदंदेवंकथमेतेप्रतुष्टुवुः १ ॥ ब्रह्मोवाच ॥ प्रसादोन्मुखविघ्नेशकृपापांगनिरीक्षणात् ॥ प्राप्तबुद्धिप्रसादास्ते
केशास्तंनुनुवुस्तदा २ ॥ ब्रह्मविष्णुमहेशाऊचुः ॥ अजंनिर्विकल्पंनिराकारमेकंनिरानंदमद्वैतमानंदपूर्णम् ॥ परंनिर्गुणंनिर्विशेषंनिरीहंपरब्रह्मरूपंगणेशंभजे
म ३ गुणातीतमाद्यंचिदानंदरूपंचिदाभासकंसर्वगंज्ञानगम्यम् ॥ मुनिध्येयमाकाशरूपंपरेशंपरब्रह्मरूपंगणेशंभजेम ४ जगत्कारणंकारणज्ञानरूपंसुरा
दिंसुखादिंयुगादिंगणेशम् ॥ जगद्व्यापिनंविश्ववंद्यंसुरेशंपरब्रह्मरूपंगणेशंभजेम ५ रजोयोगतोब्रह्मरूपंश्रुतिज्ञंसदाकार्यसक्तंहृदाचिंत्यरूपम् ॥ जगत्
कारकंसर्वविद्यानिधानंपरब्रह्मरूपंगणेशंनताःस्मः ६ सदासत्त्वयोगंमुदाक्रीडमानंसुरारीन्हरंतंजगत्पालयंतम् ॥ अनेकावतारंनिजाज्ञानहारंसदाविष्णुरू
पंगणेशंनमामः ७ तमोयोगिनंरुद्ररूपंत्रिनेत्रंजगद्धारकंतारकंज्ञानहेतुम् ॥ अनेकागमैःस्वंजनंबोधयंतंसदाशर्वरूपंगणेशंनमामः ८ तमस्तोमहारंज
नाज्ञानहारंत्रयीवेदसारंपरब्रह्मपारम् ॥ मुनिज्ञानकारंविदूरेविकारंसदाब्रह्मरूपंगणेशंनमामः ९ निजैरोषधीस्तर्पयंतंकरौघैःसुरौघान्कलाभिःसुधास्राविणीभिः
णीभिः ॥ दिनेशांशुसंतापहारंद्विजेशंशशांकस्वरूपंगणेशंनमामः १० प्रकाशस्वरूपंनभोवायुरूपंविकारादिहेतुंकलाकालभूतम् ॥ अनेकक्रियानेक
शक्तिस्वरूपंसदाशक्तिरूपंगणेशंनमामः ११ प्रधानस्वरूपंमहत्तत्त्वरूपंधरावारिरूपंदिगीशादिरूपम् ॥ असत्सत्स्वरूपंजगद्धेतुभूतंसदाविश्वरूपंगणे
शंनताःस्मः १२ त्वदीयेमनःस्थापयेदंघ्रियुग्मेजनोविघ्नसंघान्नपीडांलभेत ॥ लसत्सूर्यबिंबेविशालेस्थितोयंजनोध्वांतबाधाकथंवालभेत १३ वयंभ्रा
मिताःसर्वथाज्ञानयोगादलब्धास्तवांघ्रिंबहून्वर्षपूगान् ॥ इदानीमवाप्तास्तवैवप्रसादात्प्रपन्नान्सदापाहिविश्वंभराद्य १४ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंस्तुतो
गणेशस्तुसंतुष्टोभून्महामुने ॥ कृपयापरयोपेतोभिधातुंतान्प्रचक्रमे १५ ॥ गणेशउवाच ॥ यदर्थंक्लेशितायूयंयदर्थमिहचागताः ॥ प्रीतोहमनयास्तुत्या
वरंमत्तोवृणीतत्तम् १६ कृतंचममयत्स्तोत्रंभवद्भिर्भावितात्मभिः ॥ स्तोत्रराजमितिख्यातंभविष्यतिममाज्ञया १७ इदंयःपठेत्प्रातरुत्थायधीमां
स्त्रिसंध्यंसदाभक्तियुक्तोविशुद्धः ॥ सपुत्रान्श्रियंसर्वकामान्लभेतपरब्रह्मरूपोभवेदंतकाले १८ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतितद्वचनंश्रुत्वासंतुष्टास्तेतमब्रुव
न् ॥ तदीक्षयारजःसत्त्वतमोगुणसमुद्भवाः १९ ॥ त्रयऊचुः ॥ यदितुष्टोसिदेवेशसृष्टिसंहारकारक ॥ तवांघ्रिकमलेनोस्तुभक्तिरव्यभिचारिणी २० किं

१ शोभाभिः इ०पाठान्तरम् । २ आकाशतुल्यमि पा०

चास्माभिःप्रकर्त्तव्यमाज्ञापयतुनोभवान् ॥ अयमेववरोस्माकंवांछितोद्विरदानन २१ इतिश्रुत्वावचस्तेषांपुनःप्राहगजाननः ॥ भविष्यतिमहाभागाम
यिभक्तिर्दृढाहिवः २२ सं१स्थानियथायूयंतरिष्यथमहांत्यपि ॥ भवत्स्वयात्यैप्रवक्ष्यामिकार्याणिचपृथक्पृथक् २३ सृष्टिकर्त्ताभवब्रम्हन्रजोगुणसमुद्भवः ॥
पालनंकुरुविष्णोत्वंव्यापकःसत्त्वसंश्रयः २४ हरसंहरसत्वंतमोगुणसमुद्भवः ॥ ब्रम्होवाच ॥ वेदशास्त्रपुराणानिसृष्टिसामर्थ्यमेवच २५ ददौगणेशोन्यांविद्यां
ब्रह्मणेमह्यमादरात् ॥ विष्णवेभगवान्प्रादात्योगात्स्वच्छंदरूपताम् २६ एकाक्षरंषडर्णंचमंत्रंसर्वागमांस्तथा ॥ हरायभगवान्प्रादाच्छक्तिंसंहरणेपिच २७ तत
श्चाहंदीनमनास्त्रैलोक्येशंजगद्गुरुम् ॥ उवाचप्रांजलिर्भूत्वावरदंतमिभाननम् २८ ॥ ब्रम्होवाच ॥ यथागृहीतशक्तिस्तुवाच्यावाच्यंविवक्तिन ॥ तथानेक
विधांसृष्टिमदृष्ट्वाक्वापिकिंचन २९ कर्तुंवापिविभोराज्ञाविभेदंकथमुत्सहे ॥ इतःकूपइतोवापीत्येवंप्राप्तंमयाकथम् ३० ततोगजाननःप्राहदिव्यंचक्षुः
प्रदायतम् ॥ ब्रह्माणंवेदशास्त्रज्ञंतथाव्याकुलितंप्रभुः ३१ ॥ गजाननउवाच ॥ बहिरंतःशरीरेमेसंख्यातीतानिपद्मज ॥ ब्रह्मांडानित्वमद्यैवविभ्रमंतिविलोक
य ३२ ॥ ब्रम्होवाच ॥ ततोगजाननेनाहंस्वोदरेश्वासवायुना ॥ नीतोददर्शधातापिब्रह्मांडानित्वनेकशः ॥ औदुंबराणीवतरौतेषुवामशकानिव ३३ भेदयामास
तत्रैकंपरमेणस्वतेजसा ॥ तदंतःसकलांसृष्टिंददर्शाथपुनःपुनः ३४ ब्रह्माणंचापरंतत्रविष्णुमिंद्रंप्रजापतिम् ॥ शंकरंभास्करंवायुंवनानिसरितोंबुपम् ३५
सागरान्यक्षगंधर्वानप्सरःकिन्नरोरगान् ॥ ऋषीन्पुण्यजनान्साध्यान्मनुष्यान्पर्वतान्द्रुमान् ३६ उद्भिज्जान्जारजान्जंतून्स्वेदजानंडजानपि ॥ पृथ्वीं
चसप्तपातालान्यव्ययान्येकविंशतिम् ३७ ददर्शविश्वंचाहंवैभावाभावंचराचरम् ३८ यद्यच्चाहंभेदयामासचांडंतस्मिंस्तस्मिन्सर्वमेवंददर्श ॥ दृष्ट्वाभ्रां
तिंपूर्ववत्संप्रपेदेतेषामंतंसर्वथानाध्यगच्छम् ३९ नस्थातुंनैववागंतुंशशाककमलासने ॥ उपविश्यततोब्रह्मंस्तुष्टावद्विरदाननम् ४० ॥ ब्रह्मोवाच ॥ वंदे
देवंदेवदेवंगणेशंब्रह्मांडानांनैवसंख्यायदंगे ॥ अभोडूनांसागरेवाझषाणांकःसंख्याताशर्कराणांचतीरे ४१ लज्जानमेत्रास्तिसुरेंद्रवंद्यपादारविंदंतवयत्त्वि
लोक्य ॥ भ्रांतोभवंज्ञाननिधौप्रसन्नेमोक्षोपितुच्छःकिमुतान्यवार्ता ४२ दृष्टंचनानार्थयुतंसुरेशब्रह्मांडकूटंजठरेत्वदीये ॥ स्थातुंबहिर्गंतुमपीहनेश
स्त्वदन्यदेवंशरणंनचैमि ४३ ततःप्रसन्नोभगवाननंतोवैगजाननः ॥ बहिर्निष्कासयामासतदामांखिन्नमानसम् ४४ नासिकारंध्रमार्गेणहरिंमदनुयायिन
म् ॥ तामसंचहरंदेवोविष्णुनासहसंगतम् ४५ निःसारयामासविभुःश्रुतिरंध्राद्गजाननः ॥ शयातेस्मतदंगेताबुभौहरिहरौसुखम् ४६ ॥ इतिश्रीग
णेशपुराणेउपासनाखंडेब्रम्हस्तुतिवर्णनंनामत्रयोदशोध्यायः ॥ १३ ॥ राजोवाच ॥ ततःकिमकरोद्ब्रह्मावीक्ष्यांडानिसहस्रशः ॥ कथंचसृष्टिमकरोदाज्ञां
प्राप्यगजननात् १ ॥ भृगुरुवाच ॥ अभवद्गर्वसंपन्नःस्वात्मन्येवंविचारयन् ॥ वेद्मिशास्त्राणिवेदांश्चपुराणान्यागमानपि २ ज्ञानविज्ञानसंपन्नःशापानुग्रहश

१ सत्त्वसंभवइतिपाठान्तरम् २ वन्देवन्देइ०पा० ३ नरेभ्रिइ०पा०

क्तिमान् ॥ ब्रह्मांडानिचदृष्टानिसृष्टीनांरचनास्तथा ३ इदानींसृष्टिकरणेऽशक्यंमेनैवकिंचन ॥ इत्येवंसर्वसंपन्नेसृष्ट्यर्थंकमलोद्भवे ४ विघ्नानानाविधाभूपप्रादुरास
न्सहस्रशः ॥ तंवेष्टयित्वाब्रह्माणंस्थिताःपरमदारुणाः ५ यथामताःपुष्परसैःसरघामधुजालकम् ॥ त्रिनेत्राःपंचहस्ताश्चकूपास्याःसप्तपाणयः ६ त्र्यंघ्रयःपंचतुं
डाश्चसप्ततुंडाःषडंघ्रयः ॥ दशास्याःपंचपादाश्चतालदंताघ्रकोदराः ७ नानारूपामहासत्वाःसंख्यातुंनचतेक्षमाः ॥ चकंपेद्रुहिणस्तेषांनानारावान्निशम्यतान् ८
केचित्तंमुष्टिभिर्जघ्नुर्नेमुश्चनुनुवुःपरे ॥ चतुःशिखासुसंगृह्यदोलयामासुरादरात् ९ चत्वार्यपिमुखान्यस्यजहसुस्तंतथापरे ॥ निनिंदुश्चप्रशंसांचचक्रुःकेचित्सि
षेविरे १० मोचयामासुरपरेबबंधुरपरेपुनः ॥ मोचितंपुनरप्यन्येविचकर्षुरितस्ततः ११ आलिलिंगुश्चतंकेचिच्चुचुंबुःशिशुवत्परे ॥ अष्टश्मश्रुपुतंधृत्वानन
र्तकोष्टहस्तवान् १२ एवंसपरवान्ब्रह्माचिंताशोकसमन्वितः ॥ अखर्वैस्तृष्टिगर्वैतंतत्त्याजत्द्दिसंगतम् १३ जगाममहतींमूर्छांनिराशःस्वस्यजीवने ॥ मुहूर्तमा
त्रेतुगतेसस्मारमनसाविभुम् ॥ प्रार्थयामासकारुण्याद्रुदन्निवगजाननम् १४ ब्रह्मोवाच ॥ नचायुष्यंस्वल्पंविविधजननेसक्तमनसोनमेतत्त्वज्ञानंभवजलधि
तारंसुविमलम् ॥ जनुर्भूमौलब्ध्वातवभजनतोयामिपरमांकदामुक्तिभुक्तिनिरुपमसुखांवाखिलगुरो १५ त्वत्कटाक्षामृतेनाक्तोभक्तःसीदातितेविभो ॥ इयंल
ज्जातवैवास्तांनमेमृत्युश्चिरायुषः १६ भृगुरुवाच ॥ इत्यसौप्रार्थयन्नेवशुश्रावगगनेरिताम् ॥ गिरंतपस्वेतिततःप्रार्थयामासतांपुनः १७ अंतर्हिताश्चतेवि
घ्नाःश्रुतायांनभसोगिरि ॥ नानारूपामहावीर्यामुक्त्वातंकमलासनम् १८ समुक्तश्चिंतयामासपद्मयोनिर्महायशाः ॥ विनामंत्रंविनास्थानंकथंतप्स्येतपोमह
त् १९ इतिव्याकुलचित्तोसौबभ्रामजलमध्यतः ॥ अनन्यमनसाध्यायन्गजाननमनामयम् २० मुकुटेनविराजंतंमुक्तारत्नयुजाशुभम् ॥ रक्तचंदनलिप्तां
गंसिंदूरारुणमस्तकम् २१ मुक्तादामलसत्कंठंसर्पयज्ञोपवीतिनम् ॥ अनर्घ्यरत्नघटितबाहुभूषणभूषितम् २२ स्फुरन्मरकतभ्राजदंगुलीयकशोभितम् ॥ म
हाहिवेष्टितबृहन्नाभिशोभिमहोदरम् २३ विचित्ररत्नखचितकटिसूत्रविराजितम् ॥ सुवर्णसूत्रविलसद्रक्तवस्त्रसमावृतम् २४ भालचंद्रंलसद्दंतशोभाराजत्करं
परम् ॥ एवंध्यायतितस्मिंस्तुपुनरेवनभोवचः २५ उदियायवटंपश्यवटंपश्येतिसुंदरम् ॥ श्रुत्वेतिवचनंब्रह्मापुनश्चिंतामवापसः २६ ॥ ॥ इतिश्रीगणे
शपुराणेउपासनाखंडेब्रह्मचिंतावर्णनंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ भृगुरुवाच ॥ ॥ व्यासायाकथयच्चाग्रेब्रह्मालोकपितामहः ॥ सो
मकांतप्रवक्ष्यामितांकथांशृणुसादरम् १ ब्रह्मोवाच ॥ ततोहंसुमहत्स्वप्नंददर्शमुनिसत्तम ॥ भ्रमताभ्रमताव्योमजलेदृष्टोवटोमहान् २ महावातातपाद्भिस्तुनष्टे
स्थावरजंगमे ॥ अवशिष्टःकथमयमेकएववटोमहान् ३ एवंसंशयमापन्नस्तत्पत्रेबालकंलघुम् ॥ चतुर्बाहुंसुमुकुटंकुंडलाभ्यांविराजितम् ४ मणिमुक्तामयं
दामबिभ्रत्कंठेसुशोभितम् ॥ अर्धचंद्रंरक्तवस्त्रंकटिसूत्रंतथैवच ५ एकदंतंनरवपुर्गजास्यंतेजसाज्वलत् ॥ दृष्ट्वैवंतर्कयामासबालकंकथमत्रवै ६ पु

१ अयंश्लोको मुद्रित पुस्तके नविद्यते परमग्रे सर्वत्र प्रथमपुरुष प्रयोग एव ।

ष्करेणचतत्बालंजलंमन्मस्तकेक्षिपत् ॥ ततोहमाजहासोच्चैश्चितानंदसमन्वितः ७ मय्याहसतिबालःसउत्ततारवटात्ततः ॥ सममांकंसमागत्यमंजुवा
क्यंजगादह ॥ ८ ॥ ॥ बालउवाच ॥ ॥ लघोर्लघुतरोसित्वंवृथावृद्धोपिमूढधीः ॥ विघ्नैरभिहतोसित्वंसृष्टिचिंतासमावृतः ९ तपश्चिताप
रोनित्यंविभ्रमन्जलमध्यगः ॥ सर्वचिंताहरंतेहमुपायंचतुरानन १० उपादिशामितेमंत्रमेकाक्षरमिमंमम ॥ पुरश्चरणमार्गेणदशलक्षंजपस्वतम् ११ ततःप्रत्य
क्षतांयास्येदास्येसामर्थ्यमुत्तमम् ॥ दृष्ट्वैवंस्वप्नमाश्चर्यंप्रतिबुद्धोभवंह्यहम् १२ शुशोचचकदामेस्याद्दर्शनंपरमेशितुः ॥ दृष्टस्वप्नोभवंमग्न आनंदमय
सागरे १३ ततःस्नात्वापरंमंत्रंजजापबहुवासरम् ॥ एकपादेनकमलेतिष्ठन्ध्यायन्गजाननम् १४ जितेंद्रियोजिताहारःकाष्ठपाषाणवत्स्थिरः ॥ दिव्यवर्षस
हस्रंसतपस्तेपेपरंमहत् १५ ततोमेमुखतोज्वालाःप्रादुरासन्दुरासदाः ॥ ताभिःसर्वाणिभूतानिपीडामापुःसुदारुणाम् १६ ततोगजाननोदृष्ट्वातांनिष्ठां
ममसुदृढाम् ॥ तुतोषपरयाभक्त्याप्रादुरासीत्ततःपुरः १७ कोटिसूर्यसमानश्रीर्ज्वालामालीवहव्यभुक् ॥ दहन्निवात्रिलोकींससंहरन्निवरोदसी १८ परशुक
मलधारीदिव्यमायाविभूषःसकलदुरितहारीसर्वसौंदर्यकोशः ॥ करिवरमुखशोभीभक्तवांछाप्रपोषःसुरमनुजमुनीनांसर्वविघ्नैकनाशः १९ तेजोराशिमहंदृष्ट्वा
कंपेव्यासससन्मुने ॥ चिंतामवापपरमांव्यग्रचित्तोजपाच्च्युतः २० आच्छादितानीक्षणानिस्मृतिश्चविलयंगता ॥ दृष्ट्वेदृशीमवस्थांतांशीघ्रंप्राहाथविघ्नराट्
२१ ॥ ॥ गणेशउवाच ॥ नभयंकुरुलोकेशसएवाहंसमागतः ॥ येनतेमंत्रआदेशिस्वप्नएकाक्षरःशुभः २२ तेनसिद्धिरनुप्राप्तावरंदातुंसमागतः ॥ सौम्य
भावंप्रपन्नोस्मिवरंवरयसुव्रत २३ दास्यामितेप्रसन्नोहंयद्यत्तेत्हृदिवर्त्तते ॥ मयिप्रसन्नेसर्वंतद्भवितानात्रसंशयः २४ ॥ मुनिरुवाच ॥ ॥ इत्थंनिशम्यगणना
थवचोविशुद्धंब्रह्माजहर्षपरमंप्रसमीक्षमाणः ॥ नत्वाचराचरगुरुंसकलैःशिरोभिःप्राहप्रसन्नहृदयःसफलंजनुर्मे २५ ॥ ब्रह्मोवाच ॥ ॥ योवेदानांसशास्त्राणांज्ञा
निनांयोगिनामपि ॥ सर्वोपनिषदांचैवगोचरोनकदाचन २६ सपुण्यनिचयैर्मेद्ययातःप्रत्यक्षतांविभुः ॥ अनादिनिधनोनंतोप्रमेयोनिर्गुणोपिच २७ यदिप्र
सन्नोदेवेशविघ्नेशकरुणाकर ॥ तवभक्तिंदृढांदेहिययादुःखंननःस्पृशेत् २८ इदानींदेहिसामर्थ्यंनानानिर्माणनेमम॥ विघ्नानिचशमंयांतुयदितुष्टोसिमेप्रभो२९
स्मृतमात्रःसदामेत्वंसर्वंकार्यंसमापय ॥ अंतेमुक्तिंस्थिरांदेहिज्ञानंचविमलंमम ३० ॥ गजाननउवाच ॥ ॥ एवमस्तुकुरुष्वत्वंसृष्टिंनानाविधांबहुम् ॥
मांस्मृत्वासर्वविघ्नानिनाशंयास्यंतिसर्वतः ३१ दृढाभक्तिःशुभंज्ञानंमत्प्रसादाद्भविष्यति ॥ निःशंकंकुरुकार्याणिसर्वाणिचतुरानन ३२ ॥ मुनिरुवाच ॥ एवं
लब्धवरोब्रह्मापूजयामासतंविभुम् ॥ यद्यच्चित्तेचिंतयत्सतत्तद्देवोपतिष्ठते ३३ पूजार्थंदेवदेवस्यगणेशस्यप्रसादतः ॥ दक्षिणावसरेद्वेतुकन्यकेसमुपस्थिते ३४
चारुप्रसन्ननयनवदनैःसुविराजिते ॥ अनेकरत्नखचितनानालंकारशोभिते ३५ दिव्यगंधयुतेदिव्यवस्त्रमालाविभूषिते ॥ तेतस्मैदक्षिणार्थंसकल्पया

१ येनेत्ययं श्लोकोधिक एकस्मिन्पुस्तके। २ त्वयितुष्टे गजानने इ०पाठान्तरम्।

मासपद्मभूः ३६ रंआगर्भेणनीराज्यंदिव्यपुष्पांजलिंददौ ॥ सहस्रनामभिःस्तुत्वाप्रदक्षिणमथाकरोत् ३७ नमस्यप्रार्थयामासदीनानांशंकरोभव ॥
एवंसंपूजितस्तेनब्रह्मणापरमेष्ठिना ३८ ततःप्रसन्नोभगवान्विघ्नहर्तागजाननः ॥ सिद्धिबुद्धीगृहीत्वातेअंतर्धानमगाद्विभुः ३९ कस्ततःकारयामाससृष्टिं
पूर्ववदायताम् ॥ आज्ञयापरमेशस्यप्रसादाच्चप्रसन्नधीः ४० ॥ इतिश्रीगणेशपुराणेउपासनाखंडेगजाननपूजानिरूपणंनामपंचदशोध्यायः ॥ १५ ॥
राजोवाच ॥ ॥ श्रुत्वाकथांगणेशस्यहर्षश्चेतसिजायते ॥ पुनश्चवदविप्रर्षेनतृप्यामिकथामृतात् १ अंतर्हितेभगवतिगणेशेपरमात्मनि ॥ कथंविनिर्ममेसृष्टिंब्र
ह्मातद्वर्णयप्रभो २ यच्चाग्रेकथयामासव्यासायाख्यानकंविधिः ॥ तदहंविस्तरेणैवश्रोतुमिच्छामिसन्मुने ३ भृगुरुवाच ॥ सिद्धक्षेत्रस्यमाहात्म्यंव्यासा
याकथयत्प्रभुः ॥ आनुपूर्व्येणतत्तेहंकथयिष्येसृजच्चयत् ४ सब्रह्मानिर्ममेपूर्वंमनसासप्तपुत्रकान् ॥ आहतान्सृष्टिसाहाय्यंसृजध्वंस्वस्वबुद्धितः५ तेतुतद्वचनंश्रुत्वा
तपसेकृतनिश्चयाः ॥ तपस्तप्त्वासुविपुलंपरंब्रह्मसमागताः ६[1] ततोन्यान्कल्पयामाससप्तपुत्रान्प्रजापतिः ॥ तेप्यंतज्ज्ञानसंपन्नानचक्रुःसृष्टिमुत्तमाम् ७ ततःस्व
यंसमारेभेसनकादीन्विलोक्यतान् ॥ मुखतोब्राह्मणानग्निमसृजत्कमलासनः ८ बाहूरुपादतोन्यांस्त्रीन्वर्णांश्चंद्रमसंहृदः ॥ चक्षुर्भ्यांचरविंश्रोत्रान्मारुतं
प्राणमेवच ९ अंतरिक्षंतथानाभेःशिरसोदिवमेवच ॥ भूमिंपद्भ्यांदिशःश्रोत्रादन्याँल्लोकानकल्पयत् १० अन्यदुच्चावचंविश्वंस्थावरंजंगमंचयत् ॥ स
मुद्रान्सरितःशैलांस्तृणगुल्ममहीरुहान् ११ ततःकतिपयाहःसुगतेषुमुनिसत्तमाः ॥ निद्रितस्यमहाविष्णोःश्रोत्राज्जातौमहासुरौ १२ मधुकैटभ
नामानौविख्यातौभुवनत्रये ॥ दंष्ट्राकरालवदनौपिंगाक्षौदीर्घनासिकौ ११ महाकायौमहासारावत्युच्चौपर्वताविव ॥ वर्षामुदिरशब्दौतौगर्जंतौभृ
शगर्वितौ १४ वचोभिर्बहुभिर्दुष्टैधिक्कारंतस्यचक्रतुः ॥ विप्रान्देवानृषीन्साधून्शास्त्राणिचनिनिंदतुः १५ तयोःशब्देनधरणीचकंपेशेषएवच ॥
उद्विग्नमासीत्सकलंब्रह्मांडंस्वनतस्तयोः १६ ततस्तौक्रोधरक्ताक्षौकंतंखादितुमुद्यतौ ॥ ततोसौवरदांदेवींविष्णुमोहनकारिणीम् १७ विष्णुनेत्रगतां
निद्रांतुष्टावकमलासनः ॥ मधुकैटभनाशायप्रबोधायहरेरपि १८ गजाननप्रसादेनविष्णुहस्तात्तयोर्वधम् ॥ ज्ञात्वासम्यग्विचार्यैवचिंताहर्षसमन्वि
तः १९ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्वाहास्वधारूपधरासुधात्वंमात्रार्धमात्रास्वररूपिणीच ॥ कर्त्रीचहर्त्रीजननीजनस्यसतोसतःशक्तिरसित्वमेव २०
श्रुतिःस्वराकालरात्रिरनादिनिधनाक्षपा ॥ जगन्माताजगद्धात्रीसृष्टिस्थित्यंतकारिणी २१ सावित्रीचतथासंध्यामहामायातृपाक्षुधा ॥ सर्वेषांवस्तुजा
तानांशक्तिस्त्वमसिपार्वति २२ त्रैलोक्यकर्तात्वन्नाथोदैत्यदानवसूदनः ॥ निद्रयाव्याप्तचित्तोसौज्ञानाविज्ञानवान्हरिः २३ जगदुत्पाद्यतेयेनपाल्यतेहिय
तेपिच ॥ सोपित्वयावताराणांसंकटेविनियोज्यते २४ दुष्टात्मानौमोहयैतौत्वंदैत्यौमधुकैटभौ ॥ हंतुमेतौदुराधर्षौज्ञानमस्यप्रदीयताम् २५ अहमाराधित

[1] श्लोकद्वयमेतन्मुद्रितपुस्तकेन ।

श्चाभ्यांपूर्वजन्मन्यतंद्रितम् ॥ वरानबहुविधानप्रादामवध्यौममतावुभौ २६ तयोरुच्चावचान्शब्दानतोहमसहंबहु ॥ मामेवहंतुकामौतौस्तुतौनानावि
धैःस्तवैः २७ तथापिमद्धधात्तौननिवृत्तौदुष्टभावतः ॥ अतस्त्वांप्रार्थयेदेविविष्णुबोधनहेतवे २८ इतिश्रीगणेशपुराणेउपासनाखंडेदेवीप्रार्थनंनामषोडशो
ऽध्यायः १६ ॥ ॥ मुनिरुवाच ॥ ॥ यावदुत्तिष्ठतेविष्णुस्तावत्ताभ्यांत्रिविष्टपम् ॥ आक्रांतमिंद्रसदनंयाम्यंकौबेरमेवच १ तौदृष्ट्वासर्वतोदेवाःपलायन
पराबभुः ॥ निपेतुर्बभ्रमुःकेचिन्मुमूर्छुश्चस्खलुःपरे २ ततोदेव्याविनिर्मुक्तोनिद्रयाहरिरीश्वरः ॥ आश्वास्यसर्वदेवांस्तांस्ताभ्यांयुद्धंचकारह ३ आक्रमंस
र्वदेवानांकृतंताभ्यांनिवारितुम् ॥ शेषादिसर्वनागानांमुनीनांयक्षरक्षसाम् ४ शुशुभेसहरिस्तत्रशंखचक्रगदाधरः ॥ किरीटकुंडलधरोनीलमेघघनच्छ
विः ५ ततःसभगवान्शंखंप्रदध्मौभृशवेगवान् ॥ तेनशब्देनमहताक्षोभयामासरोदसी ६ पांचजन्यस्वनंश्रुत्वाबिभिदेहृदयंतयोः ॥ ततस्तौभयसंवि
ग्नौपरस्परमथोचतुः ७ भूमंडलंचपातालंस्वर्गाणामेकविंशतिः ॥ आक्रांताःसम्यगावाभ्यांतदायंनश्रुतःस्वनः ८ वज्रसारमयंयेनचकंपेहृदयंद्वयोः ॥ त
स्मादनेनयोद्धव्यंपुरुषेणबलीयसा ९ रणकंडूतिशांत्यर्थंविजयायेतरायवा ॥ रिपुमेनंहनिष्यावोगच्छावोवापुनर्भवम् १० एवंतौनिश्चयंकृत्वायुयुत्सुंहरिमू
चतुः ॥ रणकंडूतिशांत्यर्थंदृष्टोसिपुरुषोत्तम ११ कथमुत्तमतांयासिआवयोर्दृष्टिगोचरः ॥ मुनिरुवाच ॥ इतिवाक्यंतयोःश्रुत्वाजगादविष्टरश्रवाः १२ ॥ हरिरुवाच ॥
सम्यगुक्तंमहादैत्यौयथेष्टंयुध्यतंमया ॥ नहिकामयतेकश्चिन्मरणंस्वयमात्मनः १३ ॥ ॥ तावूचतुः ॥ चतुर्भुजोसिदेवेशबाहुयुद्धंददस्वनौ ॥ मुनिरुवाच ॥
एवमुक्तोहरिस्ताभ्यांतथेत्याहमुदान्वितः १४ त्यक्त्वायुधानियुयुधेद्वाभ्यामेकश्चतुर्भुजः ॥ जघ्नतुस्तौशिरोमूर्ध्नाजंघाभिरथजंघयोः ॥ कूर्परैःकूर्प
रैःस्वीयैर्बाहूबाहुभिरेवच १५ गुल्फौगुल्फैःकटिंताभ्यांनासिकाभ्यांचनासिकाम् ॥ मुष्टिभ्यांमुष्टिदेशंचपृष्ठाभ्यांपृष्ठमेवच १६ आस्फोटनविकर्षाभ्यां
बाहुभिर्मंडलैरपि ॥ एवंपरस्परंयुद्धंप्रावर्ततचिरंतदा १७ सहस्रंपंचगुणितमतिक्रांतंमहामुने ॥ वर्षाणांनतुतौजेतुंशशाकहरिरीश्वरः ॥ ततोदधाररूपं
सगांधर्वंगीतकोविदम् १८ गत्वावनांतरंचारुवीणागानंचकारसः ॥ हरिणाश्वापदालोकादेवगंधर्वराक्षसाः १९ स्वस्वव्यापाररहिताःसर्वेतत्परतांययुः
आलापंतस्यगिरिशःकैलासेश्रुतवान्मुहुः २० निकुंभंपुष्पदंतंचजगादभगनेत्रहा ॥ एतमानयतंशीघ्रंयोसौगायतिकानने २१ तौगत्वादर्शनंतस्यगृ
हीत्वावैतमूचतुः ॥ तवगीतस्वनंश्रुत्वाशंकरोहर्षनिर्भरः २२ त्वांसमाह्वयतेदेवोगानंश्रोतुंतवानघ ॥ आवाभ्यांसहयाहित्वंशीघ्रंयामतदंतिकम् २३ तयोर्वा
क्यमितिश्रुत्वागंधर्वोहरिभक्तिमान् ॥ ताभ्यांसहययौतत्रयत्रदेवोमहेश्वरः २४ ददर्शपार्वतीकांतंचंद्रार्धकृतशेखरम् ॥ गजचर्मपरीधानंरुंडमालाविभूषि
तम् २५ राजत्पिंगजटाभारंसर्पयज्ञोपवीतिनम् ॥ ननामभुविविश्वेशंप्रणतार्तिविनाशनम् २६ उत्थाप्यगिरिशःस्वेनपाणिनातमधोक्षजम् ॥ आस
नंचददौतस्मैपूजयामासशंकरः २७ ततोजगादसहरिर्द्यमेसफलंजनुः ॥ यतोवद्दर्शनंतेभूद्धर्मकामार्थमोक्षदम् २८ तोषयामासतंदेवंगंधर्वोगान

तत्परम् ॥ वीणारवैःकलपदैरालापैर्विविधैरपि २९ स्कंदंगणेश्वरंदेवींपार्वतींचसुरान्नृषीन् ॥ ततोमहेश्वरःप्रीत्यालिलिंगप्रकटंहरिम् ३० शंखचक्रगदाप
द्मपीतांबरधरंशुभम् ॥ उवाचचहरेमत्तोवृणुकामानशेषतः ३१ दास्यामितवगानेनपरांमुदमुपागतः ॥ भृगुरुवाच ॥ ततऊचेस्वभूस्तंतुवृत्तांतंदैत्य
योःपरम् ३२ ॥ हरिरुवाच ॥ मयिक्षीराब्धिशयनेनिद्रितेमधुकैटभौ ॥ उत्पन्नौकर्णमलतोब्रह्माणंभक्षितुंगतौ ३३ तेननिद्रास्तुताभर्गतयाहंप्रतिबोधितः ॥ युद्धं
चकृतवांस्ताभ्यांमल्ललीलामुपागतः ३४ नास्मिशक्तोविजेतुंतौततएतत्कृतंमया ॥ इदानींतद्वधोपायंवदमेकरुणानिधे ३५ ॥ भर्गउवाच ॥ विनाय
कमनर्च्यैवगतोसिरणभूमिकाम् ॥ शक्तिहीनश्चतेनासिसुभृशंक्लेशवानपि ३६ गणेशंपूजयित्वैवव्रजयुद्धायमारिष ॥ सचतौमाययामोह्यवशनांप्राप
यिष्यति ३७ मत्प्रसादेनदुष्टौतौवधिष्यसिनसंशयः ॥ ॥ हरिरुवाच ॥ ॥ कथंविनायकंदेवमुपासेभर्गतद्वद ३८ ॥ ॥ ईश्वरउवाच ॥ ॥ उक्तागा
णेश्वरस्यैवमंत्राणांसप्तकोटयः ॥ तत्रापिचमहामंत्रास्तेष्वप्येकाक्षरोमहान् ३९ षडक्षरश्चभगवंस्तयोरेकंवदामिते ॥ ततएकाक्षरंत्यक्त्वासिद्धारिचक्र
योगतः ४० ऋणंधनंशोधयित्वातंजगादषडक्षरम् ॥ महामंत्रंगणेशस्यसर्वसिद्धिप्रदंशुभम् ४१ अस्यानुष्ठानमात्रेणकार्यंतेसिद्धिमेष्यति ॥ ततोज
गामसहरिरनुष्ठानायसत्वरः ४२ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेमंत्रोपदेशोनामसप्तदशोध्यायः ॥ १७ ॥ सोमकांतउवाच ॥ ॥ कथंजजापसहरिः
कुत्रवामंत्रमुत्तमम् ॥ सिद्धिंचावापसकथंवदमेतत्सविस्तरम् १ ॥ ॥ भृगुरुवाच ॥ ॥ सिद्धिक्षेत्रमितिख्यातंभुविसिद्धिकरंपरम् ॥ तत्रगत्वामहाविष्णुस्तता
पपरमंतपः २ ध्यायन्विनायकंदेवंषडक्षरविधानतः ॥ आराधयामासतदाजित्वाखानिप्रयत्नतः ३ बाणास्त्रेणतुकृत्वैवपूर्वंदिग्बंधमादृतः ॥ भूतशुद्धिंवि
धायैवप्राणानांस्थापनंतथा ४ कृत्वांतर्मातृकान्यासमाधारादिक्रमेणतु ॥ बहिश्चमातृकान्यासंमस्तकादिक्रमेणच ५ प्राणानायम्यमूलेनध्यात्वादे
वंगजाननम् ॥ आवाहनादिमुद्राभिःपूजयित्वामनोमयैः ६ द्रव्यैर्नानाविधैश्चैवषोडशैश्चोपचारकैः ॥ जजापपरमंमंत्रंविष्णुर्योगेश्वरेश्वरः ७ गतेवर्षश
तेकालेपरमात्मागणाधिपः ॥ प्रत्यक्षतांययौतस्यकोटिसूर्याग्निसंनिभः ८ अतिप्रसन्नहृदयोबभाषेगरुडध्वजम् ॥ याचस्वत्वंवरान्मत्तोयांस्त्वंकामय
सेहरे ९ ददामितानहंसर्वांस्तपसानेनतोषितः ॥ पूर्वमेवार्चितःस्यांचेद्विजयस्तेध्रुवंभवेत् १० ॥ हरिरुवाच ॥ ब्रह्मेशानाविंद्रमुख्याश्चदेवायंत्वांद्रष्टुं
नैवशक्तास्तपोभिः ॥ तंत्वांनानारूपमेकस्वरूपंपश्येव्यक्ताव्यक्तरूपंगणेशम् ११ त्वंयोणुभ्योणुस्वरूपोमहद्भ्योव्योमादिभ्यस्त्वंमहान्सत्वरूपः ॥ सृष्टिंचांतं
पालनंत्वंकरोषिवारंवारंप्राणिनांदैवयोगात् १२ सर्वस्यात्मासर्वगःसर्वशक्तिःसर्वव्यापीसर्वकर्तापरेशः ॥ सर्वद्रष्टासर्वसंहारकर्तापाताधाताविश्वनेतापिता
पि १३ एतादृशस्यतेदेवदर्शनान्ममसिद्धयः ॥ संभविष्यंतिसर्वत्रतथाप्येकंवदामिते १४ ममैवयोगनिद्रांतेश्रुतेर्मलसमुद्भवौ ॥ मधुकैटभौमहास
त्वौकंतौखादितुमुद्यतौ १५ ताभ्यामहंततोयुद्धंकृतवान्बहुवत्सरम् ॥ ततःक्षीणबलस्त्वाहंशरणंसमुपागतः ॥ अतोयथातयोर्मत्तोवधःस्यात्तद्विचार्य

ताम् १६ अन्येषामपिदैत्यानांजयेनयशउत्तमम् ॥ देहिमेपरमेशानभक्तिंतेह्यनपायिनीम् १७ ययामेकीर्तिरतुलात्रैलोक्यंपावयिष्यति ॥ ॥ ग
णेशउवाच ॥ ॥ यद्यत्तेप्रार्थितंविष्णोतत्तत्तेभविताध्रुवम् १८ ॥ ॥ यशोबलंपराकीर्तिर्विश्वभविष्यति ॥ ॥ मुनिरुवाच ॥ ॥ एवमुक्त्वामहावि
ष्णुंतत्रैवांतर्दधेविभुः १९ ततआनंदपूर्णौसौमेनेतावसुरौजितौ ॥ प्रासादंनिर्ममेतत्रस्फाटिकंभूरिरत्नकम् २० लसत्कांचनशिखरंचतुर्द्वारंसुशोभन
म् ॥ प्रतिमांस्थापयामासगंडकीयोपलैःकृताम् २१ देवाश्चमुनयःसिद्धाविनायकइतिप्रथाम् ॥ चक्रुस्त्रयतःसिद्धिःप्राप्तेयंहरिणाशुभा २२ सिद्धक्षेत्रं[1]त
तस्तत्तुपप्रथेभुविसर्वशः ॥ ततोजगामसहरिर्यत्रतौमधुकैटभौ २३ दृष्ट्वातौहरिमायांतंजहसतुर्निनिंदतुः ॥ मेवश्यामंमुखंतेद्यदर्शितंनौकुतःपुनः २४
आवांतुतेमहामुक्तिंदास्यावोतःपुनःकिल ॥ लघुतांचप्रयातोसिकिमर्थंरणमागतः २५ ॥ ॥ हरिरुवाच ॥ सहसादहतेसर्वंलघुरेवहुताशनः ॥ लघुर्दीपोम
हद्ध्वान्तेयथासंहरतेतमः २६ तथावामहमद्यैवशक्तोनाशायदुर्मदौ ॥ ॥ मुनिरुवाच ॥ ॥ इतितस्यवचःश्रुत्वातिक्रुद्धौमधुकैटभौ २७ सहसाजघ्नतुर्वि
ष्णुंमुष्टिभ्यांहृदयेभृशम् ॥ ततःपुनर्मल्लयुद्धंतयोस्तस्यव्यवर्द्धत २८ युद्धाबहुदिनंताभ्यांवरंदातुंसमुत्सुकः ॥ उवाचश्लक्ष्णयावाचाहरिस्तौमधुकैटभौ
२९ ममप्रहारान्हियुवांसहाथेबहुलाःसमाः ॥ युवयोःपुरुषार्थेनप्रीतोहंदैत्यपुंगवौ ३० युवयोःसदृशौनैवसंभूतौनभविष्यतः ॥ तावूचतुः ॥ ॥ अ
स्मत्तस्त्वंवरान्ब्रूहिदास्यवस्तान्हरेबहून् ३१ आवांहितवयुद्धेनसंतुष्टौचभृशंत्वयि ॥ ॥ मुनिरुवाच ॥ ॥ तयोर्वचनमाकर्ण्यमायामोहितयोर्हरिः ॥
३२ श्रुत्वाबभाणदैत्यौमेवरान्दातुंसमुद्यतौ ॥ तदामेवध्यतांयातंवरएषवृतोमया ३३ तदासर्वंजलमयंदृष्ट्वातौमधुकैटभौ ॥ ऊचतुःपरमप्रीतौतवहस्ता
न्मृतिःशुभा ३४ अंतेत्वच्चिंतनात्सद्योमुक्तिंयांतिसनातनीम् ॥ यत्रनोर्वीजलमयीतत्रनौजहिमाधव ३५ सर्वंत्वयजावानोसत्यंसत्येसर्वंप्रतिष्ठितम् ॥ मुनिरुवाच ॥
तयोरित्थंवचःश्रुत्वाजघनेतौदधारह ३६ चक्रेणक्षुरधारेणचिच्छेदशिरसीतयोः ॥ ततोदेवामुमुदिरेववर्षुःकुसुमानिच ३७ गंधर्वाननृतुःसर्वेजगुरप्सरसांगणाः ॥
ततस्तुविष्णुरभ्येत्यब्रह्माणंपरमेष्ठिनम् ३८ कथयामासवृत्तांतंसर्वंहर्षविनिर्भरः ॥ हरिरुवाच ॥ यदाऽशक्तोविजेतुंतौतदाहंगिरिशंगतः ३९ शंकरेणोपदिष्टोहंषड
र्णमंत्रमुत्तमम् ॥ आराधयमहंतेनदेवंविघ्नेश्वरंविभुम् ४० तेनदत्तावरामह्यंनानाकामफलप्रदाः ॥ तत्प्रभावान्मयादुष्टौनिहतौमधुकैटभौ ४१ स्तुतःसंपूजितः
सोथतदैवांतर्दधेविभुः ॥ विज्ञातोमहिमातस्यगणेशस्यमहात्मनः ४२ शंकरस्यप्रसादेनहनिष्येदैत्यदानवान् ॥ देवाश्चमुनयःसर्वेस्तुत्वादेवंगजाननम् ४३ ब्रह्मा
णंशंकरंमांचययुःस्वंस्वंनिकेतनम् ॥ यइदंशृणुयान्नित्यंमहात्म्यंपापनाशनम् ४४ कस्मादपिभयंनस्यात्लभतेसार्वकामिकम् ४५ ॥ इतिश्रीगणेशपुराणेउपा
सनाखंडेसिद्धक्षेत्रोत्पत्तिकथनंनामाष्टादशोऽध्यायः १८ ॥ भृगुरुवाच ॥ श्रुत्वाख्यानमिदंव्यासःषडर्णविधिमप्यथ ॥ पुनरूचेविधातारंनातिपूर्णाशयोयथा ॥

१ सिद्धिक्षेत्रमित्यन्यत्र ।

दिव्यदेहोभवत्तदा ११ जहर्षकमलात्यक्त्वासर्वंदुःखंनिरीक्ष्यतम् ॥ मंजुलांसुखदांवाचमुच्चरंतंमुहुर्मुहुः १२ तर्कयामासकमलामणिमंत्रमहौषधैः ॥ अ
नुष्ठानैर्महाहोमैर्नसम्यग्योबभूवह १३ सकथंमारुतस्पर्शात्समीचीनोभवत्सुतः ॥ अथतंपुरुषंक्काहंद्रक्ष्येदुष्कर्मनाशनम् १४ इत्युक्त्वासुतमालिंग्यसातस्थौ
विगतज्वरा ॥ तमादायगताभिक्षांकर्तुंतन्नगरेपुनः १५ नागराभोजयामासुरुभावामंत्र्यसादरम् ॥ नानापक्वान्नशाकाद्यैःशर्कराघृतपायसैः १६ एवंप्रातिदि
नंतौतुभुक्त्वानुदिवसंमुदा ॥ आपतुर्धनवस्त्राणिनूतनानिवराणिच १७ तमपृच्छन्नागरिकःपितुस्तेनाममेवद ॥ कोदेशःकिंपुरंज्ञातिःकाचतेवृत्तमेवच १८
इतितद्गिरमाकर्ण्यदक्षोनामतमब्रवीत् ॥ ततोमातरमागम्यपितरंनगरंकुलम् १९ वृत्तंचपरिपप्रच्छततस्तंपुनरब्रवीत् ॥ कर्नाटेभानुनगरेवल्लभोमेपितामहा
न् २० क्षत्रियोबलसंपन्नःख्यातोरिपुबलार्दनः ॥ तस्येयंकमलाजायासुतोहंदक्षसंज्ञकः २१ उत्पन्नोहंयदाब्रह्मन्नंधोबधिरएवच ॥ अनेकक्षतसंपन्नोमा
तात्यक्तुंतदोद्यता २२ पित्रानिषेधितासाचयत्नंबहुतथाकरोत् ॥ द्वादशाब्दंतपस्तप्त्वापितापुण्यंन्यवेदयत् २३ नचमेपाटवंदेहेपश्यतिस्मपितायदा ॥ त
दाविसर्जयामासमातरंमांचनागर २४ इतिसर्वंजगौतस्मैदक्षोमातृमुखोद्गतम् ॥ अत्राहंसुभगोजातोवायुस्पर्शेनकस्यचित् २५ श्रुत्वैवंतुगतेतास्मि
न्पुरुषेपुरवासिनि ॥ दक्षोजगामत्वरितोमातरंप्रतिनंदयन् २६ ततस्तन्नगरेतौद्वावुपदिष्टौद्विजन्मना ॥ गणेशाराधनविधौकरुणायुतचेतसा २७ ततःसा
कमलादक्षोनिर्वाणंपरमास्थितौ ॥ एकांगुष्ठेनतपसागणेशाराधनेरतौ २८ देवनामचतुर्थ्यंतमोंकारपल्लवान्वितम् ॥ अष्टाक्षरंपरंमंत्रंजपंतौभक्तितत्प
रौ २९ वायुभक्षौशुष्कतनूनिरीक्ष्यभगवांस्तदा ॥ आविरासीत्तयोरग्रेकरुणाब्धिर्विनायकः ३० चतुर्भुजोमहाकायोवारणास्योतिसुंदरः ॥ अनेकमूर्य
संकाशोनिशिसूर्यइवोदितः ३१ रत्नकांचनमुक्तावन्मुकुटभ्राजिमस्तकः ॥ पीतकौशेयवसनोहाटकांगदभूषणः ३१ एकजानुनिपातेनसंनिविष्टोमहा
सने ॥ कटिसूत्रंकांचनीयंमुद्रिकांरत्नसंयुताम् ३३ महाहिंजठरेबिभ्रदेकदंतंगजार्धकम् ॥ एवंरूपंददृशतुःपुनश्चद्विजरूपिणम् ३४ जगादसद्विजस्तौ
तुभवान्निर्वाणतोषितः ॥ आगतोहंवरंदातुंवृणुतंमनसीप्सितम् ३५ विश्वामित्रउवाच ॥ एवंप्रसन्नेविघ्नेशेप्रत्यक्षेद्विजरूपतः ॥ ननामपरयाभक्त्याभणद्बद्धां
जलिश्चतम् ३६ ॥ दक्षउवाच ॥ ॥ पूर्वजन्मकृतंपुण्यंफलितंमेद्विजोत्तम ॥ यन्मयादर्शिरूपंतेद्विविधंपरमंमहत् ३७ वैनायकंचवैप्रंचजन्ममेजानिसा
र्थकम् ॥ कारणानांपरंत्वंचकारणंछंदसामपि ३८ परंज्ञेयंपरंब्रह्मश्रुतिमृग्यंसनातनम् ॥ त्वमेवसाक्षीसर्वस्यसर्वस्यांतर्बहिस्तथा ३९ त्वमेवकर्त्ताकार्या
णांलघुस्थूलशरीरिणाम् ॥ नानारूप्येकरूपीत्वंनिरूपश्चनिराकृतिः ४० त्वमेवशंकरोविष्णुस्त्वमेवेंद्रोनलोऽर्यमा ॥ भूवायुखस्वरूपोपिजलसोमर्क्षरूपवा
न् ४१ विश्वकर्ताविश्वपाताविश्वसंहारकारकः ॥ चराचरगुरोर्गोप्ताज्ञानविज्ञानवानपि ४२ भूतंभाविभवच्चैवत्वमेवेंद्रियदेवताः ॥ कलाकाष्ठामुहूर्ताश्च

श्रीर्धृतिःकांतिरेवच ४३ त्वमेवसांख्यंयोगश्चशास्त्राणि श्रुतिरेवच ॥ पुराणानिचतुःषष्टिकलाउपनिषत्तथा ४४ त्वमेवब्राह्मणोवैश्यःक्षत्रियःशूद्रएवच ॥
देशोविदेशस्त्वंक्षेत्रंपुण्यक्षेत्राणियान्युत ४५ त्वंप्रमेयोप्रमेयश्चयोगिनांज्ञानगोचरः ॥ त्वमेवस्वर्गःपातालंवनान्युपवनानिच ४६ ओषध्योथलतावृक्ष
कंदमूलफलानिच ॥ अंडजाजारजाजीवाःस्वेदजाउद्भिजाअपि ४७ कामःक्रोधःक्षुधालोभोदंभोदर्पोदयाक्षमा ॥ निद्रातंद्रीविलासश्वहर्षःशोकस्त्वमेव
च ४८ ॥ ॥ विश्वामित्रउवाच ॥ ॥ इतिदक्षवचःश्रुत्वासुप्रसन्नोविनायकः ॥ मेघगंभीरयावाचास्मयन्निव जगादतम् ४९ गजाननउवाच ॥ प्रीतोहंतेम
हाभागस्तुत्यागंभीरयानया ॥ वरंदातुंसमुत्कंठस्तथापिनददामिते ५० यद्यहंवरदःस्यांतेक्रुध्येद्भक्तोममोपरि ॥ सएवदास्यतिवरंयदंगस्यप्रभंजनात् ५१
दिव्यदेहमनुप्राप्तश्चक्षुश्रोत्रसमन्वितः ॥ जातस्त्वंतस्यनामापिवदामिमुद्गलेतिच ५२ सध्यातमात्रोविप्रेशःस्वरूपंदर्शयिष्यति ॥ यान्यान्कामयसेका
मान्सतेसर्वान्प्रदास्यति ५३ इत्युक्त्वापरमात्मासौतत्रैवांतरधीयत ॥ तस्मिन्नंतर्हितेदक्षोरुरोदभृशदुःखितः ५४ दरिद्रेणनिधौलब्धेगतेतस्मिन्य
थैवसः ॥ गतायांगविवत्सोवारोरवीतियथाभृशम् ५५ मुंचन्नश्रूणिनेत्राभ्यांपपातधरणीतले ॥ क्वगतःक्वगतइतिमुहुर्जल्पन्विनायकः ५५ इतिश्रीगणेशपु
राणेउपासनाकांडेदक्षस्तुतिर्नामविंशतितमोऽध्यायः ॥ २० ॥ ॥ विश्वामित्रउवाच ॥ इतस्ततोभ्रमन्धावन्वल्लभस्यात्मजस्तदा ॥ नविवेदगतंवस्त्रंभूषणं
चातिविह्वलः १ पप्रच्छब्राह्मणान्मार्गेवृक्षांश्चैवविनायकम् ॥ विनायकोगतःकुत्रक्वाचिद्दृष्टोगदंतुमे २ सएवंभ्रांतहृदयोभ्रमच्चक्षुर्नृपोत्तम ॥ निपपातधरापृष्ठे
क्षणंविगतचेतनः ३ एतस्मिन्नंतरेस्वप्नेपश्यद्ब्राह्मणमग्रतः ॥ दत्तंतवेप्सितंबालमुद्गलेनमयाहितत् ४ यत्त्वयायाचितंपूर्वंविघ्नेशाद्दृष्टिगोचरात् ॥ इत्युक्त्वा
प्रस्थितेतस्मिन्ब्राह्मणेनृपसत्तम ५ सुप्तोत्थितइवप्रायोदक्षोहृष्टमनाभवत् ॥ कस्मैचित्परिपप्रच्छत्वरितायद्विजातये ६ अन्तिकंदर्शितंतेनबहुशिष्योप
शोभितम् ॥ मुद्गलस्यातिभक्तस्यगजाननरतस्यच ॥ आश्रमंपरमंदिव्यंसर्वसत्वाभयप्रदम् ७ मुद्गलंमनसाध्यायनभ्रमन्यातस्तदाश्रमम् ॥ नानाश्चर्ययुतंरम्य
मलकानंदनातिगम् ८ ददर्शमुद्गलंतत्रपराध्यासनगंद्विजम् ॥ वेदवेदांगतत्वज्ञंसर्वशास्त्रविशारदम् ९ योगाभ्यासबलैर्नानारूपिणंसूर्यतेजसम् ॥ वैनायकीं
महामूर्तिंरत्नकांचननिर्मिताम् १० चतुर्भुजांत्रिनयनांनानालंकारशोभिनीम् ॥ उपचारैःषोडषभिःपूजयंतंविधानतः ११ ननामदक्षस्तंदृष्ट्वादंडवत्पृथिवी
तले ॥ मुंचन्नश्रूणिनेत्राभ्यांनिश्वसंश्चमुहुर्मुहुः १२ ॥ विश्वामित्रउवाच ॥ पप्रच्छमुद्गलस्तंतुकस्त्वंकस्मादिहागतः ॥ तुदामिदुःखंकिंतेस्तिवदसर्वमशेषतः १३
एवंविप्रवचःश्रुत्वाकमलानंदनस्तदा ॥ सावधानमनाभूत्वाजगादद्विजपुंगवम् १४ ॥ दक्षउवाच ॥ सत्यमेववदेब्रम्हन्अभिप्रायंतवांतिके ॥ कर्णाटदेशेराजा
भून्नगरेभानुसंज्ञके १५ वल्लभोनामनीतिज्ञोज्ञानीदातादयान्वितः ॥ तस्यपत्नीतुकमलाजनयामासमांयदा १६ तदाहंगंधिक्षतयुक्शोणितस्रावीनासिकः ॥
अंधःकुब्जःकर्णहीनःशब्दहीनःश्वसन्बहु १७ अभवन्नागराद्दृष्ट्वात्यजैनमितिचाब्रुवन् ॥ पितामेद्वादशाब्दानिनानायत्नमथाकरोत् १८ शरीरपाटवार्थंमेना

लभत्तन्महेश्वराव ॥ उपायंसततोमांचमातरंकमलांचमे १९ बहिर्निष्कासयामासनिर्दयेनांतरात्मना ॥ ततोमेजननीखेदादटमानापुरंपुरम् २० आगत्य
कौंडिन्यपुरंमयासहक्षुधार्दिता ॥ भिक्षाटनेक्रियमाणेपूर्वपुण्यप्रभावतः २१ अभवद्दर्शनंतेवामंधस्येवयथादृशिः ॥ तवगात्रभवाद्वायोःस्पर्शाद्दोषागताममु
२२ रघुनाथांघ्रिसंस्पर्शादहल्यायायथापुरा ॥ दिव्यदेहंसमापन्नःप्रसादात्तवसुव्रत २३ नमयाविदितंकिंचिज्जनन्यामेनिवेदितम् ॥ अहंचविस्मितोभूत्वानि
श्चयंकृतवान्हृदि २४ यदंगवायुस्पर्शेनदिव्यदेहमहंगतः ॥ तद्दर्शनंयदास्यान्मेतदादेहंधराम्यहम् २५ एवंभ्रमन्बहुदिनंततोसौकरुणानिधिः ॥ आवि
रासीन्ममपुरतःकोटिसूर्यसमप्रभः २६ उभयोस्तपसातुष्टोदेवदेवोगजाननः ॥ तंदृष्ट्वाकमलाकामान्संप्रासामनसीप्सितान् २७ ततोमामब्रवीद्देवःप्रसन्नोमंजु
लांगिरम् ॥ यदर्थंनियमंकृत्वाभ्रमन्खेदमुपागतः २८ सोहंतेदर्शनंयातोमुद्गलोब्राह्मणोत्तमः ॥ श्रुत्वातद्वचनंहृष्टमभवन्मानसंमम२९ततोगजाननमहंस्तुतवान्
विविधैःस्तवैः ॥ उवाचसुप्रसन्नात्मावरंवृणुमहामते ३० अहंचाकथयंतस्मैयद्यन्मेमनसीप्सितम् ॥ ततोब्राह्मणरूपंतत्त्यक्त्वान्यद्रूपमादधे ३१ चतुर्भुजंमहाकायं
मुकुटाटोपमस्तकम् ॥ परशुंकमलंमालांमोदकानावहत्करैः ३२ दिव्यांबरधरंभ्राजद्विषाणकरपुष्करम् ॥ कुंडलेप्रावहच्छ्रुत्योःसूर्यबिंबइवापरे ३३ दिव्यालं
कारसंयुक्तंभुजंगवलयोदरम् ॥ देवर्षिगंधर्वगणैःकिन्नरैरुपशोभितम् ३४ ततआनंदपूर्णोहंदृष्ट्वारूपंतथाभवम् ॥ पूर्णचंद्रंयथादृष्ट्वापूर्णोभवतिवारिधिः ॥ ते
नोक्तंमुद्गलःसर्वान्कामांस्तेपरिपूर्यति ३५ तदंतर्हितंरूपंदृष्टंयावन्नसादरम् ॥ यथास्वप्नगतंसर्वंजागरेनैवदृश्यते ३६ ततोहंनितरांखिन्नोन्यपतंभुवि
मूर्छितः ॥ प्रतिलभ्यततःसंज्ञांवरंवृणिवतिसंस्मरन् ३७ यथाचेदेवदेवेशंसर्वव्यापिनमीश्वरम् ॥ गृहेमेसुस्थिरालक्ष्मीर्भक्तिर्मेतादृशीतव ३८ दृ
ष्टश्चेत्पूर्वपुण्येनद्वयमेतत्प्रदीयताम्॥ततोहंश्रुतवान्दत्तमितिवाचंनभोगताम् ३९ ततोहृष्टमनाविप्रतवसान्निध्यमागतः॥मुद्गलस्त्वंद्विपास्योसौद्विपास्यस्त्वंसमु
द्गलः४०इतिमेमनासिस्पष्टंभातिसर्वंगजाननः ॥ भृगुरुवाच ॥ इतितद्वचनंश्रुत्वामुद्गलोवाक्यमब्रवीत् ४१ सभाग्यःकृतकृत्योसिभक्तिमान्कमलासुत ॥ म
हिमातवभक्तेर्हिवक्तुंशक्योनकेनचित्४२तपामिसुदृढंचाहंदशवर्षशतंतपः ॥नमएतादृशोदेवोदृष्टआसीत्कदाचन ४३ यःसर्वजगतांनाथश्चराचरगुरोर्गुरुः ॥ योर
जःसत्वतमसांनेतानित्यंगुणाश्रयः४४योब्रह्मशिवविष्णूनांशरीराणिकरोतिहि ॥ भूतानांचविभूतीनांमात्रेंद्रियधियामपि४५यंनदेवाविदुःसम्यङ्नवेदानर्षयोपि
च॥एवंगजाननंत्वंहिप्रत्यक्षंदृष्टवान्स्फुटम्४६अहंत्वच्चरणौवंदेयतस्त्वंभक्तिमान्परः॥ततःपरस्परंतौतुनेमतुश्चालिलिंगतुः४७गुरुबंधूचिरंकालमेकचित्तौसमाग
तौ॥ततएकाक्षरंमंत्रंसजपध्यानपूर्वकम् ४८ मुद्गलोराजपुत्रायनम्रायोपदिदेशह ॥ उवाचचैनंभूयोपिमंत्रस्यास्यदिनेदिने४९अनुष्ठानंकुरुष्वत्वंप्रसन्नस्तेभविष्य
ति ॥ गजाननोददेत्कामान्मनसावांछितांस्त्वया ५० एनंचेत्त्यजसेमंत्रंसर्वशोनाशमेष्यसि ॥ यद्यस्यभक्तिंसुचिरंलोकेस्मिन्विचरिष्यसि५१इंद्रादिलोकपाला
नांगणोवश्यत्वमेष्याति ॥ इहभुक्त्वाखिलान्भोगानंतेमोक्षमवाप्स्यसि ५२ इतिश्रीगणेशपुराणेउपासनाखंडेमंत्रोपदेशवर्णनंनामैकविंशतितमोध्यायः ॥२१॥

राजोवाच ॥ ॥ आश्चर्यभूतंकथितंदक्षपुत्रस्यचेष्टितम् ॥ विस्मयोमेमहांस्तत्रसंजातोमुनिसत्तम १ अंधःकुब्जःस्रवद्रक्तःपूतिगंधसमन्वितः ॥ वाचावि
हीनोमेध्यश्श्वासमात्रावशेषितः २ कथंमुद्गलदेहोत्थवायुनादिव्यदेहभाक् ॥ संजातःकेनपुण्येनमुक्तोवापातकात्कुतः ३ दिव्यवर्षसहस्रंयस्तपापप
मंतपः ॥ कथंतस्याभवन्नैवदर्शनंदेवकांक्षितम् ४ कथंवल्लभपुत्रायदेवदेवइभाननः ॥ प्रत्यक्षोभूद्विनाक्लेशैःसचकःपूर्वजन्मनि ५ एतत्संशयजातंमेनुद
सर्वज्ञतेनमः ॥ नतृप्यामिपिबन्नित्यंगजाननकथामृतम् ६ ॥ ॥ विश्वामित्रउवाच ॥ ॥ सम्यक्पृष्टंत्वयाराजन्संशयच्छेदनायते ॥ वदामिनिखिलंसम्य
क्शृणुष्वैकमनानृप ७ सिंधुदेशेतिविख्यातापल्लीनाम्नाभवत्पुरी ॥ तस्यामासीद्धनीवैश्यःश्रेष्ठःकल्याणसंज्ञकः ८ वदान्यःकुशलोधीमान्द्विजदेवपराय
णः ॥ इंदुमतीतिविख्यातापत्नीतस्यशुभानना ९ पतिव्रतापतिप्राणापतिवाक्यपरायणा ॥ तयोःकालेनसंजातोगुणवान्पुत्रउत्तमः १० कल्याणःप्रददौधेनू
र्वस्त्रालंकरणानिच ॥ ब्राह्मणेभ्योथरत्नानिकांचनंभूरिदक्षिणाम् ११ ज्योतिर्विद्भिर्निगदितंनामचक्रेसुतस्यसः ॥ बल्लालइतिविख्यातंबलवत्त्वाच्छुभंतदा
१२ सचकालेनमहतावयस्यैश्वसमन्वितः ॥ देवपूजारतोनित्यंग्रामाद्बहिरयान्मुदा १३ एकदातेवनंयाताबल्लालप्रमुखाःसुताः ॥ नानाक्रीडारताःस्नाताउ
पलंस्थाप्यसुंदरम् १४ गणेशबुद्ध्यासंपूज्यदूर्वांकुरसुपल्लवैः ॥ केचिद्ध्यानरतास्तस्यनामजाप्यंप्रचक्रिरे १५ केचिन्ननृतुस्तत्रयथेष्टंदेवभक्तितः ॥ केचिन्न
गानकुशलाजगुर्देवस्यतुष्टये १६ केचित्काष्ठैःपल्लवैश्चमंडपंचक्रुरोजसा ॥ केचिद्भित्तिपरीवेषंकेचित्प्रासादमुत्तमम् १७ केचिन्मानसपूजाभिःकेचित्पुष्प
लतादिभिः ॥ धूपंदीपंचनैवेद्यंफलतांबूलदक्षिणाः १८ निवेद्यपुपुजुस्तस्मैमुदापरमयायुताः ॥ केचिच्चपंडिताभूत्वापुराणान्यब्रुवंस्तथा १९ व्याचक्रुर्धर्मशा
स्त्राणिग्रंथानन्यांश्चकेचन ॥ एवंदेवरताःसर्वेनिन्युर्वैदिवसान्बहून् २० नक्षुधांनतृषांकोपिजानन्देवस्यभक्तितः ॥ एकदाजनकास्तेषांकल्याणवैश्यमन्वयुः ॥
२१ अब्रुवन्रोषिताःसर्वेस्वबल्लालंनिवारय ॥ शिशून्सर्वान्समाहूयवनंयातिदिनेदिने २२ नायांतिप्रातराशायनमध्यान्हेनिशामुखे ॥ कृशानोबालकाजाताः
स्वसुतंशिक्षयाधुना २३ नोचेद्वयंनिबद्ध्वैनंताडयामइतःपरम् ॥ पुराधिपमथाभ्येत्यत्वांबहिःकरवामहि २४ इतितेषांवचःश्रुत्वाश्रुतपूर्वंकदाचन ॥
रोषावेशात्सकल्याणोजपाकुसुमलोचनः २५ महांतंदंडमादायताडनार्थंसुतंययौ ॥ दंडाघातेनगत्वैवमंडपंप्रबभंजह २६ बालकाश्चततःसर्वेजग्मुर्दश
दिशोनृप ॥ एकएवसबल्लालोदृढभक्त्यास्थिरोभवत् २७ दृढमुष्ट्यासतंधृत्वादंडेनाताडयद्भृशम् ॥ यथासर्वशरीरात्तुधाराःशोणितसंभवाः २८ प्रादुरासन्ध्रा
रिधारावर्षाकालेयथागिरेः ॥ चिक्षेपदूरतःपश्चाद्देवंसिंदूरसुंदरम् २९ बबंधतंसुतंवृक्षेवल्लीपाशशतैर्दृढम् ॥ पुत्रस्नेहंपरित्यज्ययमदूतइवापरः ३० मुक्तोदंतैर्नहस्ता
भ्यांपादाभ्यांसयथाभवेत् ॥ उवाचपश्चात्तंपुत्रंदेवस्त्वांमोचयिष्यति ३१ सदाताभोजनंपानंगोपनंचकरिष्यति ॥ यदिचेद्गृहमायासितदासत्यंमरिष्यसि ॥

१ सर्वानुपाहूत्य इतिपाठान्तरम् ।

३२ ॥ ॥ मुनिरुवाच ॥ ॥ विभज्यदेवालयमाशुयातःकल्याणवैश्योतिरुषानिविष्टः ॥ स्वमंदिरंबध्यवनेस्वपुत्रंदैवस्ययोगादभवत्सुदुष्टः ३३ तस्मिन्प्र यातेसचवैश्यपुत्रःशुशोचदेवंमनसाविचिंत्य ॥ विघ्नारिरित्येवकथंनुदेवनामाभवत्सर्वजनेषुगीतम् ॥ ३४ ॥ दुष्टांश्चविघ्नानिननाशयेस्त्वंदुष्टांतकत्वेनकथंप्र सिद्धः ॥ शेषोवनिंवासविताथदीप्तिंचंद्रोमृतंवन्हिरथोष्णतांच ३५ त्यजेत्स्वभक्तान्नचसंत्यजेथावेदेषुशास्त्रेषुकथंप्रसिद्धिः ॥ एवंविलप्याथनिजंशशापक ल्याणसंज्ञंपितरंसुदुष्टम् ३७ येनेदंममविध्वस्तंदेवालयमनुत्तमम् ॥ गणेशमूर्त्तिविक्षेपंताडनंचममाकरोत् ३७ सचांधोबधिरःकुब्जोमूकोभवतातिनि श्चितम् ॥ यदिमेसुदृढाभक्तिर्द्विरदाननउत्तमा ३८ तदोक्तंममसत्यंस्यात्तस्यसर्वंमयोदितम् ॥ नबद्धेभक्तिमनसीशक्तोसौदेहबंधने ३९ अनन्यबुद्ध्यापरि चिंत्यदेवंत्यजामिदेहंविजनेवनेस्मिन् ॥ पलायनंनैवकृतंयदैवतद्वदेहोर्पितएषदेवे ४० तस्यैवंनिश्चयंबुद्ध्वाप्रादुरासीद्गजाननः ॥ ब्राह्मणस्यस्वरूपेणब ल्लालस्यप्रभावतः ४१ यथानिशातमोपायेश्रीसूर्यउदयाचले ॥ तथैवबंधनान्यस्यतेजसाशिथिलानिच ४२ जातानिततएनंसनमश्चक्रेथदंडवत् ॥ देह स्यचारुताजातानक्षतंनचशोणितम् ४३ ज्ञानंचनिर्मलंजातंदेवदेवस्यदर्शनात् ॥ तुष्टावविविधैर्वाक्यैर्यथामतिगजाननम् ४४ ॥ ॥ बल्लालउवाच ॥ त्वमेवमातासिपितासिबंधुस्त्वमेवकर्त्तासिचराचरस्य ॥ निर्मासिदुष्टांश्चखलांश्चसाधून्ययेनौवियोनौविनियुंक्ष्यथापि ४५ त्वमेवदिक्चक्रनभोधराब्धिवारि रींद्रकालानलवायुरूपः ॥ रवींदुताराग्रहलोकपालवर्णेद्रियायौषधिधातुरूपः ४६ ॥ ॥ मुनिरुवाच ॥ ॥ इतिस्तुतिंसमाकर्ण्यसुप्रसन्नोगजाननः ॥ आ लिंग्यनिजभक्तंतमुवाचघननिस्वनः ४७ ॥ ॥ गजाननउवाच ॥ ॥ प्रासादोयेनभग्नोमेनरकेसपतिष्यति ॥ तवशापोपितस्यैवंभविष्यतिममाज्ञया ४८ अंधोथबधिरःकुब्जोमूकोस्रक्स्रावसंयुतः ॥ ममशापंसमासाद्यभविष्यतिनसंशयः ४९ पितासमातृकंचैनंकरिष्यतिगृहाद्बहिः ॥ अन्यत्तेवांछितंब्रूहि दुष्प्रापमपितेददे ५० ॥ ॥ मुनिरुवाच ॥ ॥ बल्लालोथाब्रवीद्देवंत्वयिभक्तिर्दृढास्तुमे ॥ अस्मिन्क्षेत्रेस्थिरोभूत्वालोकान्रक्षस्वविघ्नत ५१ गणेशउवाच ॥ त्वन्नामपूर्वंमन्नामभविष्यतिजनेशुभम् ॥ बल्लालविनायकेतिनगरेसुप्रतिष्ठितम् ५२ मयिचित्तंस्थिरंतेस्याद्भक्तिरव्यभिचारिणी ॥ यात्रांममकरिष्यंतिन गरेपल्लिसंज्ञके ५३ भाद्रशुक्लचतुर्थ्यांयेतेषांकामान्ददाम्यहम् ५४ भृगुरुवाच ॥ इतिदत्वावरंदेवस्तत्रैवांतरधीयत ॥ ततोविनायकंस्थाप्यबल्लालोब्राह्मणैः सह ५५ प्रासादंकारयामासनानाशोभासमन्वितम् ॥ ॥ विश्वामित्रउवाच ॥ ॥ बल्लालवैनायकेतिकथितंतेकथानकम् ५६ यच्छ्रुत्वासर्वपापेभ्योमुक्तः कामानवाप्नुयात् ५७ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेबल्लालविनायककथनंनामद्वाविंशोध्यायः ॥ २२ ॥ ॥ भृगुरुवाच ॥ ॥ विश्वामित्रवचः श्रुत्वाभीमःपप्रच्छतंपुनः ॥ वैश्याचरितवार्तायाःश्रवणेपरमोत्सुकः १ सोमकान्तनृपश्रेष्ठकथयामिशृणुष्वतत् ॥ ॥ भीमउवाच ॥ ॥ श्रुतंदक्षस्यचरितं विश्रांतंममसमानसम् २ कथंकल्याणवैश्यस्यगतिरासीद्वदस्वताम् ॥ ॥ विश्वामित्रउवाच ॥ शृणुष्वैकमनाभीमकथामेतांवदामिते ३ बल्लालशापा

त्कल्याणदेहात्सुस्रावशाणतम् ॥ असंख्यक्षतसंयुक्तःस्रावोबाधिर्यमंधता ४ मूकतापूतिगांधित्वंजातंतस्यदुरात्मनः ॥ ददर्शेंदुमतीतस्यदशामाकस्मिकीं
ततः ५ किमिदंकिमिदंकस्माज्जातमेवंशुशोचतम् ॥ ज्ञानिनोस्यवदान्यस्यदेवद्विजरतस्यच ६ धर्मशास्त्रार्थनिष्ठस्यस्वदारपरितोषिणः ॥ अवस्थेयं
कथंजातामममभर्त्तुर्निरेनसः ७ ॥ मुनिरुवाच ॥ एवंविलप्यबहुधानिश्वसंतीपुनःपुनः ८ तेनबद्धंवनेपुत्रंनिशम्यरुदतीमुहुः ॥ पौरैःसहययौतत्र
यत्रबद्धोवनेसुतः ९ तत्रदेवालयंदेवंददर्शगणनायकम् १० चतुर्भुजंत्रिनयनंसिंदूरारुणविग्रहम् ॥ बल्लालंचसुतंतत्रपूजयंतंगजाननम् ११ मुक्तं
निर्व्रणमव्यंगंनिरीक्ष्यपुरवासिनः ॥ उवाचेंदुमतीक्रुद्धाभर्त्सयंतीपुनःपुनः १२ कथंप्रतारितातथ्यवादिभिर्भर्तृसन्निधौ ॥ तादृशंतंपरित्यज्यपुत्रस्नेहादि
हागता १३ पश्यंतुदेवभक्तिंमेपुत्रंकुर्वंतमीदृशीम् ॥ ॥ मुनिरुवाच ॥ ॥ विस्मिताःसर्वएवैतेनकिंचित्प्रोचुरण्वपि १४ केचिदूचुर्महाभक्तेर्
महिमाकेनगम्यते ॥ वीक्ष्यसिंदूररक्तांगंरक्तचंदनचर्चितम् १५ रक्तांबररक्तपुष्पमालाभिरुपशोभितम् ॥ निर्ममंनिरहंकारमशुंडमिवविघ्नपम् १६
निरीक्ष्यतादृशंपुत्रंत्यक्त्वाशोकंननंदसा ॥ आलिलिंगतदातंतुस्नेहस्नुतपयोधरा १७ आहतंस्वगृहंयावःपितुस्तेऽव्यसनंमहत् ॥ उत्थितंतत्रकिंचित्तंकु
रूपायंमहामते १८ आवांधन्यतमौलोकेययोःपुत्रस्त्वमीदृशः ॥ सर्वांगक्षतवान्रक्तस्राववान्पूतिगंधवान् १९ श्यामास्यःकृशतायुक्तोबधिरोथांधएव
च ॥ एवंविधःपितातेस्तितंनिवेदितुमागता २० पितृधर्मेणतेनत्वंताडितोनर्थकृद्यदि ॥ तत्रापराधोनैवास्तिश्रुतिस्मृतिपुराणतः २१ पुत्रधर्मान्नि
रीक्षस्वकुर्वारोग्यविचारणम् ॥ त्वयाश्लाघ्यतमोलोकेपितातेपितृवत्सल २२ मातापितृवचःकार्यंसत्पुत्रेणयशस्विना ॥ पूजनंचतयोःकार्यंपोषणंपा
लनंतथा २३ औषधान्मंत्रतश्चापिदेवताप्रार्थनादपि ॥ उपायंकुरुपुत्रत्वंमयिदृष्टिंनिवेशय २४ यशस्तेभविताकोकेसौभाग्यंममबालक ॥ इतितस्या
वचःश्रुत्वाबल्लालोवाक्यमब्रवीत् २५ ॥ बल्लालउवाच ॥ ॥ कस्यमातापिताकस्यकस्यपुत्रोथवासुहृत् ॥ विघ्नराजकृतंसर्वमानुषंग्यखिलंस्मृतम् ॥
२६ तस्मान्ममपिताभद्रेमातादेवोविनायकः ॥ योयथाकुरुतेकर्मसतथाफलमश्नुते २७ मयासमर्पितोजीवोदेवदेवेगजानने ॥ तेनजीवस्तथाज्ञानंममदत्तंसुभ
क्तितः २७ प्रासादभंजनाद्देवक्षेपणात्ताडनान्मम ॥ विनायकातिभक्तस्यतथाप्राप्तंफलंशुभे २८ विचार्यमाणेनत्वंमेमातावासपितापिच ॥ सर्वस्यहिपितादेवोमा
तादेवोगजाननः २९ सएवज्ञानदस्त्रातासंहर्त्ताकालरूपवान् ॥ सर्वस्वरूपोदेवेंद्रोब्रह्मविष्णुशिवात्मकः ३० वृथामेयेनदुष्टेनताडनंनिर्घृणेनच ॥ कृतंदेवस्यवि
क्षेपःप्रासादस्यापिभंजनम् ३१ तस्यास्यदर्शनेदोषःपतितस्यमहान्भवेत् ॥ स्नेहंत्यक्त्वामदीयंत्वंपतिंस्वंपरिषेवय ३२ ॥ विश्वामित्रउवाच ॥ इतिपु
त्रवचःश्रुत्वासातंपुनरथाब्रवीत् ॥ मातोवाच ॥ कृपयानुग्रहात्स्नेहादुच्छापंवक्तुमर्हसि ३३ ॥ पुत्रउवाच ॥ भवांतरेस्यजननीभवितासिवरार्थिनी ॥ अयमे

१ पुत्रोतिभक्तिमान् इ०पाठान्तरम् ।

तादृशः पुत्रोभवितातवसुव्रते ३४ कल्याणनामाभविताबल्लभःक्षत्रियर्षभः ॥ कमलेतिचविख्यातानाम्नात्वंचभविष्यसि ३५ दक्षइत्येवपुत्रस्यनामख्यातंभवि
ष्यति ॥ ततोद्वादशवर्षाणिवल्लभस्तप्स्यतेतपः ३६ अंधतांबधिरत्वंचक्षतानिमूकतांतथा ॥ व्यपनेतुंतुदक्षस्यपरंनियममास्थितः ३७ अलब्ध्वासफलंतस्मा
त्सपुत्रांत्वांशुभानने ॥ निराकरिष्यतेगेहाद्विदेशस्थाभविष्यसि ३८ कस्यचिद्द्विजवर्यस्यद्विरदाननचेतसः ॥ दैवात्स्पर्शेनशद्रेतेसम्यक्पुत्रोभविष्यति ३९
तत्रैवगणनाथस्यदर्शनंचभविष्यति ॥ तदासदिव्यदेहत्वंप्राप्स्यतेद्विरदाननात् ४० इतिसर्वंसमाख्यातमुच्छापकारणंशुभे ॥ भविष्यंकथितंतेद्ययथेष्टंग
म्यतांत्वया ४१ ॥ विश्वामित्रउवाच ॥ एवंनिराकृतातेनजननीनिरगात्ततः ॥ दुःखशोकसमायुक्ताकिंचिद्धर्षयुतापिच ४२ सचारुरोहतद्दिव्यंविमानं
भक्तिभावितम् ॥ गजाननेनविहितंबल्लालोथागमद्दिवम् ४३ इतितेसर्वमाख्यातंयत्पृष्टोहमिहत्वया ॥ यागतिस्तेनवैश्येनसंप्राप्ताजन्मनोर्द्वयोः ४४ यथाज
गादबल्लालःसर्वंतद्भवत्तदा ॥ साजज्ञेकमलाभूत्वासोभवत्क्षत्रियर्षभः ॥ ४५ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेभविष्यकथनंनामत्रयोविंशोध्यायः ॥
२३ ॥ ॥ भीमउवाच ॥ ॥ दक्षेणमुनिशार्दूलराजपुत्रेणधीमता ॥ अनुष्ठानंकृतंकुत्रकथंवाकस्यवामुने १ एतद्विस्तार्यब्रूहित्वंशृण्वंस्तृप्याम्यहंनच ॥ वि
श्वामित्रउवाच ॥ अविदूरेपुरस्तस्याःकौंडिन्यस्यमहावनम् २ रम्यंनानावृक्षयुतंनानाश्वापदसंकुलम् ॥ नानापक्षिगणैर्युक्तंलताजालविराजितम् ३ सन्म
नोनिर्मलपयःसरोवापीविराजितम् ॥ जीर्णप्रासादमध्यस्थगजाननविराजितम् ४ तत्रास्थित्वातपश्चक्रेगजाननसुतोषकम् ॥ मुद्गलेनोपदिष्टेनमंत्रेणै
काक्षरेणसः ५ तोषयामासतंदेवंवर्षैर्द्वादशसंमितैः ॥ स्नानैर्वस्त्रैःसुगंधैश्चमाल्यैर्धूपैश्चदीपकैः ६ नैवेद्यंकंदमूलैश्चभक्षणीयैरकल्पयत् ॥ मनसाकल्प
यामासदक्षिणांक्षत्रियर्षभ ७ एवंतस्यागमन्भूपदिनानित्वेकविंशतिः ॥ ततःप्रभातसमयेस्वप्नमेवंददर्शसः ८ एकंमहामतंगंचसिंदूराक्तंसुशोभि
तम् ॥ मदस्राविसुगंडाभ्यांसुंदरंगिरिसन्निभम् ९ चारुप्रसन्नवदनंदंतशोभिमहत्करम् ॥ भ्रमरालिसमाकीर्णंगजाननमिवापरम् ॥ तेनतत्कंठदेशेतुरत्न
मालासमार्पिता १० ततउत्थाप्यतंस्कंधेस्थापयामासदंतिराट् ॥ सदंतीनगरंयातःपताकाध्वजशोभितम् ११ ततःसप्रतिबुद्धःसन्पप्रच्छजननींनिजां ॥
कमलेवदमातस्त्वमस्याभिप्रायमद्यमे १२ आरोहणंगजस्कंधेशुभंवायदिवाशुभम् ॥ ॥ कमलोवाच ॥ धन्यस्त्वमसिदृष्टोयंगजरूपीविनायकः १३ आरो
हणफलंराज्यप्राप्तिरेवनसंशयः ॥ ॥ दक्षउवाच ॥ यदिराज्यस्यप्राप्तिःस्यात्तदातुभ्यंददाम्यहम् १४ नरयानंतथाग्रामान्दीपिकांमौक्तिकस्रजम् ॥ धर्मंच
कारयिष्यामिगवाष्टापददानतः १५ व्रतानिनियमांश्चैवदानान्यन्यान्यनेकशः ॥ ॥ मुनिरुवाच ॥ श्रुत्वेत्थंकमलाहृष्टाजगादतनयंप्रति १६ त्वयिराज्य
स्थितेपुत्रपरमानंददाममम ॥ सद्धर्मेरमतांचेतःसतःसारज्ञतस्तव ॥ आयुष्यंविपुलंतेस्तुद्विजदेवार्चनेरतिः १७ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेस्व

१ गच्छेदिति महाभक्त्या परंनियममास्थिताः इ० पाठान्तरम् ।

प्रकथनंनामचतुर्विंशोध्यायः २४ ॥ ॥ विश्वामित्रउवाच ॥ शृणुराजन्महाश्चर्यंदैवकालकृतंशुभम् ॥ कौंडिन्येनगरेराजाचंद्रसेनोमहामातिः १ स्वकर्मप
रिपाकेननिधनंकालयोगतः ॥ अगमद्दिव्ययानेनधर्मबाहुल्यतोदिवम् २ तन्ननागरिकाः श्रुत्वाहाहाकारंप्रचक्रिरे ॥ धावमानाययुस्तत्रत्यक्त्वाकार्याण्यनेक
शः ३ शिरांसिचविनिघ्नंतःपाणिभिःशोककर्पिताः ॥ चस्खलुश्चपतंतश्चदृदृशुःप्रेतभूपतिम् ४ नेमुःपादौप्रगृह्यैवदुःखमोहवशंगताः ॥ केचिद्धस्तंगृहीत्वै
वस्वस्वमूर्ध्निन्यवेशयन् ५ रुरुदुःसुस्वरंकेचित्पाणिपृष्ठमुखस्वनाः ॥ मृताइवनिपेतुश्चस्नेहातिशयतोपरे ६ तस्यपत्नीतुसुलभारुरोदकरुणस्वरा ॥ पाणि
भ्यांनिघ्नतीस्वीयंहृदयंभृशदुःखिता ७ विकीर्णभूषणामूर्छामागतापतिताभुवि ॥ समानव्यसनाभिःसापुरस्त्रीभिर्धृतातदा ८ विललापतदाकांताचंद्र
सेनस्यसुंदरी ॥ निर्लज्जानिरनुक्रोशानाथनाथेतिजल्पती ९ रंधातर्नदयातोस्तिबालवच्चरितंतव ॥ युनंक्षिस्नेहभावेनविनियुंक्ष्यकृतार्थकम् १० राज
न्नपृष्ट्वाक्कगतोवदमांकरुणानिधे ॥ दिनेदिनेवदस्यैवंयामिभद्रासनंप्रिये ११ अद्यानिष्ठुरतांकेनगमितोस्यागसामम ॥ तवक्षमस्वनमाम्येषाजनमध्येगतत्र
पा १२ नयमांयत्रयातोसिप्रियांतांप्रियकारिणीम् ॥ त्रिलोकींपश्यतींशून्यामपुत्रांपतिनाविना १३ ॥ ॥ मुनिरुवाच ॥ ॥ सुमंतुःप्रकृतिस्तस्यम
नोरंजनएवच ॥ द्वावप्यवोदितांतत्रकिंराज्यस्यभविष्यति १४ आवाभ्यामविचार्यैवक्कगतोनृपसत्तम ॥ कस्मान्नवदसेराजन्किमर्थंमौनमास्थितः १५
नपश्यसिप्रियांभार्यामनाथामिवविह्वलाम् ॥ सहैवयावोनृपतेत्यक्त्वासर्वंगृहाश्रमम् १६ अनाथंनगरंतेद्यराष्ट्रंवाकोथपास्यति १७ ॥ ॥ मुनिरुवाच
एतस्मिन्नंतरेतत्रबभाणब्राह्मणःसुधीः १८ वेदशास्त्रार्थतत्वज्ञःप्रस्तुतंनिष्ठुरंवचः ॥ सर्वेस्वार्थपरायूयंनाप्तःकश्चनविद्यते १९ सुहृदांरोदनाश्रूणिमु
खेप्रेतस्ययांतिहि ॥ पृथिव्यांभारतांयातिप्राणहीनंकलेवरम् २० ब्रह्मांडगोलकेकोनुमृतमन्योनुगच्छति ॥ इयंचसुलभाराज्ञीरोदतेजीविताशया २१
यस्यामनोनुगत्यर्थंनसारोदितिकर्हिचित् ॥ यूयंसर्वेनागरिकाःस्वकार्यगमनाकुलाः २२ सूर्यवंश्याःसोमवंश्यायेराजानोमृतानकिम् ॥ तस्मादुत्था
यसर्वेपिराज्ञःकुर्वंतुसंस्कृतिम् २३ मृतसंस्कारकारीयःसएवाप्तोनचापरः ॥ एतदर्थंहिलोकस्यज्यायसीपुत्रगृध्नुता २४ तस्मादानीयतांधर्मपुत्रो
वाप्यन्यएवच ॥ सहिक्रियांमारभतुसर्वैर्देयस्तिलांजलिः २५ ॥ ॥ मुनिरुवाच ॥ ॥ ततस्तेनागराःसर्वेद्रावमात्यौस्त्रियश्चताः ॥
प्रबोधिताब्राह्मणेनचक्रुस्तस्यौर्ध्वदेहिकम् २६ सुमंतुनाकृतंसर्वंसर्वैर्दत्तास्तिलांजालिः ॥ पुनःस्नात्वातुतेसर्वेनगरंविविशुश्चिराद् २७ अश्नंतिपितुमं
दस्यपत्रंनत्वेश्वरंजनाः ॥ सांत्वयित्वातुसुलभांययुःस्वंस्वंनिकेतनम् २८ त्रयोदशाहेनिर्वृत्तेराज्ञैदत्वांबराणिते ॥ चक्रुस्तेभोजनंप्रीत्याप्रत्यहं
बहुवासरम् २९ एकदानागराःसर्वेद्रावमात्यौनृपप्रिया ॥ सर्वेसंशयितासन्प्रजापालनकर्मणि ३० एतस्मिन्नंतरेतत्रमुद्गलोमुनिरायर्यौ ॥

१ सहक्रियामारभन्तु इतिपाठान्तरम् ।

उवाचसर्वाशयविदस्यराज्ञोमहागजः ३१ गहनोनामगृह्णातुमालांपुष्करनिर्मिताम् ॥ समाजेयस्यकंठेतांनिक्षिपेत्सनृपोभवेत् ३२ तथेतिचत
दासर्वेसाधुसाध्वित्यपूजयन् ॥ अतींद्रियज्ञानवतोवचोमुद्गलशर्मणः ३३ इतिश्रीगणेशपुराणेउपासनाखंडेपंचविंशोऽध्ययः ॥ २५ ॥ ॥ विश्वा
मित्रउवाच ॥ ॥ एकस्मिन्दिवसेशुभग्रहयुतेलग्नेशुभेवासरेयोगेचारुफलेजनेचनगरेनानाविधेमेलिते ॥ मालांरत्नमयींददौनरपतेराज्ञीकरे
णोःकरेसंप्रार्थ्यद्विरदंकुरुष्वनृपतिंलोकेषुयस्तेमतः १ तामाज्ञांप्रतिगृह्यवारणपतिःसंरंजितोधातुभिर्बभ्रामाद्विजबंदिचारणगणैराशासितःसर्वतः ॥ नाना
वाद्यकरैर्वृतोनृपभटैराज्यार्थिभिःपूरुषैर्जिघ्नन्सर्वजनंसआपरिगतंयातोबहिःपत्तनात् २ नार्यस्तत्रगरेशिशूनथपतीन्कृत्वापुरोवस्थितान्राज्यार्थैविविधान
राश्चबहुधाश्रेणीमुखाश्चस्थिताः ॥ तेसर्वेविमनस्कतांपरिगताःस्वंस्वंगृहंचागतायातेतस्मिन्गहनेकरिण्यथपुरोयाताबहिश्चापरे ३ गजस्तुयातःकमला
सुतंतंसंपूजयंतंद्विरदाननंतम् ॥ दृष्ट्वैवतस्मिन्निदधेसमालांपश्यत्सुलोकेषुसुरेषुनाके ४ वस्त्राणिमाल्यानिचभूषणानिदक्षायदत्तानितदैवलोकैः ॥ ज्ञा
त्वामतंपौरजनस्यराजाराज्ञःप्रकृत्योरुभयोस्तदैव ५ ववदुर्वाद्यसंघाश्चदिव्याभौमाअनेकशः ॥ मुमुचुःपुष्पवर्षंतेदेवाहर्षयुताःशुभम् ६ उपविष्टास्त
दालोकायथास्थानंयथाक्रमम् ॥ नेमुश्चतंदक्षनृपममात्यद्वयसंयुतम् ७ तांबूलानिचवस्त्राणिजनेभ्यःप्रददौनृपः ॥ ब्राह्मणान्पूजयित्वैवदत्वादाना
न्यनेकशः ८ संपूज्यमातरंतांतुवस्त्रालंकरणादिभिः ॥ दापयामासदानानिब्राह्मणेभ्योयथाविधि ९ नरयानेसमारोप्यस्वयमारुरुहेगजम् ॥ अलंकृतं
सिक्तमार्गंपताकाध्वजसंयुतम् १० अश्वारूढावमात्यौतौपुरस्कृत्यययौपुरम् ॥ स्तुवंतिबंदिनःपौरान्नृत्यंत्यप्सरसःपुरः ॥ गंधर्वागाननिष्णाताधावि
त्वायांत्यमुंपुरः ११ जयशब्दैर्नमःशब्दोवाद्यशब्दोगमद्दिवम् ॥ नृपद्वारंसमासाद्यनत्वाकेचिद्गृहंययुः १२ सभायांविविशुःसर्वेसंख्यातीतानृपास्तदा ॥
नृयानंप्रेषयामासमुद्गलायमहामतिः १३ छत्रंध्वजंचामरंचसुमंतुंप्रकीर्तितंतथा ॥ आयांतंमुद्गलंदृष्ट्वास्वामनात्पुरतोययौ १४ सकिरीटेनशिरसापादयोः
प्रणनामतम् ॥ न्यवेशयत्स्वासनेतंतेनाज्ञप्तोन्यआसने १५ उपविष्टोराजसंघैःपूजयामासतंमुनिम् ॥ गांचापिप्रददौतत्रब्राह्मणायमहामतिः १६ उवा
चतंनृपोदक्षोभोमुद्गलमहामुने ॥ अद्यतेमहिमाज्ञातोलोकैरेतैर्महानयम् १७ शरीरेचारुताराज्यप्राप्तिश्चत्वत्प्रसादतः ॥ क्वसावस्थापूर्वतनोःक्वेदंराज्यंमहा
मुने १८ विनायकमहंजानेत्वामेवमुनिसत्तम ॥ पुनर्मेमस्तकेब्रह्मन्निधेहिकरपंकजम् १९ येनाहंसर्वकामानांभाजनंस्यांचिरंमुने ॥ विश्वामित्रउवाच ॥ आ
कर्ण्यवचनंतस्यमुद्गलोथाब्रवीन्नृपम् २० नतेभयंरिपुकृतंभविष्यतिकदाचन ॥ यंयंकामयसेकामंसर्वंतस्तेभविष्यति २१ततस्तस्मैददौग्रामान्वासोरत्नधना
दिकम् ॥ अन्येषांब्राम्हणानांचगोधनान्यंशुकानिच २२ आशीर्भिरभिनंद्याथययुस्तेब्राह्मणागृहम् ॥ अमात्याभ्यांगृहेभ्यश्चददौग्रामाननेकशः २३ प्रासादं
कारयामासगणेशस्यबृहत्तरम् ॥ कुण्डिनेनगरेतस्मिन्प्राक्तनंसंस्थितंलघुम् ॥ विसर्जयामाससभांप्रविवेशगृहंनृपः २४ आययौवल्लभस्तत्रश्रुत्वावार्तांजने

रताम् ॥ वीरसेनांनरपतिःस्वासुतापतिमिच्छतीम् २५ ददौतस्मैस्वप्नगतगणेशस्याज्ञयाशुभम् ॥ दक्षायराज्ञेमहतेत्रिलोकश्रुतकीर्तये २६ तस्मा
त्तस्यांभवत्पुत्रोबृहद्भानुरितिश्रुतः ॥ ततोभवत्खड्गधरःसुलभस्तत्सुतोभवत् २७ पद्माकरस्ततत्तनयोवपुर्दीप्तस्तुतत्सुतः ॥ चित्रसेनस्तत्सुतोभूच्चित्रसेनात्त्वमेव
हि ॥ २८ ॥ ॥ ब्रह्मोवाच ॥ ॥ विश्वामित्रमुखात्सर्वंश्रुत्वावंशपरंपराम् ॥ ततःसनरशार्दूलोभीमोनाममहीपतिः २९ संतोष्यतंमुनिंप्रार्थ्यपप्रच्छ
द्विजपुंगवम् ॥ ॥ भीमउवाच ॥ ॥ विनायकःकदामेस्यात्सुप्रसन्नोमहामुने ३० तमुपायंवदाविभोयेनमेतदनुग्रहः ॥ कदाहंकृतकृत्यः
स्यांदृष्ट्वादेवंगजाननम् ३१ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडपरंपरावर्णनंनामषड्विंशोऽध्यायः ॥ ॥ २६ ॥ ॥ ७ ॥ व्यासउ
वाच ॥ कउपायस्तुमुनिनाविश्वामित्रेणधीमता ॥ कृपावतातुभीमायकथितस्तंवदस्वमे १ मन्मनोमोहपटलंमृत्योरिवविनिःसृतम् ॥ तत्कथामृतपानेनपिताम
हमृतायथा २ ब्रह्मोवाच ॥ भीमायकथितस्तेनयउपायःशृणुष्वतम् ॥ एकाक्षरंमहामंत्रंभीमायाकथयन्मुनिः २ पाराशर्यमुनिश्रेष्ठकथयामिशृणुष्वतम् ॥ उ
वाचतंप्रसन्नात्माविश्वामित्रःसुधर्मवित् ३ ॥ विश्वामित्रउवाच ॥ अनेनाराधयविभुंदैवतंगणनायकम् ॥ अनुष्ठानंकुरुष्वत्वंप्रासादेदक्षनिर्मिते ॥ विनायकःप्र
सन्नस्तेसर्वान्कामान्प्रदास्यति ४ धर्ममर्थंतथाकामंमोक्षमन्यदपेक्षितम् ॥ गच्छवास्वपुरंभीमचिंतांकामपिमाकुरु ५ ॥ ब्रह्मोवाच ॥ इत्युक्तःसतदातेनतंप्रण
म्ययथौनृपः ॥ सपत्नीकोददर्शाथपत्तनंस्वंजहर्षच ६ अमात्यैःसेनयासार्द्धंनागरैरीयतुर्नृपम् ॥ आलिलिंगुर्नृपंकेचिन्नेमुर्दूरात्तथांतिके ७ प्रविवेशपुरंराजा
सर्वैःसाकंध्वजालिमत् ॥ सिक्तमार्गंचारुगंधंनानावादित्रशब्दितम् ८ ऊचुःपरस्परंलोकाःपुरीयंशोभतेधुना ॥ यथानारीपतिंप्राप्ययथांधोवापिसद्दृशम् ॥
९ इतिशृण्वन्नृयानस्थस्तथासाचारुहासिनी ॥ वस्त्रालंकारशोभाढ्यौस्तूयमानौमुदान्वितौ १० उभौविविशतूरम्यंपुरंनानर्द्धिसंकुलम् ॥ विसृज्यसर्वलोकंतौ
वस्त्रालंकारमौक्तिकैः ११ तांबूलैस्तेषुयातेषुभवनंस्वमगच्छताम् ॥ ततःशुभेदिनेराजादक्षप्रासादमागमत् १२ यत्कौण्डिन्यपुरेकारिपुरादक्षेणधीमता ॥
तत्रार्चयामासविभुंसर्वदातंविनायकम् ॥ उपवासपरोनित्यंतन्मंत्रमवलोडयन् १३ भोजनेशयनेयानेवचनेश्वसनेपिच ॥ तमेवचिंतयन्नित्यमनन्यमन
सानृपः १४ जलेस्थलेनभोमार्गेस्वर्गेदेवेनरेद्रुमे ॥ भक्ष्येपेयेनृपोऽपश्यद्विनायकमनुत्तमम् १५ यंयंपश्यतितंनौतिदृढालिंगनतत्परः ॥ नग
रेतंजनाःसर्वेपिशाचइतिमेनिरे १६ ततोविनायकोभ्येत्यधृत्वापाणितलेनृपम् ॥ आहतंनृपमुकोसिकिंवांछासिवदस्वतत् १७ तमुवाचनृपोनान्यंजाने
त्वच्चरणांबुजात् ॥ ततोविनायकःप्राहपुत्रस्तेचारुदर्शनः १८ भवितामत्प्रमादेनगुणीस्वर्णतनुर्नृपः ॥ व्रजस्वंभवनंदेवद्विजपूजापरोभव १९ सगत्वाभव
नंराजातच्चकारतथैवच ॥ देवानांब्राह्मणानांचपूजनंतर्पणंतथा २० अकरोत्सर्वभावेनगणेशःप्रीयतामिति ॥ अल्पेनैवतुकालेनपुत्रस्तस्याभवच्छुभः २१
ददौदानान्यनेकानिपुत्रजन्मनिमित्ततः ॥ रुक्मांगदेतिनामास्यचक्रेद्विजवरोदितम् २२ ववृधेबालकोनित्यंशुक्लपक्षेयथाशशी ॥ चकारगुरुसात्तंसाशि

थैनृपतिःसुतम् २३ सचश्रवणमात्रेणजग्राहगुरुणोदितम् ॥ सर्वविद्यानिधानेनदत्तंयत्कपिलेनच २४ सोपिविद्यानिधिरभूद्गजकर्णइवापरः ॥ रुक्मांग
दोतिबलवान्सर्वशास्त्रविशारदः २५ तस्मैपट्टाभिषेकंसचकारगुणराशये ॥ ददौचद्विजमुख्येभ्योवासोरत्नधनानिच २६ ततोधिकांमहाभक्तिंसोपिचक्रोविं
नायके ॥ जजापैकाक्षरंमंत्रंपितुःप्राप्तंदिनेदिने २७ एकस्मिन्दिवसेरण्यंयुवराजाविवेशह ॥ मृगयांव्यचरद्भूरिजवानगवयान्मृगान् २८ अतिश्रांतोददर्शा
श्रमुनेःकस्यचिदाश्रमम् ॥ नानावृक्षलताजालंत्यक्तवैरमृगान्वितम् २९ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेरुक्मांगदाभिषेकवर्णनंनामसप्तविंशोध्या
यः ॥ २७ ॥ ॥ ब्रह्मोवाच ॥ ॥ ततोरुक्मांगदोपश्यदृषिंवाचक्नविंशुभम् ॥ मुकुंदांतस्यपत्नींचस्निग्धमंजुलभाषिणीम् १ अतिश्रांतोनरपतिर्नमश्चक्रउ
भावपि ॥ तस्मिन्मुनौगतेस्नातुंययाचेनृपसत्तमः २ मातर्मुकुंदेमेदेहिशीतलंजलमुत्तमम् ॥ विनाजलंममप्राणागमिष्यंतितिथमक्षमम् ३ आकर्ण्यतस्यवा
चंसाजगादमदनातुरा ॥ त्वादृशंपुरुषंक्वापिमारादप्यतिसुंदरम् ४ नदेवेषुननागेषुयक्षगंधर्वपुंजयोः ॥ पश्यामिचारुसर्वांगमतेमेहृदयंत्वयि ५ अत्या
सक्तंत्वदधरामृतपानेचदेहितत् ॥ नारदउवाच ॥ ॥ व्यलीकंसतुश्रुत्वैवश्रांतत्वात्भृशदुःखितः ६ तिलोत्तमोत्तमांतांसजितेंद्रियतयाजगौ ॥ त्यजप्रौढिंन
मेचित्तंपारदार्येविगर्हिते ७ विनायकप्रभावेणसक्तंनैवात्रकर्हिचित् ॥ नजलंपातुमिच्छामित्वयादत्तंसुदुष्टया ८ ऋषेराश्रमइत्येवंयातोयास्यइतोशुभे ॥
तंगंतुमुद्यतंपाणिंधृत्वावीवददातुरा ९ ॥ ॥ मुकुंदोवाच ॥ ॥ बलात्कारेणयोन्यस्यास्त्रियंधर्षितुमिच्छति ॥ सएवनरकंयातिनस्वयंयातितामपि १० कृतेत्रे
तायुतेब्रह्मास्त्रीणांस्वातंत्र्यमभ्यधात् ॥ नकरोषियदावाक्यंतदाभस्मभविष्यसि ११ अथवाराज्यविभ्रष्टंकरिष्येवनचारिणम् ॥ नारदउवाच ॥ इत्युक्त्वाधाव
मानासाकाममार्गणपीडिता १२ रभसालिंगयामासचुचुंबेवदनंहठात् ॥ ततोरुक्मांगदस्तांतुबलान्निक्षेपदूरतः १३ मूर्छितापतिताभूमौरंभेवमरुताहता ॥
उत्थितांतांतदाप्राहपरदारविरक्तधीः १४ रुक्मांगदोमहाभागेमुनिपत्न्याविवेकिनि ॥ परपुंसिमनोयस्याःसावैनिरयभाग्भवेत् १५ नमेमनश्चलेत्क्वापियं
दिशुष्येन्महोदधिः ॥ एवंनिराकृतातेनतंशशापरुषान्विता १६ यथाहंकष्टमगमंतथात्वंकुष्ठभाग्भव ॥ यतस्तेहृदयंवज्रात्सारभूतंनचद्रुतम् १७ इत्थंवदंतीं
तांराजानिर्भर्त्स्यबहुधाततः ॥ त्वरयानिर्गतस्तस्मादाश्रमाद्भृशदुःखितः १८ स्वंददर्शशरीरंसश्वेतंबकशरीरवत् ॥ कुष्ठरोगयुतंकांत्याहीनंचभ्रष्टशकुत्सि
तम् १९ चिंतार्णवेतदामग्नइदमाहगजाननम् ॥ किमपराद्धंमयातेद्यकथमत्रागतोप्यहम् २० प्राप्तःकथंनुदुष्टायामुनिपत्न्याःसमागमम् ॥ त्वयानूनंसिद्धि
पतेदुष्टाःसंवर्द्धिताभृशम् २१ अवतारांश्चसाधूनांरक्षणायबिभर्षिहि ॥ इयंननाशितादुष्टास्वैरिणीरूपगर्विता २२ कथंममशरीरंतत्कांचनस्पर्द्धिसुंदरम् ॥ १८
इमामवस्थांसंप्राप्तंकेनवादुष्टकर्मणा २३ तवभक्तिंयथापूर्वंसदाकुर्वेयथाविधि ॥ त्वदन्यंनैवशरणंयामिनाथगजानन २४ नेदंशरीरंवक्त्रंवादर्शयिष्येजनं
प्रति ॥ प्रायोपवेशनेनेदंशोषयिष्येकलेवरम् २५ निश्चित्यैवंनरपतिरासन्यग्रोधसन्निधौ ॥ भृत्याइतस्ततोधावन्नेक्षंतेस्मचतंनृपम् २६ प्रवृत्तायांनिशायां

च्चजग्मुःस्वंस्वंनिकेतनम् ॥ स्वामिसेवकयोर्जातागतिश्चक्राह्वयोरिव २७॥ इतिश्रीगणेशपुराणेउपासनाखंडेप्रायोपवेशनंनामाष्टाविंशतितमोध्यायः ॥ २८॥
॥ ॥ मुनिरुवाच ॥ ॥ तस्मिन्वटेसमासीनःकस्मिंश्चिद्दिवसेनृपः ॥ दूराद्ददर्शदेवर्षिंनारदंमुनिपुंगवम् १ ननामप्रार्थयामासक्षणंविश्राम्यतामिति ॥ उत्त
तारनभोमार्गान्नारदःकरुणानिधिः २ पूजयित्वायथाशक्तिपप्रच्छमुनिमादरात् ॥ अहंरुक्मांगदोनामभीमपुत्रोमहाबलः ३ मृगयांव्यचरन्वाचक्नवेरा
श्रममागतः ॥ जलयाञ्चाकृतातत्रतृषितेनमयानघ ४ तस्यपत्नीभृशंनष्टाकामार्तामामचुंबत ॥ तस्मिन्मुनौगतेस्नातुंदुष्टभावेनचेतसा ५ उवाचमांभज
स्वेतिकामबाणप्रपीडिता ॥ जितेंद्रियतयादेवप्रसादात्सानिराकृता ६ अशपद्दुःखितात्यंतंसामांनिष्ठुरचेतसा ॥ कुष्ठीभवमहादुष्टसकामांत्यजसेयतः ७॥ ब्रह्मोवा
च॥ ॥श्रुत्वैवंदुष्टवचनंनिर्गतोहंतदाश्रमात् ॥ श्वेतकुष्ठीतदाजातोवदमेनिष्कृतिंमुने ८ वियोगान्ममभीमोपिमग्नःस्याद्दुःखसागरे ॥ श्रुत्वेत्थंवचनंतस्यनारदःप्रा
हविश्ववित् ९ उपायंतस्यकुष्ठस्यनाशायकरुणायुतः ॥ नारदउवाच ॥ ॥ आगच्छतामयामार्गेदृष्टमाश्चर्यमुत्तमम् १० विदर्भेनगरंख्यातंकदंबमितिसंज्ञया ॥
तत्प्रासादेमयादृष्टामूर्तिर्वैनायकीशुभा ११ चिंतामणिरितिख्यातासर्वेषांसर्वकामदा ॥ तस्याऽग्रतोमहाकुंडंगणेशपदपूर्वकम् १२ कश्चिच्छूद्रोमहाकुष्ठीजराजर्ज
रितोनृप ॥ तीर्थयात्राप्रसंगेनकदंबपुरमागतः १३ गणेशकुंडेस्नात्वैवदिव्यदेहमवापसः ॥ विनायकस्वरूपैस्तुगणैरानीतमंबरात् १४ विमानवरमारुह्यसग
तःस्थानमुत्तमम् ॥ यत्रगत्वानशोचंतिनपतंतिपुनःक्वचित् १५ दृष्टोमयैवराजेंद्रतत्रस्नानायसांप्रतम् ॥ स्नात्वादेवंसमभ्यर्च्यचिंतितार्थप्रदंविभुम् १६ देहि
दानानिविप्रेभ्यःसद्यःपूतोभविष्यसि ॥ जीर्णांत्वचंपरित्यज्यसुरूपीभुजगोयथा १७ ॥ ब्रह्मोवाच ॥ इतिवाणींनारदोक्तांनिशम्यनृपसत्तमः ॥ नकिंचिदुक्त
वान्वाक्यंमग्नआनंदसागरे १८ गंतुंसमुद्यतेतस्मिन्नारदेमुनिपुंगवे ॥ प्रणिपत्यततोपृच्छत्प्रपूज्यचमुनिंपुनः १९ ॥ रुक्मांगदउवाच ॥ ॥ तस्मिन्क्षेत्रे
पुराकेनसिद्धिःप्राप्ताशुभानघ २० मूर्तिश्चस्थापिताकेनमणिरत्नमयीशुभा ॥ वैनायकीतिमेशंसपरंकौतूहलंमुने २१ भवादृशानांसाधूनांपरोपकरणेमतिः ॥
अन्यथाभ्रमणंकस्यनलोकेषुप्रदृश्यते २२ लोकेषुवर्षतेमेघःशेषेणाध्रियतेधरा ॥ उपकारायसूर्योपिभ्रमतेहर्निशंद्विज २३ समस्यसर्वभूतेषुसर्वज्ञस्यतवाग्रतः ॥
अनभिज्ञेनमूढेनकिंवक्तव्यंदयानिधे २४ पृच्छेतथापिदेवर्षेसंशयच्छेदनायवै ॥ ॥ नारदउवाच ॥ ॥ साधुपृष्टंत्वयाभूपलोकानुग्रहकारक २५ तृप्तोहंत
ववाक्येनसर्वंचकथयामिते २६ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेनारदागमनंनामैकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ नारदउवाच ॥ ॥ कदाचिदमरा
वत्यांशक्रंद्रष्टुंगतोस्म्यहम् ॥ समांसंपूज्यविधिवदुवाचावनतोऽप्तशम् १ ॥ इंद्रउवाच ॥ किंचिदाश्चर्यभूतंमेसंतोषायमुनेवद ॥ भ्रमसेसर्वलोकांस्त्वंविदित
सर्वमस्तिते २ ॥ नारदउवाच ॥ मृत्युलोकेमयादृष्टोगौतमस्याश्रमोमहान् ॥ नानावृक्षलताजालैर्नानापक्षिगणैर्युतः ३ अहल्यासहितंतत्रगौतमंदृष्टवानहम् ॥
रूपंविलोक्यतस्यास्तुजातोहंकामविह्वलः ४ यस्यारूपेणसावित्रीशचीलक्ष्मीर्गिरींद्रजा ॥ उर्वशीमेनकारंभालोकेख्याताततिलोत्तमा ५ केशाबालाययाका

रिसाऽनसूयाप्यरुंधती ॥ छायासंज्ञारवेर्भार्याकश्यपस्यचयादितिः ६ सदृशीनैवकापिस्यान्नागपत्नीषुवाक्वचित् ॥ नचमेरोचतेगानंनपूजानचभोजनम् ७
ब्रह्मचर्यंचमेस्वीयंनिद्रांचनलभेक्वचित् ॥ त्वरावानहमायातोद्रष्टुंसाध्वमरावतीम् ८ तुच्छांपश्यइमांदेवींविनातामभरावतीम् ॥ ॥ नारदउवाच ॥ इतिश
क्रेस्तुवन्नंतर्हितोहंनृपतेवर ९ अंतर्हितेमयितदामद्वाक्यंमनसास्मरन् ॥ जंभभेदीमत्स्यकेतुविद्धोमूर्च्छामवापसः १० पश्येकदामुनेर्भार्यांगौतमस्येत्यचिंत
यत् ॥ कदाधरामृतंप्राप्यमुच्येयंमदनानलात् ११ जीवितुंनैवपश्येन्यंतदाश्लेषंविनाशुभम् ॥ एवंनिश्चित्यसंकल्पंगौतमोभूत्सजंभहा १२ चिंतयन्नेवतांमा
र्गेमुनेराश्रममाययौ ॥ ददर्शतामहल्यांतुस्नातुंयातेसगौतमे १३ अभ्यंतरगतःप्रोचेप्रियेशय्यांशुभांकुरु ॥ साचोवाचजपंत्यक्त्वाकथमद्यागतोगृहम् १४ दि
वैवसुरतेच्छांकिंकुरुषेतिविगर्हिताम् ॥ ॥ गौतमउवाच ॥ ॥ अहंस्नातुंगतोयावत्तावद्देवावराप्सराः १५ तत्रैवस्नातुमायाताजातानग्नाक्षिगोचरा ॥ बिंबाधरा
सुचार्वंगीचारुपीनपयोधरा १६ नलग्नंमेमनोदृष्ट्वाजपेकामास्त्रपीडितम् ॥ ततोहमाश्रमंयातोरतिंदेहिप्रियेधुना १७ नोचेत्कामाग्निनादग्धंमृतंमां
त्वनुपश्यसि ॥ शपेत्वांप्रव्रजिष्येवानिग्रहीष्येमनोभ्रशम् १८ ॥ अहल्योवाच ॥ ॥ स्वाध्यायंदेवपूजांचत्यक्त्वाकिंप्रार्थ्यतेरतिः ॥ नोचितंतवब्रह्म
र्षेतथाप्याज्ञांकरोम्यहम् १९ भर्तुःशुश्रूषणादन्योधर्मोनास्तिस्त्रियाःक्वचित् ॥ नारदउवाच ॥ स्वराकृतिस्वभावैःसाज्ञात्वातंस्वामिनंनिजम् २० विवेशशय
नेरंतुमहल्यासहवज्रिणा ॥ निःशंकंचुंबनाश्लेषनीवीविस्रंसनादिभिः २१ आकृत्यागौतमस्यैवंचिक्रीडेजंभहातया ॥ दिव्यान्गंधानुपाघ्रायचकिताशंकिताभृ
शम् २२ तर्कयामासमनसिकिमयंकूटरूपवान् ॥ कलंकोयंममभ्रष्टंचंद्रस्येवभवेन्नुकिम् २३ उभेकुलेमेनष्टेकिंदुष्टस्यास्यतुसंगमात् ॥ दर्शयिष्येकथं
लोकेऽयशःश्याममुखंत्विदम् २४ नयिष्यतिगतिंकांमेप्रियोभर्तातुमांमुनिः ॥ पप्रच्छतंशठंकोपात्कोसित्वंकूटरूपधृक् २५ विश्वस्तास्वामिरूपेणवदनो
चेच्छपामिते ॥ इत्युक्तःशापभीतोसावाविश्चक्रेनिजंवपुः २६ दिव्याभरणसंयुक्तंकिरीटकटकान्वितम् ॥ कुंडलाद्भुतदीप्तीभिर्विलसन्मुखपंकजम् २७ उ
वाचसततस्तांतुविद्धिमांत्वंशचीपतिम् ॥ लावण्यदर्शनात्तेहंविह्वलोमदनाग्निना २८ नलेभेकुत्रचिच्छर्मततइत्थंकृतंमया ॥ इतोपिमांभजस्वत्वंत्रैलोक्येश्वर
मादरात् २९ श्रुत्वेत्थंवचनंतस्यमुनिपत्नीरुषान्विता ॥ वमंतीवमुखाज्ज्वालांजगादात्रिदशाधिपम् ३० अस्यतेवपुषोमूढमर्द्रतीरसिमागते ॥ अवस्थाका
भवेन्मंदनजानेहंशतक्रतो ३१ पातिव्रत्यंत्वयाभग्नंदुष्टपापीयसामम ॥ कामवस्थांगमिष्याभिशापाद्गौतमवाग्भवात् ३२ ॥ इतिश्रीगणेशपुराणेउपास
नाखंडेअहल्याधर्षणंनामत्रिंशत्तितमोध्यायः ३० रुक्मांगदउवाच ॥ ॥ आगतेगौतमेकोवावृत्तांतोभून्महामुने ॥ वदमेसकलंतंतुजिज्ञासामहतीमम १
नारदउवाच ॥ नित्यकर्मसमाप्यैवस्वाश्रमंगौतमोययौ ॥ आकार्यनिजपत्नींतांदेहिपादोदकंमम २ किमर्थंनागताद्यत्वंसंमुखंममपूर्ववत् ॥ नानीतमास

१ रुक्मांगदापितिशेषः ।

नंकस्मात्कथंचाद्रुनभाषसे ३ श्रुत्वेत्थंवचनंतस्यवेपमानालतेवसा ॥ अधोमुखीविनिर्गम्यमुहूर्त्तान्मुनिमाययौ ४ साष्टांगंपतितामूमौतत्पादोपरिमस्त
का ॥ विह्वलाशापभीतासाशनैरथजगौमुनिम् ५ उषसित्वंप्रयातोसिस्नानंकर्तुंनिजंविधिम् ॥ तवरूपधरोदुष्टोदेवेंद्रोमामुवाचह ६ दृष्टावराप्सरोभ्योपिसुं
दरीकामिनीमया ॥ नमेमनोजपदैवविधौनित्योस्थिरंभवेत् ॥ परावृत्यागतस्तस्माद्रतिंमेदेहिशोभने ७ त्वमेवेतिमयाभ्रांत्याकृतंवाक्यंतथैवतत् ॥ दि
व्यगंधानुपाघ्रायविकल्पोमेभवत्पुनः ८ दुरात्मन्कोसिनोब्रूहिनोचेद्भस्मभविष्यसि ॥ इतिशापभयाज्जातःप्रकटोबलसूदनः ९ तावदेवभवद्वाक्यं
श्रुतंतुमुनिसत्तम ॥ लज्जयानागताशीघ्रमपराधंक्षमस्वमे १० स्वयंनिवेदनेदोषोदोषोपरानिवेदने ॥ मंत्रायुर्गृहरंध्रश्रीरतयश्चौषधानिच ११ मानाप
मानदानानिप्रकटानिनकारयेत् ॥ इत्थंनिशम्यसमुनिःकोपव्याकुलितेंद्रियः १२ शशापवनितांस्वीयांदुःशीलेत्वंशिलाभव ॥ नाज्ञासिमेस्वरूपंतंस्वभावंचे
ष्टितानिच १३ परेपुंसिनिमग्नंतेयतश्चेतोतिकामुके ॥ यदादाशरथीरामोभ्रमद्राजावनेवने १४ तस्यांघ्रिस्पर्शनादेवस्वंरूपंप्रतिपत्स्यसे ॥ ॥ नारद
उवाच ॥ ॥ तदैवसाशिलाजातातपोनिधिवचोबलात् १५ तस्याःशापंसमाकर्ण्यचकंपेपाकशासनः ॥ प्रकंपनस्यसंयोगाद्धिमवत्पर्वतोयथा १६ त
र्कयामासमनसिकथंकार्यंमयाधुना ॥ समुद्रमध्येकूपेवातडागेकमलेथवा १७ लीनोभूत्वायदास्थास्येतदाज्ञास्यतिमांमुनिः ॥ अतोबिडालरूपेणविच
चारसवज्रभृत् १८ गौतमस्तमचक्षाणोगृहेद्वारितथाश्रमे ॥ क्कगतोदानवरिपुर्येमेभार्याविदूषकः १९ ध्यानेनबुबुधेतंतुक्षणेनमुनिसत्तमः ॥ नतेभस्म
करिष्यामिदेवेंद्रोसियतःखलः २० शपामित्वांशचीभर्त्तःसहस्रभगवान्भव ॥ श्रुतवान्वचनंयावद्गोषेणमुनिनेरितम् २१ तावद्ददर्शस्वंदेहंसहस्रभगचि
ह्नितम् ॥ ततोदुःखार्णवेमग्नःशुशोचबलवृत्रहा २२ ॥ ॥ इंद्रउवाच ॥ ॥ अहंशिक्षापितोवृद्धैर्नानाधर्माननेकशः ॥ वृद्धानांवचनंयन्मेनविचारितमादरात्
२३ स्वबुद्धिर्हितकृत्सर्वाविनाशायपरेरिता ॥ गुरोर्गरीयसीबुद्धिःक्षयदाकामिनीमतिः २४ कुतोनारदवाक्येनयातोहंतामनिंदिताम् ॥ देवराजोभवन्नास्यं
लोकानांदर्शयेकथम् २५ दिव्यदेहोगतःक्काद्यनिजभार्यांवदेनुकिम् ॥ धिङ्मांचाधिकस्मरंयनप्रापितोगर्हितांदशाम् २६ प्राणिभिर्भुज्यतेकर्मशुभंवाय
दिवाशुभम् ॥ तिर्यग्योनिंसमासाद्यक्षपयिष्येऽघमात्मनः २७ नालिनीकुड्मलेतिष्ठेहींद्रगोपकरूपधृक् २८ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडे
शक्रशापवर्णनंनामैकत्रिंशत्तितमोध्यायः ॥ ३१ ॥ ७ ॥ नारदउवाच ॥ शक्रेतुनलिनींयातेतत्पुरंत्वहमागतः ॥ बृहस्पतिपुरोगांस्तांस्तत्रापश्यंस्थितान्
सुरान् १ तेभ्योद्यकथयंसर्वमुभयोःशापकारणम् ॥ अहल्यायामहेंद्रस्यसंयोगंचविरूपताम् २ सहस्रभगतांयातःशक्रोगौतमशापतः ॥ अहल्याध
र्षणाद्देवास्तत्संगात्साशिलाभवत् ३ ॥ ॥ ब्रह्मोवाच ॥ ॥ श्रुत्वातेनारदोक्तंतत्सर्वेदेवाःशुचान्विताः ॥ आतिदुःखाद्रुदंतस्तेनिश्वासोच्छ्वासविभ्रमैः ४ ॥

१ अहमित्यर्थं क्वचित्पुस्तकेन ।

देवाऊचुः ॥ ॥ येनाकारिशतंयज्ञादानवायेननिर्जिताः ॥ त्रैलोक्यंपालितंयेनमुक्तमैंद्रंपदंशुभम् ५ पूजितावहवोदेवाब्राह्मणाब्रह्मवित्तमाः ॥ भुक्ताना
नाविधाभोगाअन्येषामतिदुर्लभाः ॥ कुत्रस्थास्यत्यसौदेवोभोक्ष्यतेस्वप्स्यतेकथम् ॥ कमद्यशरणंयामःस्वकृतेतत्कृतेपिवा ७ पालयिष्यतिकोस्मान्वै
पदमैंद्रंशचींतथा ॥ कथंप्रसन्नतांयायाद्गौतमोमुनिसत्तमः ८ स्वीयभार्यावियुक्तःसंस्तत्कृतागःस्मरन्रुषा ॥ अन्योपायंनपश्यामोगौतमस्यप्रसाद
तः ९ तस्मान्नारदयास्यामोगौतमंसांत्वितुंमुनिम् ॥ एवंतेनिर्ययुर्देवानारदेनसमन्विताः १० गौतमंतेसमासाद्यबद्धांजलिपुटामुनिम् ॥ तुष्टुवुर्विविधै
र्वाक्यैस्तमेवशरणंगताः ११ ॥ ॥ देवाऊचुः ॥ ॥ तवप्रभावंवक्तुंनोमुनेशक्तिर्नविद्यते ॥ गरिमाणंवदेत्कोनुमेरोर्हिमवतोपिच ॥ वृष्टिधारारजोभूमेर्गंगायाः
सिकताअपि १२ कमंबुधेर्गुणान्विष्णोर्गणयेत्कोनुमूढधीः ॥ प्रातरेवोप्तबीजानांमध्यान्हेसस्यसंपदः १३ संपादितास्त्वयापूर्वमविताऋषिसत्तमाः ॥
वालखिल्यैर्यजिंकृत्वापरइंद्रोविनिर्मितः १४ ब्रह्मादिभिःप्रार्थितास्तेपाक्षिणांतमकल्पयन् ॥ पयसांनिधिरेकेनप्राशितश्चुलुकेनयत् १५ अपरासृष्टि
रारब्धागाधिपुत्रेणधीमता ॥ स्तंभितोभुजइंद्रस्यच्यवनेनमहात्मना १६ तस्मात्सर्वात्मनापुंसांभवतांसवनंनतिः ॥ दर्शनंभाषणंपूजास्पर्शनंपापनाशन
म् १७ उपकाररतानांचदीनानुग्रहकारिणाम् ॥ इंद्रार्थेशरणंयातान्कृपांकर्तुंत्वमर्हसि १८ ॥ ॥ गौतमउवाच ॥ ॥ भवतांदर्शनंचर्मचक्षुषांनैवजायते ॥
ममपुण्येनजातंतत्कामसंपादनंनृणाम् १९ जन्माश्रमतपोदानंदेहआत्माव्रतानिच ॥ सार्थकानीक्षणेनैवजातानिभवतांखलु २० इदानींप्रार्थितंकिंवस्तन्निरू
प्यंममाग्रतः ॥ शक्यंचेत्तत्करिष्येहंभवत्स्मृतिबलेनतत् २१ ॥ ॥ मुनिरुवाच ॥ ॥ इतितद्वचनंश्रुत्वाजहृषुस्तेदिवौकसः ॥ चंद्रोदयेयथाहर्षंप्राप्नोति
जलधिःस्फुटम् २२ यथावाबालभाषाभिःपितरौमुदमीयतुः ॥ प्रार्थनांचक्रिरेसर्वेगौतमंतंमहामुनिं २३ ॥ देवाऊचुः ॥ ॥ ईश्वरस्यापराधेनकामोभस्म
त्वमागतः ॥ आगस्कारित्वयाशक्रोनचप्राणैर्वियोजितः २४ इदानींसयथास्थानंस्वकीयंप्राप्नुयान्मुने ॥ क्षमित्वातस्यचागांसिसर्वेषांवचनाद्विनः ॥
२५ कृतेतस्मिन्प्रसादेतुसर्वेषांवांछितंभवेत् ॥ ॥ नारदउवाच ॥ ॥ श्रुत्वादेवसमूहस्यवचनानिसगौतमः २६ प्रहस्यप्रत्युवाचेदंसर्वान्देवगणान्प्रति ॥
॥ गौतमउवाच ॥ ॥ नामापितस्यनग्राह्यंपतितस्यकृतागसः २७ कपटस्यशठस्यापिदुष्टस्याप्यविवेकिनः ॥ अनुतापविहीनस्यनिष्कृतिर्नैवविद्यते २८
तथापिभवतांवाक्यात्करिष्येतवप्रियंसुराः ॥ भवंतोपियदारुष्टास्तदाशापःपतेन्मयि २९ पूतोभवतिजंतुर्हिबहुभिर्योनुगृह्यते ॥ अतएकंवदेमंत्रंतस्मैतंप्र
दिशंतुच ३० सर्वकर्त्तासर्वहर्त्तासर्वपाताकृपानिधिः ॥ विनायकोदेवदेवोब्रह्मविष्णुशिवात्मकः ३१ षडक्षरस्तस्यमंत्रोमहासिद्धिप्रदायकः ॥ उपदेशे
कृतेतस्यदिव्यदेहोभवेत्तुसः ३२ भगानितस्ययावंतितावन्नेत्रोभविष्यति ॥ स्वराज्यंप्राप्स्यतेशक्रइतिसत्यंवदामिवः ३३ अभिधायसुरानित्थंतूष्णीमासी

१ मुनिर्नारदः

त्सगौत्तमः ॥ तंचतेपूजयित्वातुनमश्चक्रुर्मुदान्विताः ३४ प्रदक्षिणीकृत्यपुनःप्राप्यानुज्ञांययुःसुराः ॥ प्रशंसंतोमुनिंतत्रयत्रास्तेबलवृत्रहा ३५ गौतमा
ज्ज्ञानसंपन्नात्सात्विकोन्योनवर्तते ३६ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेमंत्रकथनंनामद्वात्रिंशोध्यायः ३२ ॥ ॥ नारदउवाच ॥ ऊचुर्देवावृत्रहणं
बहिर्याहिशतक्रतो ॥ वयंहिसहितास्तत्रनारदेनसुरर्षिणा १ तंगत्वागौतममुनिंप्रसाद्यत्वामिहागताः ॥ उपायस्तेनकथितोवरोदत्तस्तवापिच २ दो
षेजातेस्वयंसंतःख्यापयंतिजनेषुतम् ॥ तत्रप्रतिविधिंसम्यक्कुर्वंतितन्निरर्थकम् ३ आच्छादनेदोषवृद्धिःख्यापनेतुलयोभवेत् ॥ तस्मात्त्वमपिदेवेंद्रबहिरा
गत्यतंवद ४ देवर्षिंप्रतितंब्रूहिकुरूपायंमुनीरितम् ॥ वैनायकंमहामंत्रंगृहाणत्वंषडक्षरम् ५ ब्रह्माददर्शचांगुष्ठंविवाहेगिरिजेशयोः ॥ चस्कंदसतदारेतो
लज्जितोवाङ्मुखोगतः ६ ज्ञात्वामहेशःकृतवान्निर्दोषंतमुपायतः ॥ इतिवाणींसश्रुत्वैवदेवर्षिगणनिर्मिताम् ७ आजगामबहिःशक्रोनलिनीकोशतोनृप ॥
सर्वेषांतत्रदेवानांश्रुत्वावाक्यानिसादरम् ॥ ८ ॥ पूयशोणितदिग्धांगोमलिनःपूतिगंधवान् ॥ दृष्ट्वातथाविधंदेवानेमुःसर्वेसुरेश्वरम् ९ आच्छाद्यभ्रा
णरंध्राणिवस्त्राग्रैर्नृपसत्तम ॥ सुस्नातंपुनराचांतंतमिंद्रंवाक्पतिस्तदा १० षडक्षरंमहामंत्रंगणेशस्योपदिष्टवान् ॥ उपदेशेकृतेतेनदिव्यदेहोभवन्नसः ॥
॥ ११ ॥ सहस्रनयनःश्रीमानबभौसूर्यइवापरः ॥ ततोवाद्यनिनादैश्चजयशब्दैर्दिवौकसाम् १२ गंधर्वाणांगानरवैर्नादितविदिशोदिशः ॥ मुमुचुःपुष्प
वर्षाणिसर्वेदेवामुदान्विताः १३ आशिषोथददुःसर्वेमुनयोनारदादयः ॥ आलिलिंगुर्मुदादेवास्तुष्टुवुश्चापरेचतम् १४ केप्यूचुस्तंसुमनसःसनाथाहिवयंत्वया ॥
विनात्वांनैवशोभामोविनाचंद्रंनभोयथा ॥ १५ ॥ विनास्वपितरौबालानसुखंयांतिसर्वथा ॥ तथाविनावयंत्वांहिलभामःशर्मनकचित् १६ ॥ ॥ मुनि
रुवाच ॥ ॥ श्रुत्वेत्थंदेववचनंजहर्षचशतक्रतुः ॥ उवाचचप्रसन्नात्मातथ्यंवाक्यंसुरान्प्रति १७ ॥ इंद्रउवाच ॥ ॥ मयाकृतंकर्मसुदुष्करंयद्देवर्षिवाक्येनावि
मोहितेन ॥ लब्धंफलंदुःसहमद्यसर्वैरुद्धारितोहंदुरितप्रकोपात् ॥ १८ ॥ नमामिसर्वानमरप्रबर्हान्नृषींश्चसर्वान्सुगुरुप्रभावान् ॥ उद्धर्तुमात्मानमतोखिला
मांसंत्रातुमर्हाःशरणंप्रपन्नम् १९ कथंप्रयत्नोरचितोभवद्भिःप्रसादनायास्यहिगौतमस्य ॥ कथंनुमंत्रंपरमंमदर्थेसउक्तवांस्तत्कथयंतुसर्वे ॥ २० ॥ ॥ देवा
ऊचुः ॥ ॥ मुनिंपुरस्कृत्यगुरुंवयंचगतामुनिंतंप्रणिपत्यसम्यक् ॥ प्रसादितोवागमृतैर्विचित्रैःसयाच्यमानोप्यवदत्स्वमंत्रम् २१ यस्योपदेशेनसहस्रने
त्रोजातोभवान्सर्वसुखायदेव ॥ प्रयाहिदेवत्वमरावतींस्वांप्रशाधिसर्वान्विबुधांश्चलोकान् २२ इंद्रउवाच ॥ ॥ नाहंप्रयास्येस्वपुरींप्रसादंविनागणे
शस्यसुरर्षिवर्याः ॥ व्रजंतुयूयंकृतसाधुकृत्याधामानिदिव्यानिमुदारमंतः २३ एतावतालंप्रकटीकृतोहंलज्जाविलीनोबहुदुर्गतिश्च ॥ प्रसादितोयन्मुनि
रुग्रतेजाभवत्प्रसादाद्बहुनेत्रतामे २४ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेत्रयस्त्रिंशतितमोऽध्यायः ३३ ॥ ॥ नारदउवाच ॥ ॥ कदंबनृक्षस्यत

१ कृतकार्य सारा इतिपाठान्तरम् ।

लेनिधायनासाग्रदृष्टिंपरमासनेसः ॥ मनोनिरुंध्याथजजापमंत्रंषडक्षरंजंभरिपुर्नरेंद्र १ सहस्रवर्षाणिगतानितस्यमरुत्पतेर्मारुतभक्षणस्य ॥ वल्मी
कगुल्मानिशरीरदेशेजातानिवैभूधरवत्स्थिरस्य २ ततःप्रसन्नोभगवान्गणेशोयःसर्वगःसर्वविदुग्रतेजाः ॥ स्वतेजसावह्निशशीनतेजांस्याच्छादयन्
सर्वविलोचनानि ३ चतुर्भुजोरत्नकिरीटमालीचारुांगदःकुंडलमंडितगंडः ॥ मुक्तामयंदामचनूपुरेचबिभ्रन्महार्घ्यंकटिसूत्रमुच्चैः ४ यःपुष्कराक्षःपृथु
पुष्करोपिबृहत्करःपुष्करशालिमालः ॥ आविर्बभूवाखिलदेवमूर्तिःसिंदूरशालीपुरतोमघोनः ५ तंदृष्ट्वाभयभीतोभूत्किमिदंकिमिवागतम् ॥ कथंचजी
वितंमेस्यादस्थिप्राणमयस्यच ६ विघ्नोयंकिंमहानद्यनजानेकेननिर्मितः ॥ स्वेदस्राविशरीरंमेकंपतेबोधिपत्रवत् ७ इत्थंविक्लवितंतस्यबुबुधेखिल
दृग्विभुः ॥ विनायकोमहेंद्रंतमुवाचमंजुलंवचः ८ ॥ ॥ विनायकउवाच ॥ ॥ माभयंकुरुदेवेशमांनवेत्सिकथंसुर ॥ यन्निर्गुणंनिर्विकारंचिदानंदंसनातन
म् ९ कारणातीतमव्यक्तंजगत्कारणकारणम् ॥ यंध्यायसिसदादेवमंत्रेणानेननिश्चलः १० श्रांतोसिबहुकालंत्वमितिप्रत्यक्षतांगतः ॥ तपसानेनतुष्टो
हंवरंदातुमिहागतः ११ ब्रह्मांडानामनंतानामुत्पत्तिप्रलयावनम् ॥ मत्तएवेतिविद्धित्वंवृणुयद्वांछसेनघ १२ नारदउवाच ॥ ॥ श्रुत्वातस्यवचोरम्यंबुबुधेब
लभेदनः ॥ भगवंतंमहाकायंदेवदेवंविनायकम् १३ ननामपरयाभक्त्याततउत्थायसत्वरः ॥ अवीवदच्छचीकांतःप्रत्यक्षंब्रह्मरूपिणम् १४ ॥ ॥ इंद्रउवाच ॥
ब्रह्मादयोपिनोदेवाविदुस्त्वांसदिगीश्वराः ॥ गुणांस्तवमहाबाहोसृष्टिस्थित्यंतकारिणः १५ पदंतुकृत्रिमंमह्यंशतयज्ञसमुद्भवम् ॥ दत्तंतत्राप्यंतरायाभवंति
बहुधामम १६ मयाकथंतुविज्ञेयोमहिमातेगजानन ॥ यस्यतेनुग्रहःपूर्णोभविष्यतिमहेश्वर १७ सएवमहिमानंतेजानीयाद्विघ्नकारण ॥ तस्यतेगुण
रूपाणिवक्तुंशक्तिर्भविष्यति १८ निराधारोखिलाधारोनित्यज्ञानोऽजरोमरः ॥ नित्यानंदेनसंपूर्णोमायावीक्षरएवच १९ अक्षरःपरमात्माचविश्वरूपो
खिलेश्वरः ॥ उग्रैस्तपोभिस्त्वांज्ञात्वानिवृत्ताःसनकादयः २० षडक्षरप्रभावेनदृष्टोसिपरमेश्वर ॥ पुरायंब्रह्मणादिष्टोमंत्रोमेनुग्रहेणवै २१ उक्तवांश्चैव
मांब्रह्मायदामुंविस्मरिष्यसि ॥ तदैवभ्रश्यसेस्थानाद्दुर्दशांचैवयास्यसि २२ ततोमयातिलुब्धेनदुर्भाग्यवशगेनतु ॥ धर्षितामुनिपत्नीसाततोदुर्गतिमाप्त
वान् २३ पुनश्चधिषणोक्तेनतेनमंत्रेणदृष्टवान् ॥ स्वरूपंतवदेवेशसहस्रनयनोधुना २४ अन्यमेकंवरंयाचेयतस्त्वंचिंतितार्थदः ॥ इदंकदंबनगरंचिंता
मणिपुरंत्विति २५ अनुष्ठानफलंप्राप्तंयत्तेदृढपदांबुजम् ॥ इदानींतुवरंयाचेयंतंमेदेहिविघ्नप २६ तवविस्मरणंदेवनभवेन्मेतथाकुरु ॥ मनोमेरमतांनि
त्यंतवपादांबुजेविभो २७ अद्यप्रभृतिलोकेस्मिन्ख्यातिंयातुगजानन ॥ चिंतामणीतितीर्थंतुसरश्चप्रथतामिदम् २८ अस्मिन्स्नानेनदानेनधर्मकामा
र्थमुक्तयः ॥ जनानांसिद्धयःसंतुप्रसादात्तेजगद्गुरो २९ ॥ मुनिरुवाच ॥ ॥ आकर्ण्यवचनंशाक्रंमेघगंभीरनिस्वनः ॥ उवाचश्लक्ष्णयावाचाविघ्नेशो
जगतांपतिः ३० ॥ विनायकउवाच ॥ ॥ इदंसंपरस्यतेसर्वंयत्त्वयाप्रार्थितंविभो ॥ अन्यएकोवरस्तेस्तुस्वपदेत्वंस्थिरोभव ३१ अविस्मृतिश्चसततंम

मतेस्तुसुरेश्वर ॥ यदाचसंकटंतेस्यात्तदामांस्मरवासव ३२ आविर्भावेनतेकार्यंसर्वंसंपादयेनिशम् ॥ इदंचिंतामणिपुरंख्यातंभुविभविष्यति ३३ कदं
बपुरमित्येतत्तीर्थंचिंतामणीतिच ॥ अत्रस्नानेनसर्वेषांसिद्धयोपिकरेस्थिताः ३४ चिंतितंचप्रदास्यामिचिंतामणिविनायकः ॥ ॥ नारदउवाच ॥ ॥ एवंवं
रंततोलब्ध्वास्वःसिंधुमानयद्धरिः ३५ कृत्वाभिषेकंतद्द्वारापूजयामासतंविभुम् ॥ गजाननंमहाभागंपरिवारसमन्वितम् ३६ पूजितःसुरनाथेनतत्रैवांतर्दधेवि
भुः ॥ स्थापयामासशक्रोपिस्फाटिकांमूर्त्तिमादरात् ३७ वैनायकींशुभांदिव्यांसर्वावयवसुंदराम् ॥ कारयामासविपुलंप्रासादंरत्नकांचनैः ३८ न
त्वाप्रदक्षिणीकृत्यशक्रःस्वंपदमभ्यगात् ॥ तदेतद्भुविविख्यातंचिंतामणिसरोमहत् ३९ अद्यापिसाशुभजलागंगाशक्रस्यशासनात् ॥ कृत्वाभिषेकंत
न्मूर्त्तौयातिस्वंधामसर्वदा ४० एवंतेक्षेत्रमाहिमाकथितोद्भुतदर्शनः ॥ सर्वदोषहरःश्रीमान्सर्वकामप्रदःशुभः ४१ तत्रगत्वामहीपालस्नानंकुरुयथावि
धि ॥ सर्वदोषविनिर्मुक्तोभविष्यसिनसंशयः ४२ ॥ ब्रह्मोवाच ॥ ततोययौमुनिःशीघ्रमनुपृच्छ्यचतंनृपम् ॥ आशीर्भिरभिनंद्यैवसरुक्मागदमादरा
त् ४३ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेचिंतामणितीर्थवर्णनंनामचतुस्त्रिंशोध्यायः ॥ ३४ ॥ व्यासउवाच ॥ देवर्षौतुगतेतस्मिन्नृपःकिमकरोत्तदा ॥ रुक्मांग
दोमेकथयकथामेतांमनोरमाम् १ ॥ ब्रह्मोवाच ॥ कृत्वोपदेशंसुमहांतमेवंगतेमुनौनारदनाम्निपुत्र ॥ रुक्मांगदोहर्षयुतोददर्शसेनांस्वकीयांचतुरंगिणींताम् २
तयापिदृष्टोनृपतिर्विरूपोयःस्वर्णकांतीरतिभर्तृरूपः ॥ आसीत्पुरेत्थंकथमेषजातःसंशय्यपप्रच्छनृपंनिमित्तम् ३ ॥ ॥ सेनान्यऊचुः ॥ ॥ गिरीन्वना
निसरितोभ्रांत्वाचवयमागताः ॥ क्षुत्तृट्परीताराजेंद्रत्वद्दर्शनसमुत्सुकाः ४ पदेपदेप्रपश्यंतःसंप्राप्तास्तेपदांबुजम् ॥ इमामवस्थांदृष्ट्वातेदुःखाद्दुःखतरंगताः
५ किंनिमित्तमभूत्तन्नःकथयस्वनृपोत्तम ॥ ॥ नृपउवाच ॥ ॥ अहमग्रेसमायातस्तृषितःक्षुधितश्चह ६ अपश्यंपुरतःशीघ्रंवाचक्नविग्रहाश्रमम् ॥
तत्रगत्वामयादृष्टातस्यपत्नीशुभानना ७ नाम्नामुकुंदेतिशुभायाचितासाजलंमया ॥ सातुदुष्टास्वैरिणीचमामुवाचाशुभंवचः ८ रतिंकुरुमयासार्द्धंनोचे
च्छापंददामिते ॥ निराकृतामयासातुबलाच्छुद्धेनचेतसा ९ तद्भर्तरिगतेस्नातुंसामांदुष्टाशपद्रुषा ॥ ततस्तुवृक्षमूलेहमुपविष्टोहिदुःखितः १० प्र
भावात्पूर्वपुण्यस्यदृष्टवान्नारदंमुनिम् ॥ तेनमेकथितोरिष्टनाशकोविधिरुत्तमः ११ चिंतामणिक्षेत्रगतोगणेशतीर्थसंश्रितः ॥ माहिमाकथितस्तेनतस्य
तीर्थस्यविस्तरात् १२ तत्रस्नानंसमाख्यातंमुनिनादिव्यचक्षुषा ॥ अतःस्नातुंगमिष्यामिस्वदोषस्यापनुत्तये १३ यांतुसर्वेमयासार्द्धंतत्रस्नातुंयदीच्छत ॥
स्नात्वादत्वायथाशक्तिसंपूज्यचविनायकम् १४ पूतास्तयोःप्रभावेणयास्यामःस्वपुरंततः ॥ ॥ कउवाच ॥ ॥ इतितेनिश्चयंबुद्ध्वाजग्मूराज
पुरःसराः ॥ दृष्ट्वातीर्थंगणेशाख्यंदिव्यदेहोबभौनृपः १५ तप्तकांचनवर्णाभोयथापूर्वंमुनीश्वर ॥ ततोरुक्मांगदोमेनेनारदोक्तमृतंवचः १६ तत्रस्ना

१ तीर्थदेव प्रसादेन पूतायामःस्वकंपुरम् । २ तयोःतीर्थदेवयोः ।

त्वाददौदानान्यनेकानिनृपस्तदा ॥ रुक्मांगदोब्राह्मणेभ्योमुदापरमयायुतः १७ विनायकंपूजयित्वातेजोराशिंददर्शसः ॥ विमानमर्कप्रतिमंब्राह्मणाःसेवका
श्चते १८ विनायकगणैर्जुष्टमप्सरःकिन्नरैर्युतम् ॥ नत्वातान्नृपस्तान्पप्रच्छकेयूयंकुतआगताः १९ दूताःकस्यकिमत्रास्तिकार्यंतद्ब्रूतसादरम् ॥ ॥ ब्र
ह्मोवाच ॥ ॥ श्रुत्वानृपतिवाक्यानिमंजुलानिविमानगाः २० दूताविनायकस्योचुर्धन्योसिनृपसत्तम ॥ येनतेसर्वभावेनध्यातश्चिंतामणिःप्रभुः २१
तीर्थयात्राकृतासम्यक्दानंदत्त्वायथाविधि ॥ चिंतामणिःपूजितश्चकृतकृत्योसिसांप्रतम् २२ चिंतितस्यप्रदानाद्धिचिंतामणिरयंस्मृतः ॥ वयंचकृतकृत्याःस्मो
दर्शनात्तवसुव्रत २३ महिमानंनजानीमस्तवमर्त्यनृपोत्तम ॥ कायेनवचसाबुद्ध्याजीवस्याप्यर्पणेनच २४ आराधितस्त्वयादेवःसर्वब्रह्मांडनायकः ॥ वि
नायकस्तस्यदूतास्तेनचप्रेषितानृप २५ उत्सुकःसउवाचास्मान्मद्भक्तंशीघ्रयायिनः ॥ रुक्मांगदंविमानेनआनयंतुममांतिकम् २६ इतिश्रुत्वावयंयाता
आरोहस्वनभोगमम् ॥ याहिशीघ्रंनरदेवंसहास्माभिर्विनायकम् २७ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतिश्रुत्वावचस्तेषांआहरुक्मांगदोनृपः ॥ क्वाहंमंदमतिर्दूताः
क्वचाखंडितविग्रहः २८ अप्रमेयोप्रतर्क्यश्चचिन्मात्रोविभुरव्ययः ॥ सर्गस्थित्यप्ययानांयःकारणंकारणातिगः २९ तस्यादरोमयिकथंनजानेतीर्थजंफल
म् ॥ जन्मांतरगतंकिंमेफलितंपुण्यमुत्तमम् ३० तेनवोदर्शनंजातमग्रेतिफलदंशुभम् ॥ यूयंधन्यतरायेषांप्रत्यक्षोहर्निशंविभुः ३१ इत्युक्त्वापूजयामास
नत्वाचरणपंकजम् ॥ प्रार्थयामाससर्वांस्तान्पितामहनृपोत्तमः ॥ ब्रह्मण्यःसत्यवादीचभीमोभीमपराक्रमः ३२ विनातंकथमायामिमातरंचारुहासि
नीम् ॥ तयाप्याराधितोदेवोदेवदेवोविनायकः ३३ जन्मावधिनचान्यंसामनुतेदेवतांतरम् ३४ ॥ ॥ दूतउवाच ॥ ॥ एवंचेत्तर्हितीर्थेस्मिन्कुरुस्नानंतयोर
पि ॥ श्रेयस्तस्मैचतस्यैचपित्रेमात्रेप्रदीयताम् ३५ ततस्तावपिनेष्यामोविमानवरमास्थितौ ३६ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतितद्वचनंश्रुत्वाकृत्वाप्रतिकृतिं
कुशैः ॥ कुशोसिकुशपुत्रोसिब्रह्मणानिर्मितःपुरा ३७ त्वयिस्नातेतुसंस्नातोयस्येदंग्रंथिबंधनम् ॥ एवंमंत्रंसमुच्चार्यसर्वेषामानुपूर्वशः ३८ ग्राम्याणांसर्वलो
कानांचक्रेस्नानविधिंनृपः ॥ चिंतामणिक्षेत्रगतेतीर्थेगाणेशसंज्ञके ३९ ततोरुक्मांगदोराजासवलोदूतवाक्यतः ॥ विमानवरमारुह्यकौंडिन्यंपुरमाययौ ॥
४० वाद्यघोषैर्ब्रह्मघोषैर्गंधर्वाप्सरसांरवैः ॥ नादितंगगनंतेनविमानेनदिशोदश ४१ मातापितृभ्यांप्रददौश्रेयोरुक्मांगदोनृपः ॥ सर्वेषामेवलोकानां
स्नानश्रेयोविनायके ४२ दत्तमात्रेतुकौशेयस्नानजश्रेयसिध्रुवम् ॥ विनायकाज्ञयान्यानिविमानानिसमाययुः ४३ प्रत्येकंतेसमारूढाएकैकंगगनेचरम् ॥
एवंरुक्मांगदोभीमस्तन्माताचारुहासिनी ४४ सर्वेलोकाययुस्तत्रयत्रदेवोविनायकः ॥ एवंतन्नगरंसर्वमाबालश्वपचावधि ४५ पुण्यात्प्रणेशतीर्थस्यस्ना
नजात्स्वर्गतिंगतम् ॥ ॥ कउवाच ॥ ॥ इतितेकथितंसर्वंयत्पृष्टंत्वयामुने ४६ चिंतामणिक्षेत्रगतंमाहात्म्यंतीर्थसंभवम् ॥ यःशृणोतिनरोभ
क्त्यासोपितद्गतिमाप्नुयात् ४७ इतिश्रीगणेशपुराणेउपासनाखंडेकादंबपुरगतवर्णनंनामपंचत्रिंशोऽध्यायः ३५ ॥ ॥ व्यासउवाच ॥ ॥ श्रुतंगणेशती

र्थस्यमहात्म्यंकमलासन ॥ रुक्मांगदस्यचरितंकौंडिन्यपुरवासिनाम् १ तथापिब्रूहिमेब्रह्मन्मुकुंदाचरितंशुभम् ॥ ॥ ब्रह्मोवाच ॥ ॥ गतेरुक्मांगदेसा
तुजज्वालमदनाग्निना २ दावाग्निनायथाग्रीष्मेमहावनस्थलीसुत ॥ मुकुंदानालभच्छर्मवनेशीतलमारुते ३ लतापुष्पमयेस्थानेचंद्रचंदनतोपिच ॥ तस्या
नरोचतेहास्यंगीतंनृत्यंकथांतरम् ४ अन्नंजलंविह्वलायास्तच्चित्तायामुनीश्वर ॥ क्षुत्तृट्श्रमेणतस्यास्तुक्षणंनिद्रासमाययौ ५ तामिंद्रोबुबुधेकांतांप्र
सुप्तांविजनेवने ॥ कामातुरांविह्वलांचरुक्मांगदकृतेसुत ६ धृत्वारौक्मांगदंरूपंबुभुजेकामुकांतुताम् ॥ आलिलिंगमुदाशक्रोमुकुंदाजहर्षभृशम् ७
सापिरुक्मांगदंतंतुचुचुंबेसुभृशंसुत ॥ सोपितस्याःकुचौपीनौममर्ददृढमुष्टिना ८ व्यंशुकांव्यंशुकोरेमेनिःशंकंसतयासह ॥ ततःसालज्जमानेवस्व
गृहंप्रत्यपद्यत ९ इंद्रोरुक्मांगदोभूतस्तत्रैवांतर्दधेसुत ॥ मेनेरुक्मांगदात्सुक्रततोगर्भंदधौतुसा १० सुषुवेनवमेमासिसुवेलायांसुतंशुभम् ॥ चा
रुसर्वांनवद्यांगंरूपेणमदनातिगम् ११ तस्यशब्देनमहताधरण्यांपतितस्यतु ॥ सनादंदशदिग्वृंदमभूत्स्वंभूरसातलम् १२ पक्षिणोबभ्रमुःसर्वेउड्डीयो
ड्डीयसर्वतः ॥ वाचक्नविःसमायातस्त्यक्त्वास्वंनित्यकर्मच १३ मुकुंदाचरितंतेननैवबुद्धंकदाचन ॥ जातकर्मादिकंसर्वंचकारभृशहर्षितः १४ ददौ
दानंयथाशक्तिब्राह्मणेभ्योयथार्हतः ॥ दशाहेतुव्यतीतेसनामकर्माकरोन्मुनिः १५ गृत्समदेत्यनुज्ञातोज्योतिःशास्त्रपरैर्द्विजैः ॥ ततस्तुपंचमेब्देस्यव्रतबं
धंचकारह १६ वेदव्रतानिचत्वारिचकारबटुकस्यसः ॥ सर्वान्निगदमात्रेणगृण्हातिब्रह्मतेजसा १७ वेदशास्त्रनिधिर्जातःस्वकर्मकुशलोपिच ॥
कदाचित्सुमुहूर्तेतुपितावाचक्नविःसुतम् १८ गणानांत्वेतिऋङ्मंत्रंमहांतमुपदिष्टवान् ॥ उवाचचमहामंत्रोवैदिकोखिलसिद्धिदः १९ आगमो
क्तेषुमंत्रेषुसर्वेषुश्रेष्ठएवच ॥ ध्यात्वागजाननंदेवंजपैनंस्थिरमानसः २० परांसिद्धिंसमाप्यैवत्वंत्रिलोकेगमिष्यसि ॥ ततोगृत्समदोविप्रोमंत्रंप्रा
प्यपितुर्मुखात् २१ अनुष्ठानरतोभूत्वाजपध्यानपरोभवत् ॥ एवंबहुतिथेकालेगतेतुमुनिपुंगवे ॥ तस्मिन्मगधदेशेयोराजामगधसंज्ञितः २२ चारु
रूपोमहामानीदानशूरोरिमर्दनः ॥ नानालंकारशोभाढ्योमहार्हासनसंश्रितः २३ सुधर्मासनगोधीरःपुरुहूतइवापरः ॥ चतुरंगबलोपेतोज्ञानीपंडितमा
नदः २४ आमात्यैर्वृद्धैर्ज्ञाननिधीवाचस्पत्यधिकैर्गुणैः ॥ अंबिकानामभार्यास्यचारुरूपागुणाधिका २५ पतिव्रतामहाभागाशापानुग्रहणेक्षमा ॥ त
स्यराज्ञःपितुःश्राद्धेसमाजग्मुर्महर्षयः २६ राज्ञाहूतावसिष्ठात्रिप्रमुखाश्रुतिपारगाः ॥ आकारितोगृत्समदस्तपस्वीशुचिमानसः २७ ततःशास्त्रप्रसं
गेनप्रौढिंगृत्समदोवदत् ॥ तमत्रिर्वाग्विशेषेणमन्त्रशिष्यमुनिसंनिधौ २८ तपस्वीतिभवान्मान्योनतुमुनिस्त्वंयतस्तव ॥ जन्मरुक्मांगदाज्जातंराजपु
त्राद्विचारय २९ नास्मत्समक्षंपूजार्हइतोगच्छस्वमाश्रमम् ॥ इत्यत्रिवचनंश्रुत्वाक्रोधदीप्तइवज्वलन् ३० दहन्निवत्रिलोकींसभक्षयन्निवतान्मुनीन् ॥

१ विचारयमहामते इ० पाठान्तरंसम्यक् ।

अपरेत्वपलायंतसिंहंदृष्ट्वायथामृगाः ३१ उवाचतत्रसदासिवसिष्ठादीन्मुनीन्प्रति ॥ ॥ गृत्समदउवाच ॥ ॥ यर्हिरुक्मांगदस्याहंनभवेयंमुनीश्व
राः ॥ तदाशापाग्निनायुष्मान्कुर्यांभस्मावशेषितान् ३२ ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्युक्त्वातान्मुनीन्सर्वान्प्रययौमातरंप्रति ॥ पप्रच्छतांगृत्समदोवद
दुष्टेतिकामुके ३३ मुकुंदेवदमेतातंनोचेद्भस्मभविष्यसि ॥ आकर्ण्यैवंवचस्तस्यचकंपेभृशविह्वला ३४ मुकुंदामारुतेनेवकदलीकुड्मलान्वि
ता ॥ उवाचदीनयावाचाबद्धांजलिपुटासती ३५ ॥ ॥ मुकुंदोवाच ॥ ॥ मृगयासक्तचित्तोमूद्भ्रष्टसार्थोनृपोत्तमः ॥ त्रैलोक्यसुभगोदृष्टोमयारु
क्मांगदःशुभः ३६ अनुष्ठानरतेवाचकवोमेभर्त्तारिप्रिये ॥ अनिवार्याःस्त्रियइतिस्मृत्वावाक्यंविधीरितम् ३७ तस्मिन्नृपेसक्तमनाजातास्मिसपिता
तव ॥ श्रुत्वेत्थंवचनंतस्यामौनवान्सययौमुनिः ३८ लज्जयाधोमुखःशापमभ्यधाज्जननींप्रति ॥ ॥ पुत्रउवाच ॥ ॥ दुष्टेमूढेपापरतेकाननेकंट
कीभव ३९ असंख्येयफलासर्वैःप्राणिभिःपरिवर्जिता ॥ सापिशापंददौतस्मैक्रोधाविष्टासुतायहि ४० जननीत्वमनादृत्ययतःशप्ताखलुत्वया ॥ अ
तःशपामित्वांपुत्रत्वत्तःपुत्रोतिदारुणः ४१ त्रैलोक्यभयदोदैत्योभविष्यतिमहाबलः ॥ एवंशशपतुस्तौतुमातापुत्रौपरस्परम् ४२ ॥ ॥ कउवाच ॥ ॥
सातदैवशरीरंतत्त्यक्त्वाभूद्बदरीवने ॥ वर्जितापक्षिसंघातैर्जारजैरंडजैरपि ४३ ततोंतरिक्षेवागासीदिंद्राद्गृत्समदोह्यभूत् ॥ सतुगृत्समदोबज्रन्ननुष्ठानायज
ग्मिवान् ४४ इदंगृत्समदाख्यानंयःशृणोतिनरोत्तमः ॥ नससंकटमाप्नोतिवांछितंलभतेखिलम् ४५ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेगृत्समदोपा
ख्यानंनामषट्त्रिंशत्तमोध्यायः ॥ ३६ ॥ ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ भ्रमन्मुनिर्ददर्शाग्रेवनंपुष्पकसंज्ञितम् ॥ नानाद्रुमलताकीर्णंपुष्पप्रकरशोभितम्
१ शोभितंनिर्झरजलैर्निर्जरैर्मुनिसत्तमैः ॥ ननामतान्गृत्समदोन्यवसत्तदाज्ञया २ तत्रस्नात्वाजपंचक्रेपादांगुष्ठाग्रधिष्ठितः ॥ स्थिरेणमनसाध्यायन्देवंवि
घ्नेश्वरंविभुम् ॥ ३ ॥ नासाग्रन्यस्तदृष्टिःसन्निरीक्षन्नदिशोदश ॥ जितेंद्रियोजितश्वासोजितात्मामारुताशनः ॥ ४ ॥ दिव्यवर्षसहस्रंसतपस्तेपेसुदा
रुणम् ॥ उन्मील्यनयनंपश्यद्यदागृत्समदोमुनिः ५ तदानेत्रोद्भवोवन्हिस्त्रिदशान्पर्यतापयत् ॥ शशंकिरेतदादेवाःकस्यायंपदआग्भवेत् ६ अपरं
गलितंपत्रंभक्षयन्नेकमेवच ॥ यत्नमास्थायपरमंस्थाणुभूतोतिनिश्चलः ७ दशपंचसहस्राणितेपेनिश्चलमानसः ॥ ततोविनायकोदृष्ट्वातपनंतस्यदु
र्घटम् ८ अनुग्रहायतस्याथप्रादुरासीत्सुदीप्तिमान् ॥ यथाधेनुर्वत्सरवंश्रुत्वाधावतिसत्वरम् ९ तथाविनायकोदेवःशीघ्रंगृत्समदंययौ ॥ भासयंस्ते
जसाविश्वंसहस्ररविसन्निभः ॥ १० ॥ चलत्कर्णतालोबृहद्दंतिलीलोमुदाचारुखेलोलसच्चंद्रभालः ॥ बृहत्पद्ममालोजगत्कार्यमूलःकरेकंजनालोनम
स्तेविमेलः ११ सिंहारूढोदशभुजोव्यालयज्ञोपवीतवान् ॥ कुंकुमागरुकस्तूरीचारुचंदनचर्चितः १२ सिद्धिबुद्धियुतःश्रीमान्कोटिसूर्याधिकद्युतिः ॥

१ तत इतिपद्यं नैकास्मिन्पुस्तकेलिखिते ।

अनिर्वाच्यस्वरूपोपिलीलयासीत्पुरोमुनेः १३ तत्तेजसात्दृतंतेजोमुनेस्तस्यमहात्मनः ॥ ब्रध्नस्यतेजसायद्वन्नाक्षत्रंचांद्रजंमहः १४ निमीलयनयने
सोथचकंपेभृशविह्वलः ॥ पपातमूर्छितोभूमौविस्मृतध्यानमंगलः १५ पुनश्चमनसाध्यायन्गजाननमनामयम् ॥ मनसातर्कयन्विघ्ननिमित्तंव्याकुलोमुनिः ॥
१६ किमेतत्क्षोभजननंसहसासमुपस्थितम् ॥ अद्यप्रभृतियत्तप्तंतत्कथंमेवृथागतम् १७ पाहिदेवेशसर्वात्मन्विघ्नादस्माद्भयानकात् ॥ त्वामृतेशरणं
यामिकमन्यंजगदीश्वरम् १८ महद्दुःखंसदादेवप्राप्तंकेनचहेतुना ॥ नास्मत्पंक्तौपूजनीयइतियद्दहतेमनः १९ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतितद्वदितं
श्रुत्वाजगादसविनायकः ॥ ॥ गणेशउवाच ॥ ॥ अनुग्रहायसंप्राप्तंविद्धिमांगणनायकम् २० सनकादिभिरप्राप्यंचिरंनियममास्थितैः ॥ त्यक्त्वाभ
यंब्रूहियत्तेवांछितंमुनिसत्तम २१ एकांगुष्ठेनतपसातोषितोहंत्वयानिशम् ॥ ॥ ब्रह्मोवाच ॥ ॥ निशम्येत्थंवचस्तस्यदेवदेवस्यशोभनम् २२ दंडवत्प्र
णनामैनंनिजानंदपरिप्लुतः ॥ उवाचपरमप्रीतोवरदंतंविनायकम् २३ ॥ ॥ गृत्समदउवाच ॥ ॥ अद्यमेसफलंजन्मतपसोनियमस्यच ॥ अखंडानं
दरूपोयोब्रह्मभूयोनिराकृतिः २४ मुंचन्नश्रूणिनेत्राभ्यामानंदेननर्नर्तच ॥ चिदानंदघनोवेदशास्त्राणामप्यगोचरः २५ सद्योदृष्टोमयासाक्षादतः
किंप्रार्थयेविभो ॥ तवाज्ञयातथाप्येकंप्रार्थयेद्विरदानन २६ चतुराशीतिलक्षासुयोनिषुश्रेष्ठतासुच ॥ मनुष्याणांमहाभागवर्णास्तत्रमहत्तराः
२७ तत्रापिब्राह्मणाःश्रेष्ठास्तत्रापिज्ञानिनःपराः ॥ ज्ञानिष्वनुष्ठानपरास्तेषुचब्रह्मवेदिनः २८ ब्रह्मज्ञानंतथाज्ञानंदेहिमेजगदीश्वर ॥ त्वयिभक्तिंच
सुदृढामविस्मरणमेवच २९ तवभक्तेषुसर्वेषुश्रेष्ठतांचगजानन ॥ अन्यंचैकंवरंयाचेतंचमेदेहिशंकर ३० तवभक्त्यैकनिलयंत्रैलोक्याकर्षणक्षमम् ॥
विख्यातंत्रिषुलोकेषुनमस्यंसुरमानुषैः ३१ एवंमांकुरुविघ्नेशयदितुष्टोखिलार्थकृत् ॥ वनंचपुष्पकंनाम्नाख्यातिंयातुसुरेश्वर ३२ अस्मिन्स्थित्वाच
भक्तानांकामान्पूरयनित्यदा ॥ इदंचपुष्पकपुरंचतुर्दिक्षुविशेषतः ३३ गणेशपुरमित्येवंप्रथांयातुगजानन ॥ ॥ ब्रह्मोवाच ॥ ॥ इतितद्वचनंश्रुत्वा
जगादद्विरदाननः ॥ ॥ गणेशउवाच ॥ ॥ साधुसाधुमहाबाहोप्रसन्नेमयिदुर्लभम् ॥ भक्तानांत्रिषुलोकेषुनकिंचिन्मुनिपुंगव ३५ त्वयायत्प्रार्थितंविप्रत
त्तेसर्वंभविष्यति ॥ विप्रत्वंदुर्लभतरंप्रसन्नेनमयार्पितम् ३६ गणानांत्वेतिमंत्रस्यवैदिकस्ययतस्त्वया ॥ जपःकृतोमुनेऽतस्त्वमृषिरस्यभविष्यसि ३७
ब्रह्मादिषुचदेवेषुवसिष्ठादिमुनिष्वपि ॥ ख्यातिंयास्यसिसर्वत्रपरंश्रैष्ठ्यमुपागतः ३८ सर्वेष्वारब्धकार्येषुपूर्वंतेममचापरम् ॥ स्मरणंयेकरिष्यंतितेषांसिद्धि
र्भविष्यति ३९ ऋतेज्ञानाद्दैवतर्षिछंदसांकर्मनिष्फलम् ॥ पुत्रश्चबलवान्सर्वदेवानांसुभयंकरः ४० भविष्यतिमहाख्यातिंत्रिषुलोकेषुयास्यति ॥ अ
जेयःसर्वदेवानांविनारुद्रंभविष्यति ४१ मद्भक्तोमद्गतप्राणोमन्निष्ठोमत्परायणः ॥ इदंवनगरंदेवयुगेपुष्पकसंज्ञितम् ४२ त्रेतायांमणिपूरंचभान
कंद्वापरेपिच ॥ कलौतुभद्रकंनामख्यातंलोकेभविष्यति ४३ अत्रस्नानेनदानेनसर्वान्कामानवाप्नुयात् ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंदत्वावरांस्तस्मैतत्रैवां

तद्देवैर्विभुः ४४ तस्मिन्नंतर्हितेतत्रस्थापयामासवैमुनिः ॥ गणेशमूर्तिंप्रासादंकारयामाससुंदरम् ४५ वरदेतिचतन्नामस्थापयामासशाश्वतम् ॥ सिद्धिस्था
नंचतत्रासीद्गणेशस्यप्रसादतः ४६ कामानपुष्णातिसर्वेषांपुष्पकंक्षेत्रमित्यपि ॥ पूज[illegible]न्वितः ४७ इमांकथांयःशृणुयान्मु
नींद्रश्रीविघ्नराजस्यवरप्रकाशम् ॥ लभेतकामानखिलान्गणेशभक्तिंदृढांस[illegible] ४८ ॥ इ[illegible]पुराणेउपासनाखंडेवरदाख्यानंनामसप्त
त्रिंशत्तमोध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ व्यासउवाच ॥ ॥ ततोगृत्समदस्यासीत्कथंवृत्तिःसुरेश्वर ॥ तन्ममाचक्ष्वयत्नेनश्रद्दधानस्यपद्मज १ ॥ ब्रह्मोवाच ॥
ततःसर्वेमुनिगणामानयामासुरादरात् ॥ ब्रह्मन्मुनिवरश्रेष्ठेनेमुर्गृत्समदंचतम् २ वरदानाद्गणेशस्यवव्रुस्तंयज्ञकर्मणि ॥ सर्वारंभेगणेशस्यपूजनादोचस
स्मरुः ३ एवंविख्यातिमगमत्समुनिर्गणनायके ॥ भक्तिपरांमिवांचक्रेजपन्मंत्रंमुनिश्चलः ४ कदाचित्समुनिर्व्यासचुक्षुवेबलमुत्तरम् ॥ दिशोन
भश्चपृथिवींनादयन्गिरिगह्वरान् ५ अपश्यत्पुरतोयावत्तावद्बालंभयंकरम् ॥ रक्तवर्णंमहानादंजपाकुसुमसन्निभम् ६ तेजोराशिंचमुष्णंतंनेत्रालोकपथंमु
हुः ॥ दृष्ट्वासतादृशंबालंचकंपेभयविह्वलः ७ तर्कयामासमनसाविघ्नःकोयमिहागतः ॥ नजानेगणनाथेनदत्तःपुत्रोममाद्भुतः ८ पश्यतिस्मपुनःसो
मुखंचारुवक्त्रंसुलोचनम् ॥ चारुरुक्मांगदंचारुमुकुटंचारुनूपुरम् ९ चारुणाकटिसूत्रेणराजत्कटितटंसुतम् ॥ प्रपच्छतंमुनिःकोसिकस्यासिकिंचिकीर्षसि १०
क्वचतेपितरौस्थानंवदतेजोनिधेर्भक ॥ ॥ ॥ कउवाच ॥ ॥ श्रुत्वेत्थंवचनंतस्यजगादबालकोमुनिम् ११ ॥ ॥ बालकउवाच ॥ ॥
भूतभाविभवज्ज्ञानीकिंमांत्वंपरिपृच्छसि ॥ तथाप्याज्ञावशोवच्मिक्षुतात्तवजानिर्मम १२ त्वमेवजनकोमाताकृपांकुरुममोपरि ॥ पालयस्वपितर्मा
त्वंदिनानिकतिचिन्मुने १३ त्रैलोक्याक्रमणेशक्तोदेवेंद्रवशवर्तिनम् ॥ करिष्यामिनसंदेहोवीक्ष्यसेपौरुषंमम १४ ॥ ब्रह्मोवाच ॥ ॥ इत्याकर्ण्यव
चस्तस्यभयहर्षसमन्वितः ॥ उवाचश्लक्ष्णयावाचामुनिर्गृत्समदोवचः १५ यदयंजातमात्रोपिशक्तस्त्रैलोक्यकर्षणे ॥ तस्मादस्यप्रदास्यामिस्वंमंत्रं
स्वात्मजस्यहि १६ येनास्यवांछितंदेवःपरितुष्टोविनायकः ॥ प्रदास्यतिजगन्नाथोममकीर्तिर्भविष्यति १७ एवंसंचिंत्यमनसातस्मैस्वंमंत्रमादिशत् ॥
गणानांत्वेतितंचाहकुर्वन्नुष्ठानमादरात् १८ जपस्ववैदिकंमंत्रंचित्तंस्थाप्यगजानने ॥ संतुष्टस्तेयदापुत्रसर्वान्कामान्प्रदास्यति १९ एवंप्राप्तमहामंत्रो
जगामतपसेवनम् ॥ एकांगुष्ठेनावतस्थेनिराहारोजितेंद्रियः २० ध्यायन्गजाननंदेवंमनसानिश्चलेनसः ॥ जपतस्तस्यवर्षाणिसार्धायुतमितानिच ॥
२१ गतानितस्यमुखतोबभूवाग्निर्दिशोज्वलन् ॥ भयंबभूवदेवानांदैत्यानांतलवासिनाम् २२ ततस्तत्तपसातुष्टआविरासीद्गजाननः ॥ दिशोवितिमि
राःकुर्वंश्छादयन्भानुमंडलम् २३ भ्रामयन्पुष्करंचारुसुविषाणंमुदायुतः ॥ तद्बृंहितरवंश्रुत्वाबालकोविह्वलन्निव २४ उन्मील्यनेत्रेसोपश्यद्दे
वंतंपुरतःस्थितम् ॥ चतुर्भुजंमहाकायंनानाभूषाविभूषितम् २५ परशुंकमलंमालांमोदकान्बिभ्रतंकरैः ॥ तेजसाधर्षितस्तस्यवैयर्कुत्वाननामसः २६

बद्धांजलिपुटोभूत्वाप्रार्थयामासतंविभुम् ॥ ॥ बालकउवाच ॥ ॥ किंमांधर्षयसेदेवभक्तंत्वांशरणागतम् २७ भवसौम्यतरोदेवदेहि
मेसिलवांछितम् ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्याकर्ण्यवचस्तस्यसंजहारस्वकंमहः २८ उवाचपरमप्रीतोसावधानोभवार्भक ॥ यंध्यायसिदिवा
रात्रौसोहंतेवरदोधुना २९ ममेदंपरमंरूपंस्वप्रकाशंजगन्मयम् ॥ नविदुर्ब्रह्मरुद्राद्याःकुतोवेत्स्यंतिमानवाः ३० देवाश्चमुनयःसर्वेनचराजर्षयो
परे ॥ नासुराःसिद्धगंधर्वानिनागानचदानवाः ३१ सोहंतवतपोबद्धोवरंदातुमिहागतः ॥ वरयस्ववरान्मत्तोयान्यांस्त्वंमनसेच्छसि ३२ सउवाच
ततोबालोधन्योहंतवदर्शनात् ॥ पिताधन्यतरोमेद्यसार्थकंजन्ममेतपः ३३ स्तुतिंकर्तुंनजानामिबालभावात्सुरेश्वर ॥ यतस्त्वंसर्वजगतांकर्तापाताप
हारकः ३४ त्वद्भासाभासयत्येषरविरग्निश्चचंद्रमाः ॥ चराचरंचेतयसेस्वमाहात्म्यान्महामते ३५ महिमानंमहांतंतेकेशाअपिनवैविदुः ॥ यदिमे
वरदोसित्वंतन्मेदेहिगजानन ३६ त्रैलोक्याकर्षणेशक्तिंविशिष्टांदेहिमेविभो ॥ देवदानवगंधर्वमनुष्योरगराक्षसाः ३७ वश्याममसदासंतुमुनि
किन्नरचारणाः ॥ मनसाचिंतितंयन्मेतत्तत्सिध्यतुसर्वदा ३८ इंद्रादयोलोकपालाःसेवांकुर्वंतुमेसदा ॥ इहभोगाननेकान्मेमुक्तिंचांतेप्रयच्छच ३९ अन्यं
चतेवरंयाचेपुरमेतत्तवाज्ञया ॥ प्रथांयातुयतश्चात्रतप्तमुग्रंतपोमया ४० गणेशपुरमितिचख्यातिंयातुजनेष्टदम् ॥ ॥ गणेशउवाच ॥ ॥ त्रया
णामपिलोकानामाक्रमंत्वंकरिष्यसि ४१ सर्वेभ्योनभयंतेस्तिसर्वेवश्याश्चतेसदा ॥ आयसंकांचनंरौप्यंमयादत्तंपुरत्रयम् ४२ अभेद्यंसर्वदेवानांकाम
गंशंकरंविना ॥ त्रिपुरेतिचतेनामख्यातिंलोकेगमिष्यति ४३ यदैकेनचबाणेनशिवोभेत्स्यतितेपुरम् ॥ तदैवयास्यसेमुक्तिंनात्रकार्याविचारणा ४४
अन्यत्तेवांछितंसर्वंमत्प्रसादाद्भविष्यति ॥ ॥ ब्रह्मोवाच ॥ ॥ दत्त्वेत्थंसवरान्देवस्तत्रैवांतर्दधेविभुः ॥ विषादमगमद्देववियोगात्त्रिपुरासुरः ॥
४५ हर्षंचविपुलंलेभेवरान्प्राप्ययथेप्सितान् ॥ त्रैलोक्यविजयंकर्तुंयततेस्मततोबलात् ४६ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेवरप्रदानं
नामाष्टात्रिंशत्तमोध्यायः ॥ ३८ ॥ ॥ व्यासउवाच ॥ ॥ ततःकिमकरोद्ब्रह्मन्त्रिपुरोवरदर्पितः ॥ तत्सर्वंकौतुकंमह्यंवक्तुमर्हस्यशेषतः १ ॥ ॥ ब्र
ह्मोवाच ॥ ॥ ततःकाश्मीरपाषाणभवांमूर्तिंगजाननीम् ॥ स्थापयामासविधिवद्ब्राह्मणैर्मंत्रकोविदैः २ महांतंकांचनंदिव्यंमणिमुक्ताविभूषितम् ॥
गणेशपुरमध्येसप्रासादंकृतवान्शुभम् ३ उपचारैःषोडशभिःपूजयामासतंविभुम् ॥ नमस्कारैरसंख्यातैःस्तुतिभिःप्रार्थनैरपि ४ क्षमाप्यदेवदेवेश
मनुज्ञाप्यययौबहिः ॥ ददौदानान्यनेकानिब्राह्मणेभ्योयथार्हतः ५ ततस्तदभवत्स्थानंबंगालेत्रिपुरस्यह ॥ गणेशपुरमित्येवंसर्वेषांसर्वसिद्धिदम् ६ ततःसत्रि
पुरोदैत्योगजाननवरोद्धतः ॥ नृलोकान्पालयामासदेवानामाक्रमेरतः ७ पदातयस्तुरंगाश्चगजाश्चरथिनस्तथा ॥ दशदिग्भ्योययुस्तंतुसेवार्थंबलवत्तराः ८
राजानःसेवकाजाताआनुकूल्येनतस्यह ॥ प्रतिकूलागतामृत्युंयुद्धंकर्तुंमनीश्वराः ९ एवमाक्रम्यभूखंडंततोगादमरावतीम् ॥ ततइंद्रोदेवगणैर्नानाशस्त्रकरैर्वृ

तः १० ऐरावतसमारूढोययौयुद्धायदंशितः ॥ सोपिसेनांत्रिधाचक्रेचतुरंगांमहाबलः ११ भीमकायंमहादैत्यंवज्रदंष्ट्रंचदानवम् ॥ धनुर्युद्धेगदायुद्धेशस्त्रयुद्धे चकोविदम् १२ अस्त्रयुद्धेमल्लयुद्धेनिष्णातंदैत्यपुंगवम् ॥ भीमकायमथोचत्सनूलोकस्याधिपोभव १३ कालकूटंवज्रदंष्ट्रंजगादत्रिपुरोबली ॥ त्रिभागयान यायाहिसेनयात्वंरसातलम् १४ शेषमुख्यान्सर्वनागान्वशान्कुरुममाज्ञया ॥ अहंत्रिभागयाशक्रमाक्रमिष्येखिलान्सुरान् १५ भीमकायोवज्रदंष्ट्रोयथाज्ञ साँप्रतस्थतुः ॥ चतुरंगबलैर्युक्तःस्वयंनंदनमाययौ १६ दिव्यान्वृक्षान्बभंजुस्तेवार्यमाणास्तुसैनिकाः ॥ तत्रस्थित्वादैत्यराजोदूतान्शक्रायप्राहिणोत् १७ अत्रानयंतुतंशक्रंदर्शनायत्वरान्विताः ॥ वदंतुममवाक्यंवामृत्युलोकंव्रजाधुना १८ तत्रत्वांपालयिष्यामिसाम्राज्येह्यमरावतीम् ॥ यदियुद्धेचतेबुद्धिस्तदाशी घ्रंप्रयाहिमाम् १९ तेगत्वाशक्रमाचख्युस्त्रिपुरासुरचेष्टितम् ॥ श्रुत्वेत्थंवचनंतेषांवज्राहतइवाचलः २० चकंपेचाचलरिपुर्वायुनेवयथातरुः ॥ चिंतयाव्याकु लीभूतःकिमेतदितिचिंतयन् २१ क्रोधानलेनजज्वालसंरक्ताखिललोचनः ॥ कुर्वन्भस्मेवलोकानांशोषयन्निववारिधीन् २२ उवाचदूतान्गच्छंतुयांतुयुद्धा यसत्वराः ॥ स्वयमैरावतारूढोजगर्जसुरशत्रुहा २३ तेननादेनमहताक्षोभयन्भुवनत्रयम् ॥ श्रुत्वातद्वचनंतेतुगतादूतायथागतम् २४ विबुधाश्चापिसन्नद्धा नानाशस्त्रासिपाणयः ॥ भिंडिपालकराःकेचित्केचिच्छक्त्यृष्टिपाणयः २५ मुद्गरासिधराःकेचिद्धनुर्बाणकराःपरे ॥ गदाखेटकराःकेचित्केचित्तुदंडपाणयः २६ एवंदेवगणैर्युक्तोवज्रभृन्निर्ययौबहिः ॥ कृतस्वस्त्ययनोविप्रैर्नानावादित्रनिस्वनैः २७ त्रिपुरोदूतवाक्येनज्ञात्वायुद्धोद्यमंतुतम् ॥ सन्नद्धामकरोत्सेनांप्रहृष्टांचतु रंगिणीम् २८ असंख्यातांसमादायहयारूढोभिनिर्ययौ ॥ परस्परंददृशतुस्तेसेनेवीरभूषणे २९ कोलाहलोमहानासीद्बृंहितैर्हेषितैरपि ॥ क्ष्वेडितैरथ घोषैश्चवाद्यघोषैरनेकधा ३० ततोहुंकारमात्रेणनोदितास्त्रिपुरेणते ॥ वीरायुयुधिरेदेवैःससंमर्दोमहानभूत् ३१ नाभूत्स्वपरबोधोपिजघ्नुरेवपरस्प रम् ॥ एवंसुतुमुलेजन्ये मृतास्तेदानवाबहु ३२ सुमनसोपिपतितादैत्यशस्त्रप्रपीडिताः ॥ बभुस्तेसैनिकास्तत्रपुष्पिताइवकिंशुकाः ३३ अ शय्याःशयिताःकेचिदंघ्रिहीनास्तथापरे ॥ क्रमेलकागजाध्यक्षारथाश्वाश्चपदातिनः ३४ ततःपलायनपरादैत्यायातादिशोदश ॥ सिंहंदृष्ट्वेवस हसामृगाजीवनकांक्षिणः ३५ ततोनिवार्यतत्सैन्यंवृंदारकरिपुःस्वयम् ॥ क्रोधानलमहाज्वालोगर्जन्मेघइवापरः ३६ शक्रसान्निध्यमगमत्भक्षयन्नि वरोदसी ॥ स्वखड्गेनाहनत्तीव्रंहस्तंवज्रधरंहरेः ३७ वज्रंपपाततद्धस्तात्तदद्भुतमिवाभवत् ॥ तदादायाहनद्दैत्यस्तेनैवैरावतंगजम् ३८ ऐरा वतःप्रहारेणपलायनपरोययौ ॥ ततोजघानसहरिर्मुष्टिनादैत्यपुंगवम् ३९ सक्षणंपतितोभूमौततउत्थायवेगवान् ॥ जघानमुष्टिनाशक्रंधर ण्यांतमपातयत् ॥ ४० ॥ ततउत्थायमघवादैत्यंप्राहरुषान्वितः ॥ इदानींमल्लयुद्धायसज्जीभवासुरेश्वर ॥ ॥ ४१ ॥ ततःसविस्मयाविष्टउवाचबलगर्वि

१ वीरस्त्वोवेभीमकायंसेतिपाठः ।

तः ॥ किमर्थंत्वंनिजप्राणेनिर्दयोसिसुरेश्वर ४२ कृमिकीटपतंगानांप्राणोतीवप्रियोमतः ॥ गच्छदेवधरण्यांतेस्थानंदत्तंमयाशुभम् ॥ ४३ ॥ ॥ ब्रह्मो
वाच ॥ ॥ इतितद्वचनंश्रुत्वाजगादबलवृत्रहा ॥ यद्यहंजीवितात्त्वांहिमोचयामिनचेद्रिपो ४४ तदाहंधरणींयामित्वदाज्ञावशगोधम ॥ त्वमेवहतमू
र्धाद्यधरणींयास्यसेखल ४५ वदत्येवंतुदेवेंद्रेदैत्येंद्रोनिजघानतम् ॥ मुष्टिनाहृदयेदुष्टस्ततोयुद्धमभूत्तयोः ४६ चाणूरकृष्णयोर्यद्वत्परस्परजयैषिणोः ॥ हृद
यंहृदयेनैवहस्तंहस्तेनजघ्नतुः ४७ जानुभ्यांजानुनीचोरूताभ्यांतौचनिजघ्नतुः ॥ मस्तकंमस्तकेनैवकूर्परंकूर्परेणतु ४८ पृष्ठंपृष्ठेनपादाभ्यांपादौताविभिजघ्नतुः॥
पादौगृहीत्वादैत्योऽस्यभ्रामयित्वामुहुर्मुहुः ४९ तत्याजदूरतःशक्रंयथानज्ञायतेक्वचित् ॥ आरुरोहस्वयंतंतुचतुर्दंतंगजेश्वरम् ५० ततोदेवगणाःसर्वेहिमवद्गिरि
गह्वरम् ॥ ययुःशक्रंविचिन्वंतोदैत्यसंत्रासतापिताः ५१ कुत्रवापतितोदेवोद्रक्ष्यामोवाकथंविभुम् ॥ एवंसंचिंतयंतस्तेभ्रमंतोददृशुश्चतम् ५२ अधोमुखंसमा
यांतंदेवेंद्रंतंतदैवह ॥ प्रणेमुर्देवसंघास्तमालिलिंगुस्तथापरे५३पूजयामासुरपरेवीजयामासकश्चन ॥ पादसंवाहनंचास्यचक्रुःकेचनभक्तितः ५४ तत्रैवन्यवसन्सर्वे
गुप्तरूपाःसुरास्तदा ॥ दैत्यस्त्वैरावतारूढोययौताममरावतीम् ५५ देवस्थानानिदैत्यानामिंद्रासनगतःस्वयम् ॥ ददौविभज्यप्रत्येकंमानपूर्वंसुरद्विषाम् ५६
दिव्यवादित्रनिर्घोषैःशृण्वन्गांधर्वनिस्वनान् ॥ किन्नरैःसेव्यमानस्तुरेमेचाप्सरसांगणैः५७ ॥इतिश्रीगणेशपुराणेउपासनाखंडेइंद्रपराजयोनामैकोनचत्वारिंशो
ध्यायः ॥ ३९ ॥ ब्रह्मोवाच ॥ आक्रम्यदेवधिष्ण्यानिदैत्योगाद्ब्रह्मणःपदम् ॥ पराक्रमंदैत्यकृतंश्रुत्वादेवमुखात्पुरा १ ब्रह्मायपौनाभिपद्मंविष्णुःक्षीरनिधिंय
यौ ॥ दैत्यस्यमानसौपुत्रौप्रचंडश्चंडएवच २ प्रचंडंस्थापयामासब्रह्मलोकेधिनायकम् ॥ ततश्चंडंचवैकुंठेचकारस्वामिनंस्वयम् ३ ततःकैलासमगमत्तंचदोर्भ्या
मचालयत् ॥ भयभीताचगिरिजालिलिंगेशंकरंभृशम् ४ ततःकैलासमगमद्युद्धाकांक्षीमहासुरः ॥ तेनतुष्टोमहादेवोदैत्यस्यपौरुषेणच ५ बहिर्ययौवरंदातुंनिजभ
क्तसुखप्रदः ॥ ददर्शत्रिपुरंदैत्यंवरंवृण्वित्यथाब्रवीत् ६ सवव्रेयदितुष्टोसिदेहिकैलासमद्यमे ॥ गच्छमंदारशिखरंयावन्ममनोरथः ७ शंकरोपिददौतस्मैकैलासं
स्वल्पकालिने ॥ स्वयंजगामागिरिशोमंदराद्रिंगणैर्वृतः ८ कैलासशिखरारूढोजहर्षत्रिपुरासुरः ॥ एवंदेवान्वशेकृत्वापुनरायाद्रसातलम् ९ भूमिकायोपिबलवान्
भूमंडलगतोबलात् ॥ वशेचकारनृपतीनृषीन्सर्वान्बबंधच १० अग्निकुंडानिसर्वाणिदेवतृप्तिकराणिच ॥ आश्रमांश्चबभंजाशुतीर्थानिचविशेषतः ११ तापसां
स्त्रासयामासकारागारसमाश्रयात् ॥ स्वाहास्वधावषट्कारान्वेदस्याभ्यसनानिच १२ सदाचारान्सदादेष्टिसर्वगर्वसमन्वितः ॥ वज्रदंष्ट्रोथसप्तापिपातालानिवशे
नयत् १३ शेषंचवासुकिंचैवतक्षकंसर्वभोगिनः ॥ निर्विषान्सविषांश्चैवचकारवशवर्तिनः १४ वज्रदंष्ट्रोरत्नजातंबुभुजेप्रेषयच्चतम् ॥ नागांगनाभिश्चकुतूहलेनरेमे
सदासौसमदोतिहर्षात् ॥ भोगान्विभुंजन्विविधानिरत्नान्यादाययातस्त्रिपुरांतिकेसः १५ पातालवश्यतांशंसन्लेभेमानंततोधिकम् १६ वस्त्राणिचमहार्हा
णिग्रामान्दासाननेकशः ॥ एवंत्रिलोकान्वशगान्कृत्वादैत्योननंदह १७ देवाःसर्वेगुहावासाश्चितयामासुरन्वहम् ॥ कथमस्यवधःकस्मिन्कालेवापिभविष्य

ति १८ कस्माद्वेतिनजानीमोलब्धोनेनवरःकुतः ॥ एवंव्याकुलचित्तेषुसुरेषुमुनिसत्तम १९ आययौनारदस्तत्रत्रैलोक्यचरइच्छया ॥ ददर्शदीनान्देवांस्तानुत्त
तारनभःपथात् २० दृष्ट्वासर्वेनारदंतमुत्तस्थुःसहसादरात् ॥ आलिलिंगुश्चनेमुश्चपुपूजुश्चयथाक्रमम् २१ विश्रांतंपरिपप्रच्छुस्त्रिपुरस्यवरादिकम् ॥ ॥
॥ देवाऊचुः ॥ त्रिपुरेणसमाक्रांतंत्रैलोक्यंसचराचरम् २२ स्थानानिनोगृहीतानिकेशास्तेनापिनिर्जिताः ॥ शरणंकंव्रजामोद्यकथंतस्यवधोभवेत् २३ वरा
श्चकेनदत्तानोवदास्यत्रिपुरस्यभोः ॥ ॥ नारदउवाच ॥ कथयामिसमासेनदैत्यस्यचेष्टितंमहत् २४ दिव्यंवर्षसहस्रंसततापपरंतपः ॥ प्रसादयामासविभुंग
णेशंदेवनायकम् २५ तेनास्मैदुर्धरादत्तावराःसर्वभयंकराः ॥ देवर्षिपितृभूतेभ्योयक्षरक्षःपिशाचतः २६ ननागेभ्योभयंदत्तांविनैकंशंकरंविभुम् ॥ प्रसादयंतुदेवेशं
द्विरदाननमादरात् २७ आराधयंतुसर्वेपिविघ्नेशंसर्वसिद्धिदम् ॥ देवाऊचुः ॥ कथमाराधनंतस्यदेवदेवस्यधीमतः २८ कर्त्तव्यंमुनिशार्दूलकृपयातद्वदस्वनः ॥
नारदउवाच ॥ अहमेकाक्षरंमंत्रंकथयाम्यखिलान्प्रति २९ तेनमंत्रेणतेसर्वेमयादत्तेनभक्तितः ॥ अनुष्ठानंप्रकुर्वंतुसर्वेपिस्थिरमानसाः ३० यावत्प्रत्यक्षतामेति
देवोसौगणनायकः ॥ सएवतद्वधोपायंवदिष्यत्यखिलान्प्रति ३१ नान्योपायंप्रपश्यामितस्मात्कुर्वंतुमेवचः ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्युक्त्वानारदःसर्वानुप
दिश्यमनुंचतम् ३२ जगामतत्क्षणादेववीणागानरतोमुनिः ॥ ततःसर्वेसुरवरागणेशध्यानतत्पराः ३३ एकपादस्थिताःकेचित्केचित्पद्मासनस्थिताः ॥
केचिद्वीरासनयुताःकेचिन्मीलितलोचनाः ॥ निराहाराजितश्वासाजेपुर्मंत्रंमुनीरितम् ३४ ततोबहुगतेकालेकरुणाब्धिर्गजाननः ॥ अनुष्ठानंनिरीक्ष्यैषांदे
वानांचिरकालजम् ३५ आविर्बभूवगणपस्तेषामग्रेवरप्रदः ॥ उल्लसत्स्वर्णमुकुटश्चारुकुंडलमंडितः ३६ दंतन्यस्तकरोराजत्कटिसूत्रवरांगदः ॥ पाशां
कुशंचपरशुंकमलंचभुजैर्दधत् ३७ रक्तचंदनकस्तूरीसिंदूरशशिभूषणः ॥ विद्युत्तेजोलसत्कांतिःकोटिसूर्यसमप्रभः ३८ दृष्ट्वैवंसहसादेवंविना
यकमनामयम् ॥ तेजसाधर्षिताःसर्वेभयमापुश्चकेचन ३९ प्रणेमुःसहसाकेचिद्देवास्तंद्विरदाननं ॥ पूजयामासुरपरेहर्षगद्गदभाषिणः ४० स्वसंकष्ट
विनाशायतुष्टुवुःकेपितंविभुम् ॥ प्रसादसुमुखंदेवंसुमुखंसंकटापहम् ४१ ॥ ॥ देवाऊचुः ॥ ॥ नमोनमस्तेपरमार्थरूपनमोनमस्तेखिलकारणा
य ॥ नमोनमस्तेखिलकारकायसर्वेंद्रियाणामधिवासिनेपि ४२ नमोनमोभूतमयायतेस्तुनमोनमोभूतकृतेसुरेश ॥ नमोनमःसर्वधियांप्रबोधनमोन
मोविश्वलयोद्भवाय ४३ नमोनमोविश्वभृतेखिलेशनमोनमःकारणकारणाय ॥ नमोनमोवेदविदामदृश्यनमोनमःसर्ववरप्रदाय ४४ नमोनमोवाग
विचारभूतनमोनमोविघ्ननिवारणाय ॥ नमोनमोऽभक्तमनोरथघ्नेनमोनमोभक्तमनोरथज्ञ ४५ नमोनमोभक्तमनोरथेशनमोनमोविश्वविधानदक्ष ॥
नमोनमोदैत्यविनाशहेतोनमोनमःसंकटनाशकाय ४६ नमोनमःकारुणिकोत्तमायनमोनमोज्ञानमयायतेस्तु ॥ नमोनमोज्ञानविनाशनायनमो
नमोभक्तविभूतिदाय ४७ नमोनमोऽभक्तविभूतिहंत्रेनमोनमोभक्तविमोचनाय ॥ नमोनमोभक्तविबंधनायनमोनमस्तेप्रविभक्तमूर्ते ४८ नमोनमस्त

त्वविबोधकायनमोनमस्तत्वविदुत्तमाय ॥ नमोनमस्तेखिलकर्मसाक्षिणेनमोनमस्तेगुणनायकाय ४९ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंस्तुतःसुरैर्देवो
द्विरदाननईश्वरः ॥ उवाचपरमप्रीतोहर्षयन्सुरसत्तमान् ५० ॥ ॥ गणेशउवाच ॥ ॥ स्तोत्रेणतपसाचैवसुराःसंतुष्टिमागतः ॥ ददामिसकलाभीष्टं
तच्छृणुध्वंसुरेश्वराः ५१ ॥ ॥ देवाऊचुः ॥ ॥ यदितुष्टोसिदेवेशत्रिपुरंजहिदानवम् ॥ सर्वेषामधिकारान्नोगृहीत्वायस्तुतिष्ठति ५२ त्वयैवास्या
भयंदत्तंसर्वामरसमूहतः ॥ अतःस्मसंकटंप्राप्ताःसंकटान्मोचयाशुनः ५३ त्वामेवशरणंप्राप्ताएषएववरोहिनः ॥ ॥ गणेशउवाच ॥ ॥ वारयिष्येभयं
सर्वतस्माद्घोरतराद्दिवः ५४ भवत्कृतमिदंस्तोत्रमतिप्रीतिकरंमम ॥ संकष्टनाशनमितिविख्यातंचभविष्यति ५५ पठतांशृण्वतांचैवसर्वकाम
प्रदंनृणाम् ॥ त्रिसंध्यंयःपठेदेतत्संकष्टंनाप्नुयात्क्वचित् ५६ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतिदत्त्वावरंतेषांसुराणांजगदीश्वरः ॥ पश्यतांमुनिदेवानां
तत्रैवान्तर्दधेविभुः ५७ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेस्तोत्रनिरूपणंनामचत्वारिंशोध्यायः ॥ ४० ॥ ॥ ७ ॥ ॥ व्यासउवाच ॥
वरदेनगणेशेनप्रभुणासर्वकारिणा ॥ किंकृतंतन्ममाचक्ष्वपृच्छतेचतुरानन ॥ ॥ ब्रह्मोवाच ॥ ॥ ततोगजाननोविप्ररूपेणत्रिपुरंययौ ॥ म
हार्हासनसंविष्टंददर्शद्विजसत्तमः २ सउत्थायनमस्कृत्यस्वासनेचोपवेशयत् ॥ संपूज्यपरिपप्रच्छकुतआगम्यतेद्विज ३ काविद्याकिंचतेनामपृ
च्छतेब्रूहिमेद्विज ॥ प्रयोजनंचकिंतेस्तिशक्तिश्चेत्करवामहे ४ ॥ ॥ द्विजउवाच ॥ ॥ सार्वंगृहाववयंदैत्यसर्वज्ञाःसर्ववेदिनः ॥ इच्छाविहारालोकानां
भ्रमामोहितकाम्यया ५ कलाधरेत्येवनाम्नाविख्याताभुवनत्रये ॥ द्रष्टुकामावैभवंतेसंप्राप्ताभवनंतव ६ अखिलाःसंपदस्तेतुदृष्टावृप्ताःस्मसांप्रतम् ॥
नकैलासेनवैकुंठेब्रह्मलोकेपिनेदृशी ७ पदेशाक्रेनवैसंपद्यादृशीदृश्यतेतव ॥ ॥ दैत्यउवाच ॥ ॥ नाममात्रंकलाधारःकिंवाजानासितांद्विज ॥ ८ ॥
संपदःसर्वलोकेषुयाभ्यएतांप्रशंससि ॥ जानासिचेद्दर्शयमेतासांमध्येमहोत्कटाम् ९ दृष्ट्वादास्येवांछितंतेप्रियंप्राणमपिद्विज ॥ नस्मरेपरिहासेपिवितथं
भाषितंमुने १० ॥ ॥ कलाधरउवाच ॥ ॥ परेषांसंपदंदृष्ट्वाकिंस्यात्तवसुरद्विष ॥ विनयात्तेप्रसन्नोहंकलयातेददामिवै ११ कांचनंराजतंलोहंत्रिपुरंश
रसंस्थितम् ॥ रमतत्रस्थिरोदैत्याचिरकालंयथासुखम् ॥ १२ ॥ अभेद्यंदेवगंधर्वैर्नरैर्नुपैरुरगैरपि ॥ कल्पितार्थप्रदंनत्तेकामगंकामदंशुभम् १३ यदैकेके
नबाणेनकस्मिंश्चित्कालपर्यये ॥ भेत्स्यतेतद्धरोदैत्यतदानाशमुपैष्यति १४ ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्युक्त्वाधनुरादायसंस्तभ्यशरमंतरा ॥ पुरत्रयंनि
र्ममेसौभुवनत्रयसन्निभम् १५ विचित्रैर्भवनैरम्यैर्दीर्घिकारामसंयुतैः ॥ नानापक्षिगणैर्जुष्टंसर्वकामप्रदंशुभम् ॥ १६ ॥ माययामोहितोदैत्यस्तत्रस्थो
जगद्भेषप्रशम् ॥ जगर्जघनवद्दैत्योलोकत्रयविकंपनः ॥ १७ ॥ नमत्तःश्रेष्ठइत्येवंगर्वदर्पसमन्वितः ॥ त्रैलोक्यंक्षोभयामासब्राह्मणंतमथाब्रवीत् ॥ १८ ॥

१ अकस्मात्कदनंप्राप्ताः इतिपाठान्तरम् ॥ २ ब्रह्मेत्यारभ्यपद्यंमुद्रितपुस्तकेन ॥

याचस्वदुर्लभतरंतत्तेदास्येद्विजोत्तम ॥ इत्युक्त्वासद्विजःप्राहतंदैत्यंनिस्पृहोपिसन् १९ ॥ ॥ द्विजउवाच ॥ ॥ अहंकैलासमगमंदृष्टवान्मूर्तिमुत्तमाम् ॥
शिवेनपूजितांसम्यग्गाणेशींचिंतितार्थदाम् २० तामानयत्वंमेदेहिशक्तिर्यद्यसुरेश्वर ॥ नैतादृशीमयामूर्तिर्दृष्टैलोक्यंचरतेक्षिता ॥ २१ ॥ अतोममम
नस्तस्यामासक्तंदैत्यसत्तम ॥ तांप्राप्यकृतकृत्योहंभविष्याम्यसुरेश्वर २२ कीर्तिंतेप्रथयिष्यामित्रैलोक्येसचराचरे ॥ नदातात्रिपुराच्छ्रेष्ठोवांछितंयःप्रय
च्छति २३ ॥ ॥ दैत्यउवाच ॥ ॥ शंकरंकिंकरंमन्येगणयेनचदेवताः ॥ आनयित्वाप्रदास्यामितांमूर्तिंद्विजपुंगव २४ ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्युक्त्वा
पूजयामासतंकलाधरमादरात् ॥ ददौतस्मैदशग्रामान्गोवस्त्रभूषणानिच २५ मुक्ताफलानिभूरीणिमहार्हाणीतराणिच ॥ रत्नानिचप्रवालानिरांकवा
स्तरणानिच २६ दासीदासशतंनानाभूषायुक्तंददेसुरः ॥ सदश्वान्सवरूथांश्चस्वर्णाक्षान्राजतान्रथान् २७ प्रगृह्यैतद्धलादत्तंप्रययौसकलाधरः ॥
स्वाश्रमंहर्षयन्पत्नींसर्वानाश्रमवासिनः २८ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंचसर्ववृत्तांतंनारदोकथयत्सुरान् ॥ तेपिकालंप्रतीक्षंतोदिवसानतिचक्रमुः २९
॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेनारदागमनोनामैकचत्वारिंशत्तमोध्यायः ४१ ॥ ॥ व्यासउवाच ॥ ॥ कृतवान्किमुदैत्यःसगतेतस्मिन्कला
धरे ॥ कथमानीयदत्तास्मैमूर्तिश्चिंतामणेःशुभा १ एतत्कथयमेसर्वंविस्तार्यचतुरानन ॥ लीलागजाननीःशृण्वन्नतृप्यामिसमासतः ॥ २ ॥ ॥ ब्रह्मोवा
च ॥ ॥ तस्मिन्गतेयदकरोत्सदैत्योमुनिसत्तम ॥ तत्सर्वंकथयिष्यामिशृणुष्वावहितोमुने ३ दूतौसंप्रेषयामासमंदराद्रिस्थितंशिवम् ॥ आशिक्षय
च्छिवंगत्वाब्रूतंमद्वाक्यमादरात् ४ मूर्तिश्चिंतामणेस्तेस्तिगृहेसर्वार्थदाशुभा ॥ देहितांदैत्यराजायसाम्नैवगिरिजापते ॥ ५ ॥ पातालेस्वर्गलोकेवामर्त्ये
वापुनरद्भुतम् ॥ तत्सर्वंतेनदैत्येनह्यानीतंस्वगृहेबलात् ६ शीघ्रमानीयतांदेवयावोदैत्यंमहाबलम् ॥ नदास्यसेयदासाम्नातदादैत्यःपराक्रमी ॥ ७ ॥
ग्रहीष्यतिबलात्तांतुततोदुःखमवाप्स्यसि ॥ इतिदैत्यवचःश्रुत्वाजग्मतुःस्तौशिवंप्रति ८ आहतुस्तौमहादेवंदैत्यराजेनशिक्षितम् ॥ इत्थंदूतवचःश्रुत्वा
त्रिनेत्रःक्रोधमूर्छितः ९ उवाचदूतौदूतौवामितिकृत्वाक्षमेवचः ॥ कामस्येवभवेद्भस्मनोचेद्भ्रांनात्रसंशयः १० किंकार्यंतेनदैत्येनतूष्णीभूतेनमेविभोः ॥ आ
यातुयुद्धमेवास्तुमत्तुंकामोममांतिकम् ११ नेयंमूर्तिस्तेनशक्याप्राप्तुंजन्मशतैरपि ॥ प्रलयाग्निःपतंगेनकिंशांतिमधिगच्छति १२ मेरोःपातोमूष
केनशक्यःकर्तुंकिमोजसा ॥ असंख्यजलनिष्काशाच्छुष्कःस्यात्किंमहोदधिः १३ ॥ ॥ ब्रह्मोवाच ॥ ॥ श्रुत्वातुशांकरींवाणींदैत्यौयातौयथागतम् ॥ अब्रू
तांस्वामिनंवाक्यंशंभुनायदुदीरितम् १४ तदाकर्ण्यप्रजज्वालदैत्योवाक्यार्थकोविदः ॥ क्रोधानलेनदीप्तोसौत्रैलोक्यंप्रदहन्निव १५ आज्ञापयच्च
युद्धायस्वसेनांचतुरंगिणीम् ॥ निर्गतासहसासेनामंदराचलसंमुखा १६ भूतलंछादयामासनिर्मर्यादोयथांबुधिः ॥ अनेकसूर्यसंकाशाविकोशैः
शस्त्रसंचयैः १७ गर्जंतीघनवद्घोरंमृत्योर्मानसकंपिनी ॥ दैत्यस्त्रिपुरमारुह्यविमानसदृशंमहत् १८ मनोवेगंततःपश्चाज्जिघांसुःशंभुमाययौ ॥

बृहन्मणिमयंचारुकवचंकुंडलेंगदे १९ मुक्तामालांमुद्रिकाश्चकटिसूत्रंचकांचनम् ॥ मुकुटंरत्नखचितंमहार्घंबिभ्रदुल्लसत् २० यस्यशब्देनम
हताचकंपेहरमानसम् ॥ तद्धनुःसनिषंगंचकौर्मंखेटमसिंदृढम् २१ शुशुभेशक्तिकादिव्यावहद्यांदैत्यपुंगवः ॥ गायमानानर्तमानागंधर्वाप्सरसांगणाः
२२ बंदिनश्चारणाश्चापिययुरस्याग्रतोमुदा ॥ शंकरोदूतवाक्येनश्रुत्वादैत्यंसमागतम् २३ असंख्यबलसंयुक्तंयुयुत्सुंकालकर्षितम् ॥ शूलपाणिरपि
तदासंपूज्यद्विरदाननम् २४ प्रणम्यतंपरिक्रम्यपुरस्कृत्यबलंबलात् ॥ आययौक्रोधदीप्ताक्षःस्वस्थलाद्रणमंडलम् २५ तेवीरावीरशब्देननादयंतांदि
शोदश ॥ अभिजग्मुःप्रहरणैःपरस्परवधेप्सवः २६ अभूतांमीलितेसैन्येरजस्तिमिरसंकुले ॥ स्वपरज्ञानरहितेजन्नतूरणमूर्द्धनि २७ अभवत्तुमु
लंयुद्धंनप्राज्ञायतकिंचन ॥ गजाश्वरथवीराणांहतानांशोणितोक्षिते २८ शांतेरजस्ययुद्ध्यंतवीरावीरैःपृथक्पृथक् ॥ केचित्प्रासैःकेपिखड्गैःकेचिद्बाणैः
शिलाशितैः २९ ऋष्टिभिर्मुष्टिभिःकेचित्केचित्परशुतोमरैः ॥ हतानांतत्रवीराणांहयानांचपदातिनाम् ३० असृक्नदीसमभवत्केशशैवलवाहि
नी ॥ खेटकूर्माखड्गमत्स्याशिरःकमलभूषणा ३१ छत्रावर्त्तांघोरतराकबंधद्रुक्षवाहिनी ॥ वीरसंतोषजननीगृध्रगोमायुहर्षकृत् ३२ दृष्ट्वानदींतुगिरि
शोययौदैत्यांतिकंबली ॥ दैत्योपित्रिपुरारूढोययौतस्यपुरःपुरः ३३ नायकौसंगतौदृष्ट्वाद्वंद्वशोन्येपरस्परम् ॥ अन्याकुलंयुयुधिरेदैतेयाःशांभवास्तदा ३४
नानाप्रहरणैर्दिव्यैःशस्त्रैरस्त्रैर्द्रुमैरपि ॥ तेषांयुद्धानिनामानिकथयिष्येसमासतः ३५ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेयुद्धवर्णनंनामद्विचत्वारिंशत्तमो
ध्यायः ॥ ४२ ॥ ॥ ब्रह्मोवाच ॥ ॥ अयुध्येतांद्वंद्वशोथगिरिशासुरनायकौ ॥ षण्मुखेनप्रचंडश्चनंदिनाचंडएवच १ युयुधेपुष्पदंतोपिभीमकाये
नवीर्यवान् ॥ भृशुंडीकालकूटेनविषवत्प्राणहारिणा २ अयुध्येतांवीरभद्रवज्रदंष्ट्रौमहाबलौ ॥ इंद्रोपियुयुधेतत्रदैत्यामात्येनवीर्यवान् ३ दैत्यपुत्रेण
बलिनाजयंतोयुद्धदुर्मदः ॥ काव्येनयुयुधेतत्रसुराचार्योस्त्रवित्तमः ४ देवानांचैवदैत्यानामेवंद्वंद्वान्यनेकशः ॥ वर्णितुंनैवशक्यानिमयावर्षशतैरपि ५
रथिनोरथिभिःसार्धंगजिनोगाजिभिःसह ॥ अश्वारोहाःस्वसदृशैःपदाताश्चपदातिभिः ६ युयुधुःसंयुगेघोरेनानावाद्यनिनादिते ॥ हेषितैर्बृंहितैःक्ष्वेडै
र्नेमिनादैश्चशब्दिते ७ केचिच्चमल्लयुद्धेनयुयुधुर्विविधेनतु ॥ जघ्नुरंगानिचांगेषुत्यक्त्वाशस्त्राणिसंयुगे ८ ततःप्रचंडोनवभिस्ताडयामासषण्मुखम् ॥
आकर्णाकर्षनिसृतैर्दृढैर्बाणैःशिलाशितैः ९ अप्राप्तानेवतांश्छित्वाशरैःसन्नतपर्वभिः ॥ कार्त्तिकेयःपंचभिस्तंताडयामाससायकैः १० संमूर्छितोपतद्भू
मौप्रचंडोभ्रांतमानसः ॥ नंदिनापिहतश्चंडःपंचभिर्निशितैःशरैः ११ मूर्छामवापसहसापतितोधरणीतले ॥ भीमकायःपुष्पदंतमविध्यद्दशभिःशरैः ॥
१२ छेदयामाससमरेस्वशरैर्निशितैःसतान् ॥ त्रिभिरेवाहनत्तंचसोपिभूतलमाश्रितः १३ कालकूटंभृशुंडिस्तुपातयामासपंचभिः ॥ शरैर्महाबल
स्तत्रवीरभद्रोरुषायुतः १४ वज्रदंष्ट्रंततोजघ्नेचतुर्भिर्निशितैःशरैः ॥ तान्निवार्यस्वयंजघ्नेवीरभद्रंत्रिभिःशरैः ॥ १५ ॥ तानापततएवाशुवीरभद्रोच्छिन

त्रिभिः ॥ पातयामासवेगेनवज्रदंष्ट्रंत्रिभिःशरैः १६ इंद्रोपिवज्रपातेनदैत्यामात्यंन्यपातयत् ॥ उद्यम्यनिशितंखड्गंदैत्यपुत्रःसमाययौ १७ हंतुकामो
जयंतंतंवीरेषुपतितेषुच ॥ तंनिरीक्ष्यतथायांतंखड्गंचिच्छेदपत्रिणा १८ जयंतोभ्यहनच्छीघ्रंदैत्यसूनुंत्रिभिःशरैः ॥ तेनाहतोवमन्रक्तंन्यपतन्मोहसं
युतः १९ एवंसर्वेषुसैन्येषुप्रभग्नेषुसमंततः ॥ दृष्ट्वापलायनपरान्दैत्यान्देवगणार्दितान् २० अधावन्पृष्ठतःकेचित्प्रमथाजयशालिनः ॥ एवंजयत्सुदेवे
षुस्वसैन्येविद्रुतेपिच २१ आययौस्वयमेवेशंत्रिपुराधिष्ठितोसुरः ॥ शस्त्रयुद्धंपुराकृत्वायुयुधातेमस्त्रतोह्युभौ ॥ २२ ॥ वारुणास्त्रंजहौदैत्योवृष्टिर्घोर
तराभवत् ॥ नीहारबहुलेयुद्धेनप्राज्ञायतकिंचन २३ क्वचितविद्युत्प्रकाशेनस्वपरज्ञानकारिणा ॥ युद्धमासीत्तुतुमुलंघोररूपंदुरासदम् २४ विलोक्यसै
न्यंतत्सर्वंवृष्टिवातप्रपीडितम् ॥ शिलापातभयाद्यातेस्वसैन्येतुदिशोदश २५ वायव्यमस्त्रंगिरिशोमोचयामाससत्वरम् ॥ महावातान्महामेघाविशीर्णाः
खंडशोंबरे २६ वातेनघूर्णितासेनादैत्यानांसर्वतोदिशम् ॥ जगलुःपक्षिपिच्छानिवरिोष्णीषाणिदूरतः २७ पतिताश्चूर्णिताःकेचिद्रथाश्वगजपत्तयः ॥
उन्मूलितालतावृक्षाश्छादयंतिस्मसैनिकान् २८ पन्नगास्त्रेणतंवायुंतथादैत्योन्यवारयत् ॥ आकर्णंधनुराकृष्यतूणाद्बाणंप्रगृह्यच ॥ २९ ॥ मंत्रयन्नन
लास्त्रेणशिवसैन्येन्यपातयत् ॥ अंगारवृष्टिःसहसापतितासर्वदाहिनी ३० प्रलयंमेनिरेसर्वेज्वालामालाभिरर्दिताः ॥ ज्वालाभ्योदीप्यमानाभ्योमहाभीतिक
रःपुमान् ३१ आविरासीन्महाकायोलिखन्मूर्ध्नानभस्तलम् ॥ दंष्ट्राकरालवदनोमहारावःक्षुधातुरः ३२ लालयन्रसनांघोरांशतयोजनविस्तृताम् ॥ नासा
पवनवेगेनभ्रामयन्कुंजरान्रणे ३३ भक्षयामासतांसेनांउरगानिवपक्षिराट् ॥ अपीपलद्गर्गसेनातेनपुंसाप्रपीडिता ३४ शिवपृष्ठंसमासाद्यरक्षरक्षेतिचा
ब्रवीत् ॥ माभैष्टेत्यभयंतस्यैदत्वावाह्निंन्यवारयत् ३५ पर्जन्यास्त्रप्रपातेनतत्क्षणाद्गिरिजापतिः ॥ बाणेनैकेनतंघोरंपुरुषंसन्यपातयत् ३६ ततउत्था
यपुरुषोबभक्षशिवसैनिकान् ॥ युयुःपलायनपराःप्रमथाभयविह्वलाः ३७ स्खलंतोनिपतंतश्चनिश्वसंतश्चकंपिरे ॥ शिवोपिनिःसहायत्वाद्दरीमेवा
न्वपद्यत ३८ षडाननादयोवीराअनुसस्रुस्तमेवहि ॥ जिघृक्षुर्गिरिजांदैत्योविचिंत्यैकाकिनींगिरौ ३९ विहायरणभूमिंतुययौकैलासमेवसः ॥ दूराद्दृष्ट्वात
मायांतंचकंपेगिरिजातदा ४० उवाचपितरंगत्वादैत्योमांकिंनुनेष्यति ॥ तस्यास्तद्वचनंश्रुत्वानीत्वातांदुर्गमांगुहाम् ४१ अविज्ञातांस्वेतरेणस्थापयामासानि
र्भयाम् ॥ सोपिदैत्यस्ततोहैमंगिरिंतद्ग्रहणेच्छया ४२ आगतोनददर्शाथगिरिजांक्वापिसत्तम ॥ भ्रमन्ददर्शतत्रैकांमूर्तिंचिंतामणेःशुभाम् ४३ सहस्रसूर्यसंकाशां
नानालंकारशोभिनीम् ॥ त्रैलोक्यसुंदरांसद्योगृहीत्वास्वस्थलंययौ ४४ नानावादित्रनिर्घोषैःस्तुवद्भिर्बंदिभिर्वृतः ॥ ततःपातालमगमत्सर्वत्रविजयीबली ॥
४५ गच्छतस्तस्यदैत्यस्यहस्तेप्यंतर्हितातदा ॥ मूर्तिश्चिंतामणेःसातुतदद्भुतमिवाभवत् ४६ तमेवाशकुनंमत्वातत्पुरंपुनराविशत् ॥ अत्यंतंविमनाश्चिंतांदु
रंतांसमुपागतः ४७ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेत्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ ॥ व्यासउवाच ॥ ॥ ततःकिमकरोच्छंभुस्त्रिपुरेणपराजि

तः ॥ कथंतमजयदैत्यंत्रिपुरंजयशालिनम् १ ॥ ब्रह्मोवाच ॥ ॥ ततःशंभुःपरांचिंतामापेदेमनसासकृत् ॥ स्वाहास्वधाविहीनंतुभूतलंपरिचिंतयन् २
कदास्व स्थानगादेवाभाविष्यंतिगतज्वराः ॥ केनोपायेनवासःस्याद्दुर्जयस्यपराजयः ३ एवंचिंतातुरेतस्मिन्नारदोमुनिसत्तमः ॥ आययौशंकरंद्रष्टुंदेवान्सर्वान्यदृ
च्छया ४ तंदृष्ट्वाजहृषेदेवोमर्त्यःप्राप्ययथामृतम् ॥ पूजयामासविधिवत्कृतासनपरिग्रहम् ५ आलिंग्यतमुवाचेत्थंशिवश्चिंतातुरोभृशम् ॥ देवानांहितमन्वि
च्छन्दैत्यस्यवधमेवच ६ शिवउवाच ॥ दैत्येनसर्वदेवानांकदनंकृतमोजसा ॥ तद्रणेभग्नसंकल्पाःसर्वेदेवाःपलायिताः ७ यातादशदिशोब्रह्मन्कःकुत्रास्तेन
वेद्म्यहम् ॥ ममाप्यस्त्राणितेनास्त्रैःप्रभग्नानिसहस्रशः ८ ॥ ब्रह्मोवाच ॥ श्रुत्वाशिववचःसोमुमवादीन्मुनिसत्तम ॥ मन्वानःपरमाश्चर्यंत्रैलोक्येशपराभव
म् ९ ॥ नारदउवाच ॥ सर्वज्ञेसर्वविद्येशेसर्वेशेसर्वकर्त्तरि ॥ सर्वावनेसर्वहरेसर्वस्थापिनियंतरि १० शक्तेकर्त्तुमकर्त्तुंवान्यथाकर्तुमपिप्रभो ॥ अ
णिमादिगुणोपेतेषडैश्वर्यविलासिनि ११ किंवक्तव्यंमयादेवसर्ववक्तृवरेत्वयि ॥ मुनिनागानसक्तेनात्रिलोकींभ्रमतानिशम् १२ तववाक्यानुरोधेनविचार्यप्रब्र
वीम्यहम् ॥ एवमुक्त्वाक्षणंध्यात्वापुनःप्राहशिवंमुनिः १३ ॥ मुनिरुवाच ॥ युद्धायगंतुकामेननार्चितोगणपस्त्वया ॥ अतःपराभवंप्राप्तोवह्निनेत्रःपिनाक
धृक् १४ इदानीमर्चयपुराविघ्नेशंविघ्नवारणम् ॥ प्रसाद्यतद्वरंलब्ध्वायाहियुद्धायसादरम् १५ पराजेष्यसितंदैत्यंनात्रकार्याविचारणा ॥ ब्रह्मोवाच ॥ ते
नापितपसादेवोमहताराधितःपुरा १६ तेनतस्मैवरोदत्तोखिलविघ्नौघहारिणा ॥ महेश्वरंविनामृत्युर्नकेनापिभवेत्तव १७ तस्माद्गिरिशतस्येदंकामगंतुपु
रत्रयम् ॥ एकेषुणादारयस्वजयोपायोयमीरितः १८ प्रहर्षमतुलंलेभेश्रुत्वोपायंमुनेःशिवः ॥ श्रुत्वागजाननगिरंपूर्वोक्तांप्राहतंमुनिम् १९ ॥ शिवउवाच ॥ स
त्यमुक्तंत्वयाब्रह्मंस्त्वद्वाक्येनस्मृतंमया ॥ उपदिष्टौपूर्वमेवमंत्रौतेनमुनेमम २० षडक्षरैकाक्षरौतौसर्वसंकटहारकौ ॥ युद्धेऽन्यासक्तचित्तेननजप्तौनचसंस्मृतौ २१
सर्वविघ्नहरोदेवोनस्मृतोहिगजाननः ॥ सर्वेषांकारणंकर्त्तापाताहर्त्ताविनायकः २२ ॥ मुनिरुवाच ॥ तंतोषयमहादेवमहादेवंगजाननम् ॥ ब्रह्मोवाच ॥
विसर्ज्यनारदंदेवोजगामतपसेशिवः २३ दंडकारण्यदेशेतुपद्मासनस्थितोजपत् ॥ प्रणिधायबलात्खानिनियम्यध्यानतत्परः २४ सोतप्यत्तपउग्रंतुशतवर्षाणिशं
करः ॥ ततस्तस्यमुखांभोजान्निर्गतस्तुपुमान्परः २५ पंचवक्त्रोदशभुजोललाटेदुःशशिप्रभः ॥ मुंडमालःसर्पभूषोमुकुटांगदभूषणः २६ अग्न्यर्कशशिनो
भाभिस्तिरस्कुर्वन्दशायुधः ॥ तद्भासाधर्षितोदेवोपश्यदुग्रंपुरःस्थितम् २७ विनायकंपंचमुखंपंचास्यमपरंशिवम् ॥ तंदृष्ट्वातर्कयद्देवःकिमहंद्विवि
धोभवम् २८ किंवाममैवरूपेणत्रिपुरोयमिहागतः ॥ त्रयस्त्रिंशत्कोटिदेवेष्वपरःपंचवक्त्रवान् २९ अथवास्वप्नएवायंदृष्टोदीर्घतरोमया ॥ अथवामे
वरंदातुमागतोयंगजाननः ३० सर्वविघ्नहरंदेवंयंध्यायामिदिवानिशम् ॥ ॥ ब्रह्मोवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यमुवाचाद्विरदाननः ३१ अंतर्यस्त
र्कितोदेवःसोयंविघ्नहरोविभुः ॥ नमेस्वरूपंजानंतिदेवर्षिचतुराननाः ३२ नवेदाःसोपनिषदःकुतःषट्शास्त्रवेदिनः ॥ अशेषभुवनस्याहंकर्त्तापाता

पहारकः ३३ ब्रह्मादिस्थावरचरत्रिगुणानामहंप्रभुः ॥ तपसानेनतुष्टोहंवरंदातुमिहागतः ३४ वरान्वृणुमहादेवयावतोमत्तइच्छसि ३५ ॥ ॥ इ
तिश्रीगणेशपुराणेउपासनाखंडेतपोवर्णनंनामचतुश्चत्वारिंशोऽध्यायः ४४ ॥ मुनिरुवाच ॥ ॥ ततःप्रसन्नेविघ्नेशेदेवेशेविघ्नहारिणि ॥ वरान्दित्सति
शर्वायकिंकिंवव्रेसदाशिवः १ ॥ ॥ ब्रह्मोवाच ॥ ॥ गणेशवचनंश्रुत्वाशिवोवाक्यमथाब्रवीत् ॥ स्मृत्वागजाननंतंतुस्वस्वरूपंवरप्रदम् २ ॥ ॥ शिवउ
वाच ॥ दशापिनेत्राणिममाद्यधन्यान्यथोभुजाःपूजनतस्तवाद्य ॥ तवाननेःपंचशिरांसिधन्यान्यथस्तुतेःपंचमुखानिदेव ३ पृथ्वीजलंवायुरथोदिशश्चतेजश्च
कालःकलनात्मकोपि ॥ नभोरसोरूपमथापिगंधःस्पर्शश्चशब्दोमनइंद्रियाणि ४ गंधर्वयक्षाःपितरोमनुष्यादेवर्षयोदेवगणाश्चसर्वे ॥ ब्रह्मेंद्ररुद्रा
वसवोथसाध्यास्त्वत्तःप्रसूताःसचराचराश्च ॥ ५ ॥ सृजस्यदोविश्वमनन्यबुद्धेरजोगुणात्पासिसमस्तमेतत् ॥ तमोगुणात्संहरसेगुणेशनित्योनिरीहा
खिलकर्मसाक्षी ६ ॥ ॥ ब्रह्मोवाच ॥ ॥ ततोहमब्रुवंदेवंगणेशंतंशिवाज्ञया ॥ नामचाकरवंतस्ययत्तच्छृणुमहामते ७ त्वन्नामबीजंप्रथमंमा
तृकाणामोंकाररूपंश्रुतिमूलभूतम् ॥ यतोगणानांत्वमसीहईशोगणेशइत्येवतवास्तुनाम ॥ ८ ॥ ओमित्यथोक्तेगणनायकेनतुतोषशर्वःप्रददौवरां
श्च ॥ यःसर्वकार्येषुतवेशकुर्यात्स्मृतिंतदंतंसलभेदविघ्नम् ९ विनास्मृतिंतेनलभेच्चकोपिवांछार्थसिद्धिंकृमिकीटकोपि ॥ शैवैस्त्वदीयैरथवैष्णवै
श्चशाक्तैश्चसौरैरथसर्वकार्ये १० शुभाशुभेवैदिकलौकिकेवात्वमर्चनीयःप्रथमंप्रयत्नात् ॥ यन्मंगलंसर्वजनेषुदेवसयक्षविद्याधरपन्नगेषु ११
तस्येश्वरोमंगलमूर्त्तितांत्वंयतोयतोमंगलकृत्स्वभक्ते ॥ अहंपुरानर्चयतस्तवेशत्वय्यस्मृतेदैत्यवरस्ययुद्धे १२ अवंदनान्नापपराभवंतंततस्तवांघ्रिंशरणंप्रप
न्नः ॥ क्षमापराधंममसर्वशक्तेजयंप्रयच्छाखिलजन्यकाले १३ येसर्वथात्वांनभजंतिदेवजडादरिद्राःप्रभवंतुतेपि ॥ भजंतितेभक्तियुतामनुष्याःप्राप्स्यंति
सिद्धिंनिखिलार्थदात्रीम् १४ ॥ ॥ कउवाच ॥ इत्थंनिशम्याखिलवाक्यसारवेत्तावदद्वाक्यमिदंगिरीशम् ॥ यदायदामेस्मरणंविदध्यास्तदांतिकंतेहमियां
सुमेश १५ मन्नामबीजेननिमंत्र्यैकंबाणंतुतेनैवपुरत्रयंतत् ॥ निपातयास्मन्महसामहेशकृत्वासदैत्यंखलुभस्मसात्त्वम् १६ ततःस्वनाम्नामवदत्सहस्रं
गणाधिपोस्मैप्रणतायसम्यक् ॥ शिवायभक्त्यापरितुष्टचित्तोजयप्रदंकामकरंजनानाम् १७ उवाचचैनंरणकालएतत्पठस्वदैत्यान्विनिहंसिशीघ्रम् ॥
त्रिसंध्यमेतस्यजपान्नराणांसिद्ध्यंतिकामाःसकलाअभीष्टाः १८ श्रुत्वातुवाक्यंद्विरदाननस्यतंपूज्यसम्यक्शिवउज्जहर्ष ॥ संस्थापयामासमहागणेशंप्रासादमुच्चै
र्दृढमाशुचक्रे १९ संतर्प्यदेवान्मुनिसिद्धसंघान्दानानिदत्वाद्विजपुंगवेभ्यः ॥ पुनश्चसंपूज्यनमश्चकारदेवंगिरीशोवरदंगणेशम् २० उवाचसर्वान्समागेपू
रियंतुविख्यातिमागच्छतुसर्वलोके ॥ देवेनसर्वैश्चतथोदितैस्तैरंतर्दधुस्तेगणनाथमुख्याः २१ अंतर्हितेमुनिगणेससुरेगणेशेशर्वोप्यगात्स्वनिलयंस्वगणैरुपेतः॥
गंधर्वयक्षनिवहैरमरांगनाभिर्वृत्तांनिजंपरसुदागिरिजासुवाच २२ श्रुत्वातदामृतवचःसकलंगिरीशाद्देवेश्वरासुमुदिरेमुनयःसदाराः ॥ योगीश्वराश्चानिहतांत्रि

पुरस्वधिष्ण्यममंसताप्याधिगतंगिरीशप्रसादात् २३ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेशिवस्यवरदानंनामपंचचत्वारिंशोध्यायः ४५ ॥ ॥ व्यास
उवाच ॥ ॥ कथंनाम्नांसहस्रंस्वंगणेशउपदिष्टवान् ॥ शिवायैतन्ममाचक्ष्वलोकानुग्रहतत्पर १ ॥ ॥ ब्रह्मोवाच ॥ ॥ देवएवंपुरारातिःपुरत्रयजयोद्यमे ॥
अनर्चनाद्गणेशस्यजातोविघ्नाकुलःकिल २ मनसासविनिर्धार्यततस्तद्विघ्नकारणम् ॥ महागणपतिंभक्त्यासमभ्यर्च्ययथाविधि ३ विघ्नप्रशमनोपायमपृच्छ
दपराजितः ॥ संतुष्टःपूजयाशंभोर्महागणपतिःस्वयम् ४ सर्वविघ्नैकहरणंसर्वकामफलप्रदम् ॥ ततस्तस्मैस्वकंनाम्नांसहस्रमिदमब्रवीत् ५ अस्यश्रीमहाग
णपतिसहस्रनामस्तोत्रमालामंत्रस्य ॥ गणेशऋषिः ॥ महागणपतिर्देवता ॥ नानाविधानिच्छंदांसि ॥ गमितिबीजम् ॥ तुंडमितिशक्तिः ॥ स्वाहाकील
कम् ॥ सकलविघ्ननाशनद्वारामहागणपतिप्रीत्यर्थेजपेविनियोगः ॥ ॥ महागणपतिरुवाच ॥ ॥ ॐगणेश्वरोगणक्रीडोगणनाथोगणाधिपः ॥ एकदंष्ट्रोव
क्रतुंडोगजवक्त्रोमहोदरः६लंबोदरोधूम्रवर्णोविकटोविघ्ननायकः ॥ सुमुखोदुर्मुखोबुद्धोविघ्नराजोघनाशनः७भीमःप्रमोदआमोदःसुरानंदोमदोत्कटः ॥ हेरंबःशब
रःशंभुर्लंबकर्णोमहाबलः ८ नंदनोलंपटोभीरुर्मेघनादोगणंजयः ॥ विनायकोविरूपाक्षोधीरशूरोवरप्रदः ९ महागणपतिर्बुद्धिप्रियःक्षिप्रप्रसादनः ॥ रुद्रप्रियोग
णाध्यक्षउमापुत्रोघनाशनः १० कुमारगुरुरीशानपुत्रोमूषकवाहनः ॥ सिद्धिप्रियःसिद्धिपतिःसिद्धःसिद्धिविनायकः ११ अविघ्नस्तुंबरुःसिंहवाहनोमोहिनी
प्रियः ॥ कटंकटोराजपुत्रःशाल्कःसंमितोमितः १२ कूष्मांडसामसंभूतिर्दुर्जयोधूर्जयोजयः ॥ भूपतिर्भुवनपतिर्भूतानांपतिरव्ययः १३ विश्वकर्ताविश्वमु
खोविश्वरूपोनिधिर्घृणिः ॥ कविःकवीनामृषभोब्रह्मण्योब्रह्मणस्पतिः १४ ज्येष्ठराजोनिधिपतिर्निधिप्रियपतिप्रियः ॥ हिरण्मयपुरांतस्थःसूर्यमंडलम
ध्यगः १५ कराहतिध्वस्तसिंधुसलिलःपूषदंतभित् ॥ उमांककेलिकुतुकीमुक्तिदःकुलपालनः १६ किरीटीकुंडलीहारीवनमालीमनोमयः ॥ वैमुख्यहतदै
त्यश्रीःपादाहतिजितक्षितिः १७ सद्योजातःस्वर्णमुंजमेखलीदुर्निमित्तहृत् ॥ दुःस्वप्नहृत्प्रसहनोगुणीनादप्रतिष्ठितः १८ सुरूपःसर्वनेत्राधिवासोवीरा
सनाश्रयः ॥ पीतांबरःखंडरदःखंडेंदुकृतशेखरः १९ चित्रांकःश्यामदशनोभालचंद्रश्चतुर्भुजः ॥ योगाधिपस्तारकस्थःपुरुषोगजकर्णकः २० गणाधिरा
जोविजयस्थिरोगजपतिर्ध्वजी ॥ देवदेवस्मरप्राणोदीपकोवायुकीलकः ॥ २१ ॥ विपश्चिद्वरदोनादोनादभिन्नबलाहकः ॥ वराहरदनोमृत्युंजयो
व्याघ्राजिनांबरः २२ इच्छाशक्तिधरोदेवत्राताद्दैत्यविमर्दनः ॥ शंभुवक्त्रोद्भवःशंभुकोपहाशंभुहास्यभूः २३ शंभुतेजाःशिवाशोकहारीगौरीसुखाव
हः ॥ उमांगमलजोगौरीतेजोभूःस्वर्धुनीभवः २४ यज्ञकायोमहानादोगिरिवर्ष्माशुभाननः ॥ सर्वात्मासर्वदेवात्माब्रह्ममूर्द्धाककुप्श्रुतिः २५ ब्रह्मांडकुंभश्चि
द्व्योमभालःसत्यशिरोरुहः ॥ जगज्जन्मलयोन्मेषनिमेषोग्न्यर्कसोमदृक् २६ गिरींद्रैकरदोधर्माधर्मोष्ठःसामबृंहितः ॥ ग्रहर्क्षदशनोवाणीजिह्वोवासवनासिकः

१ हुंमितिबीजं एवं लिखितपुस्तके २ नन्दनःश्रीमदोभीमोमेघनादोगणंजयःइतिपाठान्तरम । ३ शाकलःइतिलिखिते ४ विभ्राजनूपुरइ०पा० ५ हविर्भुजःइ०पा० ६ नादभिन्नोमहांबरः इ०पा०

२७ भ्रूमध्यसंस्थितकरोब्रह्मविद्यामदोत्कटः ॥ कुलाचलांसःसोमार्कघंटोरुद्राशिरोधरः २८ नदीनदभुजःसर्पांगुलीकस्तारकानखः ॥ व्योमनाभिः
श्रीहृदयोमेरुपृष्ठोर्णवोदरः २९ कुक्षिस्थयक्षगंधर्वरक्षःकिन्नरमानुषः ॥ पृथ्वीकटिःसृष्टिलिंगःशैलोरुर्दस्रजानुकः ३० पातालजंघोमुनिपात्कालांगुष्ठस्त्रयी
३० तनुः ॥ ज्योतिर्मंडललांगुलोहृदयालाननिश्चलः ३१ हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः ॥ सद्भक्तध्याननिगडःपूजावारिनिवारितः ३२ प्रतापी
कश्यपसुतोगणपोविष्टपीबली ॥ यशस्वीधार्मिकःस्वोजाःप्रथमःप्रथमेश्वरः ३३ चिंतामणिद्वीपपतिःकल्पद्रुमवनालयः ॥ रत्नमंडपमध्यस्थोरत्नसिं
हासनाश्रयः ३४ तीव्राशिरोधृतपदोज्वालिनीमौलिलालितः ॥ नंदानंदितपीठश्रीर्भोगदाभूषितासनः ३५ सकामदायिनीपीठःस्फुरदुग्रासनाश्रयः ॥
तेजोवतीशिरोरत्नंसत्यानित्यावतंसितः ३६ सविघ्ननाशिनीपीठःसर्वशक्त्यंबुजाश्रयः ॥ लिपिपद्मासनाधारोवह्निधामत्रयाश्रयः ३७ उन्नतप्रपदोगूढगु
ल्फःसंवृतपार्ष्णिकः ॥ पीनजंघःश्लिष्टजानुःस्थूलोरुःप्रोन्नमत्कटिः ३८ निम्ननाभिःस्थूलकुक्षिःपीनवक्षाबृहद्भुजः ॥ पीनस्कंधःकंबुकंठोलंबोष्ठोलंबना
सिकः ३९ भग्नवामरदस्तुंगसव्यदंतोमहाहनुः ॥ ह्रस्वनेत्रत्रयःशूर्पकर्णोनिबिडमस्तकः ४० स्तबकाकारकुंभाग्रोरत्नमौलिर्निरंकुशः ॥ सर्पहारक
टीसूत्रःसर्पयज्ञोपवीतवान् ४१ सर्पकोटीरकटकःसर्पग्रैवेयकांगदः ॥ सर्पकक्ष्योदराबंधःसर्पराजोत्तरीयकः ४२ रक्तोरक्तांबरधरोरक्तमाल्याविभूषणः ॥
रक्तेक्षणोरक्तकरोरक्तताल्वोष्ठपल्लवः ४३ श्वेतःश्वेतांबरधरःश्वेतमाल्यविभूषणः ॥ श्वेतातपत्ररुचिरःश्वेतचामरवीजितः ४४ सर्वावयवसंपूर्णःसर्वलक्षण
लक्षितः ॥ सर्वाभरणशोभाढ्यःसर्वशोभासमान्वितः ४५ सर्वमंगलमांगल्यःसर्वकारणकारणम् ॥ सर्वदैककरःशार्ङ्गीबीजपूरीगदाधरः ४६ शुक्लांगो
लोकसुखदःसुतन्तुस्तन्तुवर्धनः ॥ किरीटीकुंडलीहारीवनमालीशुभांगदः ॥ ४७ इक्षुचापधरःशूलीचक्रपाणिःसरोजभृत् ॥ पाशीधृतोत्पलःशालीमं
जरीभृत्स्वदंतभृत् ४८ कल्पवल्लीधरोविश्वाभयदैककरोवशी ॥ अक्षमालाधरोज्ञानमुद्रावान्मुद्गरायुधः ४९ पूर्णपात्रीकंबुधरोविधृतालिसमूहकः ॥ मातु
लिंगधरश्चूतकलिकाभृत्कुठारवान् ५० पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः ॥ भारतीसुंदरीनाथोविनायकरतिप्रियः ५१ महालक्ष्मीप्रियतमःसिद्धलक्ष्मी
मनोरमः ॥ रमारमेशपूर्वांगोदक्षिणोमामहेश्वरः ५२ महीवराहवामांगोरतिकंदर्पपश्चिमः ॥ आमोदमोदजननःसप्रमोदप्रमोदनः ५३ समेधितसमृद्धिश्रीर्ऋद्धिसि
द्धिप्रवर्त्तकः ॥ दत्तसौमुख्यसुमुखःकांतिकंदलिताश्रयः ५४ मदनावत्याश्रितांघ्रिःकृतदौर्मुख्यदुर्मुखः ॥ विघ्नसंपल्लवोपघ्नःसेवोन्निद्रमदद्रवः ५५ विघ्नकृन्नि
घ्नचरणोद्राविणीशक्तिसत्कृतः ॥ तीव्राप्रसन्ननयनोज्वालिनीपालितैकदृक् ॥ ५६ ॥ मोहिनीमोहनोभोगदायिनीकांतिमंडितः ॥ कामिनीकांतवक्त्रश्रीराधि ३०
ष्ठितवसुंधरः ५७ वसुंधरामदोन्नद्धमहाशंखनिधिप्रभुः ॥ नमद्वसुमतीमौलीमहापद्मनिधिप्रभुः ५८ सर्वसद्गुरुसंसेव्यःशोचिष्केशहृदाश्रयः ॥ ईशानमूर्धा

१ करस्थाम्रधर इ॰पा॰ ।

देवेंद्रशिखःपवननंदनः ५९ अग्रप्रत्यग्रनयनोदिव्यास्त्राणांप्रयोगवित् ॥ ऐरावतादिसर्वाशावारणावरणप्रियः ६० वज्राद्यस्त्रपरीवारोगणचंडसमाश्रयः ॥
जयाजयपरीवारोविजयाविजयावहः ६१ अजिताजितपादाब्जोनित्यानित्यावतंसितः ॥ विलासिनीकृतोल्लासःशौंडीसौंदर्यमंडितः ६२ अनंतानंतसुखदः
सुमंगलसुमंगलः ॥ इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ६३ सुभगासंश्रितपदोललितालिताश्रयः ॥ कामिनीकामनःकाममालिनीकेलिलालितः
६४ सरस्वत्याश्रयोगौरीनंदनःश्रीनिकेतनः ॥ गुरुगुप्तपदोवाचासिद्धोवागीश्वरीपतिः ६५ नलिनीकामुकोवामारामोज्येष्ठामनोरमः ॥ रौद्रीमुद्रितपादाब्जो
हुंबीजस्तुंगशक्तिकः ६६ विश्वादिजननत्राणःस्वाहाशक्तिःसकीलकः ॥ अमृताब्धिकृतावासोमदघूर्णितलोचनः ६७ उच्छिष्टगणउच्छिष्टगणेशोगणनायकः॥
सार्वकालिकसंसिद्धिर्नित्यशैवोदिगंबरः ६८ अनपायोनंतदृष्टिरप्रमेयोजरामरः ॥ अनाविलोप्रतिरथोह्यच्युतोमृतमक्षरम् ६९ अप्रतर्क्योक्षयोजय्योनाधारो
नामयोमलः ॥ अमोघसिद्धिरद्वैतमघोरोप्रमिताननः ७० अनाकारोब्धिभूम्यग्निबलघ्नोव्यक्तलक्षणः ॥ आधारपीठआधारआधाराधेयवर्जितः ७१ आखु
केतनआशापूरकआखुमहारथः ॥ इक्षुसागरमध्यस्थइक्षुभक्षणलालसः ७२ इक्षुचातिरेकश्रीरिक्षुचापनिषेवितः ७३ इंद्रगोपसमानश्रीरिंद्रनीलसमद्युतिः ॥
इंदीवरदलश्यामइंदुमंडलनिर्मलः७४इध्मप्रियइडाभागइडाधामेंदिराप्रियः ॥ इक्ष्वाकुविघ्नविध्वंसीइतिकर्त्तव्यतेप्सितः ७५ ईशानमौलिरीशानईशानसुतई
तिहा ॥ ईषणात्रयकल्पांतईहामात्रविवर्जितः ७६ उपेंद्रउडुभृन्मौलिरुंडेरकबलिप्रियः ॥ उन्नताननउत्तुंगउदारत्रिदशाग्रणीः ७७ ऊर्जस्वनूष्मलमदऊहापो
हदुरासदः ॥ ऋग्यजुःसामसंभूतिर्ऋद्धिसिद्धिप्रवर्त्तकः ७८ ऋजुचित्तैकसुलभऋणत्रयविमोचकः ॥ लुप्तविघ्नःस्वभक्तानांलुप्तशक्तिःसुरद्विषाम् ७९ लुप्तश्रीर्विमु
खार्चानांलूताविस्फोटनाशनः ॥ एकारपीठमध्यस्थएकपादकृतासनः ८० एजिताखिलदैत्यश्रीरेजिताखिलसंश्रयः ॥ ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः
८१ ऐरंमदसमोन्मेषऐरावतनिभाननः ॥ ॐकारवाच्यओंकारओजस्वानोषधीपतिः ८२ औदार्यनिधिरौद्धत्यधुर्यऔन्नत्यनिःस्वनः ॥ अंकुशःसुरनागानामंकुशः
सुरविद्विषाम् ८३ अःसमस्तविसर्गाणांपदेषुपरिकीर्तितः ॥ कमंडलुधरःकल्पःकपर्दीकलभाननः ८४ कर्मसाक्षीकर्मकर्ताकर्माकर्मफलप्रदः॥ कदंबगोलकाकारःकू
ष्मांडगणनायकः ८५ कारुण्यदेहःकपिलःकथकःकटिसूत्रभृत् ॥ खर्वःखड्गप्रियःखड्गखातांतस्थःखनिर्मलः ८६ खल्वाटशृंगनिलयःखट्वांगीखदुरासदः ॥ गुणा
ढ्योगहनोगस्थोगद्यपद्यसुधार्णवः ८७ गद्यगानप्रियोगर्जोगीतगीर्वाणपूर्वजः॥ गुह्याचाररतोगुह्योगुह्यागमनिरूपितः ८८ गुहाशयोगुहाब्धिस्थोगुरुगम्योगुरोर्गु
रुः ॥ घंटाघर्घरिकामालीघटकुंभोघटोदरः ८९ङकारवाच्योङकारोङकाराकारशुंडभृत् ॥ चंडश्चंडेश्वरःसुहृच्चंडेशश्चंडविक्रमः ९० चराचरपतिश्चिंतामणिश्चर्वणला
लसः॥छंदश्छंदोवपुश्छंदोदुर्लक्ष्यश्छंदविग्रहः ९१ जगद्योनिर्जगत्साक्षीजगदीशोजगन्मयः॥जपोजपपरोजप्योजिह्वासिंहासनप्रभुः ९२ झलज्झल्लोल्लसद्दानझंकारि
भ्रमराकुलः ॥ टंकारस्फारसंरावष्टंकारिमणिनूपुरः ९३ ठद्वयीपल्लवांतस्थःसर्वमंत्रैकसिद्धिदः ॥ डिंडिमुंडोडाकिनीशोडामरोडिंडिमप्रियः ९४ ढक्कानिनादमुदि

तोढौंकोढुंढिविनायकः ९५ तत्वानांपरमंतत्वंतत्वंपदनिरूपितः ॥ तारकांतरसंस्थानस्तारकस्तारकांतकः ९६ स्थाणुःस्थाणुप्रियःस्थातास्थावरंजंगमंजगत् ॥
दक्षयज्ञप्रमथनोदातादानवमोहनः ९७ दयावान्दिव्यविभवोदंडभृदंडनायकः ॥ दंतप्रभिन्नाभ्रमालोदैत्यवारणदारणः ९८ दंष्ट्रालग्नद्विपघटोदेवार्थनृगजाकृतिः ॥
धनंधनपतिर्धन्योधनदोधरणीधरः ९९ ध्यानैकप्रकटोध्येयोध्यानंध्यानपरायणः १०० नंद्योनंदिप्रियोनादोनादमध्यप्रतिष्ठितः ॥ निष्कलोनिर्मलोनित्योनित्या
नित्योनिरामयः १ परंव्योमपरंधामपरमात्मापरंपदम् ॥ परात्परःपशुपतिःपशुपाशविमोचकः २ पूर्णानंदःपरानंदःपुराणपुरुषोत्तमः ॥ पद्मप्रसन्ननयनःप्रण
ताज्ञानमोचनः ३ प्रमाणप्रत्ययातीतःप्रणतार्तिनिवारणः ॥ फलहस्तःफणिपतिःफेत्कारःफाणितप्रियः ४ बाणार्चितांघ्रियुगलोबालकेलिकुतूहली ॥ ब्रह्मब्र
ह्मार्चितपदोब्रह्मचारीबृहस्पतिः ५ बृहत्तमोब्रह्मपरोब्रह्मण्योब्रह्मवित्प्रियः ॥ बृहन्नादाग्र्यचीत्कारोब्रह्मांडावलिमेखलः ६ भ्रूक्षेपदत्तलक्ष्मीकोभर्गोभद्रोभ
यापहः ॥ भगवान्भक्तिसुलभोभूतिदोभूतिभूषणः ७ भव्योभूतालयोभोगदाताभ्रूमध्यगोचरः ॥ मंत्रोमंत्रपतिर्मंत्रीमदमत्तमनोरमः ८ मेखलावान्मंदगति
र्मतिमत्कमलेक्षणः ॥ महाबलोमहावीर्योमहाप्राणोमहामनाः ९ यज्ञोयज्ञपतिर्यज्ञगोप्तायज्ञफलप्रदः ॥ यशस्करोयोगगम्योयाज्ञिकोयाजकप्रियः ११० रसो
रसप्रियोरस्योरंजकोरावणार्चितः ॥ रक्षोरक्षाकरोरत्नगर्भोराज्यसुखप्रदः ११ लक्ष्यंलक्षप्रदोलक्ष्योलयस्थोलड्डुकप्रियः ॥ लानप्रियोलास्यपरोलाभकृल्लोकवि
श्रुतः १२ वरेण्योवह्निवदनोवंद्योवेदांतगोचरः ॥ विकर्ताविश्वतश्चक्षुर्विधाताविश्वतोमुखः १३ वामदेवोविश्वनेतावज्रिवज्रनिवारणः ॥ विश्वबंधनविष्कंभाधारो
विश्वेश्वरःप्रभुः १४ शब्दब्रह्मशमप्राप्यःशंभुशक्तिगणेश्वरः ॥ शास्ताशिखाग्रनिलयःशरण्यःशिखरीश्वरः १५ षड्ऋतुकुसुमस्रग्वीषडाधारःषडक्षरः ॥ सं
सारवैद्यःसर्वज्ञःसर्वभेषजभेषजम् १६ सृष्टिस्थितिलयक्रीडःसुरकुंजरभेदनः ॥ सिंदूरितमहाकुंभःसदसद्व्यक्तिदायकः १७ साक्षीसमुद्रमथनःस्वसंवेद्यःस्वद
क्षिणः ॥ स्वतंत्रःसत्यसंकल्पःसामगानरतःसुखी १८ हंसोहस्तिपिशाचीशोहवनंहव्य कव्यभुक् ॥ हव्यंहुतप्रियोहर्षोहृल्लेखामंत्रमध्यगः १९ क्षेत्राधि
पःक्षमाभर्ताक्षमापरपरायणम् ॥ क्षिप्रक्षेमकरःक्षेमानंदःक्षोणीसुरद्रुमः १२० धर्मप्रदोर्थदःकामदातासौभाग्यवर्द्धनः ॥ विद्याप्रदोविभवदोभुक्ति
मुक्तिप्रदायकः २१ आभिरूप्यकरोवीरश्रीप्रदोविजयप्रदः ॥ सर्ववश्यकरोगर्भदोषहापुत्रपौत्रदः २२ मेधादःकीर्तिदःशोकहारीदौर्भाग्यनाशनः ॥
श्रीशोकहारीदौर्भाग्यनाशनःसर्वशक्तिभृत् २३ प्रतिवादिमुखस्तंभोरुष्टचित्तप्रसादनः ॥ पराभिचारशमनोदुःखभंजनकारकः २४ लवस्त्रुटिःकलाकाष्ठा
निमेषस्तत्परःक्षणः ॥ घटीमुहूर्तःप्रहरोदिवानक्तमहर्निशम् २५ पक्षोमासोयनंवर्षंयुगंकल्पोमहालयः ॥ राशिस्ताराभतिथिर्योगोवारःकरणमंशकम् २६
लग्नंहोराकालचक्रंमेरुःसप्तर्षयोध्रुवः ॥ राहुर्मंदःकविर्जीवोबुधोभौमःशशीरविः २७ कालःसृष्टिःस्थितिर्विश्वंस्थावरंजंगमंचयत् ॥ भूरापोग्निर्मरुद्व्योमाहंकृ
तिःप्रकृतिःपुमान् २८ ब्रह्माविष्णुःशिवोरुद्रईशःशक्तिःसदाशिवः ॥ त्रिदशाःपितरःसिद्धायक्षारक्षांसिकिन्नराः २९ साध्याविद्याधराभूतामनुष्याःपशवःख

गाः ॥ समुद्राःसरितःशैलाभूतंभव्यंभवोद्भवः १३० सांख्यंपातंजलंयोगःपुराणानिश्रुतिःस्मृतिः ॥ वेदांगानिसदाचारोमीमांसान्यायविस्तरः ३१ आयुर्वेदो धनुर्वेदोगांधर्वंकाव्यनाटकम् ॥ वैखानसंभागवतंसात्वतंपांचरात्रकम् ३२ शैवंपाशुपतंकालमुखंभैरवशासनम् ॥ शाक्तंवैनायकंसौरंजैनमार्हतसंहिता ३३ सदसद्व्यक्तमव्यक्तंसचेतनमचेतनम् ॥ बंधोमोक्षःसुखंभोगोऽयोगःसत्यमणुर्महान् ३४ स्वस्तिहुंफट्स्वधास्वाहाश्रौषड्वौषड्वषण्नमः ॥ ज्ञानंविज्ञानमानं दोबोधःसंविच्छमोयमः ३५ एकएकाक्षराधारएकाक्षरपरायणः ॥ एकाग्रधीरेकवीरएकानेकस्वरूपधृक् ३६ द्विरूपोद्विभुजोद्व्यक्षोद्विरदोद्वीपरक्षकः ॥ द्वैमा तुरोद्विवदनोद्वंद्वातीतोद्वयातिगः ३७ त्रिधामात्रिकरस्त्रेतात्रिवर्गफलदायकः ॥ त्रिगुणात्मात्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः १३८ चतुर्बाहुश्चतु र्दंतश्चतुरात्माचतुर्मुखः ॥ चतुर्विधोपायमयश्चतुर्वर्णाश्रमाश्रयः ३९ चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्त्तकः ॥ चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसंभवः ४० पंचाक्ष रात्मापंचात्मापंचास्यःपंचकृत्यकृत् ॥ पंचाधारःपंचवर्णःपंचाक्षरपरायणः ४१ पंचतालःपंचकरःपंचप्रणवभावितः ॥ पंचब्रह्ममयस्फूर्तिःपंचवारणवा रितः ४२ पंचभक्ष्यप्रियःपंचबाणःपंचशिवात्मकः ॥ षट्कोणपीठःषट्चक्रधामाषड्ग्रंथिभेदकः ४३ षडध्वध्वांतविध्वंसीषडंगुलमहाह्रदः ॥ षण्मुखः षण्मुखभ्राताषट्शक्तिपरिवारितः ४४ षड्वैरिवर्गविध्वंसीषडूर्मिभयभंजनः ॥ षट्तर्कदूरःषट्कर्मनिरतःषड्रसाश्रयः ४५ सप्तपातालचरणःसप्तद्वीपो रुमंडलः ॥ सप्तस्वर्लोकमुकुटःसप्तसप्तिवरप्रदः ४६ सप्तांगराज्यसुखदःसप्तर्षिगणमंडितः ॥ सप्तछंदोनिधिःसप्तहोतासप्तस्वराश्रयः ४७ सप्ताब्धिकेलिकासार सप्तमातृनिषेवितः ॥ सप्तच्छंदोमोदमदःसप्तछंदोमखप्रभुः ४८ अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम् ॥ अष्टांगयोगफलभूरष्टपत्रांबुजासनः ४९ अष्टशक्तिसमृद्ध श्रीरष्टैश्वर्यप्रदायकः ॥ अष्टपीठोपपीठश्रीरष्टमातृसमावृतः १५० अष्टभैरवसेव्योष्टवसुवंद्योष्टमूर्तिभृत् ॥ अष्टचक्रस्फुरन्मूर्त्तिरष्टद्रव्यहविःप्रियः ५१ नवना गासनाध्यासीनवनिध्यनुशासिता ॥ नवद्वारपुराधारोनवद्वारनिकेतनः ५२ नवनारायणस्तुत्योनवदुर्गानिषेवितः ॥ नवनाथमहानाथोनवनागविभूषणः ५३ नवरत्नविचित्रांगोनवशक्तिशिरोधृतः ॥ दशात्मकोदशभुजोदशदिक्पतिवंदितः ५४ दशाध्यायोदशप्राणोदशेंद्रियनियामकः ॥ दशाक्षरमहामंत्रोदशाशा व्यापिविग्रहः ५५ एकादशमहारुद्रैस्तुतएकादशाक्षरः ॥ द्वादशोद्दंडदोर्दंडोद्वादशांतनिकेतनः ॥ त्रयोदशभिदाभिन्नविश्वेदेवाधिदैवतम् ॥ चतुर्दशेंद्रवरद श्चतुर्दशमनुप्रभुः ५७ चतुर्दशादिविद्याढ्यश्चतुर्दशजगत्प्रभुः ॥ सामपंचदशःपंचदशीशीतांशुनिर्मलः ५८ षोडशाधारनिलयःषोडशस्वरमातृकः ॥ षोडशांतपदावासःषोडशेंदुकलात्मकः ५९ कलासप्तदशीसप्तदशःसप्तदशाक्षरः ॥ अष्टादशद्वीपपतिरष्टादशपुराणकृत् १६० अष्टादशौषधीसृष्टिरष्टादशविधि स्मृतः ॥ अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ६१ एकविंशःपुमानेकविंशत्यंगुलिपल्लवः ॥ चतुर्विंशतितत्वात्मापंचविंशाख्यपूरुषः ६२ सप्तविंशतिता रेशःसप्तविंशतियोगकृत् ॥ द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः ६३ षट्त्रिंशत्तत्वसंभूतिरष्टत्रिंशत्कलातनुः ॥ नमदेकोनपंचाशन्मरुद्वर्गोनिरर्गलः ६४

पंचाशदक्षरश्रेणीःपंचाशद्रुद्रविग्रहः ॥ पंचाशद्विष्णुशक्तीशःपंचाशन्मातृकालयः ६५ द्विपंचाशद्वपुःश्रेणीत्रिषष्ठ्यक्षरसंश्रयः ॥ चतुःषष्ट्यर्णनिर्णेताचतुःषष्टिकलानिधिः ६६ चतुःषष्टिमहासिद्धयोगिनीवृंदवंदितः ॥ अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनः ६७ चतुर्नवतिमंत्रात्माषण्णवत्यधिकःप्रभुः ॥ शतानंदःशतधृतिःशतपत्रायतेक्षणः ६८ शतानीकःशतमखःशतधारवरायुधः ॥ सहस्रपत्रनिलयःसहस्रफणभूषणः ६९ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सहस्रनामसंस्तुत्यःसहस्राक्षबलापहः १७० दशसाहस्रफणिभृत्फणिराजकृतासनः ॥ अष्टाशीतिसहस्रौघमहर्षिस्तोत्रयंत्रितः ७१ लक्षाधीशप्रियाधारोलक्षाधीशमनोमयः ॥ चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशितः ७२ चतुराशीतिलक्षाणांजीवानांदेहसंस्थितः ॥ कोटिसूर्यप्रतीकाशःकोटिचंद्रांशुनिर्मलः ७३ शिवाभवाध्युष्टकोटिविनायकधुरंधरः ॥ सप्तकोटिमहामंत्रमंत्रितावयवद्युतिः ७४ त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ॥ अनंतदेवतासेव्योह्यनंतमुनिसंस्तुतः ७५ अनंतनामानंतश्रीरनंतानंतसौख्यदः ॥ ॐइतिवैनायकंनाम्नांसहस्रमिदमीरितम् ७६ इदंब्राह्मेमुहूर्तेयःपठेत्प्रत्यहंनरः ॥ करस्थंतस्यसकलमैहिकामुष्मिकंसुखम् ७७ आयुरारोग्यमैश्वर्यंधर्मःशौर्यंबलंयशः ॥ मेधाप्रज्ञाधृतिःकांतिःसौभाग्यमतिरूपता ७८ सत्यंदयाक्षमाशांतिर्दाक्षिण्यंधर्मशीलता ॥ जगत्संयमनंविश्वसंवादोवादपाटवम् ७९ सभापांडित्यमौदार्यंगांभीर्यंब्रह्मवर्चसम् ॥ औन्नत्यंचकुलंशीलंप्रतापोवीर्यमार्यता १८० ज्ञानंविज्ञानमास्तिक्यंधैर्यंविश्वातिशायिता ॥ धनधान्याभिवृद्धिश्चसकृदस्यजपाद्भवेत् ८१ वश्यंचतुर्विधंनृणांजपादस्यप्रजायते ॥ राज्ञोराजकलत्रस्यराजपुत्रस्यमंत्रिणः ८२ जप्यतेयस्यवश्यार्थेसदासस्तस्यजायते ॥ धर्मार्थकाममोक्षाणामनायासेनसाधनम् ८३ शाकिनीडाकिनीरक्षोयक्षोरगभयापहम् ॥ साम्राज्यसुखदंचैवसमस्तरिपुमर्दनम् ८४ समस्तकलहध्वंसिदग्धबीजप्ररोहणम् ॥ दुःस्वप्नशमनंक्रुद्धस्वामिचित्तप्रसादनम् ८५ षट्कर्माष्टमहासिद्धित्रिकालज्ञानसाधनम् ॥ परकृत्योपशमनंपरचक्रविमर्दनम् ८६ संग्रामरंगेसर्वेषामिदमेकंजयावहम् ॥ सर्ववंध्यात्वदोषघ्नंगर्भरक्षैककारणम् ८७ पठ्यतेप्रत्यहंयत्रस्तोत्रंगणपतेरिदम् ॥ देशेतत्रनदुर्भिक्षमीतयोदुरितानिच ८८ नतद्गेहंजहातिश्रीर्यत्रायंजप्यतेस्तवः ॥ क्षयकुष्ठप्रमेहार्शोभगंदरविषूचिकाः ८९ गुल्मंप्लीहानमश्मानमतिसारंमहोदरम् ॥ कासंश्वासमुदावर्तंशूलंशोफादिसंभवम् १९० शिरोरोगंवमिंहिक्कांगंडमालामरोचकम् ॥ वातपित्तकफद्वंद्वत्रिदोषजनितज्वरम् ९१ आगंतुविषमंशीतमुष्णंचैकाहिकादिकम् ॥ इत्याद्युक्तमनुक्तंवारोगंदोषादिसंभवम् ९२ सर्वंप्रशमयत्याशुस्तोत्रस्यास्यसकृज्जपः ॥ प्राप्यतेस्यजपात्सिद्धिःस्त्रीशूद्रपतितैःसकृत् ९३ सहस्रनाममंत्रोयंजपतव्यःशुभाप्तये ॥ महागणपतेःस्तोत्रंसकामःप्रजपन्निदम् ९४ इच्छयासकलान्भोगानुपभुज्येहपार्थिवान् ॥ मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ९५ चंद्रेंद्रभास्करोपेंद्रब्रह्मरुद्रादिसद्मसु ॥ कामरूपःकामगतिःकामतोविचरन्निह ९६ भुक्त्वायथेप्सितान्भोगानभीष्टैःसहबंधुभिः ॥ गणेशा

१ वल्मीकम् इ० पा० । २ काम ईश्वर ई० पा० ।

नुचरोभूत्वामहागणपतेःप्रियः १७ नंदीश्वरादिसानंदीनंदितःसकलैर्गणैः ॥ शिवाभ्यांकृपयापुत्रानीर्विशेषंचलालितः १८ शिवभक्तःपूर्णकामोगणेश्वरवरात्
पुनः ॥ जातिस्मरोधर्मपरःसार्वभौमोभिजायते १९ निष्कामस्तुजपन्नित्यंभक्त्याविघ्नेशतत्परः ॥ योगसिद्धिंपरांप्राप्यज्ञानवैराग्यसंस्थितः २०० निरंतरोदि
तानंदेपरमानंदसंविदि ॥ विश्वोत्तीर्णेपरेपारेपुनरावृत्तिवर्जिते १ लीनोवैनायकेधाम्निरमतेनित्यनिर्वृतः ॥ योनामभिर्हुतैर्दत्तैरर्चयेत्पूजयेन्नरः २ राजानोवश्य
तांयांतिरिपवोयांतिदासताम् ॥ मंत्राःसिद्ध्यंतिसर्वेपिसुलभास्तस्यसिद्धयः २०३ मूलमंत्रादपिस्तोत्रमिदंप्रियतरंमम ॥ नभस्येमासिशुक्लायांचतु
र्थ्यांममजन्मनि २०४ दूर्वाभिर्नामभिःपूजांतर्पणंविधिवच्चरेत् ॥ अष्टद्रव्यैर्विशेषेणजुहुयाद्भक्तिसंयुतः २०५ तस्येप्सितानिसर्वाणिसिद्ध्यंत्यत्रनसंशयः ॥
इदंप्रजप्तंपठितंपाठितंश्रावितंश्रुतम् २०६ व्याकृतंचर्चितंध्यातंविमृष्टमभिनंदितम् ॥ इहामुत्रचसर्वेषांविश्वैश्वर्यप्रदायकम् २०७ स्वच्छंदचारिणाप्येषये
नसंधार्यतेस्तवः ॥ संरक्ष्यतेशिवोद्भूतैर्गणैरध्युष्टकोटिभिः २०८ पुस्तकेलिखितंस्तोत्रंमंत्रभूतंप्रपूजयेत् ॥ तत्रसर्वोत्तमालक्ष्मीःसन्निधत्तेनिरंतरम् २०९ दानै
रशेषैरखिलैर्व्रतैश्चतीर्थैरशेषैःसकलैर्मखैश्च ॥ नतत्फलंविंदतियद्गणेशसहस्रनाम्नांस्मरणेनसद्यः २१० एतन्नाम्नांसहस्रंपठतिदिनमणौप्रत्यहंप्रोज्जिहानेसायंम
ध्यंदिनेवात्रिषवणमथवासंततंवाजनोयः ॥ सस्यादैश्वर्यधुर्यःप्रभवतिवचसांकीर्तिमुच्चैस्तनोतिप्रत्यूहंहंतिविश्वंवशयतिसुचिरंवर्धतेपुत्रपौत्रैः ११ अकिंचनोप्ये
कचित्तोनियतोनियताशनः ॥ जपेत्तुचतुरोमासान्गणेशार्चनतत्परः १२ दरिद्रतांसमुन्मूल्यसप्तजन्मानुगामपि ॥ लभतेमहतींलक्ष्मीमित्याज्ञापारमेश्वरी १३
आयुष्यंवीतरोगंकुलमतिविमलंसंपदश्चार्त्तदानाःकीर्तिर्नित्यावदाताभणतिरभिनवाकांतिरव्याजभव्या ॥ पुत्राःसंतःकलत्रंगुणवदभिमतंयद्यदेतच्चसत्यंनि
त्यंयःस्तोत्रमेतत्पठतिगणपतेस्तस्यहस्तेसमस्तम् १४ ॐगणंजयोगणपतिर्हेरंबोधरणीधरः ॥ महागणपतिर्लक्षप्रदःक्षिप्रप्रसादनः १५ अमोघसिद्धिरमि
तोमंत्रश्चिंतामणिर्निधिः ॥ सुमंगलोबीजमाशापूरकोवरदःशिवः १६ काश्यपोनंदनोवाचासिद्धोढुंढिर्विनायकः ॥ मोदकैरेभिरत्रैकविंशत्यानामभिःपुमा
न् १९ उपायनंददेद्भक्त्यामत्प्रसादंचिकीर्षति ॥ वत्सरंविघ्नराजस्यतथ्यमिष्टार्थसिद्धये १८ यःस्तौतिमद्गतमनाममाराधनतत्परः ॥ स्तुतोनाम्नांसहस्रेणते
नाहंनात्रसंशयः १८ नमोनमःसुरवरपूजितांघ्रयेनमोनमोनिरुपममंगलात्मने ॥ नमोनमोविपुलकरैकसिद्धयेनमोनमःकरिकलभाननायते २० गणपाजेश
हेरंबद्वैमातुरगजानन ॥ भालेंदोधूमकेतोनोलंबोदरविनायक २१ ब्रह्मैकदन्तविघ्नेशविष्णोकपिलनिर्गुण ॥ कालाद्यसिद्धिदानंतत्राहिमांभवसागरात् २२ किंकि
णीगणरणितस्तवचरणःप्रकटितगुरुमितिचारित्रगणः ॥ मदजललहरीकरितकपोलःशमयतुदुरीतंगणपतिनृपनामा २३ ॥ ॥ इतिश्रीमदादिगणेशपुराणे
उपासनाखंडेईश्वरगणेशसंवादेगणेशसहस्रनामकथनंनामषट्चत्वारिंशोध्यायः ४६ ॥ व्यासउवाच ॥ नाम्नांसहस्रेसंप्राप्तेप्रसन्नेचगजानने ॥ ततःकिम

१ दारिद्र्यंहंतिविश्वम् इतिपाठान्तरम् । २ कलइतिपाठान्तरम् ।

करोतब्रह्मन्हरस्ततकथयस्वमे १ ॥ ॥ ब्रह्मोवाच ॥ ॥ गणेशवरदानेननाम्नांचैवोपदेशतः ॥ प्रहृष्टःशंकरोनृत्यञ्जगर्जचमहास्वनः २ आहूयस्व
गणान्देवान्युद्धावसरमादिशत् ॥ तेचहर्षेणमहतायुद्धेवाःशिवांतिकम् ३ ब्रह्माकुबेरोथपुरंदरोग्निर्वायुश्चसोमोवरुणोर्यमाच ॥ गंधर्वयक्षाग्र
हकिन्नराश्चसर्वेनमस्कृत्यशिवंस्तुवंतः ४ ॥ ॥ देवाऊचुः ॥ ॥ महादेवजगन्नाथजगदानंददायक ॥ त्वयाहतंमहादैत्यंकदाद्रक्ष्यामहेवयम् ५ स्था
नभ्रष्टावयंतेनकृताविश्वविघातिना ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंदेववचःश्रुत्वापिनाकीनिर्ययौमुदा ६ गणेशंमनसाध्यायन्युद्धायकृतनिश्चयः ॥ वेगेनभ
वनंप्राप्यदेवगंधर्वसंयुतः ७ तावच्चदैत्यंचारैस्तुवृत्तांतःसन्निरूपितः ॥ आगतःसुरसैन्येनयुद्धायगिरिजापतिः ८ तस्यसैन्यान्यनह्यंतशस्त्रैरस्त्रैश्चकंचुकैः ॥ सचदै
त्योमहानादोयुद्धभूषणभूषितः ९ वीराननंदयामासवासःस्रग्भूषणैर्धनैः ॥ अनेकयानसंस्थेषुयोद्धृषुत्रिपुरःस्वयम् ॥ आरुरोहमहादैत्योनादयन्विदिशोदिशः ॥
ततोयुद्धंसमभवत्सेनयोरुभयोर्महत् ११ शस्त्रैर्नानाविधैर्बाणैर्मर्मभेदिभिरायसैः ॥ असृङ्नदीप्रवाहोभून्मार्गरोधनकारकः १२ शस्त्राहताबभुर्योधाःपुष्पि
ताःकिंशुकाइव ॥ केचिच्चद्दढवैरेणजीवग्राहममारयन् १३ केचित्कचेषुधृत्वैवशिरांसिचिच्छिदुर्बलात् ॥ धावतांरथिवीराणामश्वानांकरिणामपि १४ अं
घ्रिपातभवोरेणुर्व्यानशेरोदसीक्षणात् ॥ अंधकोरघोरतरेनप्राज्ञायतकिंचन १५ चक्रुरेवंतदायुद्धंवीरानानाविधाभृशम् ॥ जीवितोशांपरित्यज्यमर्त्येव्येकतनि
श्चयाः १६ अदृश्यंतमृतादेवागतेरजसिवायुना ॥ विद्रुतेसुरसैन्येचदैत्यसैन्येचहर्षिते १७ आययौसमरश्लाघीवज्रहस्तःपुरंदरः ॥ शतकोटिंनिरीक्ष्यै
वदुद्रुवुर्दैत्यदानवाः १८ सवज्रपातैरसुरांश्चूर्णयामासवज्रभृत् ॥ तत्त्यजुर्जीवितंतेतुचंडवज्रप्रहारतः १९ केचिच्चभग्नचरणाःकेचिद्भग्नशिरोधराः ॥ केचिद्विदीर्ण
जठराश्छिन्नस्कंधभुजाःपरे २० छिन्नाश्वानांचवीराणांवाजिनांरथिनांतथा ॥ केषांचिदुरवोभिन्नाजंघासुचहताःपरे २१ छिन्नगुल्फाःपरेपेतुर्मिषात्पेतुरथापरे ॥
निहतानामसृक्पातैर्जज्ञिरेनिम्नगाबहु २२ उत्साहवर्द्धनास्तेषांवीराणांजयकांक्षिणाम् ॥ ततःशनैर्गर्जमानोददर्शात्रिपुरासुरः २३ निहतंबहुधासैन्यंशक्रंयोद्धु
मथाययौ ॥ बभाणशक्रंदृष्ट्वैवाकिमर्थंमर्त्तुमिच्छासि २४ अपैहियुद्धाज्जीवंस्त्वंनपृष्ठंहन्मिवासव ॥ कातेशक्तिर्मयायुद्धंकर्त्तुंतवशचीपते २५ अजःसिंहेनकिंयुद्धं
करिष्यतिवदस्वमे ॥ एहियुध्यस्वशक्तिश्चेन्नोचेद्गच्छयथासुखम् २६ एवमुक्तेस्थितेशक्रेववर्षसायकान्बहून् ॥ सज्यंकृत्वाधनुर्दैत्योदेवसेनामताडयत् २७
एकस्मान्मंत्रिताद्बाणादसंख्याताययुःशराः ॥ मूर्द्धतोदेवगंधर्वान्रोदसीसमपूरयन् २८ अंधकारंपुनरभूत्बाणजालैर्निरंतरम् ॥ तद्बाणैरर्पितेदेवाव्यंगाःपेतुर्ध
रातले २९ बलहान्यपतद्भूमौप्रहारवरपीडितः ॥ सर्वेषुदेववर्येषुमूर्छितेषुमहेश्वरः ३० श्लाघंतंबहुगर्जंतंयुध्यंतंनाभ्यरोचयत् ॥ मनसापूजयच्छंभुस्तस्यदैत्यस्य
पौरुषम् ३१ एतस्मिन्नंतरेतत्रनारदोद्रष्टुमाययौ ॥ पूजितःप्रावदच्छंभुंशृणुष्वनीललोहित ३२ ॥ ॥ नारदउवाच ॥ ॥ त्वयाचिंतानकर्तव्यात्रिपुरस्यवधं
प्रति ॥ वक्ष्येतस्यवधोपायंतंकुरुष्वमहेश्वर ३३ तेनपूर्वंतपोकारिदुष्करंब्रह्मणोपिहि ॥ आराधितोगणपतिःसतस्मैसर्ववांछितम् ३४ यद्यत्तेनब्र

तंदेवोदत्तवानविचारतम् ॥ पुरत्रयंकामगममेकबाणाश्रितंमहत् ३५ मरुद्गतिविहीनंतदभेद्यंसर्वनिर्जरैः ॥ सएवमुक्तवान्गुह्यंशरेणैकेनयस्तव ३६ पुरत्रयंभेत्स्यतेतेतस्मान्मृत्युमवाप्स्यसि ॥ एवमुक्त्वागतेतस्मिन्नारदेमुनिसत्तमे ३७ मूर्छितान्विबुधान्शर्वःसावधानमथाकरोत् ॥ सस्मारंभमुखंवा कथंस्मारितोनारदेनतु ॥ ३८ ॥ महाप्रयत्नमारेभेदैत्यराजवधायसः ॥ तेजसासर्वनाशायशक्तोदेवोनिजेच्छया ॥ ३९ ॥ रथंकुरूपंशशिसूर्यचक्रंयं तारमिंदीवरजंचकार ॥ धनुर्गिरींद्रंशरमच्युतंसधुर्याश्विनेयावयुनग्दिरीशः ४० आचम्यदेवंमनसाविचिंत्यतेनोपदिष्टंचजजापनाम्नाम् ॥ सहस्रमेकाक्ष रमंत्रयुक्तममंत्रयत्तेनपिनाकमुग्रम् ४१ अमंत्रयन्महाबाणंविष्णुरूपंयदाशिवः ॥ चकंपेधरणीशेषोवनानिगिरयोपिच ४२ बभ्रमुःखगणाःसर्वेचुकूजुश्चमहारवान् ॥ शब्देनाजगवस्यापिविभ्रांताःसुरमानुषाः ४३ अमुंचतंयदाबाणंतदादग्धंनमस्तलम् ॥ भूमंडलंसपातालंज्वालामालाभिरंजसा ४४ दृष्ट्वापपालदैत्येंद्रःससैन्यःपुरसंश्रयः ॥ जवेनागाच्छरःसोप्यदहद्दैत्यपुरत्रयम् ४५ दैत्यदेहगतंतेजोभर्गदेहेलयंययौ ॥ पश्यतांसर्वसैन्यानांदैत्यदानवरक्षसाम् ४६ ततोंतरिक्षेवागासीन्मुक्तोदैत्यःशिवाहतः ॥ ततस्तेतुष्टुवुर्देवामुनयोपित्रिलोचनम् ४७ जगुर्गंधर्वनिचयाश्चारणाःश्रुतितत्पराः ॥ ननृतुश्चाप्सरःसंघाःकिन्नरावाद्यवादकाः ४८ मुमुचुःपुष्पवर्षाणिनारदाद्याःसुरर्षयः ॥ ययुःशिवाज्ञयादेवाःस्वंस्वंस्थानंनिराधयः ४९ नमस्कृत्यमहेशानंत्रिपुरासुरघातिनम् ॥ मुनयोपिनिरुद्वेगाःस्वस्वानुष्ठानतत्पराः ५० आसंस्तस्मिन्हतेदैत्येवेदवेदांगशालिनः ॥ अग्निहोत्राणियज्ञांश्चदानानिचव्रतानिच ५१ चक्रुःसर्वजनाभूमौपुनरुत्साहसंयुताः ॥ शैलादिगणपस्कंदैःसर्वैःपारिषदैरपि५२कृतावनामरुयक्षोपिविभज्यतंमहारथम् ॥ जयशब्दैःस्तूर्यशब्दैर्देवदुंदुभिनिस्वनैः५३अलंकृतंशैलराजंकैलासंमुदितोययौ ॥ त्रिपुरारिरितिस्पष्टंततोनामास्यपप्रथे ५४ एवंमहागणपतेर्मंत्रसामर्थ्यमीरितम् ॥ सहस्रनाम्नामपिचप्रभावोयंनिरूपितः ५५ नविज्ञातोमदन्येनकस्यापिनानिवेदितः ॥ पठनाच्छ्रवणादस्यसर्वकामफलंलभेत् ५६ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेशिवविजयोनामसप्तचत्वारिंशत्तमोध्यायः ४७ ॥ व्यासउवाच ॥ श्रुतंमयामहाख्यानंत्रिपुरस्यवधाश्रयम् ॥ तथापिश्रोतुमिच्छामिक्वस्थिताजगदंबिका १ कथमाविर्बभूवैषातिथौदग्धःक्वदैत्यराट् ॥ एतत्सर्वंसविस्तारंकथयस्वपितामह २ ॥ ब्रह्मोवाच ॥ बाहुलेपौर्णमास्यांससायंदग्धोमहासुरः ॥ दिवायुद्धंमहाघोरंप्रागेववर्णितंहितत् ॥ ३ यतोर्चितःसुरैःसर्वैर्जयशालीसुरारिहा ॥ अतस्तस्यांदीपदानंकुर्वंतिभुविमानवाः ४ तस्यांस्नानंचदानंचजपहोमादिकंचयत् ॥ बहुलंजायते यस्मात्तस्मात्साबाहुलीस्मृता ५ तस्यांयेतुनकुर्वंतित्रिपुरारिमहोत्सवम् ॥ नलभंतेजयंक्वापिदग्धपुण्याभवंतिते ६ अतस्तस्यांपौर्णमास्यांप्रातरर्चंतियेशिवम् ॥ निशियत्तैःकृतंपापंविलयंप्रतिपद्यते ७ आजन्मतःकृतंपापंमध्याह्नार्चनतस्तथा ॥ सप्तजन्मार्जितंपापंप्रदोषार्चनतोमुने ८ आविर्भावंशिवायास्त्वंकथ्यमानंमयाशृणु ॥ तस्यमृत्युंशिवाज्ज्ञात्वाभयादंतर्हिताशिवा ९ आविरासीज्जगन्मातााहिमाचलगुहामुखात् ॥ द

दर्शपर्वतंघोरंसिंहव्याघ्रमृगाकुलम् १० अपश्यंतीशिवंसातुविरहाकुलमानसा ॥ विललापभृशंभीताहातातहाशिवेतिच ११ कथंमांनाविजा
नीषेसर्वज्ञःसन्सदाशिव ॥ वनएकाकिनींघोरेकंदंतींकुररीमिव १२ कदामेदर्शनंतेस्यात्किंमांविस्मृतवानसि ॥ शक्तानजीवितंधर्तुंसोढुंवाविर
हंहर १३ तावत्त्वमपिकुत्रासिनमेशोकंशृणोषिकिम् ॥ त्वांविनाशरणंकंवायामिकिंवाकरोम्यहम् १४ योजयस्वपुनर्मांत्वंशिवेनचाशिवेनच ॥
इदानींपुनरुत्पन्नांजानीहिजठरात्तव १५ वरंतमेवशीघ्रंमेगवेषयसदाशिवम् ॥ नोचेद्देहपरित्यागंभृगोरस्मात्करोम्यहम् १६ ॥ कउवाच ॥ एवंरुदंत्यास्त
स्यास्तुश्रुत्वातांगिरमुत्तमाम् ॥ न्यवेदयद्धिमवतेकश्चिदागत्यधीवरः १७ ॥ ॥ धीवरउवाच ॥ काचिन्निर्तांबिनीबालासर्वाभरणभूषिता ॥ ताटंकेबि
भ्रतीश्रुत्योर्मंडलेइवभास्वतः १८ नानारत्नलसद्दीप्तिमुकुटंमस्तकेभृशम् ॥ ललाटेतुचतुष्कोणंमुक्तापोडशशोभितम् १९ पुष्पंकांचनरत्ना
ढ्यंमुक्तादामविलंबितम् ॥ सीमंतांतर्गतंचारुनासिकेस्वर्णमौक्तिकम् २० अंगदेचारुणीबाह्वोर्हस्तयोर्वलयानिच ॥ लसत्कांचनरत्नाढ्यंप्रत्येकमं
गुलीयकम् २१ मुक्ताफलमयींमालांलसत्कंचुकसंश्रिताम् ॥ हेमरत्नमयींकांचींकटीक्षौमावृतेशुभाम् २२ गुल्फयोःशृंखलेहैमेसिंजद्वा
रुसुनूपुरे ॥ पादांगुलीष्वपिपृथक्तत्तद्भूषणमुत्तमं २३ एवंसर्वानवद्यांगीरुदतीविह्वलाभृशम् ॥ दृष्टापृष्टनमांवक्तिगृण्हातिसातवाभिधाम् २४ ॥
॥ ब्रह्मोवाच ॥ ॥ इत्थंनिशम्यहिमवांस्त्वरितस्तांसुतांययौ ॥ सांत्वयन्हेतुगर्भाभिर्वाग्भिस्तामवदत्सुधीः २५ ॥ ॥ हिमवानुवाच ॥ ॥ किम
र्थंशोचसेसुभ्रूसृष्टिस्थित्यंतहेतुके ॥ सर्वलक्षणसंपूर्णेसर्वशक्तियुतेनघे २६ अकर्त्तुमन्यथाकर्त्तुंकर्त्तुमीशेमहेश्वरि ॥ अवाप्तसर्वकामेचसर्वप्रा
ण्यंतरंगते २७ नवियुक्ताशिवेनत्वंसर्वांतर्यामिणीशुभे ॥ अथापियोजयिष्येत्वांशिवेनाशिवकारिणा २८ उत्तिष्ठेतिगृहीत्वातामाययौनिज
मंदिरम् ॥ ननंदपार्वतीतत्रदृष्ट्वामेनांसुतान्विताम् २९ निश्वासपरमाप्यासीच्छिवंद्रष्टुंसमुत्सुका ॥ उवाचपितरंनत्वासाधूपायंवदस्वमे ३० व्र
तंदानंतपोवापिदुष्करंशिवलब्धये ॥ करिष्येतमहंतातपूर्ववत्तपउत्तमं ३१ ॥ ॥ ब्रह्मोवाच ॥ ॥ अवदज्जनकस्तांतुविचार्यमनसासकृत् ॥ कार्य
सिद्धिकरंशीघ्रमुपायंशृणुतंमुने ३२ ॥ ॥ हिमवानुवाच ॥ शृणुपार्वतिवक्ष्यामिसाधूपायंशिवाप्तये ॥ उपास्तिंविघ्नराजस्यधर्मार्थकाममोक्षदा
म् . ३३ अनुष्ठितांमहेंद्राद्यैर्देवैश्चनारदादिभिः ॥ प्रापाश्वसिद्धयस्तास्ताःशक्रादिपदलक्षणाः ३४ ब्रह्मणःसृष्टिसामर्थ्यंदत्तंतेनमहात्मना ॥ वि
ष्णोश्चावनसामर्थ्यंदत्तंसर्वेश्वरेणह ३५ शिवस्यापिचतेनैवसामर्थ्यंसंहृतौदृढम् ॥ शेषस्यापिचतेनैवसर्वविघ्नहरेणच ३६ धराधरणसामर्थ्यंदत्तंसर्वेश्व
रेणह ॥ यस्यस्वरूपंनविदुर्ब्रह्माद्यामुनयोपिच ३७ वाचामगोचरोयोसौमनसोथाप्यगोचरः ॥ गजाननस्वरूपेणपरिदृश्योयमीश्वरः ३८ अतस्तेनैव
रूपेणसर्वारंभेषुपूज्यते ॥ तमुपास्वसर्वेशंमयाप्रोक्तेनवर्त्मना ३९ ॥ इतिश्रीग०पु०उपा०अंबाविर्भाव०अष्टचत्वारिंशत्तमोध्यायः ॥ ४८ ॥ ॥ पार्व

त्युवाच ॥ ॥ दयानिधेगिरींद्रत्वंपितर्मेवदसत्वरम् ॥ उपासनांगणेशस्यसर्वेशस्यजगद्गुरोः १ ययाशिवंसमभ्येत्यशिवंप्राप्स्यामिशाश्वतं ॥ मर्त्यलोकेपि
लोकानामुपकारोभविष्यति ॥ २ ॥ ॥ हिमवानुवाच ॥ ॥ तवस्नेहवशाद्देविरहस्यंपरमंशुभं ॥ लोकानांचोपकारायवक्ष्येशृण्वेकचेतसा ॥
३ प्रत्यूषकालउत्थायनैर्ऋतींदिशमाव्रजेत् ॥ आच्छाद्यधरणींपूर्वंतृणकाष्ठदलैरपि ४ उर्वरांवर्जयेत्तिष्ठन्नुत्सर्पन्नचबुद्धिमान् ॥ त्यक्त्वामूत्रपुरीषेतुयथो
क्तंशौचमाचरेत् ५ दंतजिह्वाविशुद्धिंचकृत्वास्नातुंततोव्रजेत् ॥ नदींतडागंवापींवासरःकूपमथापिवा ६ कृत्वापूर्वंमलस्नानंमंत्रस्नानंततश्च
रेत् ॥ मृदावाचंदनेनापितिलकंकुंकुमेनवा ७ कुर्याद्धौतेवाससीवापरिधायशुभासने ॥ उपविश्यैकचित्तस्तुसर्वंनित्यंसमाप्यच ८ मृत्तिकांसुंदरां
स्निग्धांक्षुद्रपाषाणवर्जिताम् ॥ सुविशुद्धामवल्मीकांजलसिक्तांविमर्दयेत् ९ कृत्वाचारुतरांमूर्तिंगणेशस्यशुभांस्वयम् ॥ सर्वावयवसंपूर्णांचतुर्भुजविरा
जिताम् १० परश्वादिस्वायुधानिदधतींसुंदरांघनाम् ॥ स्थाप्यपीठेततःपाणीप्रक्षाल्यमेलयेत्सुधीः ११ पूजाद्रव्याणिसर्वाणिजलादीनिप्रयत्नतः ॥
अष्टगंधानक्षतांश्चरक्तपुष्पाणिगुग्गुलम् १२ त्रिपंचसप्तभिःपत्रैर्युतान्दूर्वांकुरांच्छुभान् ॥ अष्टोत्तरशतंनीलान्श्वेतानानीयसुंदरान् १३ घृतदीपंतैल
दीपंनैवेद्यंविविधंशुभम् ॥ मोदकापूपलड्डूकान्पायसंशर्करायुतम् १४ सूक्ष्मंचतंदुलान्नंचव्यंजनानिबहूनिच ॥ सचंद्रपूगचूर्णाढ्यंखाद्यखादिरसंयुतं
१५ एलालवंगसंमिश्रंतांबूलंकेसरान्वितम् ॥ जंब्वाम्रपनसादीनिद्राक्षारंभाफलानिच १६ तत्तदृतुभवानीशेनालिकेराणिचानयेत् ॥ बहुप्रकारमार्तिक्यंकांच
नींदक्षिणांतथा १७ एवंसंभृतसंभारएकांतस्थलमास्थितः ॥ चैलाजिनेकुशमयेआसनेचकृतासनः १८ भूतशुद्धिंप्रकुर्वीतप्राणानांस्थापनंतथा ॥ दिग्बंधपूर्वंदे
वांश्चगणेशादीन्नमेत्पुरा १९ अंतर्बहिर्मातृकाश्चन्यसेदागममार्गतः ॥ सन्निधानादिकामुद्रादर्शयेद्गुरुमार्गतः ॥ मंत्रन्यासंततःकृत्वाषडंगंन्यासमेवच २० पूजाद्रव्या
णिसंशोध्यततोध्यायेद्गजाननम् ॥ एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजम् २१ पाशांकुशधरंदेवंमोदकान्बिभ्रतंकरैः ॥ रक्तपुष्पमयींमालांकंठेहस्तेपरांशुभाम् २२ भ
क्तानांवरदंसिद्धिबुद्धिभ्यांसेवितंसदा ॥ सिद्धिबुद्धिप्रदंनृणांधर्मार्थकाममोक्षदम् ॥ ब्रह्मरुद्रहरींद्राद्यैःसंस्तुतंपरमर्षिभिः २३ आगच्छजगदाधारसुरासुरवरार्चित॥
अनाथनाथसर्वज्ञगीर्वाणपरिपूजित २४ स्वर्णसिंहासनंदिव्यंनानारत्नसमन्वितम् ॥ समर्पितंमयादेवतत्रत्वंसमुपाविश २५ देवदेवेशसर्वेशसर्वतीर्थाहृतंजलम् ॥
पाद्यंगृहाणगणपगंधपुष्पाक्षतैर्युतम् २६ प्रवालमुक्ताफलपूगरत्नतांबूलजांबूनदमष्टगंधम् ॥ पुष्पाक्षतायुक्तममोघशक्तेदत्तंमयार्घ्यंसफलीकुरुष्व २७ गंगादिसर्व
तीर्थेभ्यःप्रार्थितंतोयमुत्तमम् ॥ कर्पूरैलालवंगादिवासितंस्वीकुरुप्रभो २८ चंपकाशोकबकुलमालतीमोगरादिभिः ॥ वासितंस्निग्धताहेतुतैलंचारुप्रगृह्यतां २९
कामधेनुसमद्भूतंसर्वेषांजीवनंपरम् ॥ पावनंयज्ञहेतुस्तेपयःस्नानार्थमर्पितम् ३० धेनुदुग्धसमुद्भूतंशुद्धंसर्वजनप्रियम् ॥ मयानीतंदधिवरंस्नानार्थंप्रतिगृह्यतां ३१
नवनीतसमुत्पन्नंसर्वसंतोषकारणम् ॥ यज्ञांगंदेवताहारोघृतंस्नातुंसमर्पितम् ३२ पुष्पसारचसंभूतंसर्वतेजोविवर्धनम् ॥ सर्वपुष्टिकरंदेवमधुस्नानार्थमर्पितम् ३३

इक्षुसारसमुद्भूतांशर्करांसुमनोहरां ॥ मलापहारिणींस्नातुंगृहाणत्वंमयार्पितां ३४ सर्वमाधुर्यनाहेतुःस्वादुःसर्वप्रियंकरः॥ पुष्टिकृत्स्नातुमानीतइक्षुसारभवोगुडः
३५ कांस्येकांस्येनपिहितोदधिमध्वाज्यपूरितः ॥ मधुपर्कोमयानीतःपूजार्थंप्रतिगृह्यतां ३६ सर्वतीर्थाहृतंतोयंमयाप्रार्थनयाविभो ॥ सुवासितंगृहाणेदंसम्य
क्स्नातुंसुरेश्वर ३७ रक्तवस्त्रयुगंदेवलोकलज्जानिवारणम् ॥ अनर्घ्यंचातिसूक्ष्मंचगृहाणेदंमयार्पितम् ३८ राजतंब्रह्मसूत्रंचकांचनंरत्नसंयुतम् ॥ भक्त्योपपा
दितंदेवगृहाणपरमेश्वर ३९ अनेकरत्नयुक्तानिभूषणानिबहूनिच ॥ तत्तदंगेकांचनानियोजयामितवाज्ञया ४० अष्टगंधसमायुक्तंरक्तचंदनमुत्तमम् ॥ द्वादशां
गेषुतेदेवलेपयामिकृपांकुरु ४१ रक्तचंदनसंमिश्रांस्तंदुलांस्तिलकोपरि ॥ शोभार्थंसंप्रदास्यामिगृहाणजगदीश्वर ४२ पाटलंकर्णिकारंचबंधूकंरक्तपंकजम् ॥
मोगरंमालतीपुष्पंगृह्यतांपरमेश्वर ४३ नानापंकजपुष्पैश्चग्रथितांपल्लवैरपि ॥ बिल्वपत्रयुतांमालांगृहाणसुमनोहराम् ४४ दशांगंगुग्गुलंधूपंसर्वसौगंध्य
कारकम् ॥ सर्वपापक्षयकरंत्वंगृहाणमयार्पितम् ४५ सर्वज्ञसर्वलोकेशतमोनाशनमुत्तमम् ॥ गृहाणमंगलंदीपंदेवदेवनमोस्तुते ४६ नानापक्वान्नसंयुक्तंपाय
संशर्करान्वितम् ॥ नानाव्यंजनशोभाढ्यंशाल्योदनमनुत्तमम् ४७ दधिदुग्धघृतैर्युक्तंलवंगैलासमन्वितम् ॥ मरीचिचूर्णसहितंक्वथिकावटकान्वितम् ४८
राजिकाधान्यसंयुक्तंमेथीपिष्टंसतक्रकम् ॥ हिंगुजीरककूष्मांडमरीचिमाषपिष्टकैः ४९ संपादितैःसुपक्वैश्चभर्जितैर्वटकैर्युतम् ॥ मोदकापूपलड्डूकशष्कुलीमंड
कादिभिः ५० पर्पटैरपिसंयुक्तंनैवेद्यममृतान्वितम् ॥ हरिद्राहिंगुलवणसहितंसूपमुत्तमम् ५१ ससामुद्रंगृहाणेदंभोजनंकुरुसादरम् ॥ सुवासितकारकंतोयंसुगं
धंचपिबेच्छया ५२ त्वयितृप्तेजगत्तृप्तंनित्यतृप्तेमहात्मनि ॥ उत्तरापोशनार्थंतेददामितोयंसुवासितम् ५३ सुखपाणिविशुद्ध्यर्थंपुनस्तोयंददामिते ॥ दाडिमंमधु
रंनिंबुजंब्वाम्रपनसादिकम् ५४ द्राक्षारंभाफलंपक्वंकर्कंधूःखार्जुरंफलम् ॥ नारिकेलंचनारिंगमांजिरंजंबिरंतथा ५५ उर्वारुकंचदेवेशफलान्येतानिगृह्यतां ॥
सुखपाणिविशुद्ध्यर्थंपुनस्तोयंददामिते ५६ गृहाणचंदनंचारुकरांगोद्वर्तनंशुभम् ॥ नानापरिमलद्रव्यैर्निर्मितंचूर्णमुत्तमम् ५७ सुगंधिनामकंपुण्यगंधिचारुप्र
गृह्यतां ॥ चारुशाल्मलसंभूतंवंशसारसमुद्भवम् ५८ सीमंतभूषणंचूर्णंलाक्षारंजितमस्तुते ॥ सचंद्रपूगचूर्णाढ्यंखाद्यखादिरसंयुतम् ५९ एलालवंगसंमिश्रं
तांबूलंकेसरान्वितम् ॥ न्यूनातिरिक्तपूजायाःसंपूर्णफलहेतवे ६० दक्षिणांकांचनींदेवस्थापयामितवाग्रतः ॥ सितपीतैस्तथारक्तैर्जलजैःकुसुमैःशुभैः ॥
६१ ग्रथितांसुंदरांमालांगृहाणपरमेश्वर ॥ हरिताःश्वेतवर्णावापंचत्रिपत्रसंयुताः ६२ दूर्वांकुरामयादत्ताएकविंशतिसंमिताः ॥ एकविंशतिसंख्या
काःकुर्यांदेवप्रदक्षिणाः ६३ पदेपदेतेदेवेशनश्यंतुपातकानिमे ॥ औदुंबरेराजतेवाकांस्येकांचनसंभवे ६४ पात्रेप्रकल्पितान्दीपान्गृहाणचक्षुरर्पका
न् ॥ पंचारार्तिंपंचदीपैर्दीपितांपरमेश्वर ६५ चारुचंद्रनिभंदीपंगृहाणवीचिवारणम् ॥ यथास्यनेक्ष्यतेभस्मतथापापंविनाशय ६६ स्तोत्रैर्नानाविधैः
सूक्तैःसहस्रनामभिस्ततः ॥ उपविश्यस्तुतींतेनंकृत्वास्थिरतरंमनः ६७ दीनाधीशदयानिधेसुरगणैःसंसेव्यमानद्विजब्रह्मेशानमहेंद्रशेषगिरिजागंधर्व

त् ३० ततःसुहृज्जनयुतःस्वयंभुंजीतसादरम् ॥ अपरस्मिन्दिनेमूर्तिंनृयानेस्थापयेन्मुदा ३१ छत्रध्वजपताकाभिश्चामरैरुपशोभिताम् ॥ किशोरैर्दंडयुद्धेनयुध्यद्भि
श्चपुरःसरम् ३२ महाजलाशयंगत्वाविसृज्यतांनिनयेज्जले ॥ वाद्यगीतध्वनियुतोनिजमंदिरमाव्रजेत् ३३ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेहिमवद्गिरिजासं
वादेचतुर्थीव्रतकथनंनामपंचाशत्तमोध्यायः ॥ ५० ॥ पार्वत्युवाच ॥ तववाक्यामृतेनाहंपितःप्रीतास्मिसांप्रम् ॥ परंतुसंशयोमेस्तितंनुदस्वहिमालय १
केनकेनकृतंपूर्वंव्रतमेतन्महीधर ॥ आख्यातंकेनवाकस्मैकःकांसिद्धिमितोगमत् २ एतत्सर्वविस्तरंब्रूहिसंशयच्छेदनायमे ॥ यश्चपृच्छतियोवक्तिगजा
ननकथाःशुभाः ३ शृणोत्यन्योपियोमर्त्यस्त्रयस्तेपुण्यभागिनः ॥ जीवितंसफलंतेषांजन्मज्ञानंचकर्मच ४ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंतयाकृतप्रश्नो
हिमवानभ्यभाषत ॥ वरदस्यगणेशस्यनानाजनकृतंव्रतम् ५ ॥ ॥ हिमवानुवाच ॥ ॥ शृणुपार्वतिवक्ष्यामिसंवादंतेपुरातनम् ॥ सेतिहासंव्रतस्यास्यसर्व
सिद्धिकरस्यह ६ कैलासेगिरिवर्येतुसुखासीनंजगद्गुरुम् ॥ क्रीडमानंमुदादेवैर्गंधर्वैःपरमर्षिभिः ७ नत्वास्तुत्वामहातेजाःपरिपप्रच्छषण्मुखः ८ ॥ स्कंदउ
वाच ॥ देवदेवजगन्नाथभक्तानामभयंकर ॥ नानाख्यानानिदिव्यानिश्रुतानित्वत्प्रसादतः ९ तृप्तिंतातनगच्छामिपायंपायंसुधामिव ॥ अधुनाब्रूहिमेदेव
व्रतंसर्वार्थसिद्धिदम् १० अनुष्ठानेनयस्याथकरस्थाःसिद्धयोनृणाम् ॥ जायंतेसाधकानांतुवरदस्यप्रसादतः ११ ॥ ॥ शिवउवाच ॥ ॥ साधुपृष्टंत्वयास्कंद
सर्वेषांहितकारकम् ॥ कथयामितवप्रीत्यामहासिद्धिप्रदंभुवि १२ विनायकप्रियंतातव्रतानामुत्तमंव्रतम् ॥ सर्वेषांपुरुषार्थानांसाधकंकृत्तिकात्मज १३
विनायज्ञैस्तथादानैर्जपहोमादिभिर्विना ॥ सर्वसिद्धिकरंस्कंदपुत्रपौत्रप्रवर्धनम् १४ राजानंराजपुत्रंवातन्मंत्रिणमथापिवा ॥ वशमानयतिक्षिप्रंव्रतमेतन्म
हत्तमम् १५ महापापोपपापैश्चबहुजन्मसुसंचितैः ॥ व्रतस्यास्यप्रभावेणतैःपुमान्मुच्यतेक्षणात् १६ भाजनंसर्वसिद्धीनांजायतेमानवोभुवि ॥
प्रीतिदंतुगुणेशस्यनानेनसदृशंक्षितौ १७ ॥ ॥ स्कंदउवाच ॥ ॥ तातकस्मिन्भवेन्मासिव्रतमेतन्महोत्तमम् ॥ विधानंकीदृशंचास्यकेनवाचरितंपुरा १८ स
र्वमेतन्ममाचक्ष्वयद्यस्तिकरुणामयि ॥ ॥ शिवउवाच ॥ ॥ नभःशुक्लचतुर्थ्यांतुस्नात्वागुरुगृहंव्रजेत् ॥ प्रणम्यतंगुरुंपश्चात्पूजयित्वायथाविधि १९ पाद्या
चमनवस्त्राद्यैर्भूषणैश्चमहत्तरैः ॥ तोषयित्वातुतंसम्यगाज्ञयाप्रारभेद्व्रतम् २० सर्वसिद्धिकरंतातव्रतंगाणेश्वरंगुरो ॥ त्वमेवश्रीगणेशोसिदिशकामप्रदंप्रभो
२१ उपदिष्टेव्रतेतेनसार्धंगंगातटंव्रजेत् ॥ तडागंवादेवखातंतत्रस्नायाद्यथाविधि २२ श्वेतसर्षपयुक्तेनतिलकल्केनषण्मुख ॥ स्नात्वाधात्रीयुतेनेह
कृत्वानित्यंगृहंव्रजेत् २३ उपविश्यासनेशुद्धेपूजयित्वागणाधिपम् ॥ गुरूपदिष्टमार्गेणव्रतंपश्चात्समारभेत् २४ मृदामूर्तिंगणेशस्यचतुर्थ्यांश्रावणस्य
तु ॥ प्रत्यहंपूजयेत्कृत्वायावद्भाद्रचतुर्थिका २५ ब्रह्मचर्यव्रतेस्थित्वाकर्तव्यंव्रतमुत्तमं ॥ उपवासैकभक्ताभ्यांनक्तेनायाचितेनवा २६ चतुर्थकाले
भुंजीतहविष्यान्नंसमाहितः ॥ अक्षारंमधुरंभुंजन्भक्तिमानाचरेद्व्रतम् २७ जपन्गाणेश्वरींविद्यांषडाननषडक्षरीं ॥ द्विचतुरक्षरांवापितथैवैकाक्षरा

सिद्धैःस्तुत ॥ सर्वारिष्टनिवारणैकनिपुणत्रैलोक्यनाथप्रभोभक्तिंमेसफलांकुरुष्वसकलांक्षांत्वापराधान्मम ६८ इतिमूर्तिंसमभ्यर्च्यदंडवत्प्रणिपत्यच ॥
जपेन्मंत्रंततोदेविसर्वसिद्धिप्रदायक ६९ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेगणेशपार्थिवपूजानिरूपणंनामैकोनपंचाशत्तमोध्यायः ॥ ४९ ॥ ॥ छ ॥
पार्वत्युवाच ॥ ॥ अहंमंत्रंनजानामिगिरींद्रमेवदस्वयं ॥ अनुग्रहंगणेशस्ययामियामिशिवंशिवं १ ॥ ॥ हिमवानुवाच ॥ ॥ मंत्रानानाविधादेविनाना
सिद्धिप्रदायकाः ॥ असंख्यातागणेशस्यकांश्चित्तेषुवदामिते २ कृत्वापद्मासनंसम्यक्नियम्यखानिसर्वशः ॥ कृतन्यासविधिःपश्चाज्जपंकुर्यान्निजे
च्छया ३ एकाक्षरस्यमंत्रस्यलक्षंलक्षार्धमेवच ॥ षडक्षरस्यमंत्रस्यनियुतंचायुतंतथा ४ तथापंचाक्षरस्यापिदशाष्टाक्षरयोरपि ॥ अष्टाविंशद्व
र्णमंत्रोजप्तव्योयुतसंख्यया ५ एवंनानाविधान्मंत्रान्जपंतिस्वेष्टसिद्धये ॥ त्वंतुपार्वतिमेवाक्यंशृणुष्वैकाग्रमानसा ६ एकाक्षरंषडर्णंचगृहा
णमंत्रमुत्तमं ॥ नभःशुक्लचतुर्थ्यांत्वमारंभंकुरुसुव्रते ७ अनुष्ठानंमासमात्रंकुरुकार्यंभविष्यति ॥ शिवंप्राप्स्यसिसुव्यक्तमन्यद्यच्चापिवांछितं ८ पा
र्थिवीपूजितामूर्तिःस्त्रियावापुरुषेणवा ॥ एकाददातिसाकाम्यंधनपुत्रपशूनपि ९ असाध्यंसाधयेन्मर्त्योमूर्तिद्वयप्रपूजनात् ॥ त्रिमूर्तिपूजनाद्राज्यंरत्ना
निसर्वसंपदः १० चतुर्मूर्तेःपूजयेद्योधर्मार्थकाममोक्षभाक् ॥ सार्वभौमोभवेद्राजापंचमूर्तिप्रपूजनात् ११ षण्मूर्तिपूजयास्रष्टिस्थितिप्रलयकृद्भवेत् ॥ सप्ताष्ट
नवमूर्तीनांपूजयासर्वविद्भवेत् १२ भूतंभव्यंभविष्यंचवेत्तिदेवप्रसादतः ॥ त्रयस्त्रिंशत्कोटिदेवावज्रींद्रशिवविष्णवः १३ सनकाद्यामुनिगणाःसेवंतेदशपूजना
त् ॥ एकादशार्चनादेवदशरुद्राधिपोभवेत् १४ द्वादशादित्यराज्यंचलभेच्चद्वादशार्चनात् ॥ अतिसंकटवेलासुकुर्याद्दूर्वाचाप्रपूजनं १५ अष्टोत्तरशतंयावत्तावत्तद
वाप्नुयात् ॥ महामुक्तिमवाप्नोतिलक्षपूजनतोन्वहं १६ कारागृहान्मुक्तिकामःकारयेन्मूर्तिपंचकं ॥ त्रिःसप्तरात्रान्मुच्येतगणेशानुग्रहान्मुने १७ सप्तमूर्तीःप्र
कुर्वीतप्रत्यहंपंचवत्सरं ॥ महापापात्प्रमुच्येतगणेशेभक्तिमान्नरः १८ आजन्ममरणादेकांपूजयेत्पार्थिवींनरः ॥ गणेशःसतुविज्ञेयोदर्शनाद्विघ्ननाशनः १९
तमेवसर्वकामेषुपूजयेन्नगणाधिपं ॥ तस्यैवपूजयाप्रीतोनदेवःस्यात्तथास्वयं २० सर्वरोगप्रपीडासुमूर्तीनांत्रयमुत्तमम् ॥ नवाहंपूजयेद्यस्तुसर्वपीडांव्यपोह
ति २१ सौवर्णीराजतीताम्रीरीतिकांस्यसमुद्भवा ॥ मौक्तिकीचप्रवालीचसर्वमेतत्प्रयच्छति २२ एवंकृतव्रतेदेविसर्वान्कामानवाप्स्यसि ॥ यावद्भाद्रपदेमा
सिचतुर्थीपरिलभ्यते २३ तस्यांमहोत्सवःकार्योयथाविभवमादरात् ॥ रात्रौजागरणंकार्यंतत्कथावाद्यगायनैः २४ प्रभातेविमलेस्नात्वापूर्ववत्पूजयेद्विभुं ॥
गणेशंवरदंदेवंततोहोमंसमारभेत् २५ कुंडेसांगेस्थंडिलेवाहूयाजपदशांशतः ॥ पूर्णाहुतिंततःकुर्याद्बलिदानपुरःसरम् २६ आचार्यंपूजयेत्पश्चाद्गोभूवासोधनादि
भिः ॥ ब्राह्मणांस्तोषयेत्पश्चाद्धोमशेषंसमापयेत् २७ तर्पयेत्तद्दशांशेनतद्दशांशेनभोजयेत् ॥ ब्राह्मणान्वेदविदुषःसपत्नीकांश्चकांश्चन २८ तेभ्योभूषणवासां
सिदद्याच्छक्त्याचदक्षिणां ॥ दद्यात्स्त्रीणामलंकारान्योषिद्भ्यश्चसकंचुकान् २९ तुष्ट्येगणनाथस्यसिद्धिबुद्धियुतस्यह ॥ वित्तशाठ्यंनकुर्वीतयथाविभवमाचरे

मपि २८ दशाक्षरामथस्कंदद्वादशार्णमथापिवा ॥ नियुतंवायुतंवापिप्रत्यहंजपइष्यते २९ तदर्धंवातदर्धंवादशांशंहोममाचरेत् ॥ ध्यायन्गजाननंदेवमहोरा
त्रमतंद्रितः ३० प्राप्तेप्रोष्ठपदेमासिचतुर्थ्यांतुगजाननं ॥ सौवर्णंपलमानेनतदर्धार्धेनवापुनः ३१ मयूरवाहनंकुर्यादथवाखुगतंशुभं ॥ कृत्वामंडपिकांतत्रधा
न्यराशिंप्रकल्पयेत् ३२ सौवर्णंराजतंताम्रंकलशंस्थापयेत्ततः ॥ तस्योपरिन्यसेत्पात्रंरुक्मराजतताम्रकं ३३ वस्त्रयुग्मेनसंवेष्ट्यसपात्रंकलशंततः ॥ पंच
पल्लवसंयुक्तंपंचरत्नसमन्वितं ३४ पीठपूजांपुराकृत्वास्थापयेत्तत्रतंविभुं ॥ मूलमंत्रैश्चवेदोक्तैःपूर्वोक्तैरपिषण्मुख ३५ ध्यात्वागजाननंदेवमावाह्यपरयामु
दा ॥ आसनंचतथापाद्यंदद्यादाचमनीयकं ३६ अर्घ्यंरत्नयुतंस्कंदस्नानंपंचामृतैःशुभं ॥ सुवासिताभिरद्भिश्चस्नापयत्परमश्वरम् ॥ रक्तवस्त्रयुगंदद्यादुपवीतं
तथोत्तमं ३७ नानाविधैराभरणैर्भूषयेत्परमेश्वरं ॥ गंधाक्षतैर्धूपदीपैर्नैवेद्यैर्विविधैरपि ३८ वटकापूपलड्डूकशाल्यन्नपायसादिभिः ॥ पंचामृतैर्व्यंजनै
श्चभोजयेत्परमेश्वरं ३९ उद्वर्तनंकरेदद्यात्फलंतांबूलमेवच ॥ कांचनींदक्षिणांदद्याच्छत्रंव्यजनचामरे ४० नीराजनंमंत्रपुष्पंदत्वास्तोत्राण्युदी
रयेत् ॥ सहस्रनामभिःस्तुत्वाब्राह्मणान्पूजयेत्ततः ४१ रात्रौजागरणंकृत्वागीतनृत्यादिमंगलैः ॥ प्रभातेविमलेस्नात्वानित्यंकृत्वायथाविधि ४२ पूज
येत्पूर्ववद्देवततोहोमंसमाचरेत् ॥ द्रव्यैर्नानाविधैर्हुत्वाकुर्यादाचार्यपूजनं ४३ गोभूतिलहिरण्याद्यंगुरवेतन्निवेदयेत् ॥ अन्येभ्योब्राह्मणेभ्यश्चप्रदद्याद्भूरिद
क्षिणां ४४ ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरंतथा ॥ अधिकान्यदिशक्तिश्चेदथवाप्येकविंशतिं ४५ दीनांधकृपणेभ्यश्चदद्यादन्नंसपायसं ॥ पुनश्च
दक्षिणांदद्यात्प्रगृह्याशिषमुत्तमां ४६ सुहृद्बंधुयुतोमौनीस्वयंभुंजीतसादरं ४७ ॥ ॥ शिवउवाच ॥ ॥ एवंतेकथितंस्कंदवरदस्यव्रतंशुभं ॥ भुक्तिमुक्ति
प्रदंनृणांसर्वकामफलप्रदं ४८ पुरातनमितिहासमस्मिन्नर्थेवदामिते ॥ महाधर्मपरोराजापुराभूत्कर्दमाभिधः ४९ पालयामासवसुधांसागरांतांस्वते
जसा ॥ गुणैर्यस्यहृतादेवानित्यंयत्सदसिस्थिताः ५० कदाचिद्दैवयोगेनभृगुस्तस्यगृहंययौ ॥ ततउत्थायराजासबहुमानपुरःसरं ५१ उपविश्यासने
श्रेष्ठेपूजितोगुरुवत्ततः ॥ सुखास्थितंमुनिवरंराजावचनमब्रवीत् ५२ ॥ ॥ राजोवाच ॥ ॥ भगवन्सर्वतत्वज्ञकिंचित्पृच्छामितद्वद ॥ पूर्वजन्मनिक
श्चाहंकिमयासुकृतंकृतं ५३ येनेदृशंमयाराज्यंप्राप्तंनिहतकंटकं ॥ प्राप्तंनैवनृपैरन्यैर्नचप्राप्स्यंतिचापरे ५४ देवानामपिपूज्योहंगंधर्वोरगरक्षसां ॥ कुबेरसं
पदातुल्यांसंपदंपश्यमेमुने ५५ त्रिलोक्यांरत्नभूतंयत्तदानीतंस्वतेजसा ॥ यंयंपदार्थमिच्छामितंतंपश्यामिवेश्मनि ५६ केनेत्थंकर्मणाप्राप्तंतद्वद
स्वममप्रभो ॥ कामयेतत्पुनःकर्तुंपुण्यंपुण्यवतांवर ५७ ॥ ॥ भृगुरुवाच ॥ ॥ कथयामिनृपश्रेष्ठप्रणिधानबलादहं ॥ त्वमासीःपूर्वजन्मनिक्षत्रियोदुर्ब
लःशुचिः ५८ कुटुंबभरणार्थंत्वंनानाकर्माण्यथाकरोः ॥ क्रियमाणंचतत्कर्मनचासीत्फलदंतव ५९ अत्यंतनिष्ठुरैर्वाक्यैर्दारापत्यैश्चपीडितः ॥
अपृष्ट्वापुत्रदारांस्त्वंगतवान्गहनंवनम् ६० विभ्रमन्दिक्षुसर्वासुदृष्टवानासिसौभरिं ॥ सिद्धासनेसमासीनंसेवितंमुनिपुंगवैः ६१ कथयंतंमहाविद्यांशिष्ये

भ्योदुःखनाशिनीं ॥ दृष्ट्वातंसौभरिंदिव्यमन्यांश्चर्षिगणान्नृप ६२ दंडवत्पतितोसित्वंभुवितैश्चाभिनंदितः ॥ उपविष्टःस्वासनेचमुनिनातेनदर्शिते ६३
पृष्टवानसितंदिव्यंलब्ध्वावसरमादृतः ॥ ॥ क्षत्रियउवाच ॥ ॥ स्वामिन्संसारदुःखेनबहुधाक्लेशितोमुने ६४ दारापत्यसुहृद्भिश्चवाग्बाणैर्भृशताडितः ॥
नवैराग्यंमनोयातिनिष्ठुरेषुसुहृत्सुच ६५ शीतोष्णक्षुत्पिपासाभिःपीडितोपिभृशंमुने ॥ उपायंवदमेकिंचिद्दुःखसागरतारकम् ६६ ॥ ॥ शिवउवाच ॥
इतिश्रुत्वावचस्तस्यसौभरिःकृपयायुतः ॥ उपायंचिंतयामासनृपदुःखविनाशनम् ६७ ततस्तंक्षत्रियंप्राहसर्वपापविमोचनम् ॥ ॥ ऋषिरुवाच ॥ ॥
व्रतंयत्कथयिष्यामिकुरुनिश्चितमानसः ६८ यस्यानुष्ठानमात्रेणसर्वदुःखलयोभवेत् ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैस्तथाब्रह्मर्षिभिःकृतम् ६९ मुक्तास्तेसर्वदुःखे
भ्यःप्राप्ताःसिद्धिमनुत्तमां ॥ वरदस्यगणेशस्यधर्मार्थकाममोक्षकृत् ७० ॥ ॥ क्षत्रियउवाच ॥ ॥ कोसौगणेशःकिंशीलःकिंरूपःकिंस्वभाववान् ॥
किंकर्माकथमुत्पन्नस्तत्सर्वंकथयस्वमे ॥ यदिमेश्रवणायालंयद्यनुग्राह्यतामयि ७१ ॥ ॥ ऋषिरुवाच ॥ ॥ यद्ब्रह्मनित्यंविरजंविशोकंज्ञानस्वरूपंपरमार्थभू
तम् ॥ अनादिमध्यांतमनंतपारंगणाधिपंतंप्रवदंतिसंतः ७२ यस्मादोंकारसंभूतिर्यतोवेदायतोजगत् ॥ येनसर्वमिदंव्याप्तंतंविद्धिगणनायकम् ७३ जगत्सर्जनका
मेनब्रह्मणायस्यतुष्टये ॥ अब्दानांतुशतंपूर्णंतपस्तप्तंसुदुष्करम् ७४ ततोदृष्टमनावेधाःप्रसन्नंतमपूजयत् ॥ नानाविधोपचारैश्चदिव्यरत्नैःफलैस्तथा ७५ सिद्धिबु
द्धीउभेकन्येमनसाकल्पितेददौ ॥ तुष्टोदेवोददौतस्मैविद्यामेकाक्षरींविभुः ७६ ततोलब्धवरोब्रह्माचकारसकलंजगत् ॥ षडक्षरेणमंत्रेणविष्णुनातोषितःपुरा ७७
कृत्वामूर्तिंगणेशस्यपूर्वोक्तविधिनाव्रतम् ॥ अब्दंगंवर्षमेकंतुनियमान्कृतवान्हरिः ७८ वरंलब्ध्वागणेशात्तुपालयामासवैजगत् ॥ एवंविधंविजानीहिगणेशं
भुविसंस्तुतम् ७९ विश्वरूपमनादिंचसर्वकारणकारणम् ॥ तमाराधययत्नेनसर्वदुःखाद्विमुक्ष्यसे ८० ॥ ॥ क्षत्रियउवाच ॥ ॥ कस्मिन्कालेप्रकर्तव्यमेतद्व्र
तमनुत्तमम् ॥ विधिनाकेनमेब्रूहिसांप्रतंमुनिसत्तम ॥ करिष्येवचनात्तेहंसर्वदुःखप्रशांतये ८१ ॥ ॥ मुनिरुवाच ॥ ॥ श्रावणेऽबहुलेपक्षेचतुर्थ्या
मारभेद्व्रतम् ॥ कुर्वीतपरयाभक्त्यायावद्भाद्रचतुर्थिका ॥ उपारैःषोडशाभिःपार्थिवंगणनायकम् ॥ प्रत्यहंपूजयेद्भक्त्याब्राह्मणान्भोजयेत्ततः ८२
त्वमेतत्कुरुभूपालसर्वान्कामानवाप्स्यसि ॥ इतिश्रुत्वाव्रतंतस्मात्कृतवानसिसुव्रत ८३ समाप्तेतुव्रतेतत्रसौभर्याश्रममंडले ॥ तावत्तस्यगृहंदिव्यंगणेशस्यप्र
सादतः ८४ दिव्यनारीनरयुतंदासीदाससमन्वितम् ॥ वेदघोषसमायुक्तंजातंगोधनसंकुलम् ८५ दिव्यवस्त्रसमायुक्तानानालंकारसंयुता ॥ अपत्यैस्तादृशैर्यु
क्ताविस्मितासीत्प्रतीक्षती ८६ आयास्यतिकदाभर्तेत्येवंचिंतापराभवत् ॥ तावत्त्वंमुनिमामंत्र्यगतोसिनिजमालयम् ८७ दिव्यंतच्छरणंहित्वास्वगृहंपरिमा
र्गयन् ॥ तावद्भार्याप्रेषितास्त्वांनिन्युस्तद्भवनंनराः ८८ ततस्त्वयापिविज्ञातःप्रभावोवरदस्यसः ॥ तद्व्रतस्यप्रभावेणराज्यभागिहजन्मनि ८९ ॥ शिवउवाच ॥
इतिश्रुत्वाभृगोर्वाक्यंकर्दमोहर्षनिर्भरः ॥ चकारसकलंराजाभृगुणायत्समीरितम् ९० व्रतस्यास्यप्रभावेणज्ञानवैराग्यवान्नृपः ॥ भुक्त्वाभोगान्यथाकामंस्थाप्य

पुत्रान्निजेपदे ९१ गतोगाणेश्वरंधामयतोनावर्ततेपुनः ॥ सर्वार्थसाधकंस्कंदव्रतानांव्रतमुत्तमम् ९२ नैतादृशंव्रतंदानंश्रुतमन्यत्कदाचन ॥ सर्वार्थसाधकंस्कंद
व्रतंकुरुयदीच्छसि ९३ देवदानवगंधर्वैर्ऋषिभिर्मनुजैःकृतम् ॥ नलेनइंदुमत्याचराज्ञाचंद्रांगदेनच ९४ संप्राप्ताःसर्वकामांस्तेगतागाणेश्वरंपदम् ॥ ॥ गि
रिरुवाच॥ ॥ इतितेकथितंसर्वंसेतिहासंव्रतंमहत् ॥ कुरुत्वंमनसाध्यात्वावरदंगणनायकम् ९५ व्रतमेतन्महाभागेशंकरंप्राप्स्यसेततः ॥ स्नेहेनकथितंते
द्यप्रकाशंकुरुमाव्रतम् ९६ ॥ इतिश्रीगणेशपु० हिमवत्पार्वतीसंवादोनामएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ पार्वत्युवाच ॥ नलेनेदंकृतंकस्मात्कोनलोवद
मोपितः ॥ मनोविश्रांतिमायातिशृण्वंत्यामेकथानकम् १ ॥ हिमवानुवाच ॥ निषधेषुमहाराजोनलोनामाभवत्पुरा ॥ ब्रह्मण्योवेदविच्छूरोदानीमानीधनीमु
निः २ रथीखड्गीशरीचापीनिषंगीकवचीबली ॥ कृतास्त्रोदेवपूज्यश्चत्रिलोकीगमनःशुचिः ३ शेषोपिमूकतांयातिवर्णितुंयद्गुणानपि ॥ नसंख्याविद्यतेऽश्वानां
गजानांरथिनांतथा ४ धानुष्काणांशस्त्रभृतांअग्निशस्त्रभृतामपि ॥ चकंपुर्यद्भयाद्देवाइंद्राद्याःसदिगीश्वराः ५ दमयंतीतिभार्यासीद्यस्यसौंदर्यमंदिरम् ॥
दमयित्वाखिलान्ब्रह्मासारंसारंप्रगृह्यच ६ दमयंतीतिविख्यातायतस्तेनेतिनिर्मिता ॥ दमयंत्यैत्रिलोकस्थनारीणांचारुतामदात् ७ नानालंकारसं
युक्तानानामणिविभूषिता ॥ मुक्ताहारलसत्कंठासद्गुणाढ्यासुशोभना ८ यस्यामात्योमहानासीत्पद्महस्तःपराक्रमी ॥ बुद्ध्याबृहस्पतिसमोनयेचागिर
सासमः ९ तुंगत्वेमेरुसदृशोगांभीर्येचोदधेःसमः ॥ कदाचिदुपविष्टोसौनलोराजामहामनाः १० निषसादसभागेहेनृपमंडलमध्यगः ॥ नृत्यंत्यप्सर
सस्तस्यपुरतश्चारुदर्शनाः ११ स्तुवंतिबंदिनस्तंचब्रह्मर्षिगणसंयुतम् ॥ एतस्मिन्नेवकालेतुगौतमोनृपतिंययौ १२ उत्थायसादरंराज्ञास्वासनेविनिवेशि
तः ॥ पूजितःपरयाभक्त्याततःपप्रच्छतंनलः १३ ॥ नलउवाच ॥ स्वामिन्ननुगृहीतस्तेदर्शनेनमहामुने ॥ जन्मराज्यंपितामाताकुलंजीवितमद्यमे १४ सफलं
स्वागमेहेतुंवदतूर्णंमहामुने ॥ गौतमउवाच ॥ ममासीन्महतीवांच्छाद्रष्टुंतेवैभवंनृप १५ स्तुवंतिदेवाःस्वर्गस्थाब्रह्मेंद्रहरिशूलिनः ॥ धन्योसिमर्त्यलोकस्थो
मर्त्यैर्देवैश्चशस्यसे १६ नित्यतृप्तोप्यहंतृप्तःपूजांदृष्ट्वाचवैभवम् ॥ इदानीमनुजानीहिगमिष्येस्वाश्रमंप्रति १७ ॥ नृपउवाच ॥ ॥ वेदवेदांगविद्ब्रह्मन्सर्व
शास्त्रप्रवर्त्तक ॥ दयानिधेक्षणंस्थित्वाछिंधिमेसंशयंमुने १८ ॥ ॥ मुनिरुवाच ॥ ॥ साधुपृष्टंमहाराजस्थितोहंस्नेहभावतः ॥ नागान्नृपाश्चदेवाश्चय
त्तेनाज्ञाविलंघिनः १९ ॥ ॥ नृपउवाच ॥ ॥ ममैवविस्मयोब्रह्मन्निरीक्ष्यवैभवंस्वकम् ॥ इत्थंममाभवत्केनपुण्येनतपसापिवा २० वदतत्त्वेनकश्चाहमभवंपूर्व
जन्मनि ॥ ॥ मुनिरुवाच ॥ गौडदेशात्परेदेशेपुरेपिप्पलसंज्ञके २१ त्वमासीःक्षत्रियःपूर्वंदरिद्रोज्ञानवान्शुचिः ॥ जायापत्यैःसुहृद्भिश्चवाक्शरैस्ताडितो
भृशम् २२ रात्रावपृष्ट्वासर्वांस्त्वंनिर्वेदाद्गहनंवनम् ॥ गतवान्वृक्षवल्लीभिःसिंहव्याघ्रगजैर्मृगैः २३ सेवितंशीतलजलैःसरोभिर्जलजादिभिः ॥ आ
श्रमोथत्वयादर्शिभ्रमताभ्रमतावने २४ तपोनिधेःकौशिकस्यवेदघोषनिनादितः ॥ तत्रगत्वामुनिंतंत्वंप्रणतोभक्तिभावतः २५ उत्थापितःकौशिकेन

दीनानाथदयावता ॥ दुःखितंत्वांविदित्वासआशीर्वादमवीवदत् २६ गजाननोमेदेवेशोभवितातेशुभंकरः ॥ श्रुत्वातदाशिषंसौम्यांप्राप्तोसिपरमांमुदम् २७
पृष्टवानसितंविप्रमुपायंसर्वकामदम् ॥ दारिद्र्यनाशकंराजन्भुक्तिमुक्तिप्रदंशिवम् २८ गणेशाराधनंतुभ्यंकथयामासकौशिकः ॥ ॥ कौशिकउवाच ॥ ॥ व्रतं
कुरुगणेशस्यमासमात्रंनराधिप २९ कुरुमूर्तिंगणेशस्यमृन्मयींचारुदर्शनाम् ॥ पूर्वोक्तविधिनापूजांकुरुशृणुकथानकम् ३० दिनेदिनेमासमात्रंततःसिद्धिम
वाप्स्यसि ॥ ॥ मुनिरुवाच ॥ ॥ इतिश्रुत्वाकौशिकंतंपप्रच्छभूमिपःपुनः ३१ ॥ ॥ नृपउवाच ॥ ॥ गजाननंनजानामितत्स्वरूपंवदस्वमे ॥ ज्ञात्वा
तंदेवदेवेशंकरिष्येव्रतमुत्तमम् ३२ ॥ ॥ मुनिरुवाच ॥ ॥ इतितेनकृतेप्रश्नेजगादमुनिसत्तमः ॥ अनिर्वाच्यस्वरूपस्यपरब्रह्मस्वरूपिणः ३३ वैकारिकस्व
रूपाणिगजाननकृतानितम् ३४ कौशिकउवाच ॥ यःकर्तासर्वलोकानांपितामाताजगद्गुरुः ॥ ब्रह्मेंद्रशिवविष्णूनांध्येयोयःसगजाननः ३५ ॥ मुनिरुवाच ॥
इतिश्रुत्वातुतद्वाक्यंप्रणिपत्यमुनीश्वरम् ॥ अनुज्ञातस्ततस्तेनगतोसिनिजमंदिरम् ३६ आरभ्यश्रावणेशुद्धेचतुर्थ्यांव्रतमुत्तमम् ॥ अकरोन्मृन्मयींमूर्तिंगणे
शस्ययथोदिताम् ३७ स्थानेचवचनेमौनेगमनेशयनेभुजि ॥ ध्यायन्गजाननंदेवंप्रायाःसिद्धिमनुत्तमाम् ३८ नानागजरथाश्वाद्यैर्गोधनैर्धनसंचितैः ॥
दासीदासयुतःश्रीमान्जातोव्रतप्रभावतः ३९ दत्तवानसिदानानिसर्वाणिदेवतुष्टये ॥ गणेशस्यमहामौल्यंप्रासादंकृतवान्मुदा ४० भुक्त्वाभोगान्य
थाकामंकालेननिधनंगतः ॥ जातोसिनिषधेदेशेनृपस्त्वंनलनामकः ४१ अतस्त्वय्यचलालक्ष्मीस्त्रिलोकीजनवंदिते ॥ इदानीमनुजानीहियत्पृष्टंत
न्निरूपितम् ४२ ॥ ॥ हिमवानुवाच ॥ ॥ एवंगतेगौतमेतुव्रतंचक्रेनलोनृपः ॥ तद्वाक्याज्जातविश्वासोमूर्तिंकृत्वासुशोभनाम् ४३ श्रुत्वाकथांगणेशस्य
प्रत्यहंपूज्यभक्तितः ॥ अलभत्सर्वकामान्सव्रतस्यास्यप्रभावतः ४४ ॥ इतितेकथितंकन्येनलेनेत्थंकृतंव्रतम् ॥ उपदिष्टंगौतमेनपूर्वजन्मकृतंव्रतम् ४५ यस्यप्र
भावःसंपूर्णोवक्तुंकेनापिनेष्यते ४६ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेनलव्रतनिरूपणंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ ७ ॥ ॥ हिम
वानुवाच ॥ ॥ इदानींकथयिष्यामिराज्ञाचंद्रांगदेनच ॥ तत्पत्न्याचकृतंह्येतदिंदुमत्याशुभानने १ मालवेविषयेख्यातंनगरंकर्णनामकम् ॥ तत्रचं
द्रांगदोराजाबभूवातिपराक्रमी २ अणिमादिगुणोपेतःसर्वशास्त्रार्थतत्त्ववित् ॥ यज्वादानीमहाज्ञानीवेदवेदांगपारगः ३ अतिक्रांतासभायस्यसुधर्मांम
तिमानुषीम् ॥ मुष्णातिचक्षुषस्तेजोरविकांतमरीचिभिः ४ अतिस्वच्छानिवासांसिरत्नस्तंभाश्रयात्सुते ॥ नीललोहितपीतत्वाच्चित्रतांयांतिकानिचि
त् ५ अतिसाध्वीमहाभागापतिशुश्रूषणेरता ॥ धर्मशीलाव्रतपराश्वश्रूश्वशुरसेविनी ६ गृहकृत्येषुचाव्यग्रादेवतातिथिपूजिका ॥ नाम्नाचेंदुमतीख्या ३८
तासर्वावयवसुंदरा ॥ धर्मशीलोपिनृपतिरमात्यैःप्रार्थितोभृशम् ॥ जीवहिंसांमहाघोरांपापर्द्धिंपरिवर्जय ७ कदाचिद्दैवयोगेनमृगयांक्रीडितुंययौ ॥
तरक्षुरुरुवाराहमृगपक्षियुतंवनम् ८ नीलकंचुकसंवीतोनीलोष्णीषोत्तरच्छदः ॥ बद्धगोधांगुलित्राणःशस्त्रिकाखड्गखेटवान् ९ जवेनाश्वसमारूढोशरचा

॥ पार्वत्युवाच ॥ तस्यांतुमूर्छितायांतुकिमकुर्वन्जनास्तदा ॥ तन्मेविस्तरतोब्रूहिहृदयानंदनंपितः १ ॥ हिमवानुवाच ॥ तदासर्वेनागरिकानानावाक्यवि
शारदाः ॥ प्रमृज्यस्त्रानिचाश्रूणिसमादध्युर्नृपस्त्रियम् २ ॥ जनाऊचुः ॥ मातर्मातिष्ठमाशोकंकुरुपुत्रेमनःक्वथाः ॥ प्रेतंदहंतिशोकाश्रुतस्माद्धर्मंहितंकुरु ३
मर्त्येषुनहिदृष्टोस्तिचिरजीवीशुभानने ॥ यथाजीर्णंपरित्यज्यवासोन्यद्गृह्यतेजनैः ४ वर्ष्मापिदेहिनातद्वत्त्यक्त्वान्यद्गृह्यतेशुभम् ॥ अत्याश्चर्यमिदंम
द्रेस्वयंमृत्युमुखेस्थितः ५ शोचतेमृतमपरंस्वयंमरणधर्मवान् ॥ स्वदेहेनवियोगंचनवेत्तिभाविनंजनः ६ मदीयंमन्यतेसर्वंदैवकालवशेस्थितम् ॥ ब्रह्मा
दिस्थावरांतंयद्विश्वंसाब्धिचराचरम् ७ ज्ञात्वातंनश्वरंशोकंत्यक्त्वोत्तिष्ठसुपुत्रिणि ॥ धर्मवान्पुण्यशीलस्तेभर्तामुक्तिंगतोभवेत् ८ जीवन्यदिभवेत्स्व
र्गेतदायास्यतिकर्हिचित् ॥ अतिपुण्यान्मानवोपियातिस्वर्गंगतःपुनः ॥ अथवापरिपृच्छामोमुनिंकंचिदिहागतम् ९ अतीतानागतविदंकथयिष्यतिसो
खिलं ॥ अनंतरंहियत्कार्यंतत्सर्वंविदधामहे १० ॥ हिमवानुवाच ॥ ॥ एवंप्रबोधितालोकैःक्षणमिंदुमतीतदा ॥ आश्वस्तासर्ववाक्येनप्रमृज्याश्रूणिवास
सा ११ विसर्जयामासतदालोकान्सर्वान्समागतान् ॥ त्यक्त्वासौभाग्यचिह्नानिप्रपेदेकृशतांभृशम् १२ रुदतीशोचतीतस्थौश्वसतीमूर्छितामुहुः ॥ ततो
द्वादशवर्षांतेनारदोदिव्यदर्शनः १३ आजगामगृहंतस्यायदृच्छाविचरन्मुनिः ॥ दृष्ट्वातंविललापाशुवदंतीभर्तृचेष्टितं १४ दुःखंचाकथयत्तस्मैजातंद्वाद
शवार्षिकं ॥ निशम्यरुदितंतस्याहर्षयन्मुनिरब्रवीत् १५ ॥ ॥ नारदउवाच ॥ ॥ क्वापितिष्ठतितेभर्तानतंशोचितुमर्हसि ॥ शिरश्छादयनीलेनवा
ससाकर्णभूषणे १६ कर्णयोःकुरुभालेत्वंबिभ्रतींकुंकुमंशुभम् ॥ वलयानिचकरयोःकंठेमंगलसूत्रकम् १७ ॥ ॥ हिमवानुवाच ॥ सर्वज्ञस्यमुनेर्वाक्या
द्विश्वस्तासत्यवादिनः ॥ तत्कालंसर्वमानाय्यहर्षितासातथाकरोत् १८ आकार्यब्राह्मणान्सर्वान्संपूज्यनारदंपुरा ॥ संपूज्यसकलांस्तांस्तुददौदानान्यने
कशः १९ वादयामासवाद्यानिशर्करांचगृहेगृहे ॥ प्रेषयामासचतदाहर्षादिंदुमतीशुभा २० वस्त्रतांबूलदानेनददावाज्ञांजनस्यसा ॥ प्रणिपत्यपुनर्देवमु
निंनारदमादरात् २१ स्वभर्तृप्राप्तयेपृच्छदुपायंराजकन्यका ॥ ॥ इंदुमत्युवाच ॥ ॥ कुत्रतिष्ठतिमेभर्ताकथंतिष्ठतिवामुने २२ केनोपायेनवेदज्ञदर्शनंत
स्यमेभवेत् ॥ अनुग्रहंकुरुमुनेतमुपायंवदस्वमे ॥ व्रतंदानंतपोवापिदुःसाध्यमपियद्भवेत् २३ नारदउवाच ॥ व्रतंतुपरमंतेहंकथयामिसमासतः ॥ नभःशु
क्लचतुर्थ्यांतदारभेत्परयामुदा २४ नद्यांतडागेवाप्यांवादंतधावनपूर्वकं ॥ स्नानंप्रभातसमयेकुरुसंकल्पपूर्वकम् २५ शुक्लवासागृहंगत्वामृन्मयींमूर्तिमु
त्तमाम् ॥ कुर्याच्चतुर्भुजांसम्यग्गणेशस्यमनोरमाम् २६ उपचारैःषोडशभिःपूजयेत्स्थिरचेतसा ॥ एकान्नमेकभक्तंवास्वयंकुर्यात्प्रयततः ॥ उपोषणंवाकुर्वी
तयावद्वादशचतुर्थिका २७ गीतवादित्रनृत्याद्यैर्ब्राह्मणानांचभोजनैः ॥ महोत्सवंप्रकुर्वीताविभवेसतिशोभने २८ एवंव्रतंकुरुशुभेभर्त्रासहसमेष्यसि ॥ पाता
लेनागकन्याभीरुद्धेनजीविताशुभे २९ सत्यंब्रवीमितेसत्येनान्यथाममभाषितं ॥ हिमवानुवाच ॥ ॥ इत्युक्तातेनमुनिनाव्रतंप्रारभदादरात् ३० गतेमु

पकरोबली ॥ तादृशैर्वीरनिकरैरमात्यैःसेवकैर्वृतः १० निघ्नन्मृगान्वराहांश्चप्रेषयन्नगरंप्रति ॥ भ्रममाणोवनेराजादृष्टोराक्षसपुंगवैः ११ चकंपेराक्षसान्दृ
ष्ट्वाशीतज्वरयुतोयथा ॥ दरीमुखान्गर्तनेत्रान्व्यादितास्यान्नभस्पृशः १२ दृष्ट्वातान्विद्रुताःसर्वेवीराःसेविजनाअपि ॥ केचिद्यमक्षयंयातामूर्छिताःकेपि
भूगताः १३ तत्रैकाराक्षसीक्रूरादृष्ट्वाकामातिसुंदरम् ॥ तंनृपंपरिरभ्यैवचुचुंबेकाममोहिता १४ तस्यामात्यान्भगेकृत्वाभक्षयामाससेवकान् ॥ एतस्मि
न्नंतरेराजापलायनपरोययौ १५ कासारमध्येमग्नोभून्नादाक्षीद्राक्षसीचतम् ॥ सधृतोनागकन्याभिर्नीतःपातालमंदिरम् १६ भूषितोनागकन्याभिर्वस्त्राल
कारभूषणैः ॥ पप्रच्छुर्नागकन्यास्तंकुतआगमनंतव १७ कोसिकस्यासिकिंनामवदसत्यंनरोत्तम ॥ इतितद्वचनंश्रुत्वातांजगादनराधिपः १८ अहंचं
द्रांगदोनामहेमांगदसुतोबली ॥ मालवेविषयेकर्णनगरेवसतिर्मम १९ राक्षसीभयवित्रस्तःप्रविष्टःसलिलंमहत् ॥ भवतीभिरिहानीतोयत्पृष्टंतन्निवेदितं
२० भक्षिताःसर्वलोकामेमृगयाभिरतस्यह ॥ सरोजलप्रसादेनजीवंस्तिष्ठामिसांप्रतम् २१ इतितावचनंश्रुत्वापुनरूचुर्नृपंतदा २२ ॥ ॥ ताऊचुः ॥ ॥ भ
वास्माकंपतिरिहसर्वेसंस्यतितेप्रियम् ॥ अस्माकंनागकन्यानांभोगश्चातीवदुर्लभः २३ तासामितिवचःश्रुत्वाप्रोवाचनृपसत्तमः ॥ एकपत्नीव्रतंमेस्तिमातर
स्तत्कथंत्यजे २४ सोमवंशप्रसूतानांराज्ञांधर्मान्ब्रवीमिवः ॥ परद्रव्यंपरद्रोहंपरदारांस्तथैवच २५ परनिंदांचनेच्छंतिनृपाःसौम्याश्चसाधवः ॥ अधीतिर्य
जनंदानंशरणागतपालनम् २६ निषिद्धाचरणंनैवविध्यर्थप्रतिपालनम् ॥ एतेधर्मास्त्रिवर्णानांयाजनादित्रयंद्विजे २७ अधिकंसर्ववर्णानामातिथ्यपर
मंमतम् ॥ इतिश्रुत्वानृपवचोखिलानागकुमारिकाः २८ प्रशेपुस्तंवियुक्तस्त्वंबहुधास्वस्त्रियाभव ॥ बबंधुर्निगडैस्तंतादुःखिताःकामविह्वलाः २९ राक्ष
सीतुजलंप्राश्यतदर्थेतत्सरोगतम् ॥ भक्षयित्वाजलचरान्नातृप्यत्परमंतदा ३० इमंवृत्तांतमशृणोद्राज्ञीराजीवलोचना ॥ पर्यंकस्थास्वदूतात्साराक्षसीतोवशे
षितात् ३१ मग्नंनिशम्यनृपतिंदुःखितापतिताभुवि ॥ मूर्छामवापमहतींसखीभिःपरिवीजिता ३२ सिक्ताशीतलतोयेनरुदंतीभिर्मुहुर्मुहुः ॥ उपवि
ष्टाप्ररुदतीघ्नतीवक्षःशिरोमुखम् ३३ शुशोचपरमालापैर्भर्त्तःकांतेतिजल्पती ॥ क्वगतःप्राणनाथोमेहित्वामांप्रियवादिनीम् ३४ सर्वावयवसंपूर्णांप्रणतांप्रिय
कारिणीम् ॥ भर्तृकार्यरतांनित्यंनित्यंचातिथिपूजिकाम् ३५ कुत्रभोक्ष्यतिमेनाथोनिद्रांवाकुत्रयास्यति ॥ कांचनंशयनंहित्वापरार्ध्यास्तरणैर्वृतम् ३६ कथं
स्नास्यतिकांतोमेहित्वातैलंसुगंधिकम् ॥ लोकानांपालनंकोद्यविनातेनकरिष्यति ३७ प्रजानांसर्वलोकानांबाणानांरंजनंचकः ॥ अस्तंयातोगुणनिधिः
प्रतापनिधिरद्यकिम् ३८ दिशःशून्याःप्रपश्यामिविनातेनमहात्मना ॥ क्वाहंसुखंप्रपश्यामिक्वसुखंसोपियास्यति ३९ इहलोकेपरेवापिनसुखंकुलयो
षिताम् ॥ हीनानांस्वामिनादेवयदेतत्स्वामिनासह ४० शरणागतगुप्तिंचदीनानांकःकरिष्यति ॥ एवंबहुविधंदीनारुदतीभृशविह्वला ४१ तत्याजत्रो
टयित्वासाभूषणानिचदूरतः ॥ कंकणानिचसर्वाणिबभंजचमुमूर्छच ४२ ॥ इतिश्रीगणेशपु०उपा०चंद्रांगदोपाख्यानेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

नौनभोमासिदिनैःकतिभिरागते ॥ द्विरदाननमूर्तिंसाचकारपार्थिवींशुभां ३१ पूर्वोक्तविधिनापूजांचकारसुमनोहरां ॥ दिव्यगंधैर्दिव्यवस्त्रैर्दिव्यैश्चकुसु
मैरपि ३२ दिव्यैर्नानाविधैश्चैवनैवेद्यैःफलकांचनैः ॥ दीपैःपुष्पांजलीभिश्चप्रक्रमैर्नतिभिःस्तवैः ३३ तन्नामस्मरणैर्ध्यानैस्तोषयामासतंविभुम् ॥ गीत
वादित्रनृत्याद्यैर्ब्राह्मणानांचभोजनैः ३४ पलमात्रंपयोभुक्त्वाचकारव्रतमुत्तमं ॥ नभःशुक्लचतुर्थ्यादिचिरनष्टप्रियाप्तये ३५ नारदस्यमुनेर्वाक्याद्यावद्वा
द्रचतुर्थिका ३६ ॥ ॥ इतिश्रीगणेशपु०उपा० इंदुमतीनारदसंवादेचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ हिमवानुवाच ॥ समाप्तेतुव्रतेतस्यागणेशस्यप्रसा
दतः ॥ पातालेनागकन्यानामन्यथाभून्मतिस्तदा १ मोचयामासूराजानंपुपूजुश्चयथाविधि ॥ वस्त्रैराभरणैश्चैवनानारत्नमहाधनैः २ अश्वंमनोजवंद
त्त्वाविससर्जुर्नृपंतदा ॥ कासाराद्बहिरागत्यबध्वाचाश्वंमहाद्रुमे ३ स्नातियावन्नागरैकैर्दृष्टःकतिपयैर्नृपः ॥ अपरेप्रणिपत्यैनंपप्रच्छुःकोभवानिति ४
कुतस्त्यःकुतआयतःकिंनामावदनःप्रभो ॥ इतितेषांवचःश्रुत्वापप्रच्छनृपसत्तमः ५ इंदुमत्याःकुमारस्यकुशलंखेदसंयुतः ॥ ततोबुबुधिरेतेतमालि
लिंगुर्मुदाजनाः ६ ऊचुश्चनृपतेभार्यास्नात्वेदानींगताग्रहम् ॥ उपवासव्रतवतीकृशाधर्मनिसंयुता ७ कुमारेजीवमास्थायजीवमात्रावशेषिता ॥ केचिन्न
नगरंगत्वाशुभांवार्तामघोषयन् ८ अत्याप्तजनवाक्येनश्रुत्वासानृपमागतम् ॥ आनंदाब्धौनिमग्नाभूद्ब्रह्मज्ञानीवयोगवित् ९ ततोमात्यान्पुरस्कृत्यसैन्यान्य
प्रेषयच्चतम् ॥ चित्रध्वजपताकाभिरशोभयतसापुरम् १० वीथीरासिंचयामाससभाःसंपादयत्ततः ॥ स्वात्मानंभूषयामासवासोलंकारभूषणैः ११ गोभूहिर
ण्यदानाद्यैस्तोषयित्वाद्विजान्बहून् ॥ आरार्तिक्यंकरेदत्वापतिवत्स्त्रीजनस्यसा १२ गीतवादित्रघोषेणपुरात्सरउपागमत् ॥ अमात्यास्तुपुरोगत्वाप्रणम्यनृ
पपुंगवम् १३ आलिलिंगुर्मुदासर्वैप्रणेमुश्चयथाक्रमम् ॥ उपविष्टेतुनृपतौउपविष्टास्तदाज्ञया १४ सर्वान्कुशलप्रश्नाद्यैस्तोषयित्वायथाक्रमम् ॥ मानयि
त्वातथालोकान्दत्वातांबूलवाससी १५ स्वयंजगामशिबिरमिंदुमत्यानृपोत्तमः ॥ कारयामाससविधिंद्वादशाब्दद्दशोद्विजैः १६ पुण्याहवाचनंकृत्वागणेशा
र्चनपूर्वकम् ॥ संपूज्यशंकरंसम्यक्द्विजांश्चदक्षिणादिभिः १७ बभंजश्रीफलंत्यक्त्वाततस्तत्पुरतोययौ ॥ ददर्शतत्रेंदुमतीमिंदोःशेषांकलामिव १८ नीराज
यित्वाराजानंयुवतीभिःसभर्तृभिः ॥ लाजपुष्पमयींवृष्टिंताभिःसाकारयत्तदा १९ प्रमृज्यनयनेसम्यगानंदाश्रुपरिप्लुते ॥ हर्षशोकान्वितौतौतुपरस्परमथोचतुः
२० परस्परवियोगाधिकथयामासतुःशुचा ॥ अनिवार्यप्रक्रांतिभिःसांत्वितौबहुलोक्तिभिः २१ आनयित्वातुराजानंसमारोह्यमहागजे ॥ नानालंकारसंयुक्तेप
ताकाछत्रसंयुते २२ पादरक्ष्यैःपरिवृतेचतुर्घंटाविराजिते ॥ शतंयष्टिधरास्तस्यवारयंतोययुःपुरः २३ अग्निशस्त्रधराश्चाश्वरथारोहाअनेकशः ॥ सव्यदक्षि
णतोराज्ञोगजलक्षंययुर्लघु २४ नटानृत्यांगनावाद्यवादकाबंदिनःपुरः ॥ ततःपश्चाद्गजानीकाःपुरींविविशुरादरात् २५ सैन्येनरजसाव्याप्तेदिननाथेहतप्रभे ॥
अलंकृतेपुरेतस्मिन्नप्राज्ञायतकिंचन २६ ततःपरस्परंनत्वाजग्मुःस्वंस्वंनिवेशनम् ॥ मुख्याराजगृहंनीताःपुनाराज्ञाप्रपूजिताः २७ वस्त्रतांबूलदानेनतेनाज्ञा

ताग्रृहंययुः ॥ राजाथब्राह्मणानभोज्यबुभुजेज्ञातिभिःसह २८ ततोरात्रौसुषुपतुःपर्यंकेचारुनिर्मिते ॥ पराध्यास्तरणोपेतेपरिच्छदुपधान्विते २९ ऊचतुःस्व
स्वदुःखंतौशोचंतौचपुनःपुनः ॥ पुरोधसासांत्वितौतौशयातेस्मसुखंततः ३० श्रुत्वाविनायकव्रतमहिमानंनृपोत्तमः ॥ पत्न्यानुभूतंसकलंस्वयंकर्तुंमनोदधे
३१ आगतेश्रावणेमासिराजाचंद्रांगदस्तदा ॥ महोत्सवेनकृतवान्व्रतमेतच्छुभानने ३२ ॥ ॥ ऋषिरुवाच ॥ ॥ एवंपितृवचःश्रुत्वापार्वतीभृशहर्षिता ॥
नभोमासंसमासाद्यचकारव्रतमादरात् ३३ यथोक्तविधिनामूर्तिंकृत्वापूजांचयत्नतः ॥ भक्षयंतीपयोमात्रंध्यायंतीद्विरदाननम् ३४ ततश्चचलतांयातंशंकरस्या
पिमानसम् ॥ आससादाश्रमंतस्याःपार्वत्याःशूलभृत्स्वयम् ३५ गणेशस्यचतुर्थ्यांतुसंपूर्णेतद्व्रतेशुभे ॥ पश्यतिस्महरंदेवीवृषारूढंनिजाश्रमे ३६ उत्थायप्रणना
मास्यपादांबुजयुगंमुदा ॥ पूजयामासविधिवच्छंकरंलोकशंकरम् ३७ उवाचचमहादेवंपार्वतीप्रेमविह्वला ॥ देव्युवाच ॥ कथंमांत्यज्यगतवान्किंमांविस्मृतवान
सि ३८ त्वद्वियोगान्निमेषोपिकल्पकल्पोभवद्विभो ॥ गणेशस्यव्रतमिदंपित्रादिष्टंकृतंमया ३९ वरदस्यप्रसादेनसंप्राप्तंदर्शनंतव ४० ॥ ब्रह्मोवाच ॥ ॥ एतस्मिन्ने
वकालेतुहिमवानुपजग्मिवान् ॥ सत्याःकरंकरेतस्यन्यवेदयतसादरम् ४१ ततोदेवाःसगंधर्वाद्विरदाननमादरात् ॥ पूजयामासुरथतौशिवौशिवकरौसतां ४२
देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातह ॥ सर्वेगजाननंनत्वास्तुत्वाचविविधैःस्तवैः ४३ जयशब्दैःशंकरोपितुष्टावद्विरदाननम् ॥ अर्द्धांगेपार्वतींकृत्वावृषमा
रुह्यसत्वरः ४४ ययौकैलासशिखरंसर्वैस्स्वंस्वंपदंययुः ४५ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतितेकथितंसर्वंव्यासपृष्टंत्वयातुयत् ॥ महात्म्यंगणनाथस्यव्रतस्य
चमहामुने ४६ इदानींपुनरन्यत्तेकथयामिकथानकम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुक्तःकामाँल्लभेन्नरः ४७ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेशिव
पार्वतीसंयोगोनामपंचपंचाशत्तमोध्यायः ॥ ५५ ॥ ॥ ७ ॥ ॥ भृगुरुवाच ॥ ॥ एवंतेकथितंराजन्माहात्म्यंसकलंमया ॥ पुनश्चशृणुव्यासेनयच्छ्रु
तंब्रह्मणोमुखात् १ ॥ सोमकांतउवाच ॥ कथंश्रुतंब्रह्ममुखात्व्यासेनामितबुद्धिना ॥ नतृप्तिमधिगच्छामितन्मेवदमहामुने २ ॥ भृगुरुवाच ॥ एवंश्रुत्वाकथां
व्यासोपृच्छद्ब्रह्माणमादरात् ॥ सचापिकथयामाससादरंपृच्छतेनघ ३ ॥ व्यासउवाच ॥ पुनःकथयमेब्रह्मन्गणनाथकथांपराम् ॥ तृष्णामेवर्धतेभूयःश्रो
तुंविघ्नेशसत्कथाम् ४ ॥ ब्रह्मोवाच ॥ अपरांशृणुमेव्यासकथांकौतुकसंयुताम् ॥ शूरसेनप्रभृतिभिरनुभूतांगजाननीं ५ मध्यदेशेभवद्राजाशूरसेनोमहाब
ली ॥ सहस्राख्यपुरेरम्येवेदवेदांगपारगः ६ धनवान्रूपवान्दाताहोतापाताजनस्यह ॥ शक्तित्रययुतोमानीषाड्गुण्यपरिनिष्ठितः ७ उपायानांचतुर्णांच
चालनेचतुरोरिहा ॥ चतुर्विधबलोपेतोद्विजदेवेषुभक्तिमान् ८ पृथिवीमंडलंयस्यवशवर्त्यभवत्सदा ॥ नगरंशक्रनगराद्विशिष्टंभातिभूतले ९ यस्यपत्नी
पुण्यशीलानाम्नाभूत्पुण्यशालिनी ॥ यस्यारूपेणसदृशीनासीत्त्रैलोक्यमंडले १० पातिव्रत्यगुणैर्यस्यालज्जांप्राप्ताप्यरुंधती ॥ असूयात्यागयोगेनाप्यनसूया
भवल्लघुः ११ सकदाचिन्नृपोमात्यैःसंवृतोवीरसत्तमैः ॥ उपविष्टोनृपसभांददर्शगगनेचरम् १२ विमानंवह्निसदृशंनेत्रतेजोहरंपरम् ॥ गानश्रवणस

क्तास्तेराज्ञासहसभासदः १३ विह्वलास्तेकिंकिमितिज्ञातुंदूतानचोदयन् ॥ तेदूताःप्रागमन्द्रष्टुंविमानंसूर्यसन्निभम् १४ कस्यचिद्वैश्यपुत्रस्यराज
दूतस्यकुष्ठिनः ॥ पतितंदृष्टिपातेनतद्विमानंमहीतले १५ ततोदूताःसमागम्यशशंसुर्नृपतिंतदा ॥ तद्विमानंमहाराजपुण्यकृद्देवसंयुतम् १६ देदीप्य
मानंपतितंदुष्टेदृष्ट्यामहीतले ॥ ततोतिहर्षितोराजाप्रकृतिद्वयसंयुतः १७ अश्वारूढोययौतत्रविमानंद्रष्टुमुत्सुकः ॥ मन्यमानोमहाआन्यंस्वजनैःपरि
वारितः १८ अनेकवाद्यनिर्घोषैर्विमानस्यांतिकंययौ ॥ ददृशुस्तत्रशक्रंतेनेमुरुत्तीर्ययानतः १९ नानालंकारसंयुक्तंसर्वदेवगणैर्युतम् ॥ बद्धांजलिपुटो
राजाप्रोवाचबलसूदनम् २० धन्येयमद्यधरणीधन्यंजन्मचसंपदः ॥ पूर्वजाःसर्वचक्षूंषिधन्यान्यद्यशचीपते २१ यद्दर्शनंमृत्युलोकेभवतांसानुगस्य
मे ॥ यस्यतेवशगालोकाब्रह्मेशानादयःसुराः २२ शताश्वमेधतोदृश्योनान्यथाजायतेक्वचित् ॥ नजानेकेनपुण्येनसोद्यदृष्टोखिलैर्जनैः २३ इदंचते
विमानंयत्कथंनिपतितंभुवि ॥ एतन्मेसंशयंदेवछेत्तुमर्हसिसांप्रतम् २४ गतवान्कुत्रचभवान्गंतावाशंसमेप्रभो ॥ ॥ शक्रउवाच ॥ ॥ राजञ्छृणुमहाश्च
र्यंकथितंनारदेनमे २५ तदहंकथयिष्येत्वांशृणुष्वैकमनानृप ॥ नारदउवाच ॥ मृत्युलोकंगतःशक्रभ्रुशुंडेराश्रमंप्रति ॥ गणेशस्यस्वरूपेणतिष्ठतोजपतो
निशम् २६ तद्दर्शनात्तत्स्वरूपस्यदृष्टंकौतुकमद्भुतम् ॥ पूजितस्तेनमुनिनागजाननस्वरूपिणा २७ नत्वातंमुनिमापृच्छ्यदर्शनार्थंतवागतः ॥ भूमौसारूप्य
तानैवदृष्टान्यत्रशतक्रतो २८ ॥ शक्रउवाच ॥ अहंचनारदंपूज्यविसृज्यचक्षणेनतम् ॥ अत्युत्सुकतयायातोमुनिंद्रष्टुंतथाविधम् २९ विमानवरमास्थायमनोग
रुतवेगवत् ॥ मुनिंदृष्ट्वाचसंपूज्यद्विरदाननरूपिणम् ३० भ्रुशुंडिंप्रणिपत्याथतस्यपूजांप्रगृह्यच ॥ चलितःसपरीवारोगंतुकामोमरावतीं ३१ यावत्तेनगरा
भ्याशेविमानमिदमागतम् ॥ तावद्दूतस्यतेदृष्ट्याकुष्ठिनःपापकारिणः ३२ पतितंभूमिभागेस्मिन्सर्वंतेकथितंनृप ॥ शूरसेनउवाच ॥ तपसाकेनवाशक्रगजान
नस्वरूपता ३३ प्राप्ताभ्रुशुंडिनातेनतद्वदस्वममप्रभो ॥ नेहिमेतृप्तिरस्तीहशृण्वतस्तत्कथामृतम् ३४ ॥ इतिश्रीगणे०उ०षट्पंचाशत्तमोध्यायः ॥ ५६ ॥
॥ शक्रउवाच ॥ हंततेकथयिष्यामिकथामेतांपुरातनीं ॥ यथातेनापिसादृश्यंगणनाथस्यभक्तितः १ दंडकारण्यदेशेषुनगरेनंदुराभिधे ॥ एकःकैवर्तकोदु
ष्टोनाम्नानामैवविश्रुतः २ आबाल्याच्चौर्यनिरतोयौवनेजारकर्मकृत् ॥ प्रत्यक्षंदृष्टिविगमाद्धरतेचशपत्यपि ३ शपथान्कुरुतेमिथ्यापरद्वंद्वेदकारकान् ॥
ततोनिःसारितोग्रामात्द्यूतमद्यरतोयतः ४ लोकैर्बहिर्दूरतरंगिरिकंदरकानने ॥ स्थितःकांतायुतोमार्गेजघानपथिकान्बहून् ५ एवंबहुधनोजातोनाना
लंकरणैःस्त्रियम् ॥ भूषयामाससस्रुतांतोषयामाससमायया ६ शस्त्रंखड्गंचखेटंचपाशान्धनुरनुत्तमम् ॥ दंडंचोभयतोलोहंवहन्पूर्णेमहेषुधी ॥ वृक्षाग्रेकोट
रेवापिस्थितोमारयतेबहून् ७ नानाविधानिवस्तूनिवासांस्याभरणानिच ॥ गृहेसंचयतेनीत्वाविक्रीणातिपुरांतरे ८ यथेष्टंभजतेनित्यंविषयान्मंदिरेनिजे ॥

१ कुष्टिदृष्ट्या इ० पाठान्तरम् । २ महान्मेविस्मयश्चित्ते जायते च पुनःपुनः इतिपाठान्तरम् ३ लोकैः इ०पा० ।

एवंपापसमाचारोहंत्यरण्येपशूनपि ९ एकदाकस्यचित्पृष्ठेधावितोयोजनावधि ॥ सतुतस्माद्गतोदूरंस्खलित्वापतितोभुवि १० ततउत्थायकष्टेनशनैः
शनैर्ययौखलः ॥ अपश्यत्पथिगच्छन्सतीर्थंगणेश्वरंशुभम् ११ अकरोन्मज्जनंतत्रश्रममेवव्यपोहितुम् ॥ ततोगच्छन्सविषयंददर्शपथिमुद्गलम् १२जपंतंगणना
थस्यमंत्रंनामसमन्वितम् ॥ खड्गमुद्यम्यनिष्कोशंमुद्गलस्यांतिकंययौ १३ कैवर्तकोनामनामाहंतुंकृतमतिस्तदा ॥ जगलुस्तस्यशस्त्राणिखड्गोपि
दृढमुष्टितः १४ अन्यथाचाभवद्बुद्धिस्तस्यदुष्टस्यतत्क्षणात् ॥ द्विरदाननभक्तस्यमुद्गलस्यप्रभावतः १५ जहासमुनिमुख्योसौदृष्ट्वातंतुतथाविधम् ॥
पप्रच्छसंयतःकस्माच्छस्त्राणिगलितानिते १६ बद्धान्यपिचसर्वाणिपतितानिकुतोवद ॥ ॥ कैवर्त्तकउवाच ॥ ॥ गणेशतीर्थस्नानेनमुनेरालोकनेन
च ॥ ज्ञानवैराग्ययुक्तोसावब्रवीन्मुद्गलंवचः १७ आश्चर्यंपरमंमन्येकुंडस्नानेनमेमतिः ॥ विपरीताभवद्ब्रह्मन्विशेषाद्दर्शनेनते १८ बाल्यात्प्रभृतिमे
दुष्टाबुद्धिःपापरताभवत् ॥ असंख्यातानिपापानिकृतान्यद्यावधिप्रभो १९ इदानीमेवनिर्विण्णामतिर्मेत्वत्प्रसादतः ॥ नादास्येपुनरेतानिशस्त्रा
णिपतितानिमे २० कुरुमेनुग्रहंपूर्णमुद्धरस्वभवार्णवात् ॥ साधवोह्यनुगृण्हंतिदीनान्दुष्कृतिनोपिच २१ नसाधुसंगमःक्वापिवृथादृष्टोमहामुने ॥ यथा
शेवधिसंपर्कोनधातुपुवृथाभवेत् २२ ॥ शक्रउवाच ॥ एवमुक्तोमुद्गलोसौतंजगादकृपान्वितः ॥ शरणागतसंत्यागेस्मरन्दोषंविशेषतः २३ मुद्गलउवाच ॥ वि
धिप्रयुक्तेदानादौनाधिकारोस्तिकुत्रचित् ॥ तथापितेनामजपंकथयामिप्रसादतः २४गजाननस्यपरमंसर्वसिद्धिकरंनृणाम् ॥ ततःप्रणाममकरोत्कैवर्तोमुद्गलंमुनिं
२५सकरंस्थापयामासतस्यमूर्ध्न्यभयंकरं ॥ गणेशायनमइतिनाममंत्रमुपादिशत् २६ स्वयष्टिंरोपयामासपुरस्तस्यधरातले ॥ उवाचचैनंसंप्रीत्यायावदागमनंम
म २७ तावज्जपस्वनामेदंयावद्यष्टिश्चसांकुरा ॥ एकासनगतोवायुभक्षएकाग्रमानसः २८ सायंप्रातर्जलंदेहियष्टिमूलेनिरंतरम् २९ ॥ शक्रउवाच ॥ उप
दिष्टोमुद्गलेननामाकैवर्त्तकस्तदा ॥ निराशोजीवितेतस्थौतस्मिन्नंतर्हितेमुनौ ३० एकासनगतोरण्येजजापनाममंत्रकम् ॥ पुरोधायमुनेर्यष्टिंवृक्षच्छा
यांसमाश्रितः ३१ निराहारोनिरीहश्चजितेंद्रियगणोवशी ॥ एवंसहस्रवर्षांतेसायष्टिःसांकुराभवत् ३२ ततःप्रतीक्षामकरोन्मुनेरागमनस्यसः ॥ व
ल्मीकवेष्टिततनुर्लताजालसमन्वितः ३३ ततोमुनिर्मुद्गलोपिदैवात्तंदेशमाययौ ॥ सस्मारचतदायष्टिंतंचकैवर्त्तकंयदा ३४ ददर्शभ्रममाणःससांकुरांयष्टि
मुत्तमां ॥ वल्मीकाक्रांतदेहंचतंचकैवर्त्तकंमुनिः ३५ दुश्चरंमुनिभिःसर्वैरास्थितंतपउत्तमं ॥ लक्षितंनेत्रमात्रेणयततामुनिनातदा ३६ उत्साद्यतस्यदेह
स्थंवल्मीकंमुनिसत्तमः ॥ मंत्रितेनजलेनास्यसिषेचांगंचसर्वशः ३७ तदैवदिव्यदेहंतंजगादमुनिसत्तमः ॥ प्राप्तवंतंगणेशस्यसारूप्यंकरयोगतः ३८ द्वि
करंप्रजपंतंचनामवैनायकंशुभं ॥ उन्मीलितेतदानेत्रेमुनिनाबोधितस्तुसः ३९ तस्यनेत्रोद्भवोवह्निर्विद्युद्दग्गगनंगतः ॥ त्रिलोकींसुद्यतोदग्धुंमुनिनावारि
तोयतः ४० सोपितंमुनिमानम्यस्वगुरुंकरुणायुतं ॥ आलिलिंगमुदायुक्तस्तनयःपितरंयथा ४१ उपदिष्टोमुद्गलेननामकैवर्त्तकस्तदा ॥ वाल्मीकावपु

नरूत्पन्नंमानयामासतंसुतम् ४२ चकारनामकर्मास्यमुद्गलोमुनिरादरात् ॥ भ्रूमध्यान्निर्गताशुंडाभ्रुशुंडीतिततोनृप ४३ एकाक्षरंचमंत्रंचतस्मैप्राहा
थमुद्गलः ४४ वरानस्मैददौपश्चाद्भवत्त्वंमुनिसत्तमः ॥ इंद्रादिदेवगंधर्वैःसिद्धैरर्च्यतमोभव ४५ यथागजाननोदेवोध्यातोदृष्टोघनाशनः ॥ तथाहित्व
मपिमुनेभ्रुशुंडिःप्रथितोभव ४६ यस्यतेदर्शनंस्यात्सकृतकृत्योभवेन्नरः ॥ आयुश्चकल्पलक्षंतेभवितामभवाक्यतः ४७ एवंबहुविधातस्मैवरान्
यच्छतिमुद्गले ॥ ययुरिंद्रादयोद्रष्टुंमुनयोनारदादयः ४८ उचुस्तंप्रणिपत्यैवभ्रुशुंडेतवदर्शनात् ॥ सार्थकंजन्मनोविद्यापितरौचतपोयशः ४९ त्वमेव
गणनाथोसिपूजनीयोसिनोमुने ॥ सतुसंपूज्यतान्सर्वान्प्रणम्यचविसृज्यच ५० पुनःपद्मासनगतोजजापैकाक्षरंमनुम् ॥ पुरोमूर्तिंप्रतिष्ठाप्यगणेशस्य
मनोहराम् ५१ उपचारैःषोडशभिरपूपुजद्दिनेदिने ॥ आश्रमश्चबभौवापीसरोवृक्षलतादिभिः ५२ त्यक्तवैरैःसिंहमृगैर्नकुलैर्भुजगोत्तमैः ॥ ततोवर्षशत
स्यांतेप्रसन्नोभूद्गजाननः ५३ उवाचमत्स्वरूपस्त्वंकिमर्थंतपसेतपः ॥ कृतकृत्योसिसायुज्यंआयुषांतेचलप्स्यसे ५४ इदंक्षेत्रंसुविख्यातंनामलेतिभविष्यति ॥
अनुष्ठानकृतामत्रनानासिद्धिप्रदंनृणाम् ५५ मन्मूर्तिदर्शनादत्रनपुनर्जन्मभाग्भवेत् ॥ अपुत्रश्चलभेत्पुत्रान्विद्यार्थीज्ञानमाप्नुयात् ५६ ॥ शक्रउवाच ॥ इतितेक
थितंसर्वंशूरसेननृपोत्तम ॥ यत्त्वयापरिपृष्टंमेकिमन्यच्छ्रोतुमिच्छसि ५७ इतिश्रीग० भ्रुशुंड्युपाख्यानंनामसप्तपंचाशत्तमोध्यायः ५७ ॥ ब्रह्मोवाच ॥ एवंश्रु
त्वाशूरसेनोमरुत्वद्वाक्यमुत्तमम् ॥ पुनःपप्रच्छतंव्यासःप्रीतःश्रुत्वाकथामृतम् १ ॥ शूरसेनउवाच ॥ केनोपायेनदेवेशयानंतेगगनंव्रजेत् ॥ तमुपायंकुरुविभो
वदवाकिंकरोमिते २ ॥ ब्रह्मोवाच ॥ एवंपुनःकृतप्रश्नंनृपंप्राहसुरारिहा ॥ शृण्वतांसर्वलोकानांस्मयमानइदंवचः ३ ॥ इंद्रउवाच॥ कश्चित्स्यादिहसंकष्टचतुर्थीव्र
तकारकः ॥ विप्रोवाक्षत्रियोवापिनगरेतेनृपोत्तम ४ तस्याब्दकृतपुण्येनसम्यग्दत्तेनभूभुज ॥ इदानींप्रचलेदेतन्नान्यथायुतपूरुषैः ५ नृपउवाच ॥ कथंव्रतंतु
संकष्टचतुर्थ्यावदमेमुने ॥ किंपुण्यंकिंफलंतस्यकोविधिःकस्यपूजनम् ६ पुराकेनकृतंचात्रसिद्धिर्यस्मिन्कृतेभवत् ॥ एतत्सर्वंशुनासीरकृपयावदविस्तरात् ७
॥ शक्रउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ कृतवीर्यस्यसंवादंनारदेनमहात्मना ८ बभूवबलवान्राजाकृतवीर्योमहीतले ॥ सत्यशीलोवदान्य
श्चयज्वामानीमहारथः ९ जितेंद्रियोमिताहारोदेवद्विजनिषेवकः ॥ यस्याश्वगजयोधानांरथिनांसर्वधन्विनां १० नसंख्याविद्यतेराजन्सह्याद्रिविषयासिनां ॥
मंदिरेयस्यसौवर्णाःपर्यंकाभाजनानिच ११ नासीदौदुंबरंपात्रंपाकार्थमपिसर्वदा ॥ यस्यद्वादशसाहस्राब्राह्मणाःपंक्तिभोजिनः ॥ १२ ॥ सुगंधानामयस्या
सीत्पत्नीधर्मपरायणा ॥ पतिव्रतापतिप्राणात्रैलोक्येतिमनोरमा १३ नानालंकारसुभगाद्विजदेवातिथिप्रिया ॥ एवंतौदंपतीराजन्नपुत्रौसंबभूवतुः ॥ १४ ॥
पुत्रार्थंसर्वदानानिव्रतानिचतपांसिच ॥ चक्रतुर्नियमानन्यान्यज्ञांश्चबहुदक्षिणान् १५ नानातीर्थानिक्षेत्राणिजग्मतुःपुत्रलिप्सया ॥ तथापिनाभवत्पुत्रो

१ वर्षसहस्रांते इति वा पाठः ।

जन्मांतरकृतैनसोः १६ एकदादुःखितोराजासमाहूयसमंत्रिणः ॥ राज्यंमुद्रांचकोशंचजनान्जनपदास्तथा १७ तेभ्योनिवेद्यसंवैतौजग्मतुर्वनमुत्तमम् ॥
वल्कलाजिनसंवीतौदंपतीतपआस्थितौ १८ जितेंद्रियौजिताहारौजीर्णपर्णानिलाशिनौ ॥ चक्षुर्मात्रेणलक्ष्यौतौदृष्ट्वाथनारदोमुनिः १९ जनकंकृतवीर्य
स्यपितृलोकस्थमब्रवीत् ॥ अपुत्रत्त्वात्प्रायगतोविद्यतेतनयस्तव २० कृतवीर्योमृत्युलोकेश्वःपरश्वोमरिष्यति ॥ यदितस्यभवेत्पुत्रोनाकलोकप्रदर्शकः ॥
२१ कृतवीर्यस्तदाजीवेन्मृतोवास्वर्गमाप्नुयात् ॥ इत्युक्त्वानारदोयातःपश्यतिस्माद्भुतंभुवि २२ भ्रुशुंडेःपितरौपुत्रौतस्यपत्नींसकन्यकाम् ॥ अग्निज्वालाकुले
घोरेकुंभीपाकेह्यधोमुखान् २३ याम्यदूतैस्ताड्यमानान्क्रंदतोविविधान्रवान् ॥ तेषामाक्रंदितंश्रुत्वानारदःकरुणानिधिः २४ आगत्यकथयामासते
षांदुःखंभ्रुशुंडये ॥ नारदउवाच ॥ शक्रादयोदेवगणामुनयःकपिलादयः २५ यस्यतेदर्शनंकर्तुंयांतिहेरंबरूपिणः ॥ तत्कथंपितरौपत्नीपुत्राःपुत्र्यश्चकिंकराः
२६ यमलोकेकुंभिपाकेपच्यंतेतवदोषतः ॥ त्वंचापिज्ञानसंपन्नःकथंतन्नावबुध्यसे २७ पूर्वजानांत्वमुद्धारंयत्नंकुरुमहामुने ॥ शक्रउवाच ॥ भ्रुशुंडिरितिसं
तप्तोवाक्यंश्रुत्वामुनीरितम् २८ दुःखितःपितृदुःखेनभृशंजज्वालवह्निवत् ॥ उपायंचिंतयामासतेषामुद्धारकारकम् ॥ ददौश्रेयःससंकष्टचतुर्थीव्रतजंतदा २९
विलोक्यप्रणिधानेनभ्रुशुंडीसपरोक्षवित् ॥ ध्यात्वागजाननंदेवंकरेधृत्वाशुभंपयः ३१ उवाचपितृनुद्दिश्ययाचन्देवंगजाननम् ॥ भ्रुशुंडिरुवाच ॥ यदिभक्त्याकृ
तंमेस्तिगणनाथव्रतंतव ३१ तदातस्यप्रभावेनशीघ्रमुद्धरपूर्वजान् ॥ एवमुक्त्वातुतत्तोयंगजाननकरेक्षिपत् ३२ क्षिप्तमात्रेतदातोयेगजाननप्रसादतः ॥ वि
मानानिसमारुह्यसर्वेतेदेवरूपिणः ३३ सेव्यमानाअप्सरोभिःस्तूयमानाश्चचारणैः ॥ गंधर्वैर्गीयमानास्तेगणेशस्थानमाप्नुवन् ३४ अन्येपिकुंभिपाकेचन
राःदुष्कृतिनोभवन् ॥ तेपिसर्वेविमानस्थाःपदंगाणेश्वरंययुः ३५ एवंव्रतस्यमहिमामयातेपरिकीर्तितः ॥ यदेकदिनपुण्येनसर्वेतेसद्गतिंगताः ३६ जन्मावधि
कृतंयेनसंकष्टव्रतमादरात् ॥ शेषोपितस्यपुण्यस्यसंख्यांकर्तुंनवैक्षमः ३७ अतस्तस्यप्रभावेनविमानंप्रचलेन्मम ३८ ॥ इतिश्रीग०उपा०संकष्टचतुर्थीव्रत
कथनंनामाध्यायः ५८ ॥ राजोवाच ॥ ॥ कुंभीपाकाद्विनिःसृत्यतेपुयातेषुवैदिवम् ॥ कमुपायंसकृतवान्कृतवीर्यपितातदा १ ॥ शक्रउवाच ॥ ब्रह्मलो
कंजगामाशुददर्शकमलासनम् ॥ दुःखितोनारदाच्छ्रुत्वावंशविच्छेदमात्मनः २ प्रणम्यतमपृच्छत्सवंशविच्छेदकारणम् ॥ ममपुत्रोतिधर्मात्मावदान्योयज्ञ
कारकः ३ देवतातिथिभक्तश्चमान्यमानयिताभृशम् ॥ नानाविधप्रयत्नंसपुत्रार्थंकृतवान्विधे ४ तथापिनाभवत्कस्मात्तस्यपुत्रःसुरेश्वर ॥ राज्यंप्रकृतिसात्कृ
त्वावायुभक्षःस्थितोवने ५ अस्थिमात्रावशेषोसावद्यश्वोवामरिष्यति ॥ जन्मांतरीयंतस्यैनोयेनगच्छेल्लयंप्रभो ६ तमुपायंदयांकृत्वावदमेकमलासन ॥ तंमाप
यिष्येतत्राहंस्ववंशस्यविवृद्धये ७ एवंसुललितांवाणींश्रुत्वोवाचतथाविधिः ॥ श्रूयतांतवपुत्रस्यपूर्वजन्ममयेरितम् ८ सामनाम्नाभवत्पूर्वंतत्रैवनगरेत्वयजः ॥
दुष्कर्मातितरांयस्यदर्शनंपुण्यनाशकृत् ९ एकदातेनवित्तस्यलोभेनपथिघातिताः ॥ द्वादशब्राह्मणाःशांतास्त्यक्तास्तेनगुहांतरे १० सर्वंतदीयमादायन्निशि

स्वगृहमागतः ॥ माघकृष्णचतुर्थ्यांसउदयेशशिनोनृप ११ गणेशेतिगणेशेतिपुत्रमाहूयसत्वरम् ॥ अलब्धान्नजलस्तेनसहैवबुभुजेमुदा १२ कालेनतस्य
पुत्रोसौपंचत्वमगमन्निशि ॥ चंद्रोदयेचतुर्थ्यांतुकृष्णायामेवभूभुज १३ अज्ञानकृतसंकष्टचतुर्थीव्रतसंभवात् ॥ पुण्याद्वैनायकंधामजगामसुखदंतुसः १४
विमानवरमारूढोवीक्ष्यमाणोप्सरोगणैः ॥ वैमानिकैःस्तूयमानोदिव्यपुष्पैरथार्चितः १५ तेनैवपुण्यशेषेणकृतवीर्याभिधोनृपः ॥ तवपुत्रःसमापेदेपुत्रत्वमधु
नाभुवि १६ तदघौघक्षयात्तस्यपुत्रउत्पत्स्यतेनघ ॥ इतिब्रह्मवचःश्रुत्वाचकंपेसनृपोत्तमः १७ पप्रच्छपुनरेवासावुपायंपापनाशनम् ॥ कृतवीर्यपिताउवाच ॥
ब्रह्महत्याकृतंतस्यपापंनश्येत्कथंविधे १८ तद्वदस्वदयासिंधोयद्यपिस्यात्सुदुष्करम् ॥ ॥ ब्रह्मोवाच ॥ ॥ सचेद्व्रतंतुसंकष्टचतुर्थीसंज्ञकंतव १९ सुतः
करिष्यतेसम्यक्तदापापात्प्रमोक्ष्यते ॥ ॥ राजोवाच ॥ कथंतत्क्रियतेब्रह्मन्कस्मिन्मासेव्रतंशुभे २० तत्सर्वंवदमेस्वामिन्येनपापंलयंव्रजेत् ॥ ॥ ब्रह्मोवाच ॥
चतुर्थीभौमवारेतुमाघेकृष्णेभवेद्यदि २१ शुभेमुहूर्तेचंद्रेचकुर्यात्प्रारंभमस्यह ॥ दंतधावनपूर्वाणिस्नानानिचैकविंशतिं २२ कुर्वीतानित्यकर्माणिजपेन्मंत्रंततः
परम् ॥ निराहारोभवेन्मौनीपरनिंदाविवर्जितः २३ दुष्टकर्मचतांबूलंवर्जयेन्नियमेनच ॥ वर्जयेज्जलपानंचपरद्रोहंचपैशुनम् २४ तिलामलककल्केनदिनां
तेस्नानमाचरेत् ॥ एकाक्षरंषडर्णंवाजपेद्वावैदिकंमनुम् २५ गणेशप्रीतयेतस्यनाममंत्रंयथाविधि ॥ ध्यायेत्स्थिरेणमनसादेवदेवंगजाननम् २६ मुहु
र्तमात्रेणततःपूजयेद्गणनायकम् ॥ उपचारैःषोडशभिर्नैवेद्यैर्विविधैरपि २७ मोदकापूपशष्कुलीलड्डुकैर्वटकैरपि ॥ पायसैर्विविधैरन्नैर्व्यंजनैर्लेह्यचोष्यकैः
२८ फलैर्नानाविधैःपूगतांबूलैर्दक्षिणादिभिः ॥ एकविंशतिदूर्वाभिर्दीपैश्चकुसुमैरपि २९ चंद्रोदयेर्घ्यदानेनतिथयेमंत्रपूर्वकम् ॥ गजाननायपश्चात्तु
चंद्रायचततःपरम् ३० निवेद्यपूजनंनत्वाक्षमाप्यचततःपुनः ॥ ब्राह्मणान्भोजयेद्भक्त्याशक्त्यावाचैकविंशतिम् ३१ दशद्वादशवाशक्तोदक्षिणाभिः
सुतोषयेत् ॥ कथांश्रुत्वाततःसम्यक्स्वयंभुंजीतवाग्यतः ३२ गीतवादित्रघोषेणशेषांरात्रिंततोनयेत् ॥ एवंव्रतंचैकवर्षंकृतंचेद्यत्नतोनृप ३३ सर्वपा
पक्षयात्तस्यभवितापुत्रउत्तमः ॥ अन्यंवाचिंतयेत्कामंयंयंतंप्राप्नुयान्नरः ३४ सर्वसंकष्टनाशःस्यात्परचक्राद्भयंनहि ॥ शमीमूलेजपंस्तिष्ठन्नुपवासपराय
णः ३५ आचद्रोदयपर्यंतंव्रतमेतत्समाचरेत् ॥ अंधोमूकोजडःपंगुस्तदीप्सितमवाप्नुयात् ३६ दारान्पुत्रान्धनंराज्यंलभतेनात्रसंशयः ॥ श्रावणादिषुमासे
षुघृतलड्डादिकंपृथक् ३७ भक्षयेद्वर्षपर्यंतंतस्यासिद्धिरनुत्तमा ॥ श्रावणेसप्तलड्डूकान्भक्षयेद्दधिभक्षणम् ३८ आश्विनेचोपवासंचकार्तिकेदुग्धपा
नकम् ॥ मार्गशीर्षेनिराहारंपौषेगोमूत्रपानकम् ३९ तिलांश्चभक्षयेन्माघेफाल्गुनेघृतशर्कराम् ॥ चैत्रमासेपंचगव्यंवैशाखेशतपत्रिकाम् ४० घृतस्यभो
जनंज्येष्ठेआषाढेमधुभक्षणम् ॥ ॥ कृतवीर्यपिताउवाच ॥ अंगारकचतुर्थीतुविशेषोभिहितःकुतः ४१ वदस्वकृपयाब्रह्मन्प्रश्रयावनतायमे ॥ शृण्वतोनचमे
तृप्तिर्गजाननकथांशुभां ४२ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेचतुर्थीव्रतकथनंनामैकोनषष्टितमोऽध्यायः ५९ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ अंगारकचतु

र्यास्तुमहिमानंमहीपते ॥ शृणुष्वावहितोभूत्वाकथयामिसमासतः १ अवंतीनगरेराजन्भारद्वाजोमहामुनिः ॥ वेदवेदांगवित्प्राज्ञःसर्वशास्त्रविशारदः २
अग्निहोत्ररतोनित्यंशिष्याध्ययनतत्परः ॥ नदीतीरगतेस्तिष्ठन्ननुष्ठानरतोमुनिः ३ एकस्मिन्नेवसमयेदृष्टातेनाप्सरोवरा ॥ तांदृष्ट्वाचकमेभोक्तुंभारद्वाजोमहामु
निः ४ अकस्मात्कामिनींदृष्ट्वाकामासक्तोभवन्मुनिः ॥ कामबाणाभिभूतःसन्निपपातमहीतले ५ अतिविह्वलगात्रस्यतस्यरेतःप्रचस्खले ॥ प्रविष्टंतस्यतद्रेतः
पृथिवीबिलमध्यतः ६ ततएकःकुमारोभूज्जपाकुसुमसन्निभः ॥ तंधरित्रीस्नेहवशात्पालयामाससादरम् ७ जनुःस्वंतेनधन्यंसामनुतेपितरौकुलम् ॥ ततःससप्त
वर्षस्तांपप्रच्छजननींनिजां ८ मयिलोहितिमाकस्मान्मानुषदेहमास्थिते ॥ कश्चमेजनकोमातस्तन्ममाचक्ष्वसांप्रतम् ९ ॥ धरण्युवाच ॥ भारद्वाजमुनेरे
तःस्खलितंमयिसंगतम् ॥ ततोजातोसिरेपुत्रवर्धितोसिमयाशुभम् १० ॥ सउवाच ॥ तर्हितंमेमुनिंमातर्दर्शयस्वतपोनिधिं ॥ ब्रह्मोवाच ॥ तमादायतदादे
वीभारद्वाजंजगामकुः ११ उवाचप्रणिपत्यैनंत्वद्वीर्यप्रसवंसुतम् ॥ वर्धितंतंपुरोधार्यस्वीकुरुष्वमुनेधुना १२ तदाज्ञयाययौधात्रीस्वधामरुचिरंतदा ॥ भारद्वा
जःसुतंलब्ध्वामुमुदेचालिलिंगतम् १३ आघ्रायशिरउत्संगेस्थापयामासतंमुदा ॥ सुमुहूर्तेशुभेलग्नेचकारोपनयंमुनिः १४ वेदशास्त्राण्युपादिश्यगणेशस्य
मनुंशुभम् ॥ उवाचकुर्वनुष्ठानंगणेशप्रीतयेचिरम् १५ संतुष्टोदास्यतेकामान्सर्वांस्तवमनोगतात् ॥ ततःसनर्मदातीरेपद्मासनगतोमुनिः १६ संनियम्येंद्रि
याण्याशुध्यायन्हेरंबमंतरा ॥ जजापपरमंमंत्रंवायुभक्षोभृशंकृशः १७ एवंवर्षसहस्रंसतपस्तेपेसुदारुणम् ॥ माघकृष्णचतुर्थ्यांतमुदयेशशिनोमले १८ द
र्शयामासरूपंस्वंगणनाथोथदिग्भुजम् ॥ दिव्यांबरंभालचंद्रंनानायुधलसत्करम् १९ चारुशुंडंलसद्दंतंशूर्पकर्णंसकुंडलम् ॥ सूर्यकोटिप्रतीकाशंनानालंकार
मंडितम् २० ददर्शरूपंदेवस्यसबालःपुरतःस्थितम् ॥ उत्थायप्रणिपत्यैनंतुष्टावजगदीश्वरम् २१ ॥ भौमउवाच ॥ नमस्तेविघ्ननाशायनमस्तेविघ्नकारिणे ॥
सुरासुराणामीशायसर्वशक्त्युपबृंहिणे २२ निरामयायनित्यायनिर्गुणायगुणच्छिदे ॥ नमोब्रह्मविदांश्रेष्ठस्थितिसंहारकारिणे २३ नमस्तेजगदाधारनमस्त्रै
लोक्यपालक ॥ ब्रह्मादयेब्रह्मविदेब्रह्मणेब्रह्मरूपिणे २४ लक्ष्यालक्ष्यस्वरूपायदुर्लक्षणभिदेनमः ॥ नमःश्रीगणनाथायपरेशायनमोनमः ॥ इतिस्तुतःप्रसन्ना
त्मापरमात्मागजाननः २५ उवाचश्लक्ष्णयावाचाबालकंसंप्रहर्षयन् ॥ गजाननउवाच ॥ तवोग्रतपसातुष्टोभक्त्यास्तुत्यानयापिच २६ बालभावेपिधैर्यात्तेद
दामिवांछितान्वरान् ॥ एवमुक्तोभूमिपुत्रोवचऊचेगजाननम् २७ ॥ भौमउवाच ॥ धन्याद्यदृष्टिर्जननमपिमेदर्शनात्तेसुरेशधन्यंज्ञानंकुलमपिविभोभूःसशैलाद्य
धन्या ॥ धन्यंचैतत्सकलमपितपोयेनदृष्टोखिलेशोधन्यावाणीवसतिरपिययासंस्तुतोमूढभावात् २८ यदितुष्टोसिदेवेशस्वर्गेभवतुमेस्थितिः ॥ अमृतंपा
तुमिच्छामिदेवैःसहगजानन २९ कल्याणकारिमेनामख्यातिमेतुजगत्त्रये ॥ दर्शनंमेचतुर्थ्यांतेजातंपुण्यप्रदंविभो ३० अतःसापुण्यदानित्यंसर्वसंकष्टहारि
णी ॥ कामदाव्रतकर्तॄणांत्वत्प्रसादात्सदास्तुच ३१ ॥ गणेशउवाच ॥ अमृतंपास्यसेसम्यग्देवैःसहधरासुत ॥ मंगलेतिचनाम्नात्वंलोकेख्यातिंगमिष्यसि

३२ अंगारकेतिरक्तत्वाद्दसुमत्यायतःसुतः ॥ अंगारकचतुर्थीयेकरिष्यंतिनराभुवि ३३ तेषामब्दसमंपुण्यंसंकष्टीव्रतसंभवम् ॥ निर्विघ्नतासर्वकार्येभविष्य
तिनसंशयः ६४ अवंतीनगरेराजाभविष्यसिपरंतप ॥ व्रतानामुत्तमंयस्मात्कृतंतेव्रतमुत्तमम् ३५ यस्यसंकीर्त्तनान्मर्त्यःसर्वान्कामानवाप्नुयात् ॥ ब्र
ह्मोवाच ॥ ॥ इतिदत्वावसेदेवःपिदधेद्विरदाननः ३६ ततस्तुमंगलोदेवंस्थापयामासभक्तितः ॥ शुंडामुखंदशभुजंसर्वावयवसुंदरम् ३७ प्रासादंकारया
मासगजाननमुदावहम् ॥ संज्ञांमंगलमूर्तीतिदेवदेवस्यसोकरोत् ३८ ततोभवत्कामदात्क्षेत्रंसर्वजनस्यतत् ॥ अनुष्ठानात्पूजनाच्चदर्शनात्सर्वमोक्षदम् ३९
ततोविनायकोदेवोविमानवरमुत्तमम् ॥ प्रेषयामासस्वगणैर्भौममानेतुमंतिकम् ४० तेगत्वातेनदेहेनतंभौममानयन्बलात् ॥ गणेशस्यांतिकंराजंस्तदद्भुतमिवाभ
वत् ४१ ततोभौमोभवत्ख्यातस्त्रैलोक्येसचराचरे ॥ यतोभौमेनसंकष्टचतुर्थीभौमसंयुता ४२ कृताप्राप्तंचस्वर्गेचामृतपानंसुरैःसह ॥ अतश्चांगारकयुताच
तुर्थीप्रथिताभुवि ४३ चिंतितार्थप्रदानेनचिंतामणिरितिप्रथाम् ॥ प्रयातोमंगलमूर्त्तिःसर्वानुग्रहकारकः ४३ पारिनेराचुनगरात्पश्चिमेप्राथितोभवत् ॥ चिं
तामणिरितिख्यातःसर्वविघ्ननिवारणः ४४ अधुनासिद्धगंधर्वैःपूज्यतेसाविधूदये ॥ ददातिवांछितानर्थान्पुत्रपौत्रादिसंपदः ४५ इतिश्रीगणेशपुराणेउपासनाखं
डेअंगारकचतुर्थीव्रतोपाख्यानेषष्टितमोध्यायः ॥ ६० ॥ ॥ ब्रह्मोवाच ॥ ॥ एकदाहंगतोराजन्कैलासंगिरिशालयम् ॥ उपविष्टःसमामध्येपश्यन्नारदमा
गतम् १ तेनापूर्वंफलंचैकंशंकरायनिवेदितम् ॥ ययाचेगणपस्तत्तुकुमारोपिचशंभवे २ कस्मैदेयंफलमिदंअपृच्छच्छंकरोपिमाम् ॥ अहंप्रोवाचबा
लायकुमारायेतितंतदा ३ दत्तंशिवेनतस्मैतच्चुक्रोधचगजाननः ॥ ततोब्रह्मास्वभवनंगत्वास्रष्टुमियेषसः ४ तत्रविघ्नकरोविघ्नंचकारपरमाद्भुतम् ॥ उ
ग्ररूपंसमास्थायभीषयामासमांतदा ५ मयिभ्रांतेथसविधुर्दृष्ट्वाक्रूरतरंतुतम् ॥ अहसत्परमंचन्द्रःस्वगणैर्द्विरदाननम् ६ ततःपरमक्रुद्धोसावशपत्तंविधुंत
दा ॥ अदर्शनीयस्त्रैलोक्येमद्वाक्यात्त्वंभविष्यसि ७ कदाचित्केनदृष्टःसमहापातकवान्भवेत् ॥ एवंशप्त्वागतोदेवोनिजधामगणैर्वृतः ८ चंद्रस्तुम
लिनोदीनोलीनश्चितामयेन्हदे ॥ अणिमादिगुणोपेतेजगत्कारणकारणे ९ कथमाचरितंदौष्ट्यमज्ञानाद्बालवन्मया ॥ अदर्शनीयःसर्वेषांविवर्णोमलि
नोभवम् १० कथंसुरूपोवंद्यश्चकलाभिःसुरतोषकः ॥ एतस्मिन्नंतरेदेवैःश्रुतःशापोमहान्विधोः ११ तत्रेयुर्वह्निशक्राद्यायत्रास्तेसौगजाननः ॥
विजिज्ञपुःसुरौघास्तेविघ्नकारणकारिणे १२ ॥ ॥ देवाऊचुः ॥ ॥ त्वंदेवदेवजगतामसिवंदनीयस्त्वंपासिहंसिविदधासियथेष्टमीश ॥ त्वं
निर्गुणोपिगुणकृत्गुणिनांत्र्यधीशस्त्वामेवदेवशरणंवयमद्ययाताः १३ पाहीशनोखिलजगत्तवशापभीतंचंद्रेपराधिनिकथंपतितंसुकष्टम् ॥ तस्माद्दयंचजगदी
शजगच्चचंद्रःशर्माप्नुयामभुवनेशतथाविधेहि १४ कष्टेनिपतितंविश्वंअदृश्येशशिनिप्रभो ॥ अनुग्रहंचचंद्रेस्मिंस्त्रैलोक्यंकर्तुमर्हसि १५ नाज्ञासीद्यस्यतेरूपंम
हिमानंश्रुतित्रयम् ॥ सकस्यस्तवनीयःस्यात्तथापिस्तूयसेखिलैः १६ कृतकृत्यावयंतेद्यदर्शनाद्भाषणादपि ॥ शरणंतेप्रपन्नाःस्मःप्रपन्नार्त्तिहराव्यय १७ इ

तितद्वचनंश्रुत्वाजगादद्विरदाननः ॥ सुप्रसन्नःस्तवैस्तेषांधर्मकामार्थमोक्षदः १८ ॥ ॥ विकटउवाच ॥ ॥ प्रसन्नोहंसुराःस्तुत्यान्वृणुध्वंवाछितंमहत् ॥
असाध्यमपिवोदद्यांत्रिषुलोकेषुयद्भवेत् ॥ १९ ॥ ॥ देवाऊचुः ॥ ॥ सुधाकरेनुग्रहंतेसर्वईहामहेवयम् ॥ अनुगृहीतेतस्मिंस्तुसर्वेषांनोग्रहोभवेत् २०
॥ ॥ गणेशउवाच ॥ ॥ एकाऽब्दंवातदर्धंवातदर्धार्धमथापिवा ॥ अदर्शनीयोस्तुशशीब्रूतान्यंवावरंसुराः २१ ततस्तेदंडवत्सर्वेप्रणेमुर्द्विरदाननम् ॥
उवाचप्रणतांस्तांस्तुविकटोभावपूर्वकम् २२ अप्रमाणंकथमहोवचनंकर्तुमुद्यताः ॥ शरणंचप्रपन्नानांनत्यागंकर्तुमुत्सहे २३ मेरुश्चलेत्पतेत्सूर्योवह्निःशी
तोभवेद्यदि ॥ मर्यादामुत्सृजेत्सिंधुर्वचोमेनानृतंभवेत् २४ अथापिगदतोवाक्यंशृणुध्वंसुरसत्तमाः ॥ भाद्रशुक्लचतुर्थ्यांयोज्ञानतोज्ञानतोपिवा २५ अभि
शापीभवेच्चंद्रदर्शनाद्भृशदुःखभाक् ॥ इतितद्वचनंश्रुत्वादेवामुमुदिरेखिलाः २६ ओमितिप्रणिपत्योचुःपुष्पवृष्टिंचचिक्षिपुः ॥ तदनुज्ञांगृहीत्वेयुर्देवाश्चंद्रमसंप्र
ति २७ तमूचुस्त्वंमूढतरोयोहसद्द्विरदाननम् ॥ त्रैलोक्यंसंकटेक्षिप्तंत्वयाश्रेष्ठापराधिना २८ त्रैलोक्यनायकेदेवेजगत्त्रयविधायिनि ॥ अव्ययेनिर्गुणेनित्येप
रब्रह्मस्वरूपिणि २९ गजाननेखिलगुरावपराधंयतोचरः ॥ एवंनियमितंतेनसर्वलोकहितेप्सुना ३० अस्माभिःपरमक्लेशात्प्रसन्नोसौकृतोविभुः ॥ भाद्रपदचतु
र्थ्यांत्वंनद्रष्टव्यःकदाचन ३१ त्वंचापिशरणंयाहिदेवदेवंगजाननं ॥ तत्प्रसादाच्छुद्धतनुःपरांख्यातिमवाप्स्यसि ३२ इतिचन्द्रोवचःश्रुत्वादेवानांहितमात्मनः
॥ जगामशरणंदेवंशरणागतवत्सलम् ३३ गजाननंसुरेशानंमहेशानादिवंदितम् ॥ जजापपरमंमंत्रमेकाक्षरमवापहम् ३४ विधुरिंद्रोपदिष्टंसपरमेणसमाधि
ना ॥ दशद्वादशवर्षाणितपस्तेपेसुदारुणम् ३५ गंगायादक्षिणेतीरेसर्वसिद्धिप्रदायिनि ॥ ततःप्रसन्नोभगवान्पुरोयातोगजाननः ३६ रक्तमाल्यांबरधरोरक्त
चंदनचर्चितः ॥ चतुर्भुजोमहाकायःसिंदूरारुणविग्रहः ३७ प्रभयाभासयँल्लोकान्कोटिसूर्याधिकप्रभः ॥ तेजःसमूहंदृष्ट्वातंप्रचकंपेभृशंशशी ३८ परमंधैर्यमा
स्थायकृतांजलिपुटःपुरः ॥ तर्कयामासमनसाप्रायोयंद्विरदाननः ३९ वरंदातुमिहायातइतिमत्वाननामतम् ॥ तुष्टावपरयाभक्त्यादेवदेवंगजाननम् ४० ॥ चं
द्रउवाच ॥ नमामिदेवंद्विरदाननंतंयःसर्वविघ्नंहरतेजनानाम् ॥ धर्मार्थकामांस्तनुतेखिलानांतस्मैनमोविघ्नविनाशनाय ४१ कृपानिधेब्रह्ममयायदेवविश्वात्मनेवि
श्वविधानदक्ष ॥ विश्वस्यबीजायजगन्मयायत्रैलोक्यसंहारकृतेनमस्ते ४२ त्रयीमयायाखिलबुद्धिदात्रेबुद्धिप्रदीपायसुराधिपाय ॥ नित्यायसत्यायचनित्यबुद्धेनि
त्यंनिरीहायनमोस्तुनित्यम् ४३ अज्ञानदोषेणकृतोपराधस्तंक्षंतुमर्हासिदयाकरस्त्वम् ॥ तवापिदोषःशरणागतस्यत्यागेमहात्मन्कुरुमेनुकंपाम् ४४ ॥ ब्रह्मोवा
च ॥ इतितद्वचनंश्रुत्वासुप्रसन्नोगजाननः ॥ तस्मैवरानददौदेवःस्तुत्यानत्यासुतोषितः ४५ यथापूर्वंस्थितंरूपंतथातत्तेभविष्यति ॥ भाद्रशुक्लचतुर्थ्यांत्वांयोन
रःसंप्रपश्यति ४६ तस्याभिशापोनूनंस्यात्पापंहानिश्चमूर्खता ॥ तस्यामदर्शनीयोसियदुक्तंमेसुरैःसह ४७ कृष्णपक्षेचतुर्थ्यांतुव्रतंयत्क्रियतेनरैः ॥ तवोदये

१ मत्पूजनानन्तरंसंपूजनीयइतिपाठान्तरम् ।

हंपूज्यस्त्वंपूजनीयःप्रयत्नतः ४८ दर्शनीयःप्रयत्नेनविपरीतेव्रतंवृथा ॥ ललाटेकलयातिष्ठममप्रीतिकरःशशिन् ४९ प्रतिमासंद्वितीयायांनमस्य
श्चभविष्यसि ॥ एवंलब्धवरश्चंद्रोयथापूर्वोभवत्तदा ॥ ५० ॥ स्थापयामासवरदमूर्तिदेवर्षिभिःसह ॥ भालचंद्रेतिनामास्यचक्रुस्तेमुनयःसुराः ॥
५१ प्रासादंकारयामासकांचनंरत्नसंयुतं ॥ उपचारैःषोडशभिःपूजयामाससादरं ५२ पूजयित्वासुराःसर्वेमुनयश्चवरान्ददुः ॥ सिद्धिक्षेत्रमिदंलोके
विख्यातंतुभविष्यति ५३ अनुष्ठानवतामत्रसर्वसिद्धिकरंभवेत् ॥ ततस्तेदेवमुनयोनत्वातंद्विरदाननम् ५४ ययुःप्रसन्नमनसःस्वंस्वंस्थानंमुदायुताः ॥
यातेषुदेवमुनिषुदेवोपिपिदधेवपुः ५५ अंतर्हितेभालचंद्रेचंद्रोत्दष्टमनाइव ॥ स्वंधामप्रतिपद्यैवस्वंधामप्रययौतदा ५६ ॥ इतिश्रीगणेशपुराणेउपा०
चंद्रशापानुग्रहवर्णनंनामैकषष्टितमोध्यायः ॥ ६१ ॥ ॥ कृतवीर्यपिताउवाच ॥ ॥ चतुर्थ्यांकृष्णपक्षेतुभुक्तिश्चंद्रोदयेयतः ॥ क्रियतेतन्निमित्तंयत्पृष्टं
तन्मेनिरूपितम् १ दूर्वांकुरार्पणस्यापिश्रोतुमिच्छामिकारणम् ॥ किमर्थंगणनाथस्यप्रियादूर्वांकुरावद २ ॥ ब्रह्मोवाच ॥ हंततेकथयिष्यामिदूर्वांकुरसमर्प
णे ॥ यत्फलंगणनाथस्यश्रूयतांतन्नृपोत्तम ३ जांबेतिनगरीख्यातादेशेदक्षिणतोभवत् ॥ क्षत्रियःसुलभोस्यांतुगुणीदानीधनीबली ४ विवेक्यासन्निमा
न्यमानीशमीदमपरायणः ॥ सर्वशास्त्रार्थतत्वज्ञःसर्ववेदार्थतत्त्ववित् ५ विकटेभक्तिमान्नित्यंस्तुतिस्तोत्रपरायणः ॥ तस्यभार्यासुमुद्रासीन्नाम्नापरमविश्रुता ६
अत्यंतसुंदरीसाध्वीस्वरूपाद्धिकृताप्सराः ॥ देवविप्रातिथिपरापत्युश्चित्तानुवर्तिनी ७ पतिव्रतानांसर्वासांमान्याश्रेष्ठतमानृप ॥ एकस्मिन्दिवसेतौतुदम्प
तीस्नाननिर्मलौ ८ उपविष्टौपुराणार्थंपरस्परमनोनुगौ ॥ यावत्तावत्समायातोब्राह्मणोमधुसूदनः ॥ भिक्षाभिलाषीसततंपरमेश्वरचिंतकः ९
कुचैलश्चदरिद्रत्वात्सांबरोपिदिगंबरः ॥ सुलभस्तंतुदृष्ट्वैवप्रणनाममुदायुतः १० जहासचैनंसहसामोहाविष्टोद्विजोत्तमम् ॥ सउवाचततःशापं
प्रतिक्षुब्धोमहामुनिः ११ क्रोधसंरक्तनयनस्त्रैलोक्यंप्रदहन्निव ॥ हलकर्षणकोनित्यंनित्यंदुःखसमन्वितः १२ वृषोभवकुबुद्धेत्वंयोहसद्विवृतैर्द्विजैः ॥
भर्तुःशापंपरिश्रुत्यसुमुद्राक्रोधमूर्छिता १३ अशपत्तंद्विजंरुष्टासर्पिणीवपदाहता ॥ यतस्त्वयाविवेकेनशापोदत्तःपतेर्मम १४ अतस्त्वंचक्रिवान्भू
त्वाविष्ठाशीभवकुद्विज ॥ सोपितामशपत्क्रूरंश्रुत्वाशापंतदीरितम् १५ स्त्रीत्वात्त्वमशपोयस्मात्त्वंचांडालीभविष्यसि ॥ दरिद्रादोषबहुलाविण्मूत्रा
दाशुभंकरी १६ एवंपरस्परंशप्त्वात्यक्त्वादेहान्सुदुर्लभान् ॥ सुलभोवृषभोजातोहलकर्षणवान्भवत् १७ नविश्रांतिःक्षणंतस्यविप्रशापात्तदाभवत् ॥
द्विजोपिरासभेयोनौजातोसौमधुसूदनः १८ जातासुमुद्राचांडालीदुष्टाप्राणिविहिंसिका ॥ दरिद्रापैशाचवतीविण्मूत्राशनतत्परा १९ अतिशुष्कशरीरा
सादंतुराविकटानना ॥ कदाचिदटमानासादक्षिणेनगरस्यतु २० प्रासादंगणनाथस्यददर्शपरमाद्भुतं ॥ नानावृक्षलताजालैर्नानापक्षिगणैर्युतं २१ यत्रयो

१ चन्द्रोपिविमनाइव इ०पा० । २ अवन्तीनगरीतिपाठान्तरम् ।

गीश्वराःकेचिदनुष्ठानरताःसदा ॥ उपासकागणेशस्यनियमस्थावसंतिहि २२ केचित्कामार्थिनःकेचित्पुत्रमोक्षधनार्थिनः ॥ कदाचिद्भाद्रमासस्यचतुर्थ्यांतुगृ
हेगृहे २३ तस्मिन्पुरेसंप्रवृत्तोगणनाथमहोत्सवः ॥ अतिवृष्टिःप्रवृत्ताचमहाप्रलयसूचिका २४ चांडालीवृष्टिभीतासायातियत्रनिवेशनं ॥ ततस्ततोखिलजनै
र्निरस्ताताडनादिभिः २५ ततोदेवालयंयातापाणावग्निप्रगृह्यसा ॥ तत्राप्यताडयन्केचित्योगिभिस्तैर्निराकृता २६ प्रज्वाल्यसातृणैरग्निमुष्णान्यंगानिकु
र्वती ॥ अकस्माद्वायुनाप्रागादेकोदूर्वांकुरस्तदा २७ पतितोगणनाथस्यमस्तकेदैवयोगतः ॥ सरासभःशीतभीतोयातोदेवालयंतदा २८ तदावृषोलांगलात्तु
मुक्तोदैवात्समाययौ ॥ प्रासादंगणनाथस्यभाविनोर्थस्यगौरवात् २९ उभावपितृणंतस्याश्चांडाल्यास्तौबभक्षतुः ॥ परिसुप्तजनेतत्रतयोर्युद्धमवर्त्तत ३०
लत्ताभ्यांचैवशृंगाभ्यांगजाननसमीपतः ॥ तयोरास्यान्निपतितौशुंडायांचपदेतदा ३१ दूर्वांकुरौगणेशस्यतुतोषचगजाननः ॥ ततःसायष्टिमादायदेवांतिक
मुपागमत् ३२ अहनत्तौखरवृषौस्वयंपूजांबभक्षच ॥ खुरशब्दंतयोःश्रुत्वाबुबुधेनिद्रितोजनः ३३ बहिश्चकारदंडेनमुष्टिकूर्परघाततः ॥ पलायनपरासा
पिताडिताशर्करादिभिः ३४ चांडाल्यारासभस्यापिस्पर्शशंकाकुलैर्जनैः ॥ स्नापितस्तीर्थतोयेनमंत्रितेनगजाननः ३५ पूजितःपरयाभक्त्यानानाद्रव्यैरनेक
शः ॥ वृषरासभचांडालीरतिदुष्टाजनाःपुनः ३६ ताडयामासुरत्यग्रालगुडैर्जानुभिस्तलैः ॥ देवद्वारेचपिहितेगतिस्तेषांनविद्यते ३७ भ्रमतांक्रंदतांतेषांत्रयाणां
दारुणैःस्वरैः ॥ मनस्तुदेवदेवस्यविकटस्यतदाहृतम् ३७ एतेषांतुप्रसंगेनपुनःपूजाममाभवत् ॥ एतैश्चपूजितश्चाहमेकदूर्वांकुरादिभिः ३८ प्रदक्षिणाबहुतरा
कृतादुष्टेषुसत्स्वपि ॥ भाद्रशुक्लचतुर्थ्यांमेदूर्वामेकांसमर्पयेत् ३९ समेमान्यश्चपूज्यश्चयश्चकुर्यात्प्रदक्षिणां ॥ तस्मादेतान्विमानेनस्वधामप्रापयाम्यहम् ४०
एवंविमानमप्रैषीत्स्वगणैरुपलक्षितम् ॥ स्वरूपधारिभिर्देवोगंधर्वाप्सरसांगणैः ४१ युतंवादित्रनिचयैःपुष्पैःपरिमलैरपि ॥ दिव्यभोगसमायुक्तंपताकाध्व
जमंडितम् ४२ तानादायगणास्तेतुगजाननस्वरूपिणः ॥ तस्मिन्विमानेनिक्षिप्यादिव्यदेहान्मुदायुतान् ४३ गजाननाज्ञयातस्यधामसंप्रापयन्जवात् ॥ प
श्यतांसर्वलोकानामाश्चर्यमभवद्धृदि ४४ एतेषांपूर्वपुण्येनगतिरेषेतिचाब्रुवन् ॥ ततोयोगीश्वराःकेचित्त्यक्त्वाध्यानंगतागणान् ४५ पप्रच्छुःकथमेतेषांब्रूत
पुण्यागतिर्ध्रुवा ॥ अतिपातकिनामेषांपुण्यलेशोनविद्यते ४६ गतिःसुदुर्लभाकस्मात्प्राप्तानोगदतानघाः ॥ तदेवाशुचरिष्यामस्त्यक्त्वानुष्ठानमात्मनः ॥
४७ असंख्यातोगतःकालोनदेवोदृक्पथंगतः ॥ विरक्तानांवायुभुजांअनुष्ठानवतांसदा ४८ धामप्राप्तिःकदानःस्याद्गणेशस्यवदंतुनः ४९ ॥ इतिश्रीगणेशपुरा
णेउपासनाखंडेदूर्वोपाख्यानंनामद्विषष्टितमोध्यायः ६२ ॥ ॥ ६ ॥ ॥ गणाऊचुः ॥ शृणुध्वंयोगिनःसर्वेस्थिरीकृत्यमनश्चलम् ॥ यन्नशेषोभवेद्वक्तुंसमर्थश्च
तुराननः १ तद्वक्तुंकःसमर्थःस्याद्यथाशक्तिवदामच ॥ कुर्वंतिस्तवनंयस्यसर्वदाजाशिवादयः २ तस्यकोगणनाथस्यमहिमानंवदेत्स्फुटम् ॥ इत्थंतदीयांलीलां
वातथापिशृणुतानघाः ३ दूर्वांकुराणांमहिमानज्ञातोमुनिभिःसुरैः ॥ यज्ञैर्दानैस्तपोभिश्चव्रतैर्होमैर्नवाप्यते ४ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ वा

सवस्यचसंवादंनारदस्यमहात्मनः ५ एकदानारदोगच्छद्वासवंद्रष्टुमुत्सुकः ॥ पूजितःपरयाभक्त्याकृतासनपरिग्रहम् ६ मुनिंपप्रच्छबलहादूर्वामाहात्म्यमा
दरात् ॥ इंद्रउवाच ॥ किमर्थंदेवदेवस्यगणेशस्यमहात्मनः ॥ विशेषतःप्रियाब्रह्मन्महादूर्वांकुरामुने ७ ॥ मुनिरुवाच ॥ कथयामियथाज्ञातंदूर्वामाहात्म्य
मुत्तमम् ॥ स्थावरेनगरेपूर्वंकौंडिन्योभून्महामुनिः ८ उपासकोगणेशस्यतपोबलसमन्वितः ॥ रमणीयतरस्तस्यग्रामदक्षिणभागतः ९ आश्रमःसुमहानासी
ल्लतावृक्षसमन्वितः ॥ सरांसिफुल्लपद्मानियत्रासन्सुमहांतिच १० भ्रमरैरुपजुष्टानिहंसकारंडकैरपि ॥ चक्रवाकैर्बकैश्चैवकच्छपैर्जलकुक्कुटैः ११
सतुध्यानरतस्तत्रप्रारभत्तपउत्कटम् ॥ पुरःस्थाप्यमहामूर्तिंगणेशस्यचतुर्भुजाम् १२ सुप्रसन्नांसुवरदांदूर्वायुक्तांसुपूजिताम् ॥ जजापपरमंमंत्रंषडर्णंदेवतोषक
म् १३ पप्रच्छसंशयाविष्टापत्नीनाम्नाश्रयास्यतम् ॥ आश्रयोवाच ॥ स्वामिन्गजाननेदेवेदूर्वाभारंदिनेदिने १४ समर्पयसिकस्मात्त्वंतृणैःकोपिनतुष्यति ॥
अस्तिचेत्पुण्यमेतेनतन्मेत्वंकृपयावद १५ कौंडिन्यउवाच ॥ शृणुप्रियेप्रवक्ष्यामिदूर्वामाहात्म्यमुत्तमम् ॥ धर्मस्यनगरेपूर्वमासीदुत्सवउत्तमः १६ सर्वेदेवाः
सगंधर्वाआहूताश्चाप्सरोगणाः ॥ सिद्धचारणनागाश्चमुनयोयक्षराक्षसाः १७ तिलोत्तमायानृत्यंत्याःप्रावारोन्यपतत्भुवि ॥ ददर्शतस्याःसयमःकुचौचारुबृह
त्तमौ १८ अभवत्कामसंतप्तोविश्रांतोनिरपत्रपः ॥ इयेषालिंगितुंतस्याश्चुंबितुंचतदाननम् १९ सदृष्टोनिर्गतस्तस्माल्लज्जयाधोमुखोयमः ॥ गच्छतस्तस्यरेतश्च
स्खलितंपतितंभुवि २० ज्वालामाल्यभवत्तस्मात्पुरुषोविकृताननः ॥ कुर्वन्दंष्ट्रारवंक्रूरंत्रासयन्भुवनत्रयम् २१ ददाहपृथिवींसर्वांजटाभिर्गगनंस्पृशत् ॥ च
कंपेतस्यशब्देनत्रिलोकीमानसंभ्रमम् २२ तदैवविष्णुमगमंस्तेतुसर्वेसआसदः ॥ स्तुतिंनानाविधांकृत्वानानास्तोत्रैर्यथामति २३ प्रार्थयामासुरव्यग्राःस
र्वलोकहितायतम् ॥ सतैःसर्वैःसमगमद्गजाननमनामयम् २४ तस्यनाशंततोज्ञात्वातुष्टुवुःसर्वएवतम् ॥ देवामुनयश्चोचुः ॥ नमोविघ्नस्वरूपायनमस्तेविघ्नहा
रिणे २५ नमस्तेसर्वरूपायसर्वसाक्षिन्नमोस्तुते ॥ नमोदेवायमहतेनमस्तेजगदादये २६ नमःकृपानिधेतुभ्यंजगत्पालनहेतवे ॥ नमस्तेपूर्णतमसेसर्वसंहारकारि
णे २७ नमस्तेभक्तवरदसर्वदात्रेनमोनमः ॥ नमस्तेनन्यशरणसर्वकामप्रपूरक २८ नमस्तेवेदविदुषेनमस्तेवेदकारिणे ॥ कमन्यंशरणंयामःकोनुनःस्याद्भ
यापहः २९ अकालएवप्रलयःकथंलब्धोजनैरयम् ॥ हागजाननदेवेशहाहाविघ्नहराव्यय ३० सर्वेषांमरणेप्राप्तेकथमस्मानुपेक्षसे ॥ इतितद्वचनंश्रुत्वाकरु
णाब्धिर्गजाननः ३१ आविरासीत्पुरस्तेषांशिशुरूपोरिभीतिहा ॥ बिभ्रत्कमलनयनेशतचंद्रनिभाननम् ३२ कोटिसूर्यप्रभाजालःकोटिकंदर्पजिद्व
पुः ॥ कुंदकुड्मलशोभाजिद्दशनोधरबिंबजित् ३३ उन्नसोभ्रूकुटीचारुनयनःकंबुकंठयुक् ॥ विशालवक्षाजानुस्पृग्भुजद्वययुतोबली ३४ गंभीरनाभि
विलसदुदरोतिलसत्कटिः ॥ रंभाशोभापरिस्पर्द्धिगुरूरुश्चारुजानुयुक् ३५ सुचारुजंघागुल्फश्रीविलसत्पादपद्मकः ॥ नानालंकारशोभाढ्योमहार्घवस
नावृतः ३६ एवंदेवंनिरीक्ष्यैवनगरस्यपुरोभुवि ॥ उत्तस्थुर्देवमुनयोजयशब्दपुरःसरम् ३७ प्रणेमुर्दंडवद्भूमौशक्रंदेवगणायथा ॥ देवाऋषयऊचुः ॥ कोभ

वान्कुतआयातःकिंकार्यंवदनोविभो ३८ वयमेवंविजानीमोब्रह्मैवबालरूपधृक् ॥ अनलासुरसंत्रासात्त्यक्त्वाकर्माणिसंस्थितान् ३९ आविर्भूतंतुनस्त्रा
तुंदुष्टसंहारकारकम् ॥ इतितद्वचनंश्रुत्वाशिशुरूपीगजाननः ४० बभाषेहास्यवदनःसर्वान्देवमुनीन्प्रति ॥ बालउवाच ॥ भवंतोज्ञानसंपन्नायदुक्तंसत्यमेवतत् ४१
अहंतस्यवधायैवदुष्टस्यपरपीडिनः ॥ निजेच्छयाबालरूपीवेगेनागांसुरर्षयः ४२ उपायंवच्मिवस्तस्यवधेतंकुरुतानघाः ॥ सर्वैर्भवद्भिस्तंद्ध्यानोदनीयोबलादहम्
४३ द्रष्टव्यंकौतुकंतस्यममचैवमहत्तरम् ॥ एवंश्रुत्वाकृपावाक्यंसर्वेतेहर्षनिर्भराः ४४ ऊचुःपरस्परंसर्वेनजानीमोस्यपौरुषम् ॥ ईश्वरोबालरूपेणकर्तुमस्यव
धंनुकिम् ४५ अवतीर्णोभवेत्त्रातुंपीडितंभुवनत्रयम् ॥ इत्थमुक्त्वातुतेसर्वेप्रणेमुःसादरंचतम् ४६ एतस्मिन्नेवकालेतुकालानलस्वरूपधृक् ॥ दहन्दशदिशोभक्ष
न्नरलोकंसमाययौ ४७ कोलाहलोमहानासील्लोकानांक्रंदतांतदा ॥ दृष्ट्वैवसर्वेमुनयःपलायनपरापयुः ४८ तंचतेमुनयःप्रोचुःशीघ्रंकुरुपलायनम् ॥ नोचेद्ग्रसि
ष्यतेत्वाद्यसुमहाननलोध्रुवम् ४९ तिमिंगिलोयथामीनानुरगान्गरुडोयथा ॥ इतितद्वचनंश्रुत्वापरमात्मागजाननः ५० बालरूपधरोतिष्ठत्पर्वतोहिमवा
निव ॥ सुरर्षयोययुर्दूरात्त्यक्त्वातत्रैवबालकम् ५१ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेदूर्वामाहात्म्येत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ६४ ॥ आ
श्र्योवाच ॥ देवर्षिषुप्रयातेषुबालेचाचलवत्स्थिते ॥ किमासीत्कौतुकंतत्रबालकालानलोद्भवम् १ तत्सर्वंविस्तरान्मह्यंकथयाशुमहामुने ॥ ॥ नारदउवाच ॥
एवंतयाकृतप्रश्नःकौंडिन्योमुनिसत्तमः २ यदब्रवीच्छचीभर्तस्तत्त्वंशृणुमयोदितम् ॥ ॥ कौंडिन्यउवाच ॥ अचलेचलवद्बालेस्थितेतस्मिन्गजानने ३
कालानलइवाक्षोभ्यआययौसोऽनलासुरः ॥ तस्मिन्क्षणेचलावापिचचालाचलसंयुता ४ नभोदध्वानसदृशघनगर्जितनिस्वनैः ॥ निपेतुर्वृक्षशाखाभ्यःपक्षि
वृंदानिभूतले ५ निर्वारिर्वारिधिर्जातोवृक्षाउन्मूलितास्तदा ॥ प्रकंपनेनमहतानप्राज्ञायतकिंचन ६ तस्मिन्नेवक्षणेदेवोबालरूपीगजाननः ॥ दधारानलरू
पंतंदैत्यंमायाबलेनहि ७ प्राशत्सर्वेषुपश्यत्सुजलधिंकुंभजोयथा ॥ ततःसोचिंतयद्देवोयद्ययंजठरेगतः ८ दहेत्त्रिभुवनंकुक्षौदृष्टमाश्चर्यमुत्कटम् ॥ ततःशक्रो
ददौचंद्रंतस्यवह्नेःप्रशांतये ९ भालचंद्रेतितंदेवास्तुष्टुवुर्मुनयोपिच ॥ तथापिनचशांतोभूदनलःकंठमध्यगः १० ततोब्रह्माददौसिद्धिबुद्धीमानसकन्यके ॥ रं
भोरूपद्मनयनेकेशशैवलसंयुते ११ चंद्रवक्त्रेमृतागिरौकूपनाभीसरिद्वली ॥ मृणालमध्येप्रवालहस्तेशैत्यस्यकारणे १२ उवाचेमेसमालिंग्यतवशांतोनलो
भवेत् ॥ तयोरालिंगनेशांतःकिंचिदेवहुताशनः १३ ददौसुकोमलंतस्मैकमलंकमलापतिः ॥ पद्मपाणिरितिप्रोचुस्तंसर्वेसुरमानुषाः १४ अशांते
ग्नौतुवरुणःसिषेचशीतलैर्जलैः ॥ सहस्रफणिनंनागंगिरिशोस्मैददावथ १५ तेनबद्धोदरोयस्माद्व्यालबद्धोदरोभवत् ॥ तथापिशैत्यंनापेदेकंठोस्थानल
संयुतः १६ अष्टाशीतिसहस्राणिमुनयस्तंप्रपेदिरे ॥ अमृताइवदूर्वास्तेप्रत्येकंसैकविंशतिं १७ आरोपयन्मस्तकेस्यततःशांतोनलोभवत् ॥ तुतोषपरमात्मा
सौदूर्वांकुरभरार्चितः १८ एवंज्ञात्वातुतेसर्वेपुपूजुस्तंगजाननम् ॥ दूर्वांकुरैरनेकैस्तैर्जहर्षासौगजाननः १९ उवाचचमुनीन्देवान्मत्पूजाभक्तिनिर्मिता ॥ मह

तीस्वल्पिकावापिवृथादूर्वांकुरैर्विना २० विनादूर्वांकुरैःपूजाफलंकेनापिनाप्यते ॥ तस्मादुर्षासिमद्भक्तैरेकावाप्यथैकविंशति २१ भक्त्यासमर्पितादूर्वाददाति
यत्फलंमहत् ॥ नतत्क्रतुशतैर्दानैर्व्रतानुष्ठानसंचयैः २२ तपोभिरुग्रैर्नियमैःकोटिजन्मार्जितैरपि ॥ प्राप्यतेमुनयोदेवायद्दूर्वाभिरवाप्यते २३ ॥ कौंडिन्य
उवाच ॥ इतितद्वचनंश्रुत्वादेवादूर्वांकुरैःपुनः ॥ आनर्चुःपरमात्मानंदेवदेवंगजाननम् २४ जगर्जानंदयुक्तोसौनादयन्रोदसीभृशम् ॥ हृष्टानांसर्वदेवानांमुनी
नांचनृणामपि २५ अनेकशोवरान्दत्वापिदधेबालरूपधृक् ॥ कालानलप्रशमनइतितंतेसमूचिरे २६ प्रासादेनिर्मितेसर्वेस्थाप्यमूर्तिंगजाननीम् ॥ विघ्नहरो
यमित्यस्याभिधांचक्रुर्मुदासुराः २७ अत्रस्नानंतथादानंतपोनुष्ठानमेवच ॥ अनंतंजायतेविघ्नहरस्यास्यप्रसादतः २८ जयःप्राप्तोयतस्तेनपुरंचाविजयाभिधम् ॥
सर्वेषांचहृताविघ्नाविघ्नहर्तेतिसोभवत् २९ ॥ कौंडिन्यउवाच ॥ इतितेकथितंसर्वंदूर्वामाहात्म्यमुत्तमम् ॥ श्रवणात्पठनाच्चास्यसर्वपापक्षयोभवेत् ३० पुरातन
मितिहासंशृणुमेगदतःप्रिये ३१ इतिश्रीगणेशपुराणेउ०दूर्वामा०चतुःषष्टितमोऽध्यायः ६४ ॥ कौंडिन्यउवाच ॥ कस्मिंश्चित्समयेदेविसुखासीनंगजाननम् ॥ नार
दोमुनिरभ्यागाद्द्रष्टुंतंबहुवासरैः १ साष्टांगंप्रणिपत्यैनंप्राहनःसार्थकंजनुः ॥ यत्पुण्यनिचयैर्जातंदर्शनंतेगजानन २ इत्युक्त्वासांजलिर्बध्वातस्थौतत्पुरतोमु
निः ॥ धृत्वाकरेणतत्पाणिमुपवेशयदासने ३ गजाननोमहाभागोमहाभागंमहामुनिम् ॥ नारदोभगवांस्तेनसंतुष्टोमुनिपुंगवः ४ उवाचतंगणाधीशमाश्चर्यंहृदिमे
स्तियत् ॥ तन्निवेदितुमायातोनत्वात्वांपुनराव्रजे ५ ॥ गजाननउवाच ॥ किमाश्चर्यंत्वयादृष्टंहृदिकिंतेभिवर्त्तते ॥ वदसर्वंविशेषेणततोव्रजनिजाश्रमम् ६ ॥ नारद
उवाच ॥ मैथिलेविषयेदेवजनकोराजसत्तमः ॥ अतिमानीवदान्यश्चवेदवेदांगपारगः ७ अन्नदानरतोनित्यंब्राह्मणान्पूजयत्यसौ ॥ नानालंकारवासोभिर्दक्षिणाभिरने
कशः ८ दीनांधकृपणेभ्यश्चबहुद्रव्यंददात्यसौ ॥ याचकैर्याच्यतेयद्यत्तत्तत्तेनप्रदीयते ९ तथापिनव्ययंयातिद्रव्यंतस्यमहात्मनः ॥ गजाननस्यसंतुष्ट्याद्रव्यंतद्वर्ध
तेनुकिं १० इत्याश्चर्यंमहद्दृष्टंप्रयातस्तद्गृहानहं ॥ ब्रह्मज्ञानाभिमानेनउपहासंममाकरोत् ११ अहंचतमुवाचेत्थंधन्योसिनृपसत्तम ॥ चिंतितंतेपिभक्त्यार्थं
प्रयच्छतिगजाननः १२ सतुगर्वादुवाचेत्थमहमीशोजगत्त्रये ॥ अहंदाताचभोक्ताचपातादापयितातथा १३ मत्स्वरूपंविनानान्यद्विद्यतेभुवनत्रये ॥ कर्त्ताच
कारणंचाहंकरणंमुनिसत्तम १४ ॥ नारदउवाच ॥ इतितद्वचनंश्रुत्वाक्रोधेनाहंजगादतम् ॥ ईश्वराज्जगतःकर्त्तानान्यःकश्चनविद्यते १५ त्वंतुधर्ममिमंराज
न्दंभेनैवकरोषिकिम् ॥ दर्शयिष्येसाक्ष्यमस्यस्वल्पकालेनतेनघ १६ इत्युक्त्वातमहंयातस्त्वदंतिकमिभानन ॥ कौंडिन्यउवाच ॥ आकर्ण्येत्थंमुनेर्वाक्यंपूज
यामासतंविभुः १७ अर्घ्यादिभिरलंकारैर्दिव्यैःपुष्पैःसचंदनैः ॥ मुनिराज्ञांप्रगृह्यैववैकुंठंविष्णुमभ्यगात् १८ गजाननोपिमिथिलांराजभक्तिपरीक्षितुम् ॥ कु
त्सितंवेषमादायसर्वज्ञोपिसमाययौ १९ अनेकक्षतसंयुक्तंस्रवद्रक्तममंगलम् ॥ मक्षिकानिचयाक्रांतंरदहीनमिवातुरम् २० गच्छंतंतादृशंदृष्ट्वानरानासानिरोध
नम् ॥ कुर्वंतिवाससाकेचित्ष्ठीवनंचयथातथा २१ स्खलन्मूर्छन्पतन्गच्छन्नर्भकावलिसंयुतः ॥ नृपद्वारंसमागम्यद्वारपालानुवाचसः ॥ राज्ञेनिवेद्यतांदूताञ्

तिथिंमांसमागतम् ॥ ब्राह्मणंक्षुधितंवृद्धंइच्छाभोजनकांक्षिणम् २३ तेतद्वाक्यंतथाचख्युर्गत्वातंजनकंनृपम् ॥ आनीयतामितिप्राहदूताद्रष्टुंतुकौतुकम् २४ तेदूता
प्रापयामासुःकुचैलंमलिनंनृपम् ॥ ददर्शदूराज्जनकोकम्पंतंमक्षिकावृतम् २५ असृक्स्रवंतंवृद्धंतंब्राह्मणंश्रमवारिणम् ॥ तर्कयामासजनकईश्वरोरूपधृक्नुकिं
२६ छलितुंमांसमायातोयदिपुण्यंभवेन्मम ॥ समाधास्येमनोह्यस्यभविष्यंनान्यथाभवेत् २७ इत्येवंचिंतयत्येवजनकेनृपसत्तमे ॥ प्रवेशितोद्वारपालैर्ब्राह्मणः
पर्यदृश्यत २८ ॥ ब्राह्मणउवाच ॥ चंद्रांशुधवलांकीर्तिंश्रुत्वातेहंसमागतः ॥ देहिमेभोजनंराजन्क्षुधितस्याचिरात्प्रभो २९ ममतृप्तिर्भवेद्यावत्तावदन्नंप्रदीयता
म् ॥ तवक्रतुशतंपुण्यंभविष्यतिनरेश्वर ३० ॥ कौंडिन्यउवाच ॥ ॥ इतिवाचंनिशम्यासौगृहमध्येनिनायतम् ॥ संपूज्यविधिवद्धन्नेनंस्वाद्वन्नमुपवेषयत् ३१ ए
कग्रासेनसर्वंसजग्रासद्विजसत्तमः ॥ अथाचदन्नमन्यत्सनृपोदात्पर्वतोपमम् ३२ तदप्येकेनजग्रासकवलेनद्विजोत्तमः ॥ यावदन्नंस्थितंसिद्धंपर्याप्तमयुत
स्ययत् ३३ तद्दत्तंपुरतस्तस्यबभक्षतत्क्षणेनसः ॥ असंख्यातेषुपात्रेषुपक्वंक्षिप्ताःसुतंदुलाः ३४ दीयतेपुरतस्तस्ययःसिद्धश्चोदनोभवत् ॥ सभक्षयति
सर्वंतंततऊचेजनोनृपम् ३५ राक्षसोयंभवेत्प्रायःकिमर्थंदीयतेबहु ॥ राक्षसेभ्यःप्रदानेननकिंचित्पुण्यमाप्यते ३६ कोपिद्धद्युस्त्रिभुवनेभक्षितेप्यस्यनोभ
वेत् ॥ तृप्तिःपरमिकाराजन्धान्यमस्मैप्रदीयताम् ३७ ततोधान्यानिसर्वाणिगृहेभूमौस्थितानिच ॥ आनीयचिक्षिपुस्तस्यपुरग्रामगतानिच ३८ पुंसोस्यद्विज
रूपस्यसर्वंभक्षस्यचातिथेः ॥ नतृप्तिमगमत्सोथभक्षितेषुचतेषुच ३९ ततोदूतानृपंप्रोचुर्धान्यंक्वापिनलभ्यते ॥ इतिदूतवचःश्रुत्वाजनकेधोमुखेस्थिते ४०
स्वस्तीत्युक्त्वागमद्विप्रोनतृप्तोसौगृहंगृहम् ॥ दीयतामन्नमित्याहतेजनास्तंजगुस्तदा ४१ सर्वेषांगृहगंधान्यंसर्वंराज्ञासमाहृतम् ॥ जग्धंत्वयाखिलंब्रह्मन्गम्य
तांयत्रतेरुचिः ४२ ॥ ॥ द्विजउवाच ॥ ॥ कीर्तिरस्यश्रुतालोकान्नदाताजनकात्परः ॥ तृप्तिकामःसमायातोह्यतृप्तोहंकथंव्रजे ४३ तूष्णींभूतेषुलोके
षुबभ्रमन्सददर्शह ॥ विरोचनत्रिशिरसोर्मंदिरंद्विजयोर्वरम् ४४ तन्मध्यंप्राविशत्सोहिगृहस्वामीवसत्तथा ॥ सर्वोपस्काररहितंधातुपात्रविवर्जितम् ४५ इति
श्रीगणेशपुराणेउपासनाखंडेपंचषष्टितमोऽध्यायः ६५ ॥ ॥ कौंडिन्यउवाच ॥ धरामात्रासनौतौतुनभःप्रावारसंयुतौ ॥ दिगंबरौसर्वधातुसंस्पर्शवर्जिता
वुभौ १ अयाचितभुजौनित्यंजलेनैवाखिलाःक्रियाः ॥ द्विजरूपधरोपश्यत्कुर्वाणौसत्वशुद्धये २ गृहंचमक्षिकापुंजैर्मशकैरभितोवृतम् ॥ मूर्तिंचगणनाथस्य
पूजितांपुष्पपल्लवैः ३ अनन्यभक्त्याताभ्यांचतत्पराभ्यांददर्शसः ॥ तावूचेश्रूयतांवाक्यंयन्मयाप्रोच्यतेनघौ ४ मिथिलाधिपतेःकीर्तिंश्रुत्वाहंक्षुधितोभ्रश
म् ॥ तृप्तिकामःसमायातोनसतृप्तिंसमाकरोत् ५ कर्मणादांभिकेनैवसत्त्वंनपरिरक्ष्यते ॥ ममतृप्तिकरंकिंचिद्गृहेचेदस्तिदीयतां ६ ॥ दंपतीऊचतुः ॥ चक्रवर्ती ४७
नृपोयोसौतेनतृप्तिर्नतेकृता ॥ आवाभ्यांतुदरिद्राभ्यांकिंदेयंतृप्तिकारकम् ७ नदीनदजलैरब्धिर्यरसंख्यैर्योनपूर्यते ॥ बिंदुमात्रेणपयसासकथंपूर्यतेवद ८ ॥ द्वि
जउवाच ॥ भक्त्यादत्तंस्वल्पमपिबहुतृप्तिकरंमम ॥ अभक्त्यावाथदंभेनबहुदत्तंवृथाभवेत् ९ ॥ तावूचतुः ॥ आवयोर्नगृहेकिंचिच्छपथस्तेद्विजोत्तम ॥ पूजा

येगणनाथस्यप्रातर्दूर्वांकुरान्द्दताः १० पूजितोगणनाथस्तैस्ततएकोवशिष्यते ॥ द्विजउवाच ॥ ॥ भक्त्यादत्तःसएकोपितृप्तयेस्यात्प्रदीयतां ११ ॥ कौंडि
न्यउवाच ॥ विरोचनाददौतस्मैश्रुत्वावाक्यंतदीरितम् ॥ एकंदूर्वांकुरंभक्त्यातेनतृप्तोभवद्द्विजः १२ शाल्यन्नंपायसान्नंचनानापक्वान्नमेवच ॥ व्यंजनानिद्वस
र्वाणिलेह्यचोष्याण्यनेकधा १३ विरोचनाददौकल्प्यतस्मिन्दुर्वांकुरेचतम् ॥ गृहीत्वाब्राह्मणस्ततुबभक्षपरयामुदा १४ तस्मिन्दूर्वांकुरेभक्त्यादत्तेतेनाथभ
क्तितः ॥ प्रशशामद्विजस्यास्यतत्क्षणाज्जठरानलः ॥ १५ ॥ तृप्तिश्चपरमातेनप्राप्तातत्क्षणमात्रतः ॥ आलिलिंगात्रिशिरसंतृप्तोहर्षात्द्विजस्तदा ॥
१६ तत्याजकुत्सितंरूपंप्रकटोभूद्गजाननः ॥ चतुर्भुजोरविंदाक्षःशुंडादंडविराजितः १७ कमलंपरशुंमालांदंतंकरतलैर्दधत् ॥ महार्हमुकुटोराजत्कर्णकुंडलमं
डितः १८ दिव्यवस्त्रपरीधानोदिव्यगंधानुलेपनः ॥ उवाचतौप्रसन्नात्मादंपतीसगजाननः ॥ १९ ॥ वृणीतंतंवरंशीघ्रंमनसायंयमिच्छथः ॥ ॥ तौ
ऊचतुः ॥ ॥ जन्मनीयत्रनौस्यातांतत्रतेदृढभक्तिता २० मुक्तिर्वादीयतांदेवदुस्तराद्भवसागरात् ॥ नचावांचित्तयोरन्यन्नापेक्षितामिभानन ॥ २१ ॥
॥ ॥ कौंडिन्यउवाच ॥ ॥ इतितद्वाक्यमाकर्ण्यतथेत्युक्त्वागजाननः ॥ पुनरालिंग्यपिदधेभक्तंत्रिशिरसंमुदा २२ एतस्मात्कारणाद्दूर्वाभारोस्मैदीयतेम
या ॥ असंख्यभक्षणाद्योनतृप्तिंदेवःसमाययौ ॥ २३॥ दूर्वांकुरेणचैकेनसतृप्तिंपरमांययौ ॥ इतितेकथितःसम्यगाश्रयेमहिमाशुभः ॥ दूर्वासमर्पणभवः
श्रवणात्सर्वकामदः २४ इतिहासमिमंभक्त्याशृणुतेश्रावयेच्चयः ॥ सपुत्रधनकामाढ्यःपरत्रेहचमोदते २५ गजाननेलभेद्भक्तिंनिष्कामोमुक्तिमाप्नुयात् ॥
॥ ॥ गणाऊचुः ॥ ॥ श्रुत्वापीत्थमितीहासमाश्रयासंशयंपुनः ॥ २६ ॥ प्रपेदेतद्विदितंज्ञात्वाकौंडिन्यःपुनरब्रवीत् ॥ आश्रयेशृणुमेवाक्यंसंशयस्या
पनुत्तये २७ यद्ब्रवीमिहृदिस्थस्यमयाज्ञातस्यतेनघे ॥ एकंदूर्वांकुरंगृह्यगच्छशीघ्रंबिडौजसं २८ वदाशीर्वचनंपूर्वंपश्चाद्याचस्वकांचनं ॥ दूर्वांकुरेणतुलि
तंगृहीत्वातदिहानय २९ नन्यूनंनाधिकंग्राह्यंतस्यभाराच्छुभानने ३० ॥ गणावूचुः ॥ इतिवाणींतस्यश्रुत्वागृहीत्वैकंतदाश्रया ॥ दूर्वांकुरंययौशक्रंभर्तृ
वाक्यपरायणा ३१ इतिश्रीगणेशपुराणेउपासनाखंडेषट्षष्टितमोध्यायः ॥ ६६ ॥ गणाऊचुः ॥ आज्ञप्तातेनमुनिनास्वाभिप्रेतार्थसिद्धये ॥ एकंदूर्वांकुरंगृह्य
शक्रसन्निधिमाययौ १ तमुवाचाश्रयाशक्रदेहिमेकांचनंशुभम् ॥ याचितुंत्वांसमायाताभर्तृवाक्यात्सुरेश्वर २ ॥ इंद्रउवाच ॥ किमर्थंत्वमिहायातायद्याज्ञा
प्रेषिताभवेत् ॥ मयासंप्रेषितंस्यात्तेजातरूपंस्वशक्तितः ३ आश्रयोवाच ॥ दूर्वांकुरस्यतुलयायद्भवेत्कांचनंसुर ॥ तद्ग्रहीष्येशचीभर्तर्नन्यूनंनचवाधिकम् ४
शक्रउवाच ॥ दूतैनांनयशीघ्रंत्वंकुबेरभवनंप्रति ॥ सदास्यतिसुवर्णंचदूर्वांकुरमितंशुभम् ५ गणाऊचूः ॥ आज्ञयादेवराजस्यदेवदूतस्तयासह ॥ प्रायात्कुबेर
भवनंशक्रस्यवचनात्तदा ६ अस्यैदूर्वांकुरमितंजातरूपंप्रदीयतां ॥ इंद्रेणप्रेषितासाध्वीमुनिपत्नीमयासह ॥ प्रापिताभवनंतेद्ययामिदेवनमोस्तुते ७ कुबेरउ
वाच ॥ अत्याश्चर्यमहंमन्येमुनिःशक्रस्तथाश्रया ॥ मोहाविष्टानजानंतिदूर्वांकुरमितंकियत् ८ कांचनंतेनकिंवास्यात्बहुलंकिंनयाचितं ॥ गणाऊचूः ॥ एवमे

वददौतस्यैवबहुलंकांचनंसह ९ नजग्राहभयाद्भर्तुर्न्यूनाधिकविशंकया ॥ स्वर्णकारतुलायांतंदूर्वांकुरमधारयत् १० नाभवत्तुलयातस्यपर्याप्तंतत्तुहाटकम् ॥
वणिक्तुलासमानीतातत्रापिनाभवत्समं ११ तैलकारतुलायांतुदूर्वांकुरसमंनच ॥ घटोबद्धस्ततस्तत्रहाटकंदत्तमेकतः १२ दूर्वांकुरोपरत्रापियातिपत्रमधस्त
दा ॥ अन्यदन्यद्दधौतत्रकुबेरःकांचनंबहु १३ तत्रापिनाभवत्तेनसमंदूर्वांकुरेणच ॥ सर्वंकोशगतंद्रव्यंदत्तंतेनगिरींद्रवत् १४ तथापिनाभवत्साम्यंतेनदूर्वांकु
रेणतत् ॥ पत्नीमाहूयतांप्राहकुबेरःकौतुकान्वितः १५ कुरुमद्वाक्यतःसुभ्रुघटारोहणमग्रतः ॥ नसमंचेत्समारोक्ष्येनिजसत्वरिरक्षया १६ पतिव्रताज्ञयातस्य
घटमारुरुहेतदा ॥ नसमासापितेनासीत्ततःसर्वांपुरींददौ १७ घटमध्येकुबेरोसौनचोर्ध्वंजायतेंकुरः ॥ श्रुत्वादूतमुखादिंद्रोगजारूढःसमाययौ १८ स्वकीयद्र
व्यसहितोघटमारुरुहेस्वयं ॥ दूर्वांकुरोनचोर्ध्वंसतथापिसमजायत १९ अधोमुखोगतश्चिंतांकिमेतदितिचिंतयन् ॥ विष्णुंहरंचसस्मारतत्रारोहणकाम्यया
२० तत्रागतौसनगरौघटमारुहतांतदा ॥ तथापिनोर्ध्वमगमत्तदादूर्वांकुरःस्फुटं २१ ततस्तेततउत्तेरुःशिवविष्णुधनेश्वराः ॥ वरुणेंद्राग्निमरुतःकौंडिन्यमभि
तोययुः २२ देवादेवर्षयश्चैवसिद्धविद्याधरोरगाः ॥ दिनांतेसमनुप्राप्तेस्वंनीडमिवपक्षिणः २३ नमस्कृत्यमुनिंसर्वेप्रोचुरुद्विग्नचेतसः ॥ सर्वऊचुः ॥ वृजिनंवि
लयंयातंदर्शनात्तवभोमुने २४ पूर्वपुण्यभवादग्रेकल्याणंनोभविष्यति ॥ तवपत्न्याहृतंसत्वंसर्वेषामद्यनःस्फुटं २५ महिमानंनजानीमोदूर्वांकुरसमुद्भवं ॥
एकदूर्वांकुरतुलांत्रैलोक्यमपिनालभत् २६ गजाननशिरस्थस्यत्वयाभक्त्यार्पितस्यच ॥ जानीयान्महिमानंकःसम्यक्दूर्वांकुरस्यह ॥ यज्ञदानव्रततपःस्वाध्या
योपिनतत्समः २७ गजाननैकभक्तस्यजपतस्तपतोनिशं ॥ तवापिमहिमानंकोजानीयात्सर्वदेहिनः २८ एवमुक्त्वामुनिंसर्वेपूर्वपूज्यगजाननं ॥ सर्वेसभा
र्यैपुपुजुस्तुष्टुवुर्नन्रृतुर्जगुः २९ नब्रह्मानहरिःशिवेंद्रमरुतोनाग्निर्विवस्वान्यमःशेषोशेषकलानिधिश्चवरुणोनोचंद्रमानाश्विनौ ॥ नोवाचामधिपोनचैवगरुडो
नोयक्षराट्नांगिरामाहात्म्यंपरिवेददेवनिगमैरज्ञातरूपस्यते ३० एवंसंतोष्यसर्वेतेदेवदेवंगजाननम् ॥ मुनिंचसमनुज्ञाप्याययुःस्वंस्वंनिकेतनम् ३१ अश्रया
पिततोज्ञात्वादूर्वामाहात्म्यमुत्तमम् ॥ विश्वस्ताभर्तृवाक्येसादूर्वाभिःप्रत्यपूजयत् ३२ विघ्नेश्वरंसर्वदेवंसर्वैर्दूर्वाभिरर्चितम् ॥ प्रणनामचकौंडिन्यंभर्तारंसत्य
वादिनम् ३३ उवाचसुप्रसन्नासास्वात्मानंनिंदतीभृशम् ॥ आश्रयोवाच ॥ मादृशीनैवदुष्टास्तियातेवाक्येससंशया ३४ विशेषविदुषास्वामिन्विशेषविदुषात्वया ॥ स
म्यक्कृतंममविभोसर्वभूतदयावता ३५ तत्क्षमस्वापराधंमेत्वामहंशरणागता ॥ ततःप्रातःसमुत्थायदूर्वाआदायसत्वरौ ३६ स्नात्वादेवंसमभ्यर्च्यदूर्वार्पणमकुर्वताम् ॥
अनन्यभक्त्याज्ञात्वातौदूर्वामाहात्म्यमुत्तमम् ३७ सायंप्रातर्देवदेवंपूजयंतौनिरंतरम् ॥ त्यक्त्वायज्ञव्रतंदानंज्ञात्वादेवोगजाननः ३८ कृपयापरयाविष्टःस्वधाम
प्रत्यपादयत् ॥ गणाऊचुः ॥ अगाधंवर्णितंदूर्वामाहात्म्यमिदमुत्तमम् ३९ अशेषवर्णनेशेषोनेशोनेशौहरीश्वरौ ॥ त्रैलोक्यंतुलयायस्याःपत्रेणैवाभवत्समम्
४० दूर्वेतिस्मरणात्पापंत्रिविधंविलयंव्रजेत् ॥ तत्स्मृतौस्मर्यतेदेवोयतःसोपिगजाननः ४१ इतिचिंतामणिक्षेत्रमहिमावर्णितःस्फुटम् ॥ श्रवणात्कीर्तनाद्ध्याना

द्भुक्तिमुक्तिफलप्रदः ४२ एतस्मात्कारणाद्यानंत्रयाणांप्रेषितंशुभम् ॥ रासभस्यमुखाद्दूर्वागतादेवेनृपस्यच ४३ चांडाल्याशीतनाशायत्वानतीवृग भारतः ॥
वायुनाप्रबलेनापिगत गजानने ४४ यतस्तस्यप्रियादूर्वासंतुष्टोसौविनायकः ॥ निष्पापत्वात्रयाणांससान्निध्यंदत्तवान्निजम् ४५ गंधमात्रेणदूर्वायाःसं
तुष्टोजायतेविभुः ॥ प्रसंगेनतुभक्त्यावाकिंपुनर्मस्तकार्पणात् ४६ ॥ ब्रह्मोवाच ॥ इतिदूतमुखाद्राज्ञासश्रुतोमहिमातदा ॥ दूर्वायामुनिभिःसर्वैर्नंदष्टोनच
संश्रुतः ४७ स्नात्वादूर्वांकुरान्गृह्यपुपूजुस्तेविनायकम् ॥ सेवकाश्चापिदूर्वाभिरानर्चुःश्रीगजाननम् ४८ आसन्सर्वेदिव्यदेहास्तेजसासूर्यवर्चसः ॥ शृण्वंतोदेव
वाद्यानांनानारावान्समंततः ४९ विमानवरमारूढादिव्यवस्त्रानुलेपिनः ॥ यातावैनायकंधामकेचित्तद्रूपधारिणः ५० नरानागारिकाःकेचिदागतास्तंमहोत्स
वम् ॥ द्रष्टुंदूर्वाभिरानर्चुरेकविंशतिभिःपृथक् ५१ भुक्त्वाभोगांश्चतेसर्वेगाणेशंस्थानमागमन् ॥ विमानंचापिचलितमूर्ध्वंतत्पुण्यपुंजतः ५२ तस्माद्गणेशभ
क्तेनकार्यंदूर्वाभिरर्चनम् ॥ नकरोतिनरोयस्तुप्रमादात्ताभिरर्चनम् ५३ सचांडालस्तुविज्ञेयोनरकान्प्राप्नुयाद्बहून् ॥ नतन्मुखंनिरीक्षेतकदाचिदपिमानवः ५४
यस्तुदूर्वाभिरर्चेत्तंदेवदेवंगजाननम् ॥ तस्यदर्शनतोन्योपिपापीशुद्धिमवाप्नुयात् ५५ अलाभेबहुदूर्वाणामेकयैवाभिपूजयेत् ॥ तेनापिकोटिगुणिताकृतापूजान
संशयः ५६ ॥ ब्रह्मोवाच ॥ इतिनानाविधोराजन्महिमाकथितस्तव ॥ सेतिहासस्तुदूर्वाणांश्रवणात्पापनाशनः ५७ नाख्येयोदुष्टबुद्धेस्तुप्रियेपुत्रेनिवेदयेत् ॥
इंद्रउवाच ॥ इतिब्रह्ममुखाच्छ्रुत्वापरमाख्यानमुत्तमम् ५८ ननंदपरमप्रीतोननामकमलासनम् ॥ तदाज्ञायाययौस्थानंस्वकीयंविस्मयान्वितः ५९ ॥ इतिश्रीगणे
शपुराणेउपा० दूर्वामाहात्म्येसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ छ ॥ ॥ शूरसेनउवाच ॥ अन्यांकथयशक्रत्वंगणनाथकथांपुनः ॥ कृतवीर्यस्यजनकःकिंच
कारततःपरम् १ ॥ ॥ इंद्रउवाच ॥ श्रुत्वाख्यानंतुसंकष्टचतुर्थ्याराजसत्तमः ॥ दूर्वाख्यानंतुसंश्रुत्वाचिंताविष्टोनृपोभवत् २ अपुत्रस्यगतिर्नास्तिपुत्रोमे
भविताकथम् ॥ स्वप्नेददर्शपितरंकार्तवीर्यस्तथाविधः ३ सगद्गदाभ्यांकंठाभ्यांनोचतुस्तौपरस्परं ॥ आलिलिंगतुरन्योन्यंप्रेमविह्वलचेतसा ४ ततःपुत्रं
करेधृत्वापर्यंकेस्थापयत्पिता ॥ उवाचचत्वयापुत्रपुत्रार्थंबहुधाश्रमः ५ क्रियतेचाहमप्येकमुपायंवच्मितेनघ ॥ मृत्युलोकादागतेनकथितंनारदेनमे ६
तदैवाहंगतःपुत्रब्रह्मणःसदनंप्रति ७ पप्रच्छाहंनमस्कृत्यब्रह्माणंसर्ववेदिनं ॥ कथंमेभवितापुत्रसंततिःकमलासन ८ कथितंतेनसंकष्टचतुर्थीव्रतमुत्तमम् ॥ क
उवाच ॥ अस्मिन्व्रतेकृतेपापक्षयेजातेनृपोत्तम ९ संततिस्तवपुत्रस्यभविष्यतिनसंशयः ॥ पितोवाच ॥ तदातथैवलिखितंब्रह्मणाकथितंयथा १० गृहाण
पुस्तकंचैतद्यथावत्कुरुचव्रतम् ॥ यावदब्दंसमाप्येततावत्सिद्धिविनायकः ११ प्रसन्नोभवितादेवःसर्वसंकष्टहारकः ॥ तस्मिन्प्रसन्नेपुत्रस्तेभवितानात्रसंशयः १२
इत्युक्त्वांतर्हितस्तस्यपुत्रस्यजनकोनृप ॥ जजागारततोराजाकृतवीर्यस्तुवैबली १३ ददर्शपुस्तकंहस्तेस्वप्नार्थान्परिसस्मरे १४ मुमोचाश्रूणिनेत्राभ्यांशो
कानंदपरिप्लुतः ॥ पितुर्वियोगाच्छोकार्तःपुस्तकात्तेश्चहर्षितः १५ तावत्तस्यागतामात्याःपरिवार्याब्रुवन्नृपम् ॥ ॥ अमात्याऊचुः ॥ ॥ जहिप्रमादंराजंस्त्वं

सावधानमनाभव १६ त्यजशोकंवदास्मान्किंकारणंशोककारकम् ॥ अस्मानपिसमाविष्टस्त्वच्छोकाच्छोकउत्कटः १७ ॥ ॥ इंद्रउवाच ॥ ॥ श्रुत्वा
वाक्यममात्यानांकार्तवीर्योजगादतान् ॥ मयास्वप्नेपिताद्दष्टस्तेनमेविह्वलंमनः १८ पुस्तकंचैवसंकष्टचतुर्थीव्रतबोधकं ॥ दत्तंममकरेतेनपिदधेतत्क्षणाच्च
सः १९ तद्वियोगेनशोचामिगतार्थीनिर्धनोयथा ॥ उक्तंचतेनमेवाक्यंपुत्रार्थंकुर्विदंव्रतं २० प्रबुद्धोहंयदामात्याहस्तेदृष्टंचपुस्तकम् ॥ आश्चर्यहर्षशोकैश्चा
प्यश्रुमुंचामिनान्यथा २१ अमात्याऊचुः । यःपितासर्वलोकानांमनुष्योरगरक्षसां ॥ सएवापितृरूपेणपरितुष्टोगजाननः २२ उपायमवदत्तेससंतत्यैराजसत्त
म ॥ अन्यथापुस्तकंकत्यंस्वप्नार्थःक्वप्रमाभवेत् २३ विनाप्रसादंस्वप्नोपिविपर्ययमुदाहृतः ॥ इंद्रउवाच ॥ इत्यमात्यवचःश्रुत्वासावधानमनानृपः २४ आहूय
परिपप्रच्छपंडितान्सुहृदोपिच ॥ वदंतुपुस्तकस्यार्थंप्रसादात्तस्यभोद्विजाः२५ तऊचुःपुस्तकंदृष्ट्वातस्यार्थंसर्वसंसदि ॥ द्विजाऊचुः ॥ब्रह्मणःकृतवीर्यस्यसंवादो
त्रमहानृप २६ चतुर्थीसर्वसंकष्टनाशिन्यत्रनिरूपिता ॥ चंद्रोदयेगणेशस्यपूजाप्रोक्तासविस्तरा २७ अंगारकचतुर्थ्यास्तुमहिमाबहुशोपिच ॥ तिथिदेवविधू
नांचअर्घ्यदानंसमंत्रकं २८ एकविंशतिविप्राणांभोजनंचैवपूजनम् ॥ नानादानानितेभ्यश्चदेयानीतिनिरूपितं २९ दूर्वासमर्पणफलंश्वेतदूर्वाफलंपृथक्॥ ए
तद्व्रतंमहाभागभाग्यात्प्राप्तंत्वयानघ ३० नदृष्टंनश्रुतंलोकेभविष्यत्युपकारकं ॥ श्रवणात्स्मरणाच्चापिसंकष्टहरणंनृणां ३१ इंद्रउवाच ॥ श्रुत्वातत्पंडितमु
खाद्राजासर्वजनश्चह ॥ आश्चर्यानंदसंयुक्तःपुपूजेसद्विजोत्तमान् ३२ वस्त्रालंकाररत्नानिधनंधान्यंददौबहु ॥ अत्रिमाहूयराजापिगुरुंनिजकुलस्यच ३३ सुमुहू
र्तेततोगृण्हात्परिपूज्ययथाविधि ॥ देवंविनायकंतंचविद्यामेकाक्षरांशुभां ३४ जजापमंत्रंतमनन्यभक्त्याध्यायन्गणेशंविजितेंद्रियःसः॥ व्रतंचचक्रेगणनाथतु
ष्ट्यैसुतासयेसंकटनाशनंतत् ३५ इतिगणेशपुराणेउपासनाखंडेव्रतनिरूपणंनामाष्टषष्टितमोऽध्यायः ६८ ॥ ॥ छ ॥ ॥ शूरसेनउवाच ॥ ब्रह्मणाकथमादि
ष्टंकृतवीर्यायसिद्धिदम्॥ तन्ममाचक्ष्वसंकष्टचतुर्थीव्रतमुत्तमं १ इंद्रउवाच ॥ सत्यलोकेसुखासीनंसर्वज्ञंचतुराननम् ॥ कृतवीर्यपितागत्वापप्रच्छप्रणतोनृपः२
कृतवीर्यउवाच ॥ ॥ देवदेवजगद्धातःप्रणतार्तिनिवारण ॥ वर्त्ततेत्द्दृदयेयन्मेपृच्छामित्वांवदस्वतत् ३ आपत्सुवर्तमानानांनृणांव्याकुलचेतसां ॥ चिंतया
व्यग्रमनसांवियोगेसुत्द्ददांतथा ४ दुर्लभप्राप्तयेनृणांकार्यसिद्धिःकथंभवेत् ॥ अर्थसिद्धिःकथंनित्यंपुत्रसौभाग्यसंपदः ५ सर्वसंकष्टनाशार्थंकार्यंकिंमा
नवैःप्रभो ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणुराजन्प्रवक्ष्यामिसर्वसिद्धिप्रदंव्रतम् ६ यस्यानुष्ठानमात्रेणचिंतितंप्राप्नुयान्नरः ॥ ओषधीभिःशुक्लतिलैर्दिवास्नायात्
प्रसन्नधीः ७ संकल्पंकारयेत्सम्यग्ध्यात्वादेवंगजाननम् ॥ गणेशंपूजयेद्भक्त्यामंत्रैरागमसंभवैः ८ कृष्णपक्षेचतुर्थ्यांचनिशिचंद्रोदयेपिच ॥ ॥ नृपउवाच
कथंसंपूजयेद्ब्रह्मन्देवदेवंगजाननम् ९ विस्तरेणममब्रूहिप्रणयात्परिपृच्छते ॥ ॥ ब्रह्मोवाच ॥ ॥ नित्यकर्मसमाप्याथनिशायामुदयेविधोः १० शुचौदेशे
गोमयेनलिप्तेमंडपिकान्विते ॥ तत्रपीठंगणेशस्यपूजयेत्कुंकुमाक्षतैः ११ स्थापयेत्कलशंतत्रपंचरत्नसमन्वितम् ॥ तस्योपरिन्यसेत्पात्रंसौवर्णंकलशान्वित

म् १२ तदभावे तु रौप्यं वाताम्रं वैणवमेवच ॥ तस्योपरिन्यसेद्वस्त्रं क्षौमं वाशक्तिसंयुतः १३ तस्योपरिलिखेद्यंत्रं आगमोक्तविधानतः ॥ तत्रमूर्त्तिं गणेशस्य सौवर्णी
लक्षणान्वितां १४ एकदंतं महाकायं तप्तकांचनसंनिभम् ॥ लंबोदरं विशालाक्षं ज्वलत्पावकलोचनम् १५ आखुपृष्ठसमारूढं चामरैर्वीजितं गणैः॥ शेषयज्ञोपवी
तं च चिंतयेत्तं गजाननम् १६ ध्यानम् ॥ आगच्छ देवदेवेश संकटान्मां निवारय ॥ यावद्व्रतं समाप्येत तावत्त्वं सन्निधौ भव १७ सहस्रशीर्षेत्यावाहनम् ॥ गणाधीश नम
स्तेस्तु सर्वसिद्धिप्रदायक ॥ आसनं गृह्यतां देव संकटान्मां निवारय १८ पुरुषएवे० आसनम् ॥ उमापुत्र नमस्तेस्तु नमस्ते मोदकप्रिय ॥ पाद्यं गृहाण देवेश संकटं मे नि
वारय १९ एतावानस्य० पाद्यम् ॥ लंबोदर नमस्तेस्तु रत्नयुक्तफलान्वितम् ॥ अर्घ्यं गृहाण देवेश संकटं मे निवारय ॥ त्रिपादूर्ध्वैत्यर्घ्यम् ॥ २० गंगादिसर्वतीर्थेभ्य
आहृतं तोयमुत्तमम् ॥ गृहाणाचमनीयार्थं संकटं मे निवारय ॥ तस्माद्विराळ० आचमनीयम् २१ पयोदधिघृतं चैव शर्करामधुसंयुतम् ॥ पंचामृतं गृहाणेदं संकटं
मे निवारय २२ मंत्रैः पंचामृतम् ॥ नर्मदाचंद्रभागाच गंगासंगमजैर्जलैः ॥ स्नापितोसि मया भक्त्या संकटं मे निवारय ॥ यत्पुरुषेणेति स्नानम् २३ इभवक्त्र नमस्तु
भ्यं गृहाण परमेश्वर ॥ वस्त्रयुग्मं गणाध्यक्ष संकटं मे निवारय ॥ तंयज्ञमिति वस्त्रम् २४ विनायक नमस्तुभ्यं नमः परशुधारिणे ॥ उपवीतं गृहाणेदं संकटान्मे निवारय ॥
तस्मा० यज्ञोपवीतम् २५ ईशपुत्र नमस्तुभ्यं नमो मूषकवाहन ॥ चंदनं गृह्यतां देव संकटं मे निवारय॥ तस्माद्यज्ञादिति चन्दनम् २६ घृतकुंकुमसंयुक्तास्तंदुलाः सु
मनोहराः ॥ अक्षतास्ते नमस्तुभ्यं संकटं मे निवारय ॥ अक्षताः २७ चंपकं मल्लिकादूर्वापुष्पजातीरनेकशः ॥ गृहाण त्वं गणाध्यक्ष संकटं मे निवारय ॥ तस्माद
श्वेति पुष्पम् २८ लंबोदर महाकाय धूम्रकेतो सुवासितम् ॥ धूपं गृहाण देवेश संकटं मे निवारय ॥ यत्पुरुषमिति धूपः २९ विघ्नांधकारसंहारकारक त्रिदशाधिप ॥
दीपं गृहाण देवेश संकटं मे निवारय ॥ ब्राह्मणोस्येति दीपः ३० मोदकापूपलड्डूकपायसं शर्करान्वितम् ॥ पक्वान्नं सघृतं देव नैवेद्यं प्रतिगृह्यताम् ॥ चन्द्रमा मनस इति नैवेद्य
म् ३१ नारीकेलफलं द्राक्षां रसालं दाडिमं शुभम् ॥ फलं गृहाण देवेश संकटान्मे निवारय॥ नाभ्या आसीदिति फलम् ३२ क्रमुकैलालवंगादि नागवल्लीदलानि च ॥
तांबूलं गृह्यतां देव संकटं मे विनाशय ॥ इति ताम्बूलम् ३३ सर्वप्रीतिकरं देव हिरण्यं सर्वसिद्धिदम् ॥ दक्षिणार्थं गृहाणेदं संकटं मे विनाशय॥ सप्तास्यासन्निति दक्षिणां ३४
ततो दूर्वांकुरान्गृह्य विंशत्येकं च भक्तितः ॥ एभिर्नामपदैर्देवमर्चयेत्सुसमाहितः ३५ ॥ गणाधिपाय नमः ॥ १ ॥ उमापुत्राय नमः ॥ २ ॥ अघनाशनाय नमः ॥
॥ ३ ॥ एकदंताय नमः ॥ ४ ॥ इभवक्त्राय नमः ॥ ५ ॥ मूषकवाहनाय नमः ॥ ६ ॥ विनायकाय नमः ॥ ७ ॥ ईशपुत्राय नमः ॥ ८ ॥ सर्वसिद्धिप्रदाय
नमः ॥ ९ ॥ लंबोदराय नमः ॥ १० ॥ वक्रतुंडाय नमः ॥ ११ ॥ मोदकप्रियाय नमः ॥ १२ ॥ विघ्नविध्वंसकर्त्रे नमः ॥ १३ ॥ विश्ववंद्याय नमः ॥
॥ १४ ॥ अमरेशाय नमः ॥ १५ ॥ गजकर्णाय नमः ॥ १६ ॥ नागयज्ञोपवीतिने नमः ॥ १७ ॥ भालचंद्राय नमः ॥ १८ ॥ परशुधारिणे
नमः ॥ १९ ॥ विघ्नाधिपाय नमः ॥ २० ॥ विद्याप्रदाय नमः ॥ २१ ॥ कर्पूरानलसंयुक्तं शेषाघौघविनाशनम् ॥ नीराजनं गृहाणेश संकटान्मां विमोचय ॥

नीराजनम् ३६ चंपकाशोकबकुलपारिजातभवैःशुभैः ॥ पुष्पाजलिंगृहाणेमांसंकटान्मांविमोचय ॥ यज्ञेनोतिपुष्पांजलिः ३७ त्वमेवविश्वंसृजसीभवक्रत्वमे वविश्वंपरिपासिदेव ॥ त्वमेवविश्वंहरसेखिलेशत्वमेवविश्वात्मकआविभासि ३८ इतिस्तुतिः ॥ नमामिदेवंगणनाथमीशंविघ्नेश्वरंविघ्नविनाशदक्षम् ॥ भक्तार्तिहंभक्तिविमोक्षदक्षंविद्याप्रदंवेदनिधानमाद्यम् ३९नमस्काराः॥एवंस्तुवीतविधिवत्प्रणमेतपुनःपुनः ॥ प्रदक्षिणांप्रकुर्वीतयथाशक्त्यैकविंशतिम् ४० येत्वाम संपूज्यगणेशनूनंवांछंतिमूढाविहितार्थसिद्धिम् ॥ तएवनष्टानियतंहिलोकेज्ञातोमयातेसकलःप्रभावः ४१ प्रार्थना ॥ आचार्यस्त्वंद्विजाध्यक्षसर्वसिद्धिप्रदायक ॥ वायनंगृह्यतांब्रह्मन्संकटान्मांनिवारय ४२ फलपुष्पाक्षतैर्युक्तंजलंतेदक्षिणान्वितम् ॥ विशेषार्घ्यंमयादत्तंसंकटान्मांनिवारय ४३ इतिषोडशोपचारैर्मंत्रेणानेन पूजयेत् ॥ ॐनमोहेरंबमदमोदितममसंकटंनिवारयस्वाहा ॥ इंद्रादिलोकपालांश्चसमंतात्पूजयेत्सुधीः ४४ पक्वमुद्गतिलैर्युक्तान्मोदकान्घृतपाचितान् ॥ भक्ष्यान्यन्यानितांबूलंयथाशक्तिप्रकल्पयेत् ४५ ततोदूर्वांकुरान्गृह्यविंशत्येकंचभक्तितः ॥ एभिर्नामपदैर्देवमर्चयेत्सुसमाहितः ४६ गणाधिपनमस्तुभ्यं सुमापुत्राभयप्रद ॥ एकदंतेभवक्त्रेतितथामूषकवाहन ४७ विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक ॥ लंबोदरनमस्तुभ्यंवक्रतुंडाघनाशन ४८ विघ्नविध्वंसकर्त्रेतिविश्ववंद्यामरेश्वर ॥ गजवक्त्रनमस्तुभ्यंनागयज्ञोपवीतिने ४९ भालचंद्रनमस्तुभ्यंनमःपरशुधारिणे ॥ विद्याधिपनमस्तुभ्यंसर्वविद्याप्रदायक ५० एवंसंपूजयेद्देवंदूर्वाभिश्चपृथक्पृथक् ॥ यदुद्दिश्यकृतंसम्यग्यथाशक्तिप्रपूजनम् ५१ तेनतुष्टोभवाशुत्वंहृत्स्थान्कामान्प्रपूरय ॥ विघ्नान्नाशयमेसर्वान्दुष्टांश्चसमुपस्थितान् ५२ त्वत्प्रसादेनसर्वाणिकार्याणीहकरोम्यहम् ॥ शत्रूणांबुद्धिनाशंचमित्राणामुदयंकुरु ५३ ॥ इतिविज्ञाप्यदेवेशंप्रणिपत्यपुनःपुनः ॥ ततोहोमं प्रकुर्वीतशतमष्टोत्तरंव्रती ५४ मोदकैर्वाणकंकार्यंव्रतसंपूर्णहेतवे ॥ लड्डुकैर्वटकार्यैर्वात्रिसप्तफलसंयुतम् ५५ रक्तवस्त्रेणसंछाद्यस्वाचार्यायनिवेदयेत् ॥ गणाधिपनमस्तुभ्यंसर्वसंकल्पसिद्धिद ५६ वायनस्यप्रदानेनसंकटान्मांनिवारय ॥ इतिवायनमंत्रः ॥ कथांश्रुत्वाततःपुण्यांदद्यादर्घ्यंसमाहितः ५७ तिथीनामुत्तमे देविगणेशप्रियवल्लभे ॥ संकटंहरमेदेविगृहाणार्घ्यंनमोस्तुते ५८ ॥ इतितिथ्यर्घः ॥ लंबोदरनमस्तुभ्यंसततंमोदकप्रिय ॥ संकटंहरमेदेवगृहाणार्घ्यंनमोस्तुते ५९ इतिदेवार्घः ॥ चंद्रायसप्तवारंतुमंत्रेणानेनपार्थिव ॥ क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ६० चन्द्रार्घमंत्रः ॥ ततः क्षमापयेद्देवंततोविप्रांश्चभोजयेत् ॥ स्वयंभुंजीततच्छेषंब्राह्मणेभ्योयदर्पितम् ६१ सप्तग्रासान्मौनयुक्तोयथाशक्त्याथयथासुखम् ॥ इत्थंकुर्यात्तुमासेषुचतुर्ष्वपि विधानतः ६२ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेएकोनसप्ततितमोध्यायः ॥ ६९ ॥ ॥ राजोवाच ॥ ॥ व्रतंपुराकृतंकेनभुविकेनप्रकाशितम् ॥ किंपुण्यं किंफलंचास्यकरणाद्वदमेप्रभो १ ॥ ब्रह्मोवाच ॥ पुरास्कंदेगतेचैवपार्वत्यैवकृतंव्रतम् ॥ चतुर्ष्वपिचमासेषुशिववाक्येनपार्थिव २ पंचमेमासिदृष्टस्तुकार्त्तिके योद्यपर्णया ॥ अगस्त्येनकृतंपूर्वंसमुद्रंपातुमिच्छता ३ त्रिषुमासेषुविघ्नेशप्रसादात्पीतवानमुम् ॥ षण्मासावधिराजेंद्रदमयंत्यापुराकृतम् ४ नलमन्वेषयंत्य

तुततोदृष्टोनलस्तया ॥ प्रद्युम्नस्यसुतंराजंश्चित्रलेखानयत्पुरा ५ क्वगतःकेननीतोवाइतिशोचंतमाकुलम् ॥ प्रद्युम्नंपुत्रशोकार्त्तंरुक्मिणीप्रत्यभाषत ६ शृ
णुपुत्रप्रवक्ष्यामियद्व्रतंस्वस्यमंदिरे ॥ शंबरेणपुरानीतेबालकेत्वयिषड्दिने ७ त्वद्वियोगजदुःखेनहृदयंमेव्यदूयत ॥ कदाद्रक्ष्याम्यहंपुत्रमपूर्वमतिसुंदरम् ८
अन्यस्त्रीणांसुतंदृष्ट्वाममचेतसिजायते ॥ ममापिपुत्रोभवितासोवनेनप्रमाणतः ९ इतिचिंताकुलायामेगतान्यब्दानिभूरिशः ॥ ततोमेदैवयोगात्तुलोमशोमुनिरा
गतः १० तेनोपदिष्टंसंकष्टचतुर्थीव्रतमुत्तमम् ॥ सर्वचिंताहरंपुत्रचतुर्वारंकृतंमया ११ तत्प्रसादात्स्वमायातोहत्वाशंबरमाहवे ॥ त्वमप्येतत्कुरुव्रतंततोज्ञास्यसितं
सुतम् १२ ॥ ब्रह्मोवाच ॥ प्रद्युम्नेनकृतंपूर्वंगणनाथस्तोषकं ॥ श्रुतोबाणासुरपुरेनिरुद्धोनारदात्पुरा १३ उद्धवस्याज्ञयाकृष्णःकृतवान्व्रतमुत्तमम् ॥ भीतईश्वरसं
ग्रामादेकवारंयथाविधि १४ गत्वासशोणितपुरंजित्वाबाणासुरंमृधे ॥ आनीतउषयासार्द्धमनिरुद्धःक्षणान्नृप १५ मयापिसृष्टिकामेनकृतमेतन्नृपोत्तम ॥ कृता
नानाविधासृष्टिर्व्रतस्यास्यप्रभावतः १६ अन्यैर्देवासुरनरैःकृतंविघ्नोपशांतये ॥ ऋषिभिर्दानवैर्यक्षैःकिन्नरोरगराक्षसैः १७ आपद्यपिचकष्टायांकुर्यात्तच्छांतयेव्रतं ॥
नानेनसदृशंलोकेसर्वसिद्धिकरंव्रतं १८ तपोदानंजपस्तीर्थंमंत्रोविद्यानचक्वचित् ॥ इमांश्रुत्वाकथांराजन्स्वयंभुंजीतवाग्यतः १९ जानुमध्येकरंकृत्वागणेशंहृदि
चिंतयेत् ॥ द्विजातीनांचयच्छेषंभोक्तव्यंसहबांधवैः २० कार्यंबह्वल्पमासैस्तुसिद्ध्यतेनात्रसंशयः ॥ बहुनात्रकिमुक्तेनन्नान्यत्स्याच्छीघ्रसिद्धिदं २१ नोपदेश्यम
भक्तायनास्तिकायशठायच ॥ देयंपुत्रायशिष्यायभक्तियुक्तायसाधवे २२ ममप्रियोसिराजेंद्रधर्मिष्ठःक्षत्रियर्षभः ॥ कार्यकर्त्तासिलोकानांउपदिष्टमथोव्रतं २३ त
स्मात्सर्वव्रतेष्वेतत्कर्त्तव्यंप्रथमंत्वया ॥ सिद्धियास्यंतिकार्याणिनान्यथाभाषितंमया २४ यदायदापश्यतिकार्यमुद्यतंनारीनरोवाविदधातुसद्व्रतं ॥ सिद्ध्यंतिका
र्याणिमनीषितानिकिंदुर्लभंविघ्नहरेप्रसन्ने २५ ॥ सूतउवाच ॥ इत्थंसश्रुत्वाविधिवन्नृपोत्तमोव्रतंचकाराखिलदुःखशांतये ॥ व्रतप्रभावाज्जितवान्सवैरिणोबुभोज
राज्यंससुतैरकंटकम् २६ ॥ इतिश्रीग० उ० चतुर्थीव्रतोपाख्यानेकृतवीर्य० नामसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ उद्यापनंकथंकार्यंव्रतस्यास्यमहामते ॥ तन्मेविस्त
रतोब्रूहिलोकानांहितकाम्यया १ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रथमेमासिकर्त्तव्यंपंचमेसप्तमेथवा ॥ उद्यापनंमनुष्येंद्रव्रतसंपूर्णहेतवे २ पूर्वोक्तेनविधानेनपूजयेद्भ
क्तिमान्नरः ॥ पुष्पमंडपिकांकृत्वानानावस्त्रविचित्रितां ३ कृत्वातुसर्वतोभद्रंनानारंगविचित्रितं ॥ पूजयेत्तत्रदेवेशंकलशोपरिपूर्ववत् ४ चंदनेनसुगंधे
नपुष्पैर्नानाविधैरपि ॥ नारिकेलफलेनैवदद्यादर्घ्यंसमाहितः ५ तिथीनामुत्तमेदेविगणेशप्रियवल्लभे ॥ संकटंहरमेदेविगृहाणार्घ्यंनमोस्तुते ६ लंबोदरनम
स्तुभ्यंसततंमोदकप्रिय ॥ संकष्टंहरमेदेवगृहाणार्घ्यंनमोस्तुते ७ क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ८ भो
ज्यंभक्ष्यंचलेह्यंचपेयंचोष्यंनिवेदयेत् ॥ फलैरन्यैश्चबहुभिस्तोषयेद्गणनायकं ९ आचार्यंवरयेत्तत्रऋत्विजश्चैकविंशतिं ॥ गणानांत्वेतिमंत्रेणअयु

१ शम्बरेण विनाशितः इतिपाठान्तरम् ।

तंहोममाचरेत् १० अथवामूलमंत्रेणसहस्रंवातदर्धकं ॥ अष्टोत्तरशतंचापिबलिदानंततश्चरेत् ११ पूर्णाहुतिंहुनेत्पश्चाद्वसोर्धारांचपातयेत् ॥ होमशे
षंसमाप्यैवंब्राह्मणान्भोजयेत्ततः १२ वस्त्रयुग्मंचकलशान्दक्षिणासनसंयुतान् ॥ तेभ्योदद्याद्यथाशक्तिवित्तशाठ्यंनकारयेत् १३ आचार्यंपूजयेत्पश्चात्
वस्त्रालंकरणादिभिः ॥ तस्मैभुक्तवतेदद्याद्वायनंफलसंयुतम् १४ शूर्पंपायससंपूर्णंरक्तवस्त्रेणवेष्टितम् ॥ सौवर्णंतंगणाधीशंतस्मैदद्यात्सदक्षिणम् १५ ति
लानामाढकंदद्यात्व्रतसंपूर्णहेतवे ॥ ततोगांकपिलांदद्यात्सवत्सांसविभूषणाम् १६ ततःक्षमापयेद्विप्रान्विघ्नेशःप्रीयतामिति ॥ व्रतस्योद्यापनंकृत्वावाहय
मेधफलंलभेत् १७ ॥ पितोवाच ॥ एवंमेब्रह्मणादिष्टंव्रतंलोकोपकारतः ॥ तदेनत्कथितंतेद्यकुरुपुत्रार्थमादरात् १८ ॥ ॥ इंद्रउवाच ॥ ॥ यथाययाम
मादिष्टंपित्रातेनमहाव्रतम् ॥ तथातथाकृतंतेनकार्तवीर्येणधीमता १९ व्याख्यायकथितंसम्यक्पंडितैर्व्रतमुत्तमम् ॥ सिद्धिबुद्धियुतांमूर्तिंस्थाप्यकांचननिर्मि
ताम् २० महामंडपिकामध्येब्राह्मणैःपठ्यतेक्वचित् ॥ क्वचित्पुराणंपांडित्यंक्वचिद्गायननर्तने २१ नानाविधानांवाद्यानांध्वनयोनिर्गतादिवम् ॥ विवदंतेजनाः
क्वापिमध्यस्थाःकेचनाभवन् २२ सतुराजामहाधीमान्जजापपरमंमनुम् ॥ जप्त्वाहुत्वापूजयित्वाभोजयित्वाद्विजान्बहून् ॥ २३ ॥ ॥ गाददावयुतंते
भ्योलंकृतेभ्योह्यलंकृताः ॥ दीनांधकृपणेभ्योन्नंददौदानान्यनेकशः २४ संतुष्टानांससर्वेषांपुत्राशीर्जगृहेनृपः ॥ तेषांद्विजानांतपतांसर्वदासत्यवादिनाम् ॥
२५ आशीर्भिःस्वल्पकालेनससत्वाभून्नृपांगना ॥ सुषुवेशुभवेलायांपुत्रंलक्षणसंयुतम् २६ ददौदानान्यनेकानिपुत्रजन्मप्रहर्षितः ॥ व्रतबंधंविवाहंचकालेत
स्याकरोन्नृपः २७ ज्ञानविज्ञानसंपन्नंपुत्रंराज्येभिषिच्यच ॥ सतुपुत्रोभोगसंपन्नोजगामांतेपदंविभोः २८ ॥ ऋत्विग्भ्यःपंडितैःसार्धंप्रेक्षकैःसकलैरपि ॥ त
स्यपुण्येनतेसर्वेगाणेशंधामचागमन् ॥ २९ ॥ इति०गणे०उपासनाखंडेएकसप्ततितमोऽध्यायः ॥ ७१ ॥ शूरसेनउवाच ॥ व्रतेजातेकथमभूत्तस्याःपुत्रःशतक्र
तो ॥ तत्सर्वंमेवदविभोविस्तरात्परिपृच्छतः १ इंद्रउवाच ॥ किंकिंनजायतेराजन्परितुष्टेगजानने ॥ प्रसादात्तस्यसाराज्ञीगर्भंदध्रेनृपस्ययत् २ प्रसूतानवमे
मासिमंगलंपुत्रमैक्षत ॥ द्विस्कंधंचारुवदनंबाहुहस्तविवर्जितम् ३ सुनासंपद्मनयनंऊरुजानुविवर्जितम् ॥ जंघापादविहीनंतंदृष्ट्वामातारुरोदह ४ सोवाच ॥
दुर्भगायाःकथमभूदीदृशोबालकोमम ॥ करपादविहीनोयंकथंदत्तोगजानन ५ आसंशुभाहंवंध्यैवकिमीदृक्पुत्रवत्यहं ॥ कथंनजातोनाशोमेपूर्वजन्मकृतैनसः
६ कथंप्रसादःफलितस्तवापिद्विरदानन ॥ कथंब्राह्मणवाक्यानिनिष्फलानीदृशानिमे ७ पाणिभ्यांनिघ्नतीवक्षोललाटंचमुहुर्मुहुः ॥ तस्यांरुदत्यांसर्वास्ता
रुरुदुस्तत्रयास्थिताः ८ तासांकोलाहलंश्रुत्वानृपोपितत्रचागमत् ॥ तस्यापिरुदितंश्रुत्वाप्रधानाअपिचागमन् ९ तेषांचरुदितंश्रुत्वानागरारुरुदुस्तदा १०
राजोवाच ॥ ॥ कथंदीनानुकंपित्वंतवदेवगजानन ॥ कथंदयाकृतातेद्यमह्यमेवंप्रदर्शिता ११ कथंस्मरणमात्रेणपापानिहरसेनव ॥ जपस्तपः
स्मृतिर्दानंपूजनंद्विजतर्पणं १२ अनुष्ठानंतथाहोमःसर्वंव्यर्थंगतंमम ॥ तस्माद्दैवंहिबलवत्प्रयत्नस्तुनिरर्थकः १३ नज्ञायतेकर्मगतिःकदाकिंवाभविष्यति ॥ मू

षकःप्राप्यतेयद्वत्पर्वतस्यविदारणात् १४ तथामेजनिपुत्रोयमाजन्मकृतयत्नतः ॥ ततऊचुःप्रकृतयोनृपंशोकाकुलंतदा ॥ १५ ॥ ॥ प्रधानाऊचुः ॥ ॥
अलंशोकेनभूपालकथंभाव्यन्यथाभवेत् ॥ रामःकिंनमृगंवेदतत्पृष्ठंगतएवसः १६ धर्मराजानकिंवेदनिपिद्धंद्यूतकर्मतत् ॥ तथापिसगतोरंतुंसर्वंहित्वावनं
गतः १७ चारुत्वानभवेदस्यश्चशमाक्रंदितेसति ॥ अदृष्टंचेद्भवेत्सम्यगग्रेचारुत्वयंभवेत् १८ पुष्पंफलंवाकालेनयथायातिमहीरुहां ॥ तथाकालेनभावितासम्यक्
चपृथिवीपतिः १९ ॥ ॥ इंद्रउवाच ॥ ॥ इत्यमात्यवचःश्रुत्वासावधानोभवन्नृपः ॥ उवाचनृपपत्नींतामुत्तिष्ठोत्तिष्ठमाशुचः २० स्वयंचसुमनाराजा
समाहूयद्विजोत्तमान् ॥ गणेशपूजनंचक्रेस्वस्तिवाचनमेवच २१ कृत्वाभ्युदयिकंश्राद्धंददौदानान्यनेकशः ॥ माल्यालंकारवासांसिगावोरत्नान्यनेकशः २२
सुहृत्संबंधिभृत्येभ्योवस्त्राणिविविधानिसः ॥ नानावादित्रजीविभ्योददौराजायथार्हतः २३ बंदिचारणदीनांधकृपणेभ्यश्चसर्वशः ॥ गृहेगृहेचतांबूलशर्करा
दापयच्चसः २४ कार्तवीर्येतिनामास्यचकारैकादशेहनि ॥ भोजयामासनगरंमहोत्साहपुरःसरम् २५ ततोद्वादशवर्षाणिव्यतीतानिसुतस्यह ॥ आययौस्वेच्छ
यातस्यदत्तात्रेयस्तदागृहम् २६ पादयोःस्वशिरःस्थाप्यकृतवीर्योननामतम् ॥ आलिलिंगमुनिस्तंसउत्थायनृपसत्तमम् २७ उपविश्यासनेरम्येपूजयामाससा
दरम् ॥ विष्टरंपाद्यमर्घ्यंचगांचवस्त्रोपवीतकम् २८ ददौधूपंचदीपंचनैवेद्यंविविधंफलम् ॥ उद्वर्त्तनंचतांबूलंरत्नकांचनदक्षिणाम् २९ सुप्रसन्नंसुखासीनंपा
दसंवाहनादिभिः ॥ उवाचराजासम्यक्तंदत्तात्रेयंमहामुनिम् ३० जन्मजन्मांतरीयंमेपुण्यंफलितमद्यवै ॥ यन्ममेचक्षुषांजातंसाक्षात्तेदर्शनंमुने ३१ अग्रेशुभ
तरंभाविप्रसादात्तवसुव्रत ॥ यतोभवादृशांनैवदर्शनंपापकर्मणाम् ३२ कृतवीर्यवचःश्रुत्वादत्तात्रेयस्तमब्रवीत् ॥ अपूर्वंतनयंतेद्यद्रष्टुकामोहमागतः ३३
ततआनंदयुक्तोसौनृपःप्राहमुनिंपुनः ॥ नृपउवाच ॥ अनुष्ठानंतपोदानंवृथाममगतंव्रतम् ३४ जगदीशेनदत्तोयंपुत्रोह्यच्छलयएवसः ॥ अनेनादर्शनीयेन
गतश्चादर्शनीयताम् ३५ ॥ इंद्रउवाच ॥ आनीयबालकंतस्मैमुनयेदर्शयन्नृपः ॥ आच्छादयन्नेत्रकंजेतत्सुतंवीक्ष्यसन्मुनिः ३६ ज्ञात्वाध्यानेनतत्कर्ममुनिस्तं
पुनरब्रवीत् ॥ अयमेवसुतोराजन्कर्त्तासर्वान्विजित्यह ३७ नार्चितोसिविजृंभ्यत्वंसंकष्टीव्रतजागरे ॥ निंदितोत्रतराजस्तुसर्वसंकष्टनाशनः ३८ अंगही
नःसुतोजातउपायात्सांगतामियात् ॥ ॥ राजोवाच ॥ कृतमुक्तंत्वयास्वामिन्कृपांकृत्वावदस्वमे ३९ येनोपायेनसांगोमेत्वत्प्रसादात्सुतोभवेत् ॥ ॥ इंद्रउ
वाच ॥ मुनिःसकृपयाविष्टस्तत्सुतायतदाब्रवीत् ४० मंत्रमेकाक्षरंसांगंततऊचेपुनश्चतम् ॥ आराधनंगणेशस्यमंत्रेणानेनभक्तितः ४१ उपवासैकभक्तानांनि
यमान्कुरुसुव्रत ॥ द्वादशाब्दंततस्तुभ्यंदर्शनंसचदास्यति ४२ तद्दृष्टिपातमात्रेणदिव्यदेहोभविष्यसि ॥ इत्युक्त्वानृपमामंत्र्यपिदधेमुनिपुंगवः ४३ गतेमुनौ
ततःपुत्रःपादहीनोमहामनाः ॥ जगादकृतवीर्यंसगहनंप्रापयस्वमाम् ४४ गजाननप्रसादार्थमनुष्ठानंकरोम्यहं ॥ इतित्वापितरौतस्यश्रुत्वावाणींतदीरिताम् ४५
अप्रेषयद्वनचारुनरयानेनतंपिता ॥ भृत्याःपर्णकुटीमध्येसंस्थाप्यनगरंययुः ४६ तस्थौतत्रस्वयंसम्यक्तपसेकृतनिश्चयः ४७ ॥ इतिश्रीगणेशपुराणेउपास

नाखंण्डेद्विसप्ततितमोऽध्यायः ७२ ॥ इंद्रउवाच ॥ गुरूपदिष्टंतंमंत्रंजजापानियमेनसः ॥ध्यायन्गजाननंदेवंनिष्ठामास्थायनैष्ठिकीम् १ वायुभक्षोनिराहारोलो
ष्ठपाषाणसन्निभः ॥ एवंद्वादशवर्षाणिव्यतीतानितपस्यतः २ हस्तपादविहीनस्यबालकस्यमहात्मनः ॥ निर्वाणंतस्यतद्दृष्ट्वाद्वादशाब्दंगजाननः ३ तडागम
ध्यादुत्तस्थौप्रवालमयमूर्त्तिगः ॥ उवाचसंमुखोभूत्वानिष्ठाभक्तिसुतोषितः ४ ॥ गणेशउवाच ॥ निर्जनेस्मिन्वनेयस्मात्सिंहव्याघ्रनिषेविते ॥ निकुंजबहुलेति
ष्ठथतोद्वादशवार्षिकम् ५ अतस्तेहंवरंदास्येशृणुयत्तेमनोगतम् ॥ श्रुत्वावाणींतदुदितामास्थितोदेहभावनाम् ६ कृतवीर्यसुतोनत्वाप्रोवाचद्विरदाननम् ॥ शृण्व
त्सुसर्वमुनिषुविमानस्थेषुभूरिशः ७ ॥ पुत्रउवाच ॥ त्वत्पादयुगलेदेवभक्तिरव्यभिचारिणी ॥ अस्तुमेसततंनान्यदुत्साहोमेप्रयाचितुम् ८ तथापियाचेदेवेश
पित्रोःसंतोषहेतवे ॥ शरीरंचारुतांदेहिसर्वसंतोषकारिणीं ९ ॥ इंद्रउवाच ॥ ॥ श्रुत्वावाक्यंतदीयंतुमायावीसगजाननः ॥ अणिमानंसमास्थायाविवेशोदर
मादरात् १० तस्मिन्प्रविष्टेपुत्रोसौदिव्यदेहोभवन्नृप ॥ सहस्रभुजवान्जातःकृतवीर्यात्मजस्तदा ११ ऋजुपादद्वययुतःस्थितःपर्वतसन्निभः ॥ ववर्षुःपुष्प
वर्षाणिदेवादेवर्षयोपिच १२ तुष्टुवुस्तंचदेवंचगीतवादित्रनिस्वनैः ॥ जगर्जकार्तवीर्योसौसहस्रभुजमंडितः १३ तस्यशब्दंसमाकर्ण्यघनगर्जितसन्नि
भं ॥ समवर्तीभ्रष्टशंत्रस्तःपरेषांगणनाकुतः १४ पृथिव्यांसर्वराजानःसमकंपंततद्भयात् ॥ अयंपंचशतंबाणान्संग्रामेमोचयेदिति १५ ब्रह्मादयस्ततोयानादु
त्तीर्यार्थितमब्रुवन् ॥ स्मरणात्तवदेवानांप्राप्तिःस्याद्गतवस्तुनः १६ त्वदिस्थंसर्वलोकानामामयंत्वंविनेष्यसि ॥ यतःसाक्षाद्विष्णुरूपःसहस्रार्जुनसंज्ञया १७ त्रि
षुलोकेषुविख्यातोयावत्कल्पंभविष्यसि ॥ साधुत्राणेचनिरतःशरणागतपालकः १८ विजेतासर्वशत्रूणांपृथिवीमंडलाधिपः ॥ इतिनानावरान्दत्वापिदधुर्दे
वतागणाः १९ हस्त्यश्वनरयानानिछत्रचामरदीपिकाः ॥ रथानुपायनान्यन्यान्याजह्रुरखिलानृपाः २० ततःसंस्थापयामासमहाप्रासादमध्यगां ॥ प्रावा
लींगणनाथस्यमूर्त्तिंद्विजपुरःसरः २१ प्रवालगणपश्चेतितस्यनामदधुर्द्विजाः ॥ ददौग्रामान्ब्राह्मणेभ्यःपूजार्थंस्थापिताश्चये २२ प्रवालक्षेत्रमितितत्प्रपप्रथेभुवि
सिद्धिदं ॥ तत्रशेषोधरांधर्तुमनुष्ठानपरोभवत् २३ प्रापतस्माद्गणेशात्तुवरान्बहुतरानपि ॥ धराधरणसामर्थ्यंसर्वज्ञत्वंतथैवच २४ मूर्ध्नांसहस्रंश्रैष्ठ्यंचनव
नागकुलेष्वपि ॥ अतिसंतुष्टमनसातेनयत्स्थापितंपुरा २५ धरणीधरइत्येवंद्वितीयंनामपप्रथे ॥ स्मरतांशृण्वतांचापिसर्वकामफलप्रदं २६ संपूज्यसर्वान्द्वि
जपुंगवांस्तान्राज्ञश्चसर्वाननुपृच्छ्यचैतान् ॥ सहस्रबाहुर्नगरंस्वकीयंद्रष्टुंस्वमातापितरावथागात् २७ जहर्षतुस्तौतंदृष्ट्वानगरंचतथाविधं ॥ ददतुर्द्विजमु
ख्येभ्योनानादानानिसर्वशः २८ इंद्रउवाच ॥ ॥ अभ्यर्थितुसंकष्टचतुर्थीमहिमाद्भुतः ॥ कृतवीर्यसुताद्यायंमृत्युलोकंगतःशुभः २९ अनुभूतःसुरगणैश्चं
द्रसेनादिभिर्नृपैः ॥ अतिपुण्यतमश्चायंस्मरणादपिसिद्धिदः ३० एतत्प्रसादात्संप्राप्तारावणेनाखिलज्ञता ॥ एतत्प्रसादात्संप्राप्तंपुराराज्यंचपांडवैः ३१ एतद्व्र
तस्ययत्पुण्यंहस्तेमेदीयतेयदि ॥ तदैवतद्विमानंतुप्रचलेदमरावतीं ३२ कउवाच ॥ इतिशक्रमुखात्तस्यव्रतस्यमहिमाश्रुतः ॥ शूरसेनेनभूपेनस्वानंदाब्यौनि

मज्जता ३३ वंदितेपादकमलेशक्रस्यप्रतिगर्जिता ॥ तमुवाचततःप्रीतःशूरसेनोनृपोत्तमः ॥ श्रुत्वाकथांदिव्यरूपांचतुर्थीव्रतसंभवां ॥ ॥ सउवाच ॥ फाल्गुनि
पूर्वपुण्यंमेयेनाश्रावीदृशंव्रतं ३५ नह्येतस्मात्पुण्यतरंत्रिषुलोकेषुकिंचन ॥ इत्युक्त्वाशक्रमारेभेव्रतंकर्तुंस्वयंततः ३६ इतिश्रीग०उपा०चतुर्थीव्रतमाहात्म्यं
नामत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ व्यासउवाच ॥ ब्रह्मन्कथंकृतंतेनशूरसेनेनभूभुजा ॥ सेतिहासंशक्रमुखात्श्रुत्वामादरमुत्तमं १ ब्रह्मोवाच ॥ ततः
स्वदूतान्प्राहेदंगच्छंतुनगरंप्रति ॥ सआनेयस्तुसंकष्टचतुर्थीव्रतकारकः २ तेदूतास्त्वरयायाताःपप्रच्छुस्तेगृहंगृहम् ॥ ददृशुर्भ्रममाणास्तेविमानंसुंदरंशुभ
म् ३ याभवद्दुष्टचांडालीगलत्कुष्ठास्रवन्मुखा ॥ मक्षिकाकृमिभारेणदुर्गंधेनसमावृता ४ शुष्कोदरीदीर्घकेशाशुष्कदंताक्षिनासिका ॥ अत्यंतमलिनादीर्घश्रोत्रं
ध्रावनस्वना ५ नेतुंतामीदृशींदूतैरानीतांगणपस्यहि ॥ अत्याश्चर्यमिदमितिराजदूताःप्रणम्यताम् ६ ऊचुस्तेदेवदूतांस्तान्गणनाथस्यकिंकरान् ॥ अत्यंतंकु
त्सिताजात्याहीनेयंस्वर्गगाकथम् ७ केयमासीत्पुरादूताःकथमीदृग्बभूवच ॥ केनपुण्येनयुष्माभिःस्वर्गंतुनीयतेकथम् ८ एतद्वदंतुसर्वंनोयादिवक्तुं
क्षमंभवेत् ॥ ॥ देवदूताऊचुः ॥ ॥ आसीत्बंगालविषयेसारंगधरनामतः ९ क्षत्रियस्तस्यकन्येयंसुंदरानामसुंदरी ॥ पिककंठाशशिमुखीरतिलावण्यजित्व
रा १० यद्दास्यकरणेनाहोःप्रसिद्धाअष्टनायिकाः ॥ योगिनामपियाचेतःकटाक्षेणविमोहयेत् ११ युवानोमुमुचुःशुक्रंकेचित्तद्रूपवीक्षणात् ॥ जारमार्गेषु
निरतासाभवद्विश्वमोहिनी १२ महार्हवस्त्रालंकारानानाविषयभोगिनी ॥ बंगालनगरेख्यातावेश्येवासीद्गतत्रपा १३ भर्तारंचित्रनामानंवंचयत्येवसर्वदा ॥
व्ययादसंख्यद्रव्यस्यपित्रासंपादितंपुरा १४ कदाचिच्छयनेतंसाहित्वासुंदरवेषभृत् ॥ निशीथेचलितातेनहस्तेधारिरुषावशात् १५ उवाचभर्त्सयंस्तां
चचित्रनामापतिस्तदा ॥ धिक्त्वांपापसमाचारेयाजारेनिरतानिशम् १६ तद्वाक्यमित्थमाकर्ण्यशांतकोपाभवत्तदा ॥ अभक्ष्यभक्षणेनासौमत्ताबल
वतीभृशम् १७ अंधेतमसिसंगृह्यशास्त्रिकांदक्षहस्ततः ॥ तयातदुदरंभित्त्वाचित्रनामपतेस्तदा १८ गतातंपुरुषंरंतुंयोजारोमनसिस्थितः ॥ यावत्सार
मतेतत्रतावत्पर्यंतवासिना १९ जाग्रताचरितंतस्याज्ञात्वाराज्ञेनिवेदितम् ॥ तद्दूतास्तमसिस्थित्वातावत्साग्रहमागता २० दधुस्तांराजदूतास्तेनिन्यूरा
जसमीपतः ॥ निजघ्नुस्तांबहिर्नीत्वादूताराजाज्ञयातदा २१ सानीतानरकेघोरेयमदूतैस्तदाज्ञया ॥ अधोमुखीस्थितातत्रसंदष्टाकृमिभिर्भृशम् २२ अत्यंतंबु
भुजेदुःखंस्मरंतीपूर्वचेष्टितम् ॥ कल्पांतेमृत्युलोकेभूच्चांडालीदुर्भगाभृशम् २३ एकदामादिरांपीत्वामत्तासुप्तादिवैवसा ॥ निशायांप्रथमेयामेप्रबुद्धाक्षुधिताभृ
शम् २४ तदैवभिक्षितुंयाताग्रहंसाव्रतकारिणः ॥ तेनान्नमस्यैदत्तंयत्तयाभुक्तंविधूदये २५ गणेशेतिचजल्पंत्यास्वेच्छयादैवयोगतः ॥ तदैवगणनाथेनविमानं
प्रेषितंशुभम् २६ ॥ ब्रह्मोवाच ॥ ॥ देवदूतवचःश्रुत्वापुनरूचुर्नमस्यते ॥ राजदूताऊचुः ॥ इदमत्यद्भुतंदृष्टमस्माभिःकार्यकारिभिः २७ राज्ञायदुपदिष्टं

१ प्रत्यपद्यतभूतले इ० पा० ।

नोवाक्यमेतन्निबोधत ॥ शक्रोगृत्सुमदंदृष्टुंविमानवरमास्थितः २८ शृंशुंडिमायपौदेवैर्ध्यानत्वाप्रपूज्यतम् ॥ तदनुज्ञांचपूजांचगृहीत्वास्वांपुरींययौ २९
गच्छतस्तस्ययानंतच्छूरसेनपुरेपतत् ॥ कुष्ठिनोवैश्यपुत्रस्यदृष्टिपातेनतत्क्षणात् ३० शूरसेनोगतस्तत्रनमस्कृत्यप्रपूज्यतम् ॥ विमानपतनेपृच्छद्दुपायंगम
नेपिच ३१ इंद्रेणोक्तंतुसंकष्टचतुर्थीव्रतसंभवात् ॥ पुण्यात्प्रस्थास्यतेयानंतदर्थंयत्नमाचर ३२ वयंतदाज्ञयादूतास्तंगवेषितुमागताः ॥ अनयाचेद्व्रतमिदंदे
वदूताःकृतंयदि ३३ तर्हीयंनीयतांशूरसेनंभूमिपतिंप्रति ॥ श्रेयोदास्यतिचांडालीसंकष्टीव्रतसंभवम् ३४ पुनर्द्विगुणपुण्येयंविमानंप्रतियास्यति ॥ विमानम
पिशक्रस्यस्वपुरीमागमिष्यति ३५ युष्माकमस्याअस्माकंकार्यंराज्ञःशचीपतेः ॥ एवंकृतेतुभविता क्रियतांयदिरोचते ३६ इतितद्वचनंश्रुत्वाभिदधुर्देवसेवकाः ॥
आज्ञानोनोगणेशस्यास्तीमांदातुंपरस्यहि ३७ इत्युक्त्वातांसमुत्थाप्यविमानेनिदधुस्त्वरा ॥ तदेवसादिव्यकांतिर्दिव्यवस्त्रांगभूषणा ३८ देवदूतैस्तुसानीतादि
व्यवादित्रनिस्वनैः ॥ गजाननसमीपेसाराजदूतायथागतम् ३९ ययुस्तेशूरसेनंतंवृत्तांतंसमनुब्रुवन् ॥ब्रुवत्सुतेषुतद्यानंचांडाल्यासहसंव्रजत् ४०ददृशुस्तेदीप्यमा
नंभासयत्प्रदिशोदिश ॥ तस्यादृष्टिर्निपतितातास्मिन्यानेशचीपतेः ४१ विमानवायुसंस्पर्शाद्विमानमूर्ध्वमाययौ ॥ पश्यत्सुसर्वलोकेषुविस्मितेषुसुरर्षिषु ४२
स्वंस्वंस्थानंययुःसर्वेशक्रेयातेमरावतीम् ॥ सापिवैनायकंधामसंप्राप्तादिव्यदेहभाक् ४३ पापंहित्वातुसंकष्टचतुर्थीव्रतपुण्यतः ॥ इदंयःशृणुयात्सम्यक्श्राव
येद्वाप्रयत्नतः ४४ प्राप्नुयात्सकलान्कामान्संकष्टनाशनंनरः ४५ इतिश्रीगणेशपुराणेउ॰चतुःसप्ततमोध्यायः ७४ ॥ कउवाच ॥ श्रुत्वादृष्ट्वाशूरसेनोमाहिमा
नंव्रतोद्भवम् ॥ स्वयंकर्तुमनाःप्राहवसिष्ठंमुनिपुंगवम् १ राजोवाच ॥ मुह्कृत्त्वंवदसंकष्टचतुर्थीव्रतहेतवे ॥ व्रतंकर्तुमिहेच्छामिसद्यःप्रत्ययकारकम् २ वासिष्ठउवाच ॥
माघकृष्णेभौमवारेकुरुष्वव्रतमुत्तमम् ॥ सर्वसिद्धिकरंसर्वकामदंराजसत्तम ३ ब्रह्मोवाच ॥ राजासंभृतसंभारःसपत्नीकोतिभक्तिमान् ॥ अचिरेणैवसंप्राप्तेवासिष्ठो
क्तदिनेशुभे ४ प्रारिप्समानःसंकष्टचतुर्थीव्रतमुत्तमम् ॥ प्रातःस्नानंविधायाथनित्यकर्मसमाप्यच ५ गणेशंपूजयित्वैवस्वस्तिवाच्यद्विजर्षभान् ॥ पूजयित्वाव
सिष्ठंसततोनुज्ञांसमाप्यच ६ गणेशेमनआधायतन्नामजपतत्परः ॥ एकांगुष्ठस्थितस्तावद्यावदस्तमियाद्रविः ७ पुनःस्नानंचकाराशुसायंसंध्यामुपास्यच ॥
प्रारभत्पूजनंसम्यग्वसिष्ठेनसमन्वितः ८ महामंडपिकांकृत्वाकदलीस्तंभमंडिताम् ॥ नानालंकारवस्त्राढ्यांछत्रचामरशोभिताम् ९ आदर्शपंक्तिरुचिरां
पुष्पमालाविभूषिताम् ॥ नानामणिप्रभायुक्तांदीपमालाविराजिताम् १० तन्मध्येस्वर्णकलशंस्थापयित्वागजाननीम् ॥ सौवर्णींप्रतिमांचारुसर्वावयवसुंद
राम् ११ नानालंकाररुचिरांनानारत्नविभूषिताम् ॥ पठत्सुद्विजमुख्येषुगायत्सुगायकेषुच १२ नदत्सुसर्वतूर्येषुनृत्यत्सुनर्तकेषुच ॥ वैदिकैश्चैवपौराणै
स्तांमूर्तिंसमपूजयत् १३ उपचारैःषोडशभिःपंचामृतपुरःसरम् ॥ मोदकापूपलड्डूकपायसान्नंसशर्करम् १४ नानाव्यंजनशोभाढ्यंपंचामृतसमन्वितम् ॥ नै

१ सशुंडमायपौदेवैःइ॰ पा॰ ।

वेद्यंपुरतःस्थाप्यजलंचचारुगंधयुक् १५ समर्पयामासनृपोगजाननसुतुष्टये ॥ फलानिपूगतांबूलंदक्षिणांरत्नकांचनीम् १६ दूर्वांनीराजनंमंत्रपुष्पांजलीनने
कधा ॥ तिथयेगणनाथायचंद्रयार्घ्यंददावथ १७ ब्राह्मणान्पूजयामाससादरंचाप्यबूभुजत् ॥ अयुतंगाददौतेभ्योवस्त्रालंकारदक्षिणाः १८ ततःसुहृद्भिर्युतःस्व
यंचबुभुजेनृपः ॥ रात्रौजागरणंचक्रेगीतवाद्यकथादिभिः १९ प्रभातेविमलेस्नात्वापुनःसंपूज्यपूर्ववत् ॥ मूर्तिंतांगणनाथस्यवसिष्ठायसदक्षिणाम् २०
सोपस्करांददौराजाततस्तुष्टोगजाननः ॥ विमानंप्रेषयामाससर्वसंपद्विराजितम् २१ तद्दूतैःस्थापितस्तत्रगजाननस्वरूपवान् ॥ पश्यतांसर्वलोकानांमनआ
नंदयन्मुहुः २२ चलितोदेवलोकायराजापुण्यप्रभावतः ॥ तमूचुर्देवदूतास्तेगजाननस्वरूपिणः २३ नानालंकारशोभाढ्यामुकुटाक्रांतमस्तकाः ॥ विनायके
नतुष्टेनविमानंप्रेषितंतव २४ त्वद्दर्शनौत्सुक्यवताततोवयमुपागताः ॥ इतितद्वचनंश्रुत्वामुमोचाश्रूणिभूमिपः २५ जगादगद्गदगिरारोमांचांचितविग्रहः ॥
तानुवाचततोराजाशूरसेनःस्मयन्निव २६ अव्यक्तस्याप्रमेयस्यनित्यस्यजगदीशितुः ॥ वाङ्मनोगोचरस्यापिनहेतुर्ममदर्शने २७ नसमर्थाश्चयंवेदाःशास्त्रा
णिचनिरूपितुम् ॥ यंचस्मरंतिसततंकेशाद्यादेवतागणाः २८ तेनाहंचेत्स्मृतोदूतास्तर्हिभाग्यंमहन्मम ॥ इत्याकर्ण्यतुतद्वाक्यंदूताऊचुःपुनर्नृपम् २९ न
जानीमोवयंराजन्भक्तानांमहिमाकथम् ॥ निर्गुणंयन्निराकारंयेनसाकारतामियात् ३० ॥ राजोवाच ॥ एकामेमहतीवांछातुष्टेदेवेमनस्सुच ॥ तुष्टेषुनगरींहि
त्वाकथंयायांगजाननम् ३१ नअक्षितंविनाप्येतैर्भयाहालाहलंकचित् ॥ सकथंपरमानंदंभोक्ष्यएतैर्विनानघाः ३२ पुनरूचुश्चतंदूतास्त्वदिच्छापरिपूर्यताम् ॥
नचेद्गजाननःक्रोधात्ताडयिष्यतिनोखिलान् ३३ ॥ ब्रह्मोवाच ॥ ततःसर्वजनंनेतुंविमानेनिदधुःक्षणात् ॥ चतुराकरजाब्रह्मन्निक्षिप्ताःसर्वजंतवः ३४ सर्वेदि
व्यांबरादिव्यवस्त्रालंकारशोभिनः ॥ ऊचुःपरस्परंसर्वेकिमेतदद्भुतंमहत् ३५ अस्माभिर्नकृतंपुण्यंविमानंकथमीदृशम् ॥ अपरेचाब्रुवंस्तत्रराजपुण्यबलादिद
म् ३६ यथानिधिबलाद्धातुमात्रस्यहाटकंभवेत् ॥ अतिपापायथासाधुवचसासिद्धिमाप्नुयात् ३७ तथैवराजपुण्येनवयंसर्वेसमुद्धृताः ॥ ततोवैनायकादू
तागतिमूर्ध्वामकल्पयत् ३८ जडीभूतंविमानंतन्नोदतिष्ठन्महीतलात् ॥ ततःसंशयितंसर्वंकथमेतद्विवंव्रजेत् ३९ ऊचुःपरस्परंलोकानिर्दैवस्यनिधिःकुतः ॥
आरुरुक्षेत्कथंभिक्षापात्रंशिक्यंमहत्तरम् ४० ददृशुःसर्वतःकेचित्कुष्ठीदृष्टिपथंगतः ॥ उवाचकश्चिद्राजानंकुष्ठिनंत्वमिमंत्यज ४१ अस्मिन्नधोगतेयानमूर्ध्व
मेतद्भविष्यति ॥ शूरसेनउवाचैतान्दूतांस्तंत्यक्तुमिच्छतः ४२ अहंपापसमाचारस्त्याज्योनेयाइमेखिलाः ॥ अथवाकथ्यतामस्यपूर्वपापंचजन्मच ४३ मत्स्ने
हात्सर्ववेत्तृत्वादुपायंकथयापिच ॥ दूताऊचुः ॥ नकार्यान्नृपतेचिंतावादिष्यामोवयंतव ४४ जन्मपापमुपायंचकुष्ठिनोदुष्टकर्मच ४५ ॥ इतिश्रीगणे०उपासना
खण्डेपंचसप्ततितमोध्यायः ७५॥ ॥दूताऊचुः॥ गौडेतुविषयेगौडनगरेभूत्पुराद्विजः ॥ तपस्वीज्ञानवान्प्राज्ञोदेवब्राह्मणपूजकः ॥ तस्यपुत्रोयमजनिजननींचा

१ शुद्धिमाप्नुयात् इ० पाठान्तरम् ।

स्यशाकिनी १ तस्यपत्नीतुसाविंत्रीसावित्रीवपतिव्रता ॥ एकपुत्रःस्नेहवशादलंकारैरलंकृतः २ अत्यंतसुंदरतरोरतिभर्त्तेवशोभते ॥ तन्मातापितरौतस्यवियोगंने
च्छतःक्षणम् ३ सतुयौवनमापन्नोनिजभार्यांविहायतां ॥ परदाररतोनित्यंपरनिंदापरायणः ४ अभवत्पापनिष्ठश्चपितृवाक्यावमर्दनः ॥ एकदानगरेतस्मिन्वे
श्यानरविमोहिनी ५ आगतातद्रतमनायचक्रेसोशृणुष्वतत् ॥ स्वालंकारान्पेटिकायांनिष्कास्यास्थापयत्बलात् ६ मातापित्रोःसमक्षंचपश्चाच्चौर्येपुनश्चता
न् ॥ वेश्यायैप्रतिपाद्यैतांश्चिक्रीडसुभृशंतया ७ हित्वेंद्रियार्थान्सकलान्सुगंधद्रव्यसंयुतः ॥ तदेकनिष्ठःसंजातोयोगीब्रह्मपरोयथा ८ कामाग्निविह्वलश्चा
सीत्क्षीबोमद्यबलाद्यथा ॥ पितातुखेदसंपन्नःक्षुत्तृड्भ्यांपरिवर्जितः ९ विलोकयामाससुतंनगरेप्रतिमंदिरम् ॥ अलब्धदर्शनस्तस्यश्वासोच्छ्वासपराय
णः १० निशीथेस्वप्रियांप्राहबुधःपुत्रोगतःक्वनु ॥ विनातेनवृथागेहंविनादीपंयथानिशी ११ विनाजलंवृथावापीविनापत्यंयथाबला ॥ कदानुदर्शनंतस्यभ
विताप्राणरक्षकम् १२ शाकिन्युवाच ॥ ॥ क्षुधातृषापरिश्रांताचिंताशोकसमन्विता ॥ तिष्ठामिनाथनोजानेक्वगतःप्रियबालकः १३ यदिमेदर्शनंतस्यस्या
ज्जीवामिनचान्यथा ॥ पुनश्चचालदूर्वःसयष्टिमादायमुष्टिना १४ यंयंपश्यतिमार्गेस्मिंस्तंतंपृच्छतिचात्मजम् ॥ यदाश्रांतःक्षुधाक्रांतस्तदाभ्रांतश्चसोभवत् १५
अतिवृद्धोमहाभीमोनाम्नाभीमोंत्यवर्णजः ॥ सतेनपृष्टस्तनयंतेनाप्युक्तंपरंस्फुटम् १६ ॥ भीमउवाच ॥ वेश्यागृहेतेतनयोबुधोसौबुधःसुखंक्रीडतिकामसक्तः ॥ क
स्यात्मजोवाजननीपितावावृथैवखेदंकुरुषेद्विजेंद्र १७ दूर्वउवाच ॥ कथंममसुतोजातोवेश्यायांनिरतोबुधः ॥ तस्यागृहंजगामाशुदृष्टवांस्तत्रतंसुतम् १८ उन्मत्तंम
दिरारक्तनयनंमदविह्वलं ॥ पितादधारतंहस्तेरुषाशिक्षापयत्सुतम् ॥ कथंममकुलेजातोविधावंकोयथाधमः १९ त्वत्तःकंटकवृक्षोयंपाषाणोवामतोधिकः ॥ कथंन
त्यजसेप्राणान्किंस्यात्तेजीवितंखलु २० ब्रह्मोवाच ॥ पितृवाक्यंसमाकर्ण्यरोषाविष्टोबुधःसुतः ॥ तलप्रहारंतुंडेस्यदत्तवान्पितुरेवसः २१ उक्तवान्कृमिकीटा
दिसाधारणसुखेकथं ॥ कृतवानसिमेविघ्नंक्रीडाकालेनराधम २२ अकस्मात्काकस्यशक्रुत्पतितंमयिवाकथं ॥ पुनर्लत्ताप्रहारेणप्राणांस्तस्यगृहीतवान् २३ पित्राप्रा
णेषुत्यक्तेषुहरेश्वरेतिसोवदत् ॥ ननंदससुतःपादेबध्वातंदूरतोक्षिपत् २४ मधुपीत्वापुनारेमेवेश्ययासयथेच्छकं ॥ प्रातर्जगामस्वगृहंददर्शजननीचतं २५ आलि
लिंगसुतंहर्षात्स्नेहस्नुतपयोधरा ॥ बभाणक्वगतश्चासिक्वस्थितःकिंकृतंत्वया २६ वदमेविस्तराद्वत्सपितातेदुःखितोभृशं ॥ अहंचापिनिराहारानिर्जलानिशिजाग्र
ती २७ प्रतीक्षमाणावत्सत्वांपितान्वेष्टुंगतश्चिरात् ॥ गच्छत्वंपितरंद्रष्टुंइत्युवाचपुनःपुनः २८ तयाज्ञप्तमितिक्रोधाच्छुष्ककाष्ठेनतांसुतः ॥ ताडयामासशिरसिप
तितासाधरातले २९ निश्चेतनांपरिज्ञायबद्ध्वापादेक्षिपत्बहिः ॥ स्वयंवेश्यागृहंगत्वाचिक्रीडभृशहर्षितः ३० ददहुस्तेजनाःसंतोदंपतीस्वस्वकाष्ठतः ॥ नशास्ति
राजादंडयंतंब्राह्मणत्वाद्द्विजाधमम् ३१ पुनर्गृहागतंतंतुपत्नीवाक्यंशनैर्जगौ ॥ सावित्र्युवाच ॥ प्राणनाथवदाम्येकंतच्छृणुष्वमहामते ३२ अतिरम्यातेतिविमले[1]

१ विमला इतिपाठान्तरम् ।

वर्णेजन्मभवादृशाम् ॥ आचारश्चान्यथादुष्टस्त्यक्तव्यःसविवेकतः ३३ इहलोकेतुतत्कार्यंयेनसौख्यंपरेभवेत् ॥ पूर्वेवयसितत्कार्यंयेनशंवार्धकेभवेत् ३४ अ
ष्टमासेषुतत्कुर्याद्येनवर्षासुशंभवेत् ॥ दिवसेकर्मतत्कार्यंयेनरात्रौसुखंभवेत् ३५ पितुःप्रियत्वाद्राजापिब्राह्मणत्वात्क्षमत्यसौ ॥ सर्वावयवसंपूर्णांसुंदराम
नुसारिणीम् ३६ त्यक्त्वामांधर्मपत्नींत्वंवेश्यायांनिरतःकथम् ॥ लोकोनिंदतिसर्वत्रभयात्त्वांनवदत्यसौ ३७ समांजनःप्रतिब्रूतेपतिस्तेकीदृशःशुभे ॥ लज्जया
धोमुखीप्राणांस्त्यक्तुमीहेतदैवच ३८ यथेष्टंचेन्मयासार्द्धंरमसेहर्निशंपते ॥ नकोपिकिंचिद्ब्रूयात्त्वांदोषोवानभवेन्महान् ३९ हितंचेत्कुरुमद्वाक्यंत्यक्त्वातां
स्वविवेकतः ॥ अज्ञानाद्वाप्रमादाद्वाकृतंकर्मत्यजेद्बुधः ४० इदंकृतंममैवस्यादितिनैवकृतंयदि ॥ अनिष्टंसर्वथामेस्यात्तन्नकार्यंविनिश्चयात् ४१ अन्यथाकु
र्वतःपुंसइहलोकोनवापरः ॥ इतिस्त्रियावाक्यबाणैर्बुधोविद्धोहिमर्मसु ४२ रोषाविष्टोमहाक्रूरोजगादप्रज्वलन्निव ॥ बुधउवाच ॥ निर्लज्जेनिष्ठुरेप्रौढेदुष्टे
रुष्टेमयिस्फुटम् ४३ गमिष्यसिगतिंतांत्वंयथातौपितरौगतौ ॥ सावित्र्युवाच ॥ येनपित्रोर्नमर्यादाशिक्षितोश्चस्वतंत्रयोः ४४ रक्षितातद्विपरीतांसमांत्राता
कथंभवेत् ॥ भर्तृहस्तान्मृतिःश्रेयःपरत्रेहचसत्स्त्रियाः ४५ ॥ ब्रह्मोवाच ॥ एवंब्रुवंत्यांपत्न्यांसधम्मिल्लंसहसाग्रहीत् ॥ काष्ठैर्लोष्टैर्मुष्टिभिश्चपाषाणैस्ता
मताडयत् ४६ सारामंभर्तृरूपेणसस्मारपूर्वपुण्यतः ॥ प्राणांस्तत्याजसहसाभिन्नामर्मसुतेनह ४७ स्वर्गंगत्वादिव्यदेहाबुभुजेपरमंसुखम् ॥ आकृष्यचरणेतांस
चिक्षेपदूरतोनिशि ४८ निरंकुशोहर्षयुतोरेमेवेश्यासमन्वितः ॥ त्वदर्थंनाशिताःसर्वेबुधस्तामितिसोब्रवीत् ४९ ततोबहुगतेकालेबुधोगात्कालभैर्गृहम् ॥ तस्मि
न्स्नातुंगतेदुष्टोभार्यांतस्याग्रहीत्करे ५० अत्यंतंसुंदरतरामालिलिंगचुचुंबच ॥ निःशंकंशयनेनीत्वाममर्दकुचमंडलीम् ५१ रेमेतयायथेष्टंसततःसातंशशापह
सुलभोवाच ॥ कथंनामकृतंदुष्टंपितृभ्यांसुलभेतिमे ५२ अहंतेसुलभाजातादुष्टबुद्धेनराधम ॥ स्नातुंगतेभर्त्तरिमेकालभौमुनिपुंगवे ५३ बलात्कारोमयिकृतो
दुष्टःकुष्ठीभविष्यसि ॥ जन्मांतरेतेनामापिनगृण्हीयाज्जनःक्वचित् ५४ ब्रह्मोवाच ॥ ततोभीतोययौवेश्यागृहमेवबुधःपुनः ॥ रेमेतयासुरांपीत्वानकिंचिद
पिचिंतयन् ५५ एवंदुष्टानिकर्माणिवक्तव्यानिकथंमया ॥ पुण्यक्षयोभवेत्तस्यपरदोषंयईरयेत् ५६ सकालान्निधनंप्राप्तोदूतैर्नीतोयमालयम् ॥ यमेनोक्तं
किमानीतोनीयतांनरकेष्वयम् ५७ यमवाक्यंसमाकर्ण्यदूतान्निन्युस्तदैवतम् ॥ चिक्षिपुर्नरकेतावद्यावदाभूतसंप्लवम् ५८ भुक्तभोगःसवैश्यस्यगृहेज
न्मसमाप्तवान् ॥ ऋषिपत्न्याःसशापेनकुष्ठीजातोभृशंतदा ५९ पितृहामातृहाब्रह्मीहामद्यपीगुरुतल्पगः ॥ तस्यसंस्पर्शनादेवसचैलंस्नानमाचरेत् ६०
नामाप्येतस्यनग्राह्यंमहादोषकरंयतः ॥ एतादृशोयंदुष्टात्मायदात्यक्तइतस्तदा ६१ विमानंयास्यतेचोर्ध्वंनूनंनास्त्यत्रसंशयः ६२ ॥ ॥ ब्रह्मोवाच
श्रुत्वेत्थंवचनंतेषांदूतानांभृशकंपितः ६३ शूरसेनउवाचैतान्नमयाज्ञायिदुष्कृतं ॥ पुनरुत्थायराजासौप्रणनामभृशातुरः ६४ प्राहतान्देवदूतान्सकृपां
कृत्वावदंतुमे ॥ उपायमस्यदुष्टस्यसर्वदोषापनुत्तये ६५ ॥ दूताऊचुः ॥ उत्तिष्ठोत्तिष्ठनृपतेब्रूमोदोषापनुत्तये ॥ उपायंराजशार्दूलशृणुष्वैकमनाभव ६६ ग

णेशस्यभवेन्नामयत्स्यातंचतुरक्षरं ॥ जपतत्कर्णरंध्रेस्यसर्वदोषक्षयोभवेत् ६७ उदयेदिननाथस्ययथासर्वतमःक्षयः ॥ नान्योपायोधिकारोस्ययतोनामैवजप्य
तां ६८ ब्रह्मोवाच ॥ शूरसेनोदूतवाक्याज्जयपूर्वंजजापह ॥ त्रिवारंवैस्यकर्णेतुनामयच्चतुरक्षरं ६९ गजाननेतिश्रुत्वैवदिव्यदेहोभवच्चसः ॥ आसयंस्तेजसास
र्वमरुणोभुवनंयथा ७० सर्वपापक्षयेजातेनामश्रवणमात्रतः ॥ दीपयन्सर्वदिग्देशान्विमानंचाध्यरोहत ७१ तद्विमानंक्षणाद्भूतैःसर्वलोकसमन्वितम् ॥ नीतं
वैनायकंधामविघ्नराजस्यशासनात् ७२ इतिसर्वंसमाख्यातंयद्यत्पृष्टंत्वयानघ ७३ महापुण्यंचसंकष्टचतुर्थीव्रतमुत्तमं ॥ धर्म्यंयशस्यमायुष्यंश्रवणात्सर्वसि
द्धिदं ७४ सर्वपीडाप्रशमनंसर्वविघ्नविनाशनं ॥ दूर्वानामप्रभावश्चकिमन्यच्छ्रोतुमिच्छसि ७५ इतिश्रीगणे०उपासनाखंडेषट्सप्ततितमोऽध्यायः ॥७६॥ व्या
सउवाच ॥ अन्येनाकारिकेनेदंवदतत्कौतुकंमहत् ॥ ब्रह्मोवाच ॥ जामदग्न्येनरामेणवतमेतत्पुराकृतम् १ सोपिकीर्तिंजयंज्ञानंआयुर्दीर्घंचलब्धवान् ॥ व्यास
उवाच ॥ रामःकथंसमुत्पन्नःकस्मात्कस्यांपितामह २ एतत्सर्वंसुविस्तार्यब्रूहित्वंममपृच्छतः ॥ ब्रह्मोवाच ॥ श्वेतद्वीपेतिविख्यातोजमदग्निर्महामुनिः ३ मन
सासृष्टिसंहारान्निग्रहानुग्रहानपि ॥ यःकरोतित्रिकालज्ञस्ततोदेवाश्चकंपिरे ४ यस्यासीत्पत्न्यपितथारेणुकानामनामतः ॥ यस्यालावण्यगुंजापिपत्न्याःका
मस्यनाभवत् ५ रतिरित्येवलोकेषुविख्याताभूत्ततस्तुसा ॥ ययासंमोह्यतेसर्वंक्षमस्तद्दर्शनेतुकः ६ यन्नेत्रशोभासंप्राप्त्यैचकोराजलवासिनः ॥ हरिणाश्च
तपश्चेरुर्वनेछंदतृणाशिनः ७ यदास्यशोभासंप्राप्त्यैसेवतेचंद्रईश्वरम् ॥ अनादिनिधनादेवीमूलप्रकृतिरीश्वरी ८ तस्यामजनिरामोसौविष्णुर्योगेश्वरो
यथा ॥ जमदग्नेर्महाआगात्साक्षादीश्वररूपिणः ९ अतिसुंदरगात्रोसौसाक्षान्मन्मथमन्मथः ॥ मातापितृवचःकर्ताविख्यातबलपौरुषः १० देवद्विजगुरु
प्राज्ञगोवोधिपूजनेरतः ॥ वेदवेदांगशास्त्राणांस्मृतीनामपिपाठकः ११ वाक्येबृहस्पतिसमःक्षमयापृथिवीसमः ॥ गांभीर्येब्धिसमोयस्तुपित्रोर्वाक्यपरा
यणः १२ पित्रोराज्ञांगृहीत्वासनिमेषारण्यमाययौ ॥ अनेकविद्याभ्यसनेमतिंकृत्वापरांस्थिराम् १३ तस्मिन्गतेतदाराजाकार्तवीर्योमहाबलः ॥ यस्यप्रता
पाद्भवद्वश्यंभूमंडलंसदा १४ यस्मिन्लक्ष्मीःस्थिराविष्णोरंशभूतेखिलार्थदे ॥ आजौपंचशतंबाणान्सृजतेरिपुघातकान् १५ इंद्रादिद्वंद्वंसंख्योसौविख्यातब
लपौरुषः ॥ असंख्यातागजायस्यरथवाजिपदातयः १६ यस्यनिर्गमनेसैन्याश्छादयंतिमहीतलम् ॥ वर्षाकालेयथामेघाधाराभिर्व्योममंडलम् १७ यस्यकं
बुस्वनंश्रुत्वाद्विषोयांतिदिशोदश ॥ यथासिंहरवंश्रुत्वामत्तमातंगकोटयः १८ यदातालींपंचशतंस्वेच्छयाकुरुतेनृपः ॥ तदासनादंब्रह्मांडंकंपतेमुनिसत्तम १९
ससौयदृच्छयायत्तश्चतुरंगबलान्वितः ॥ नीलवस्त्रधरोनीलछत्रस्तादृशसैनिकः २० वनानिसरितोदुर्गान्पर्वतांश्चविलोडयन् ॥ नानामृगगणान्वीक्ष्यविनि
घ्नन्पिकांश्चन २१ ततःसह्याद्रिशिखरेपश्यदाश्रममुत्तमम् ॥ यथाकैलासशिखरेगिरिशालयमुत्तमम् २२ अपृच्छत्सेवकान्राजाकस्येदमुत्तमंस्थलम् २३ ॥

१ वनवासिन इतिपाठो वा !

त्यउवाच ॥ जमदग्निरितिख्यातःसाक्षात्सूर्यइवापरः ॥ मुनिरास्तेमहाभागशापानुग्रहकारकः २४ यस्यदर्शनतःपापकोटयोयांतिसंक्षयम् ॥ इच्छाचेत्तत्र
गंतव्यंदर्शनंतेभविष्यति २५ तवप्रसादात्सर्वेषामुपकारोभविष्यति ॥ ॥ ब्रह्मोवाच ॥ इतितद्वचनंश्रुत्वागमनायोद्यतोनृपः २६ न्यषेधयत्सर्वबलंश्रेष्ठा
नादायतत्क्षणात् ॥ ययौतंमुनिशार्दूलंजमदग्निंतपोनिधिं २७ ददर्शतंकुशासीनंज्वलंतमिवपावकं ॥ प्रणनामससाष्टांगंतेसर्वेसहयायिनः २८ नानाविशा
लशालासुकुंजवृक्षावलीषुच ॥ निषेदुःसैनिकास्तेतुराजातस्थौमुनेःपुरः २९ आसनेमुनिनादिष्टेचतुर्भिःपरिवारितः ॥ निषसादतदाराजाकृतवीर्यसुतोबली ३०
अपूजयततान्सर्वान्पाद्यार्घ्यविष्टरादिभिः ॥ समुनिःप्रददौगाश्चशिष्यैःसर्वानपूजयत् ३१ नानासरोवरजलेनिर्मलेचारुशीतले ॥ अमज्जंततदासर्वेसैनिकाम्र
गयार्दिताः ३२ शृण्वन्वेदनिनादांश्चशास्त्रशब्दांश्चपुष्कलान् ॥ अभितोवादशब्दांश्चतच्छिष्यैःसमुदीरितान् ३३ अब्रवीन्मुनिमुख्यंतंराजाराजीवलोचनः ॥
अद्यमेपितरौधन्यौजन्मज्ञानंतथातपः ३४ पुण्यवृक्षोद्यफलितोयज्जातंतवदर्शनम् ॥ अद्यमेसंपदोधन्याःकुलंधन्यंयशोपिमे ३५ परब्रह्मेतियत्प्रोक्तंतदेवत्वं
नसंशयः ॥ आतिथ्यंतवदृष्ट्वैवंपरितुष्टंमनोमम ३६ इतिश्रुत्वातुतद्ब्राह्मींस्मयन्निवप्रसन्नधीः ॥ कोसिकस्यासिकिंनामकिंकार्यंतववर्तते ३७ इतितंपरिपप्र
च्छजानन्नपिमुनिस्तदा ॥ राजोवाच ॥ राज्ञांस्वकार्यकर्तॄणांभवादृशनिरीक्षणात् ३८ नान्यत्प्रयोजनमुरुश्रेयसाजनितत्स्फुटं ॥ कृतवीर्यसुतोहंचकार्त
वीर्यइतिश्रुतः ३९ अनुज्ञातोगमिष्यामिततोहंनगरंप्रति ॥ मुनिरुवाच ॥ मयाश्राविमहाकीर्तिस्तवराजन्यसत्तम ४० आसीत्त्वद्दर्शनाकांक्षाजातापुण्येन
सत्फला ॥ देहआत्मातपोज्ञानमाश्रमोममसांप्रतम् ४१ अभूत्त्वदागमाद्राजन्सार्थकाःसर्वसंपदः ॥ अकृत्वाभोजनंकिंचित्कथंत्वंगंतुमर्हसि ४२ ममश्लाघा
भवेल्लोकेन्यूनंकिंतवविद्यते ॥ किंचित्भुक्त्वाव्रजविभोसनाथंकुरुमांप्रभो ४३ ॥ ॥ राजोवाच ॥ ॥ सत्यंभोजनकालोस्तिभोक्तव्यंचतवाज्ञया ॥ अ
न्नाभावेश्रोत्रियाणांजलंयाच्यपिबेदपि ४४ तथाप्येतान्विहायाहंसैनिकान्गणनातिगान् ॥ जलंपातुंनशक्नोमिकथंभोक्तुंसमुत्सहे ४५ जानेहंमनसाब्रह्मन्
नशक्तिःसर्वभोजने ॥ भवद्दर्शनमात्रेणकृतकृत्योव्रजेधुना ४६ ॥ मुनिरुवाच ॥ ॥ चिंतांमाकुरुराजर्षेभोजयिष्येससैनिकम् ॥ चतुर्विधेनचान्नेनकिमसाध्यं
तपस्विनां ४७ गृहेतेवाहिनीयास्यात्तामप्याकारयप्रभो ॥ क्षणंविश्राम्यतांतीरेनद्याश्चारुतरेशुभे ४८ यावत्सिद्धंभवेदन्नंपश्चाद्द्रक्ष्यसिकौतुकं ॥ ॥ कउ
वाच ॥ ॥ अंतःसविस्मयाविष्टोजगामकृतवीर्यजः ४९ वाक्यमाकर्ण्यतुमुनेर्नदीतीरंसुशोभनम् ॥ मुनिःपत्नींसमाहूयवृत्तांतंतंजगादताम् ५० आहूय
कामधेनुंतौपुपूजतुःक्षणेनताम् ॥ प्रार्थयामासतुरुभौलज्जांनोरक्षधेनुके ५१ असंख्यातबलोराजाभोजनायनिमंत्रितः ॥ यथारुचिभवेत्तस्यससैन्यस्यभुजिः
शुभे ५२ तथाकुरुक्षणेनत्वंनोचेत्सत्यंलयंव्रजेत् ॥ अकीर्त्तिश्चभवेल्लोकेयथेच्छासितथाकुरु ५३ एवंसंप्रार्थितातात्भ्यांकामधेनुर्महापुरम् ॥ निर्मायस्वप्रभावे
ननानामंदिरसुंदरं ५४ नानारत्नमयस्तंभशोभिनानासभागृहम् ॥ नानापुष्पलताचारुवाटिकाराममंडितं ५५ नानाध्वजपताकाढ्यंनानावादित्रनिस्वनम् ॥

अष्टापदानांभाढ्यानांनानापंक्तिविराजितम् ५६ चतुर्विधान्नसंपन्नंनानाभाजनपंक्तिमत् ॥ महातोरणशोभाढ्यंपरिखावलयांकितम् ५७ अनेकदासदासीभिर्विलो
सच्चारुवेदिकम् ॥ निवारयंतिलोकांश्चयत्रतत्रस्थितानराः ५८ पुरोगंतुंनचाज्ञास्तिजमदग्निमुनेरिति ॥ परिविष्टेषुपात्रेषुसंख्यातीतेषुसर्वतः ५९ दीपप्रभा
भासुरेषुनानाव्यंजनशालिषु ॥ सूपपायसपक्वान्नपंचामृतयुतेषुच ६० सखाद्यलेह्यचोष्यादिपेयपंक्तिविराजिषु ॥ सामुद्रपक्वनिंबाम्रामृताबिल्वादिशालिषु
चंद्रैलाहिंगुमारीचक्वथिकापात्रशालिषु ६१ सिद्धेषुपात्रेषुमुनिस्तदासावाकारयच्छिष्यगणंतदानीम् ॥ श्रीकामधेनोःपरिपूर्णतोषाद्धोक्तुंससैन्यंकृतवीर्यपुत्रम्
६२ इतिश्रीगणेशपुराणेउपासनाखण्डेसप्तसप्ततितमोध्यायः ॥ ७७ ॥ कउवाच ॥ ततोमुनिःशिष्यगणमुवाचत्वरयाव्रज ॥ आकारयितुंनृपतिंनदीतीरनिवासि
नं १ तेशिष्यास्तंनृपंगत्वागृह्यतत्प्रणतिंपुरा ॥ दत्वाशीर्वचनंतस्मैमुनेराज्ञांतथाब्रुवन् २ चलराजन्नवहितोभोजनायससैनिकः ॥ पात्राणिपरिविष्टानिसंख्या
तीतानिषड्रसैः ३ ॥ ॥ कउवाच ॥ ततउत्थायराजासौसमाहूयससैनिकान् ॥ सुस्नातःसर्वसैन्येनकार्तवीर्योनृपोययौ ४ मुनिवेश्मततोपश्यन्नदृष्टंनचवैश्रुतं ॥
एतादृशंत्रिलोकेषुगृहतोरणमापसः ५ सनिषिद्धोवेत्रधरैर्मुनिसंकेतकामुकैः ॥ तानिषिद्धाःशिष्यगणैस्ततोगाद्भोजनालयम् ६ स्थित्वामध्येपश्यतिस्मराजासौ
संपदंमुनेः ॥ अमन्यततदास्वांतेनेदृशीश्रीर्हरौहरे ७ पालकेऽपालकेस्वर्ष्यापिब्रह्मणिनेदृशी ॥ ततोमुनिःपुरोभूत्वाप्रतिपात्रेन्यवेशयत् ८ राजानुमतिमाज्ञा
यपंक्तौपंक्तौससैनिकान् ॥ दापयामासपात्राणियेदृष्टिभोजिनश्चतान् ९ उपविष्टेषुसर्वेषुराजानमुपवेशयत् ॥ बुभुजुस्तेतदावाद्यवादितेसर्वएवहि १० अदृष्टपू
र्वाण्यन्नानिस्वादुमूलफलानिच ॥ परस्परंचपप्रच्छुःकिमिदंकिमिदंत्विति ११ आश्चर्यंमेनिरेसर्वेयामेनेत्थंकथंकृतम् ॥ यथेष्टंभुंजतेसर्वेतृप्ताश्चान्नानितत्यजुः १२
तेप्रक्षालनपात्राणिप्रतिपात्रेन्यवेदयन् ॥ मुनिशिष्याजलंचापिशलाकाभपिचारवः १३ गजाश्ववृषवृंदेभ्यःशिष्याःशेषान्नमर्पयन् ॥ ततोन्यस्मिन्गृहेसर्वेविस्ती
र्णेकृतसंस्तरे १४ इक्षुद्राक्षाम्रपनसदाडिमानिबभक्षिरे ॥ एलालवंगकर्पूरचूर्णखादिरपूगकान् १५ जगृहुर्मुनिदत्तांस्तेनागवल्लीदलैर्युतान् ॥ ततोददावलंकारान्वा
सांसिचमुदामुनिः १६ तेभ्योयथार्हंसर्वेभ्योराज्ञेनर्घ्यतराणिच ॥ मुनिरुवाच ॥ किंमयाभोजनंदेयंमुनिनावन्यवृत्तिना १७ अवाप्नसर्वकामायराज्ञेतोविष्णुरूपि
णे ॥ यशोकारित्रिलोकेमेत्वयामद्वाक्यकारिणा १८ जमदग्नेर्गृहेराज्ञाससैन्येनभुजिःकृता ॥ अतिपुण्यवतोलोकेसाधुशब्दःप्रयुज्यते १९ महान्क्षुद्रस्यवाक्यंचेत्
कुरुतेसोपिसाधुतां ॥ प्राप्नोतिसर्वलोकेषुकीर्तिस्फीतांसमुत्कटाम् २० मद्वाक्यकरणेतेपिदूरोरिष्टंगतंमहत् ॥ ब्रह्मोवाच ॥ इतिवाणींसमाकर्ण्यजमदग्निसमीरि
तां २१ पप्रच्छराजातंतत्रविस्मयाविष्टमानसः ॥ राजोवाच ॥ नादर्शिप्रथमंकिंचिदिदंकिंमाययाकृतम् २२ तपःप्रभावाद्वाकारिसत्यंमेवदसुव्रत ॥ मुनिरुवाच
अनृतंनोक्तपूर्वंमेपरिहासेपिवानृप २३ अतःसत्यंब्रवीमित्वांकामधेन्वाखिलंकृतम् ॥ ब्रह्मोवाच ॥ कुमतिस्तस्यभवतियस्यदैवमदक्षिणम् २४ अनिष्टंबलवद्धा
विदुष्टग्रहकृतंमुने ॥ भुक्त्वातृप्तोपिराजासौसम्यक्सबलवाहनः २५ आदानेकामधेनोःसमतिंचक्रेब्रवीदिदम् ॥ राजोवाच ॥ मुनीनांशांतचित्तानांकंदमूल

फलाशिनाम् २६ मनसासृष्टिसंहारकर्तृणामस्पृहावताम् ॥ जितेंद्रियाणांविज्ञानांनेक्षेधेन्वाप्रयोजनम् २७ वन्यमारुतभक्ष्याणांमोक्षसाधनकारिणां ॥ वेदाभ्यसन
शीलानांसंपदाकिंप्रयोजनम् २८ शास्त्रपाठनशीलानांधर्मशास्त्रार्थवेदिनां ॥ योगाभ्यासरतानांचकामधेनोःप्रयोजनं २९ कार्यायमहतेस्यात्तुमहद्वस्तुमहद्गतम् ॥
अरण्यवासिनेतुभ्यंमहद्रत्नंचनोचितम् ३० तस्माद्देयाकामधेनुर्ममब्रह्मन्मुदात्वया ॥ मयिस्थितातवैवास्तिचेतसित्वितिधार्यताम् ३१ मर्यादांरक्षतांब्रह्मन्नु क्रमे
वंपुरस्तव ॥ नोचेद्राज्ञांकिमग्राह्यंलोकेषुबलशालिनां ३२ स्वराष्ट्रेपरराष्ट्रेवाचतुरंगबलैःसह ॥ ब्रह्मोवाच ॥ श्रुत्वैवंवचनंतस्यकार्तवीर्यस्यदुर्मतेः ३३ प्रतिज
ज्वालरोषेणजमदग्निर्महामुनिः ॥ सर्पिषाबहुलेनैवजातवेदायथाद्विजः ३४ उवाचारक्तनयनःशिक्षयन्निवभूमिपम् ॥ मुनिरुवाच ॥ साधुःशुद्धोमहान्राजाप्रार्थि
तोभोजनायाहि ३५ कौटिल्यंतवनज्ञातंबकस्येवहृदिस्थितम् ॥ यथावाकोकिलाकाकबालंपुष्णातिमायया ३६ अंतेतत्काकभावेनभक्ष्याभक्ष्यैरतिंव्रजेत् ॥ अ
हमेवामवंभ्रांतोयइमांराजमित्रतां ३७ नदृष्टांनश्रुतांलोकेनानुभूतांचकेनचित् ३८ ॥ इतिश्रीग०उ०खंडेकार्तवीर्योपाख्याननामाष्टसप्ततितमोऽध्यायः ७८ ॥
॥ मुनिरुवाच ॥ उपकारस्त्वयारंभिसाधुवृत्तानुसारिणा ॥ आत्मवातंपुरस्कृत्वाकामधेनुंत्वमिच्छसि १ भ्रांतोसिनृपसत्यंत्वमप्राप्यंयोभिवांछसि ॥ त्रैलोक्य
नाशजंपापंतवमूर्ध्निपतिष्यति २ ब्रह्मोवाच ॥ इतिवाक्शरविद्धोसौप्रलयानलसन्निभः ॥ राजाबभूवरोषेणमुखादनलमुद्गमन् ३ उवाचपरमक्रुद्धोजमदग्निंमुनिं
तदा ॥ राजोवाच ॥ नमयादुष्टवचनंकस्यापिश्रूयतेशठ ४ किंकरोमिद्विजोसित्वमितिक्षांतंवचःकटु ॥ ॥ कउवाच ॥ ॥ ततउत्थायराजासौदूतानाज्ञा
प्यसत्वरम् ५ मुक्त्वाकीलात्कामधेनुंशीघ्रंयांतुममांतिकम् ॥ आवेष्टयंस्तदादूताःकामधेनुंतदाज्ञया ६ फूत्कारेणैवतस्यास्तेत्यक्त्वाप्राणान्दिवंययुः ॥ अन्या
न्क्रोधानलेनासौराजदूतान्ददाहच ७ श्वासमारुतवेगेनव्योम्निवीराःपरेभ्रमन् ॥ आच्छाद्यमंडलंभानोर्नप्राज्ञायतकिंचन ८ दिशःसतिमिराजाताव्योमापिनच
भासते ॥ धराकंपःसमभवद्वृक्षाःपेतुःप्रकंपिताः ९ सैनिकाश्चततोभीतायांतिसर्वेदिशोदश ॥ केनचित्ताडितामागौःकशाघातेनदूरतः १० उड्डीयोड्डीयसाधे
नुरधावत्सैन्यमेवतत् ॥ गजवृंदंयथासिंहोगरुत्मानुरगानिव ११ हाहाकारोमहानासीद्वीराणांतत्रधावताम् ॥ तानुवाचनभीःकार्याकार्त्तवीर्योमहाबली १२
मयाध्मातेमुदाशंखेभीतायास्यतिमंदिरम् ॥ कामधेनुःकियत्यास्तिपश्यंतुकौतुकंमम १३ ततोदध्मौमहाशंखंत्रैलोक्यंपूरयन्रवैः ॥ नबिभ्यत्कामधेनुस्तां
ताडयामासुरोजसा १४ यष्टिभिर्लोहनिचयैःसर्वेतेराजसेवकाः ॥ यत्रयत्रप्रहारोस्याःशरीरेजायतेततः १५ सन्नद्धाःसर्वशस्त्राढ्यानानावीराविनिःसृताः ॥ श
काश्चबर्बराआसंस्तस्याःकेशसमुद्भवाः १६ पटच्चराःपाददेशादेवंसर्वेप्रजज्ञिरे ॥ नानायवनजातीयानानावीरास्तथापरे १७ वाजिवारणसंघाश्चरथिनोबल
वत्तराः ॥ तेचैवयुयुधुस्तत्रकार्त्तवीर्यस्यसैनिकैः १८ न्यपतन्कार्तवीर्यस्यसैनिकास्तैःप्रहारिताः ॥ अपरेमिलितास्तत्रनिःशिरस्केपतंगवत् १९

१ स्तंभवोदितिप.ठः

परस्पराघातहतानिपेतुःशतशोनराः ॥ भंक्त्वाशस्त्रैश्चशस्त्राणिमल्लयुद्धंप्रचक्रिरे २० एवंसुतुमलेजन्येशस्त्रेषुनिपतत्सुच ॥ स्वीयोवापरकीयोवानप्रा
ज्ञायतकिंचन २१ रजसाच्छादितेसूर्येजघ्नुरेवंपरस्परम् ॥ कोलाहलोमहानासीद्धन्यतांहन्यतामिति २२ हेषितैर्बृंहितैःक्ष्वेडैर्निबिडोरथनेमिभिः ॥
मृदंगतालवेणूनांभेरीणांनिनदैरपि २३ एवंगव्यैःकार्त्तवीर्यैरथ्यश्वगजपत्तिभिः ॥ अभवत्सुमहद्युद्धंभूतराक्षसभीतिदम् २४ पक्षिजंबूकसुखदंवी
रपत्नीभयप्रदम् ॥ केषांचिज्जानुनीभग्नेकेषांचिच्चशिरांसिच २५ खड्गखेटकभल्लानांशराणांधनुषामपि ॥ भग्नानांनचसंख्यास्तिवीराणांरथिनामपि २६
प्रपेतुःकार्त्तवीर्यस्यशेषायेसैनिकास्तदा ॥ पृष्ठलग्नायगुर्गव्याहसंतोनचजघ्निरे २७ निर्निंदुर्मुनिनाकिंवोनिष्टंकृतमितीहते ॥ पूर्वदोषप्रसंगेनराज्ञोजातासु
दुर्मतिः २८ एवंप्रभग्नेसैन्येसउत्तस्थौकृतवीर्यजः ॥ हस्तयोर्जगृहेपंचशतंबाणान्धनूंषिच २९ दत्वाभूमौवामजानुंधनूंष्याकृष्यवेगवान् ॥ चिक्षेपश
रजालंसगव्यैसैन्येमहाभुजः ३० फलहीनमभूत्तस्यशरजालंनृपस्यतत् ॥ अनीतिश्चरितंतद्वद्ध्यायाःसुरतंयथा ३१ पुनःपुनर्जहौबाणांस्तावतोराजसत्त
मः ॥ कामधेनोर्नचैकोपिवीरोभग्नोऽभवत्तदा ३२ शरजालेव्यथायातेसंतप्तोभून्नृपस्तदा ॥ क्वगतंममसामर्थ्यमितिचिंतातुरोभवत् ३३ व्याकुलेनप्रहर्त्त
व्यमितिसर्वैर्युर्दिवम् ॥ कामधेनुर्मुदायुक्ताकिंयुद्धंलघुनासह ३४ गतायांकामधेनौसकार्त्तवीर्योमुनिंययौ ॥ रोषेणोवाचतेब्रह्मन्कापटयंविदितंमया ३५
नसविप्रोभिमंतव्योयस्यस्यात्कपटंहृदि ॥ इत्येकंबाणमादायविव्याधद्विजपुंगवम् ३६ लग्नेहृदिमहाबाणेप्राणत्यागंचकारसः ॥ रेणुकातंनृपंप्राहब्रह्मह
त्यावृथाकृता ३७सऊचेरक्तनयनःक्रोधाविष्टोनृपस्तुताम् ॥ तूष्णींतिष्ठनचेद्धन्मित्वामपीहमुनिप्रिये ३८ एकविंशतिबाणैस्तांदुष्टोराजाहनद्रुषा ॥ सस्मारमन
सासापिजमदग्निंमुनिंतदा ३९ पश्चादुवाचनृपतिंदुष्टचांडालकिंकृतम् ॥ अपराधंविनाकस्मादावांनिहतवानसि ४० तवापिभवितानाशोभुजानांनात्रसंशयः
श्रुत्वेत्थंवचनंतस्यास्ततोयातोनृपस्तदा ४१ अल्पावशिष्टसैन्येनचिंताक्रांतोययौपुरीम् ॥ विनिंदन्हृदिचात्मानंशोचंश्चमृतसैनिकान् ४२ निरुत्साहोनिरु
द्योगोविवेशनिजमंदिरम् ४३ ॥ इतिश्रीगणेशपुराणेउपा०कार्त्तवीर्योपाख्यानेएकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ कउवाच ॥ रेणुकातुगतेतस्मिन्नृशुशोच
भृशविह्वला ॥ क्वगताममपुत्रास्तेसंहारेस्मिन्नुपस्थिते १ मृतेभर्त्तरिकिंकुर्यांबाणजालसमावृता ॥ क्वगतोसौमहाक्रोधीरामोमेप्रियबालकः २ तस्मिन्नष्टेममप्राणा
गमिष्यंतिसुरालयम् ॥ स्मृतमात्रस्तयारामोययौमातुस्तदांतिकम् ३ बाणजालचितांतांचपितरंमृतमैक्षत ॥ कार्त्तवीर्येणदुष्टेनदृढबाणहतंहृदि ४ पपातमूर्छया
भूमौवातभग्नइवद्रुमः ॥ पितरंमातरंचैवरुरोदभृशदुःखितः ५ ॥ रामउवाच ॥ अद्यांधकारःसर्वत्रअद्यशून्यादिशोदश ॥ मेरुहीनायथापृथ्वीशक्रहीनाऽमरावती
६ नाश्रमःशोभतेतद्वत्पित्राहीनोयमद्यमे ॥ त्रिलोकीगंगयाहीनातद्वदाश्रममंडली ७ नशोभतेरेणुकयाहीनाप्याश्रममंडली ॥ गतंभयंतुदेवानांमुनयोद्यनिरी
श्वराः ॥ यदासीत्तपसाचास्यकिमयंवाग्रहीष्यति ८ एवंबहुविधाकारंचक्रेआक्रंदनंतुसः ॥ अचेष्टतभृशंरामोमत्स्योनीरंविनायथा ९ ततःपुनर्मातरंसरु

दन्नेवसमाययौ ॥ निष्काशयामासशरानंकेक्रत्वाशिरोधराम् १० चक्रंदचपुनारामोमातृदुःखेनदुःखितः ॥ त्रैलोक्यंभस्मसात्कर्तुंयाक्षमाजननीमम ११ साक थंपतिताभूमौदुष्टबाणप्रपीडिता ॥ नविस्मरसिमांनित्यंक्षणंक्रीडागतंपुरा १२ त्यक्त्वामांकथमद्यत्वंकुत्रवागंतुमुद्यता ॥ ददासिमेपयोभूरिवस्त्राण्यन्ना निशोभने १३ फलमूलानिचारूणियासित्यक्त्वाकथंनुसा ॥ मातापितृभ्यांहीनस्यधिङ्मेजीवितमद्यमे १४ ॥ ब्रह्मोवाच ॥ ॥ इतिपुत्रवचःश्रुत्वारेणुका भृशदुःखिता ॥ प्रमृज्याश्रूणिपुत्रस्यजगादभृशविह्वला १५ अहंतेनिकटेस्थास्येनशोकंकर्तुमर्हसि ॥ शृणुवार्तांपुरावृत्तांराजासौकृतवीर्यजः १६ मध्याह्ने सहसैन्येनप्राप्तआश्रममंडलम् ॥ पित्रातेमानितःसम्यग्भोजितोबलसंयुतः १७ कामधेनोःप्रसादेनभुक्त्वायाचतधेनुकाम् ॥ तूष्णींभूतेमुनौकोपात्का मधेनुंमुमोचसः १८ स्पृष्टमात्राचसाधेनुःससर्जबलमुत्कटम् ॥ चतुरंगंततोयुद्धमभवद्राजसैनिकैः १९ भग्नास्तेप्यपलन्सर्वेराजायुद्धमथाकरोत् ॥ सचपंचश तंबाणान्वारंवारमथासृजत् २० सोपिभग्नोगृहंयातःकामधेनुर्दिवंगता ॥ पुनरागत्यदुष्टोसौबाणेनैकेनवक्षसि २१ जघानपितरंकोपादेकविंशतिसायकैः ॥ अपराधंविनामांचताडयित्वागतःखलः २२ तस्मात्त्वयाद्यदुष्टस्यनाशःशीघ्रंविधीयताम् ॥ एकविंशतिवारंचकुरुनिःक्षत्रियांधराम् २३ एकविंशतिबाणा मेदेहेतेनयतोर्पिताः ॥ अन्यदेकंवदेपुत्रतत्कुरुष्ववचोमम २४ संस्कारंकुरुनौतत्रयत्रकोपिनदाहितः ॥ दत्तात्रेयंमुनिवरमाकार्यसर्ववेदिनम् २५ कुरुकर्मांत रंनौत्वंत्रयोदशदिनावधि ॥ तदैवगतिमाप्स्यावोनान्योवक्तास्तितादृशः २६ इत्युक्त्वारेणुकादेहंत्यक्त्वाधामापदुर्गमम् ॥ रामस्तत्सर्वमकरोत्तयादिष्टंमहा मनाः २७ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेरामोपाख्यानेअशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥ ॥ ॥ कउवाच ॥ ॥ रामस्तुवपनंकृत्वा स्नात्वासम्यग्विधानतः ॥ उत्थानश्राद्धमकरोद्ब्राह्मणैःकथितंयथा १ विश्रांतिश्राद्धमारभ्यमंत्राग्निमुभयोरदात् ॥ तदैवप्रययौतंतुदत्तात्रेयंमुनिंप्रति २ कुत्रे षंशिष्यसहितंश्वहस्तंमलिनंकृशम् ॥ ध्यानेनालोकयंतरामोननाममुनिपुंगवम् ३ बद्धांजलिपुटोतिष्ठद्वामार्द्धेतत्पुरोद्विजः ॥ दत्तात्रेयोपिसर्वज्ञोबु ध्वातस्याशयंमुनिः ४ उवाचराममामंत्र्यज्ञातंतवप्रयोजनम् ॥ अथापिपृच्छेविज्ञातुंकिमर्थंत्वमिहागतः ५ ॥ कउवाच ॥ सउवाचततोरामोवृत्तां तमादितःस्फुटम् ॥ रामउवाच ॥ कृतवीर्यात्मजोराजापितुराश्रममागतः ६ भोजितःपरमान्नेननानापक्वान्नशालिना ॥ भुक्त्वाससेनयासार्द्धंकामधेनुमया चत ७ यदानदत्तापित्रामेबलान्नेतुंमनोदधे ॥ सताडिताथसुपुवेसैनिकानांगणान्बहून् ८ तैर्भग्नोबलिभीराजाससैन्योगान्निजालयम् ॥ कामधेनुर्गतास्वर्गंत तोराजारुषान्वितः ९ जमदग्नेर्हृदिशरमहनद्दृढमोजसा ॥ एकविंशतिकान्बाणान्मातुरंगेहनद्रुषा १० नाहंतत्रस्थितोब्रह्मन्पश्चादागत्यदृष्टवान् ॥ मंत्राग्निनातुद ग्धौतौमातुर्वाक्यादिहागतः ११ दत्तात्रेयंविनानान्योवक्ताकार्योत्रकर्मणि ॥ कृतेकर्मणिसर्वस्मिंस्त्रयोदशदिनावधि १२ पश्चाद्राजानिहंतव्यःकृतवीर्यात्मजो बली ॥ एकविंशतिवारंचकार्यानिःक्षत्रियामही १३ इत्थमाज्ञापयन्मह्यंजननीरेणुकामम ॥ इत्यर्थमिहसंप्राप्तस्तस्मात्कुरुकृपांमयि १४ ॥ ब्रह्मोवाच ॥

॥ इतिरामवचःश्रुत्वारेणुकायाःसखामुनिः ॥ शोकसंविग्नहृदयोराममूचइदंवचः १५ ॥ दत्तात्रेयउवाच ॥ यद्गृहेभुक्तमन्यंतंतेननेष्टाविरोधिता ॥ यदिदुष्टे
नसाकारिद्रष्टातत्फलमंतिकात् १६ इदानींतुतयोःसम्यगौर्ध्वदेहिकमाचर ॥ ब्रह्मोवाच ॥ ततआश्रममागत्यदत्तात्रेययुतस्तुसः १७ रामश्चकारभक्त्यै
वपित्रोरुत्तरकर्मतत् ॥ दत्तात्रेयोक्तमंत्रैःसद्वितीयदिवसावधि १८ समाप्तेकर्मणिमुनिर्गंतुंकोल्हापुरंमनः ॥ चक्रेतदाब्रवीद्रामःकदायातिभवान्पुनः १९
मुनिःप्रोचेयदात्वंमेस्मरणंवैकरिष्यसि ॥ एहिदत्तात्रेयइतितदामांद्रक्ष्यसेनघ २० कृत्वाकर्मव्रजत्येवभिक्षितुंसदिनेदिने ॥ अशौचिनोनभोक्तव्यमन्नमित्यभि
चिंतयन् २१ पंचमेदिवसेकर्मसमाप्यमुनिपुंगवः ॥ गृहीत्वाज्ञांगतोयावत्तावद्द्याग्रःसमाययौ २२ मातर्मातःक्वयास्यद्येत्येवंचुक्रोशतद्भयात् ॥ आविराभूत्त
दामातारेणुकारामवाक्यतः २३ असंपूर्णशिरोमात्रापुत्रस्नेहवशेनहि ॥ यदिद्वादशरात्रांत्साहूतास्याद्भार्गवेणतु २४ आगतास्यात्सासंपूर्णासर्वावयवशोभि
नी ॥ उवाचतंकिमाहूतावद्बालप्रयोजनम् २५ आलिलिंगतदास्नेहाद्रामंस्नुतपयोधरा ॥ दत्तात्रेयःपुनरगात्षष्ठेथदिवसेमुनिः २६ अपश्यद्रेणुकांत
त्रतादृशींराममब्रवीत् ॥ मध्यएवकिमाहूतान्यूनदेहासमागता २७ सपिंडीकरणादूर्ध्वंयद्याहूतातदाखिला ॥ आगतास्याद्रेणुकेयंतवस्नेहाद्द्विजर्षभ २८
रामउवाच ॥ ॥ बालभावाद्भयाद्ब्रह्मन्स्वभावान्मातरित्यहम् ॥ उक्तवान्मुनिशार्दूलदृष्टवानीदृशीमिमाम् २९ वृषोत्सर्गंचकृतवानेकादशदिनेद्विजः ॥ स
पिंडीकरणंचैवद्वादशेकृतवान्द्वयोः ३० ततःपरेह्निपाथेयंश्राद्धंपुण्याहवाचनम् ॥ ददौदानान्यनेकानिब्राह्मणेभ्योयथार्हतः ३१ जमदग्निर्दिव्यदेहोब्रह्मलोक
मथागमत् ॥ तस्थौसारेणुकाभूमौस्थानेस्थानेचतादृशी ३२ पूरयत्यखिलान्कामान्जनानांभक्तिकारिणाम् ॥ माहात्म्यंविस्तृतंतस्याःस्कांदेप्रोक्तंविशेषतः
३३ अतिविस्तरभीत्यात्रनप्रोक्तंमुनिसत्तम ३४ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेरामोपाख्यानेएकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ ७ ॥ ॥ व्या
सउवाच ॥ ॥ कथंरामोबालएवकृतवीर्यसुतेनह ॥ एकाकीबहुसैन्येनसहस्रभुजशालिना १ अजयत्तंमहावीरंतन्मेकथयविस्तरात् ॥ ॥ कउवाच ॥ ॥
एकस्मिन्दिवसेरामोमातरंपरिपृष्टवान् २ ॥ ॥ रामउवाच ॥ ॥ यस्मादिंद्रादयोदेवाबिभ्यतित्रासकंपिताः ॥ अनंतंयस्यसैन्यंतच्चतुरंगसमन्वितम् ३ कथं
विजेष्येतंमातरुपायंमेखिलंवद ॥ एकविंशतिवारंचकथंनिःक्षत्रियांधराम् ४ करिष्येवदतत्सर्वंत्वत्प्रसादाज्जयोभवेत् ॥ अतुलाममकीर्तिश्चसर्वलोकेषुविश्रु
ता ५ ॥ ॥ मातोवाच ॥ ॥ विजयस्तेभवेत्पुत्रशंकराराधनंकुरु ॥ तुष्टेतस्मिन्महादेवेसर्वंसेत्स्यतिवांछितम् ६ इतितद्वचनंश्रुत्वारामःकैलासमाययौ ॥
प्रणम्यमातृचरणौआशिषंप्रतिगृह्यच ७ तत्रापश्यन्महादेवंरत्नसिंहासनेस्थितम् ॥ बद्धांजलिपुटोरामोनत्वातुष्टावतंतदा ८ ॥ रामउवाच ॥ नमोदेवदेवेश
गौरीशशंभोनमोविश्वकर्त्रेनमोविश्वभर्त्रे ॥ नमोविश्वहर्त्रेनमोविश्वमूर्तेनमोविश्वधाम्नेनमश्चंद्रधाम्ने ९ नमोनिर्गुणायामलज्ञानहेतोनिराकारसाकारनित्यायते
स्तु ॥ नमोवेदवेदांतशास्त्रातिगायनमोव्यक्तव्यक्तात्मनेसत्स्वरूप १० गुणत्रयप्रबोधायगुणातीतायतेनमः ॥ नमःप्रपंचविदुषेप्रपंचरहितायते ११ ॥ कउवाच ॥

इतिस्तोत्रंसमाकर्ण्यपरितुष्टोमहेश्वरः ॥ उवाचराममामंत्र्यतृप्तोवाक्यामृतेनते १२वरंवृणीष्वमत्तस्त्वंयंयंकामयसेहृदि ॥ जानामिजामदग्न्यंत्वांरेणुकातनयंद्विज
१३ ॥ रामउवाच ॥ कार्त्तवीर्येणदुष्टेनकामधेनुमपेक्षता ॥ जमदग्निर्हतोरोषादपराधंविनाप्रभो १४ रेणुकाताडिताबाणैःसमंताज्जननीमम ॥ एकविंशतिसंख्याकै
र्मुक्त्वापिसेनयासह १५ जहितंदुष्टनृपतिमितिमात्रानियोजितः ॥ त्वामहंशरणंयातउपायंवदतद्वधे १६ त्रिःसप्तवारंतेनैवकुर्यांनिःक्षत्रियांमहीम् ॥ कउवाच ॥
एवंविदिततत्त्वार्थोमहादेवोजगादतम् १७ आलोक्यप्रणिधानेनजयोपायंसुखावहम् ॥ षडक्षरंमहामंत्रंद्विरदाननतोषकम् १८ कथयामासरामायजपंकुरुप्रयत्न
तः ॥ लक्षमात्रंचहोमंचदशांशेनसमाचर १९ तर्पणंतद्दशांशेनतद्दशांशेनभोजनम् ॥ ब्राह्मणानांमहाभक्त्याप्रसन्नोभविताभुवि २० गजाननोदेवदेवःसर्वकार्यंक
रिष्यति ॥ इतितद्वचनंश्रुत्वाप्रणम्यभवमादरात् २१ आज्ञांगृहीत्वारामोसावचलायांभ्रमन्भ्रमन् ॥ कृष्णायाउत्तरेदेशेपश्यत्स्थानमनुत्तमम् २२ नानावृक्षल
ताजालैरभिरामंसुसिद्धिदम् ॥ तत्राकरोदनुष्ठानंयथोक्तंतेनशंभुना २३ इंद्रियाणांचमनसोवृत्तिंस्थाप्यगजानने ॥ आवर्त्तयन्महामंत्रमेकांगुष्ठस्थितोद्विजः २४
जुहावतर्पयामासभोजयामासवैद्विजान् ॥ दशांशेनदशांशेनदशांशेनयथाक्रमम् २५ ततःप्रसन्नोभगवानाविरासीद्गजाननः ॥ चतुर्भुजोमहाकायोमहामायोतिसुं
दरः २६ नागयज्ञोपवीतीचनानालंकारशोभितः ॥ मुकुटीकुंडलीभ्राजच्चारुगंडोल्लसन्मुखः २७ मुक्ताप्रवालमालाभिर्भ्राजद्वक्षामहाभुजः ॥ परशुंकमलंदं
तंमोदकांश्चदधद्भुजैः २८ पुष्करंपुष्करेधृत्वाभ्रामयन्स्वेच्छयाविभुः ॥ प्रभयाभासयन्सर्वादिशोविदिशएवच २९ ददर्शरामोकस्मात्तंन्यमीलयतचाक्षिणी ॥
तत्तेजसाप्रतिहतेततस्तुष्टावतंद्विजः ३० ॥ रामउवाच ॥ सहस्रादित्यसंकाशनमस्तेजगदीश्वर ॥ नमस्तेसर्वविद्येशसर्वसिद्धिप्रदायक ३१ विघ्नानांपतयेतु
भ्यंनमोविघ्ननिवारण ॥ सर्वांतर्यामिणेतुभ्यंनमःसर्वप्रियंकर ३२ भक्तप्रियायदेवायनमोज्ञानस्वरूपिणे ॥ नमोविश्वस्यकर्त्रेतेनमस्तत्पालकायच ३३
निवारयमहाविघ्नंतपोनाशकरंमम ॥ कउवाच ॥ इतिस्तुतिंसमाकर्ण्यसौम्यतेजागजाननः ३४ उवाचरामंसंभ्रांतंस्वस्यैवातिग्मतेजसा ॥ गणेशउवाच ॥
यंध्यायसिदिवारात्रौमंत्रंजप्त्वाषडक्षरम् ३५ वरंदातुंसमायातःसोहंरामतवाधुना ॥ वरंवृणीष्वमत्तस्त्वंयद्यद्वांछसिचेतसा ३६ ब्रह्मांडानामनेकानांस्रष्टापाता
पहारकः ॥ नैवजानंतिमेरूपंब्रह्माद्यामुनयोपिच ३७ राजर्षयश्चसर्वेपिसोहंतेदर्शनंगतः ॥ रामउवाच ॥ योप्रमेयोखिलाधारःसृष्टिसंहारकारकः ३८ योन
वेदैर्नतपसानयज्ञैर्व्रतसंचयैः ॥ नदानैर्नैवयोगैश्चजनानांदृष्टिगोचरः ३९ सोहंत्वंहिमयादृष्टोनुग्रहात्तवविघ्नप ॥ किमन्यद्वरयेदेवभक्तिंदेहिनिजांदृढाम् ४० ग
णेशउवाच ॥ ॥ भवितामभक्तिस्तेदृढारामद्विजोत्तम ॥ प्रलोभितस्यापिवरैर्नतेबुद्धिःसुविह्वला ४१ परशुंमेगृहाणत्वंसर्वशत्रुनिबर्हणम् ॥ नामतेपरशुरा
मेतित्रैलोक्येख्यातिमेष्यति ४२ ॥ कउवाच ॥ एवंतस्मैवरंदत्वापरशुंचगजाननः ॥ पश्यतांसर्वलोकानामंतर्धानंययौतदा ४३ रामोपिस्थापयामाससमहा
गणपतिंतदा ॥ ब्राह्मणैर्वेदवेदांगशास्त्रविद्भिःसमंमुदा ॥ ब्राह्मणान्भोजयामासदत्वादानान्यनेकशः ४४ प्रासादंकारयामासरत्नस्तंभयुतंदृढम् ॥ संपूज्यतंपरि

क्रम्यप्रणिपत्य गजाननम् ४५ रामःप्रसन्नमनसाप्रययौनिजमंदिरम् ॥ ततोरामोजुहावोच्चैःकार्तवीर्यंधरापतिं ॥ ४६ ॥ युद्धेतुशातयामासराज्ञोबाहुसह
स्रकम् ॥ निःक्षत्रियांचपृथिवींचक्रेत्रिःसप्तवारतः ४७ ब्राह्मणेभ्योददौपृथ्वींयज्ञंकृत्वासदक्षिणम् ॥ पुपूजुस्तंतदालोकाज्ञात्वाविष्णुंतमीश्वरम् ४८ ह्यप
राक्रमंतस्यसर्वदेवातिगंदृढम् ॥ एवंनानाविधोब्रह्मन्महिमातेनिरूपितः ४९ गजाननस्यदेवस्यसंक्षेपेणमयासुत ॥ निखिलेननशेषोपिक्षमोवक्तुंमुनी
श्वर ५० उपासनाखंडमिदंशृणुयान्मानवोभुवि ॥ सर्वान्कामनवाप्नोतिगणेशंधामचाप्नुयात् ५१ यथेष्टंरमतेतत्रयावदाभूतसंप्लवम् ५२ इतिश्रीगणेशपुरा
णेउपासनाखंडेरामवरदानंनामद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ ॥ छ ॥ ॥ मुनिरुवाच ॥ ॥ कस्मिन्स्थानेतपोकारिरामेणपरमाद्भुतम् ॥
तन्मेकथयलोकेशतृप्तिर्मेनास्तिशृण्वतः १ ॥ ॥ कउवाच ॥ ॥ मयूरेश्वरनाम्नायत्क्षेत्रंख्यातंचतुर्युगे ॥ यत्रावतीर्णोदेवेशोमयूरारूढएवसः २ कमला
सुरनामानमहनद्दैत्यपुंगवम् ॥ यस्मान्मयूरमारूढोमयूरेशइतिस्फुटम् ३ संस्तुतोदेवमुनिभिर्लोकेताख्यातिमागमत् ॥ तत्रानुष्ठानमकरोदवापपरशुंततः ४
स्वयंपरशुरामोभून्नाम्नाख्यातस्त्रिविष्टपे ॥ इतिहासंप्रवक्ष्यामिशृणुतंमुनिसत्तम ५ तारकोनामदैत्योभून्महाबलपराक्रमः ॥ दिव्यवर्षसहस्रंसतपस्तेपेसुदारु
णम् ६ ततःप्रसन्नोब्रह्मास्मैददौसर्वाभयंद्विज ॥ देवर्षियक्षगंधर्वोरगराक्षसहस्ततः ७ तच्छस्त्रास्त्रगणान्मृत्युर्नतेक्वापिभवेदिति ॥ उत्पत्स्यतेयदास्कंदस्ततस्ते
मरणंभवेत् ८ इतितद्वरमाकर्ण्यबलगर्वसमायुतः ॥ तारकोपीडयल्लोकांस्त्रैलोक्येवसतोमुने ९ वेदाध्ययननिष्ठांश्चतपोनुष्ठानकारिणः ॥ अग्निहोत्ररतानन्या
न्कारागारेक्षिपद्द्विजान् १० सर्वान्राज्ञोथनागांश्चवशेकृत्वादिवंययौ ॥ इंद्रादयस्तदादेवाहिमाचलगुहांगताः ११तद्भयान्नाभवत्क्वापियजनंपूजनंतथा ॥ अह
मेवेश्वरोदेवोब्राह्मणःकुलदेवता १२ अहंनमस्यःपूज्यश्चनान्योजगतिवर्त्तते ॥ यश्चान्यान्प्रणमेत्क्वापिपूजयेद्वाकदाचन १३ सदंड्यस्ताडनीयःस्याद्वच्छेद्यायम
सादनं ॥ एवंसर्वेषुलोकेषुख्यापयामासदूततः १४ ततःसर्वेजनारिक्ताजाताःसज्जनवर्जिताः ॥ निःस्वाध्यायवषट्कारायज्ञदानविवर्जिताः १५ उच्छिन्नकुलधर्मा
श्चस्वाचाररहिताःखलाः ॥ मुनयःसाधवःसर्वेगिरिगह्वरमाश्रिताः १६ देवंतेप्रार्थयामासुःकथंदैत्योविवर्द्धितः ॥ विनात्वांशरणंशंभोयामःकंजगदीश्वरम् १७
निर्मातारक्षिताधातासंहर्त्ताजगतांविभो ॥ दावानलोवनमिवदहतेस्मान्सदर्पतः १८ यदितेसंजिहीर्षास्यात्संहरस्वस्वयंजगत् ॥ नोचेत्संहरदैत्यंत्वंतारकंसर्वपी
डकं १९ एवंसंप्रार्थ्यतेपुस्तेदुष्करंतपउत्तमं ॥ पत्रभक्ष्यावायुभक्ष्यानिराहाराजलाशिनः२०एवंस्थितेषुमुनिषुतेनाज्ञातेषुदैत्यराट् ॥ ऐंद्रंपदंसमास्थायब्रह्माणंसम
ताडयत् २१ विष्णुस्ततोगमत्क्षीरसागरंनिद्रितुंमुने ॥ त्यक्त्वाकैलासमगमच्छंकरोपिगुहांतरम् २२ दिक्पालादिग्गजाश्चापिनानागह्वरमाश्रिताः ॥ तेषां
स्थानेस्थापयत्सदैत्यानन्यांश्चदैत्यराट् २३ अचलामचलस्तिष्ठन्पालयामासवैप्रजाः ॥ गर्जंतेस्वरवआवेनकंपतेथत्रिविष्टपं २४ ततइंद्रादयोदेवास्तुष्टुवुर्गि
रिगह्वरे ॥ गिरिशंगिरिजानाथंगिरागंभीरयामुदा २५ ॥ देवाऊचुः ॥ देवाधिभूमिगगनेनशशिस्वरूपवाय्वग्निरूपयजमानजलस्वरूप ॥ त्वंस्थावरानथचरा

न्सृजसेऽवसीशत्वंसर्वमेवहरसेनिजयेच्छयेश २६ तन्नोचितंत्वयिपरेपरदुःखहारिन्स्वीयंयशःपरगतंबहुधाद्यकर्तुं ॥ तन्नाशयैनमथवासकलान्मुनींश्च
दवान्द्रयोश्चभजेनपीरविष्टचित्तान् २७ कंवाव्रजेमशरणंत्वदृतेगिरिशिकंवाभजेमभगवंस्त्वदृतेमहेश ॥ कंवावदेमवृजिनार्दनपार्वतीशकोवाविर्तुंप्रभवति
त्वदृतेखिलेश २८॥ ॥कउवाच॥ एवंतेतुष्टुवुर्यावच्छुश्रुवुस्तावदेवहि ॥ नभोवाणींसर्वदेवाहरपुत्रोयदाभवेत् २९ तदास्यनाशोभवितायत्नंकुरुततत्रवै ॥ नभो
वाणींसमाकर्ण्यसर्वेहर्षसमन्विताः ३० कैलासंदेवनिलयमापुरिंद्रादयःसुराः ॥ नापश्यच्छंकरंतत्रददृशुःपुरतोमराः ३१ मूलप्रकृतिरूपांतामुमांसर्वेविजिज्ञपुः॥
तारकेतारकज्ञानप्रदेतारयतारकात् ३२ त्रैलोक्यपीडकाद्दुष्टात्पदभ्रष्टान्मुनीन्सुरान् ॥ तथाविचिंत्यतांमातस्तस्यनाशोभवेद्यथा ३३ मातस्त्वां
प्रणमामदेवजननींत्रैलोक्यरक्षाकरेशर्वाणित्रिपुरेपरात्परकलेब्रह्मादिभिःसंस्तुते ॥ त्वंवेदैरनिरूपितेकुरुजगत्कल्याणमीशप्रियेस्वेच्छोपात्तसुविग्रहेसुरहरे
वैश्वादिभूतेनघे ३४ ॥ ॥ कउवाच ॥ ॥ एवंसंप्रार्थितादेवीविश्वमाताजगादतान् ॥ नभोवाणीमयाज्ञाताशंकरःशंकरिष्यति ३५ सहैवयांतुसर्वेपि
मयायत्रसशंकरः ॥ परंनियममास्थायकुरुतेपरमंतपः ३६ इत्युक्त्वासर्वदेवान्साभिल्लीवेषमधारयत् ॥ यांदृष्ट्वापरमोयोगीकामबाणार्दितोभवेत् ३७ देवा
अपितदाकेचिज्जातामदनविह्वलाः ॥ उर्वशीमेनकारंभापूर्वचित्तीरतिस्तथा ३८ लज्जितातांनिरीक्ष्यैवसर्वावयवसुंदरां ॥ तेदेवाःसाचगिरिजाप्रापाब्रह्मनशि
वांतिकम् ३९ स्थाणुंतंस्थाणुभूतंचध्याननिश्चललोचनं ॥ ध्यायंतंमनसाब्रह्मजपंतंनिष्परिग्रहं ४० ददृशुःसर्वदेवास्तेभिल्लीचापित्रिलोचनं ॥ ततऊचेखि
लान्देवानुमोपायंसुखावहम् ४१ देहातीतइवास्तेसौतपोनिष्ठःसदाशिवः ॥ एतस्यदेहभावार्थंकामंविज्ञापयंतुच ४२ तेनेषुणायदाविद्धएकनिष्ठःसदाशिवः॥
यास्यतेदेहभावंसतदाकार्यंभविष्यति ४३ ततोदेवाःसर्वएवकामंसस्मरुरुत्कटं ॥ समागतंतमूचुस्तेस्वकार्यकृतनिश्चयाः ४४ प्रार्थयामासुरपरेस्वकार्यायम
नोभवम् ॥ विभुस्त्वमसिलोकानांचरेषुस्थावरेषुच ४५ त्वयैवजायतेसृष्टिस्त्वयाव्याप्तमिदंजगत् ॥ अबलाःकामिनःसर्वेत्वयैवबलवत्तराः ४६ त्वयाविना
वृथासर्वंजगत्स्थावरजंगमम् ॥ अतस्त्वयैवकर्त्तव्यंसर्वेषांकार्यमुत्कटम् ४७ ॥ कामउवाच ॥ यद्यप्यहंविसामग्रिस्तथायुष्मत्प्रसादतः ॥ करिष्यामिवचः
कार्यमादेहपतनावधि[1] ४८ सुमंधनुर्मशलाज्येषुःकाटाक्षोथयोषितः ॥ विजेष्येऽथापिसकलानमराञ्छंकरावधि ४९ वसंतंप्रतिलभ्यैवसहायंसकलंसुराः॥
कउवाच ॥ एवमुक्त्वागतःकामोयत्रास्तेसौसदाशिवः ५० मोहितुंशंकरंदेवंदेवानांकार्यसिद्धये ५१ इतिश्रीग० उपासनाखण्डेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ कउवाच ॥ एवमुक्त्वागतःकामःसुरकार्यार्थसिद्धये ॥ अपश्यच्छांकरंस्थानंवृक्षवल्लीसमाकुलम् १ सिंहशार्दूलजुष्टंचपक्षिश्वापदसंयुतम् ॥ स्वयंच
निर्ममेमायावाटिकांतत्क्षणेनसः २ सरोवराणिभूरीणिसुधारूपजलानिच ॥ अनेककुसुमान्वृक्षानागव्यूतिसुगंधिभीः ३ जंब्वाम्रबदरीवृक्षान्सुपक्वफलशा

१ पतनादपि इतिपाठान्तरम्

लिनः ॥ तथैवरंभापनसानारिकेलीःसखर्जुरीः ४ एलालवंगमारीचवृक्षानन्याननेकशः ॥ अगृह्यमाणोगंधोसौहरनासापुटंययौ ५ उषःकालेहरोपश्यज्ज्यो
त्स्नाजलमनोहरं ॥ अनेकफलपुष्पाढ्यंकामकाननमद्भुतम् ६ तदैवभेदयामासमानसंशूलिनस्तुसः ॥ स्वीयामशोकवनिकांधिक्चक्रेमनसाशिवः ७ देहभा
वंगतोदेवश्चिंतयामासकारणम् ॥ कृतंकेनतपोविघ्नंकृतमेतद्वनंशुभम् ८ अकस्माद्रचितंकेनदुष्टेनेदंगतायुषा ॥ आबद्धचभ्रुकुटींरोषादारक्तनयनोदरः ९ का
मस्तुभयसंत्रस्तोलीनःक्वापिनगृह्यते ॥ इंद्रादीनांससस्मारस्मृतास्तेनात्रतेययुः १० विमानानिसमारूढाःकार्यसिद्धीच्छयासुराः ॥ शिवेनदग्धस्तावन्मदनो
तिलघुःकृशः ११ उद्घाटयंस्तृतीयंसनेत्रंदग्धंमनोभवम् ॥ चकंपेपृथिवीसर्वास्वर्गःपातालमेवच १२ माजहीतिब्रुवन्देवायावत्तावत्सनेत्रजः ॥ चकारभस्म
सात्कामंभस्ममात्रावशेषितम् १३ ततोभिल्लीमहेशानंप्रार्थयामाससादरम् ॥ नमस्कृत्वांजलिंबद्ध्वात्रैलोक्यहितकाम्यया १४ त्रैलोक्यदाहकंवह्निमुपसंह
रशंकर ॥ ब्रह्मलब्धवरोदैत्यस्तारकोतिमहाबली १५ आक्रांतंतेनत्रैलोक्यंनिःस्वाध्यायंनिराहुति ॥ स्थानच्युताःसुराःसर्वेत्वांदृष्ट्वातपसिस्थितम् १६ त्वर
याकाममामंत्र्यदेहभावायतेनघ ॥ अप्रेषयन्सवैभस्मजातःश्रेष्ठापराधतः १७ इदानींदेवरक्षास्मांस्त्वामेवशरणंगतान् ॥ विख्यातस्त्रिषुलोकेषुशरणागतपा
लकः १८ क्षमस्वकृपणानांत्वंदेवानांशरणैषिणां ॥ अपराधंमहादेवकरुणाकरशंकर १९ ॥ ॥ कउवाच ॥ ॥ इतितस्यावचःश्रुत्वास्वांघ्रिस्थशिरसो
मुने ॥ जगादहास्यवदनोवह्निंसंहृत्यशंकरः २० उत्तिष्ठोत्तिष्ठदेवानांरक्षणंकृतमद्यमे ॥ पादयोःपतितायास्तेवचसाप्रणयेनच २१ ततआलिंग्यसहसाभिल्ली
मंकमथानयत् ॥ वृषमारुह्यचतयासार्द्धंकैलासमागमत् ॥ २२ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखण्डेकामदहनोनामचतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ कउवाच ॥ ॥ शिवस्यालिंगनाद्भिल्लीमदनानलदीपिता ॥ नापक्वापिसुखंदेवीनिर्जलेशफरीयथा १ पतिताजलमध्येसाशीतलोशीरशालिनी ॥ न
शर्मलेभेतत्रापिस्थलेनिद्रांनचालभत् २ कर्पूरचंदनंतस्याअधिकंतापमादधे ॥ नशीतलपदार्थोस्याःकोपिसंतोषमादधे ३ एवंबहुतिथेकालेसास्थिचर्मावशे
षिता ॥ ततोगिरिशमागम्यगिरिजागिरमब्रवीत् ४ नत्वंमृशसिमांदेवकामावस्थांगतास्मिह ॥ दग्धोपिमदनोमह्यमत्यंतंपीडयत्यहो ५ नानोपायाःकृतास्त
स्यशांतयेनचसाभवत् ॥ येनोपायेनशांतिःस्यात्सतंकुरुममप्रभो ६ इतिवाक्यंसमाकर्ण्यप्रियायाःप्रियकृद्धरः ॥ रहस्येतांकरेकृत्वापर्यंकेपर्यवेशयत् ७
रेमेतयायथेष्टंसमदेननवशीकृतः ॥ मृतेनापिकृतंतेनमहत्कार्यंसुरेरितम् ८ अनंगेनसमोनैवधन्वीतियशआप्तवान् ॥ तयोस्तुक्रीडतोर्याताःषष्टिसाहस्रव
त्सराः ९ अष्टस्थानामुनिसुराःश्रुत्वामदनचेष्टितम् ॥ कैलासंपुनरायातास्तत्रक्रीडारतंहरम् १० ज्ञात्वातूष्णींस्थितास्तत्रचिंताव्याकुलचेतसः ॥ तारकासुरभी
तास्तेपुनर्गह्वरमागताः ११ कदावधोभवेदस्यकदास्थानानियामच ॥ करिष्यतिकदाशंभुरस्माकंदुःखनाशनम् १२ इतिचिंतार्णवेमग्नायावद्ब्रह्मादयःसुराः ॥ ता
वदूचेसुराचार्योवाक्यंमेशृणुतानघाः १३ प्रेषयंत्वखिलावह्निंरूपांतरधरंहरम् ॥ सहरंबोधयित्वाशुभवत्कार्यंभविष्यति १४ ततस्तेवह्निमाकार्यतुष्टुवुर्विविधै

तः २ शुचौमंडपिकांकृत्वाकदलीस्तंभमंडिताम् ॥ इक्षुचामरपुष्पाढ्यामादर्शाबलिशोभिताम् ३ तन्मध्येकलशंस्थाप्यवस्त्रयुग्मेनवेष्टितम् ॥ तत्रचाष्टद
लंपद्मंकारयेच्चंदनेनतु ४ गुरोराज्ञांगृहीत्वाचपूजाद्रव्याणिप्रोक्षयेत् ॥ उपचारैःषोडशभिःपूजयेद्गणनायकम् ५ कांचनंराजतंवापिस्वस्वशक्त्याविनिर्मित
म् ॥ एकविंशतिपक्वान्नैरेकविंशतिसंख्यकैः ६ गजाननायदेवायनैवेद्यंपरिकल्पयेत् ॥ एकविंशतिमुद्रास्तुदक्षिणार्थंनिवेदयेत् ७ सौवर्णीराजतीर्वापिवित्तशा
ठ्यविवर्जितः ॥ एकविंशतिदूर्वाश्चश्वेतावाहरिताअपि ८ अर्पयेद्देवदेवायमंत्रपुष्पांजलिंतथा ॥ ब्राह्मणान्वेदविदुषःपूजयेदेकविंशतिम् ॥ भोजयेत्ताद्दशान्ने
नतावद्दानानिदापयेत् ॥ नमेत्क्षमापयेत्पश्चादच्छिद्रमितिवाचयेत् १० पार्थिवस्यगणेशस्यविधानंकथितंपुरा ॥ पूजाप्रकारःसोप्यत्रसर्वएवउदाहृतः ११
कथांतामेवशृणुयात्पश्चाद्बंधुयुतःस्वयम् ॥ ध्यायन्गणेशंभुंजीतमौनेनोपवसेतवा १२ एवंमासव्रतंकुर्याद्यावद्भाद्रचतुर्थिका ॥ तस्यांमहोत्सवःकार्योयथा
विभवमादरात् १३ पूर्वोक्तेनविधानेनपूजयेद्गणनायकम् ॥ रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः १४ पुराणश्रवणैरन्यैर्नानाख्यानवरैरपि ॥ सहस्रनाममं
त्रेणस्तुवीतद्विरदाननम् ॥ प्रभातेविमलेस्नात्वापूजयेत्तद्विरदाननम् १५ ब्राह्मणान्भोजयेद्भक्त्याशतंचैवैकविंशतिम् ॥ गोभूकांचनवस्त्राणिभूषणानिधनानि
च १६ तेभ्योदद्याद्यथाशक्तिदीनांधकृपणेषुच ॥ अशक्तौभोजयेदेकविंशत्येकंतुवाडवान् १७ ब्राह्मणायप्रदातव्यामूर्त्तिश्चेद्धातुनिर्मिता ॥ अन्यथापरमोत्सा
हैर्जलमध्येविसर्जयेत् १८ दिव्यवादित्रनिर्घोषैर्नरयानस्थितांचताम् ॥ छत्रध्वजपताकाभिर्वेदगीतादिनिस्वनैः १९ बालानांदंडयुद्धैश्चतांविसृज्यगृहंव्रजेत् ॥
व्रतमेवंतुयःकुर्यादेकवारंषडानन २० सर्वान्कामानवाप्यैवगाणेशंपदमाप्नुयात् ॥ ब्रह्मणाकारिसृष्ट्यर्थंएकार्णंजपतामनुम् ॥ प्रत्यक्षोविकटस्तस्यसामर्थ्यंवि
विधंददौ २१ विष्णुनाप्रापिशक्तिश्चपालनेकुर्वताव्रतम् ॥ षडक्षरंमहामंत्रंजपतापरमाद्भुतम् २२ स्वेच्छावतारसामर्थ्यंततःप्राप्तंषडानन ॥ मयाप्यकारिपुत्रै
तज्जपताष्टाक्षरंमनुम् २३ वृत्रंचशंबरंदैत्यंशक्रेणमदनेनच ॥ जिघांसताकारिव्रतंतौतौजेतुंचशेकतुः २४ नानासामर्थ्यवानस्मिसंहरामिजगत्त्रयम् ॥ यक्षगंध
र्वमुनिभिःकिन्नरोरगराक्षसैः ॥ अकारिस्वेष्टसिद्ध्यर्थंसिद्धचारणमानवैः २५ एतत्त्वंस्कंदवरदचतुर्थीव्रतमाचर ॥ भविष्यसिरणेऽजेयोविख्यातोभुवनत्रये ॥
षडक्षरंचमंत्रंतेददामिवरदस्यह ॥ ॥ ब्रह्मोवाच ॥ ॥ सुमुहूर्त्तेददौतस्मैशिवोदीक्षांषडक्षरीं २७ तदैवसययौस्कंदस्तपस्तप्तुंद्विजोत्तम ॥ मुनि
मंलतरेदेशेवृक्षवल्लीसमाकुले २८ बहुमूलफलेरम्येसरोवापीसुशोभिते ॥ एकपादस्थितःस्कंदस्तपस्तेपेसुदारुणम् २९ व्रतंचकारविधिवद्यथोक्तंशंभुनापुरा ॥
अनुष्ठानाच्चमंत्रस्यव्रतस्यास्यप्रभावतः ३० प्रसन्नोभूत्तदैवास्यपरमात्मागजाननः ॥ दर्शयामाससेनान्येयोगिध्येयमनुत्तमम् ३१ निजंरूपंमहातेजाश्चतुर्भु
जविराजितम् ॥ महामुकुटसंशोभिकुंडलांगदशोभितम् ३२ एकदंतंभालचंद्रंशुंडादंडविराजितम् ॥ पाशांकुशकरंमालां[illegible]ंशुभाननम् ३३ सु[illegible]गि
गणोपेतंसर्पराजयुतोदरम् ॥ दिव्यवस्त्रपरीधानंदिव्यगंधानुलेपनम् ३४ अनेकसूर्यसंकाशतेजोज्वालासुदीपितम् ॥ ददर्शषण्मुखस्तत्रविस्मयोत्फुल्ललोचनः ३५

व्याकुलीभूतचित्तोसौकिमेतादित्यचिंतयत् ॥ मयाथचिंत्यतेन्यद्धातद्वाविंधांनचाप्यहम् ३६ततःपप्रच्छतूर्णींसकोभवानकिंचनामते ॥ गजाननउवाच ॥ चिंतय
तेयोदिवारात्रौत्वयैकाग्रेणचेतसा ३७ सोहंप्राप्तोवरंदातुंवदतेत्द्धदिवांछितम् ॥ ददामितुष्टस्तपसाषडाननगजाननः ३८ ॥ स्कंदउवाच ॥ विदुर्नदेवानचशा
स्त्रकाराब्रह्मादयःशेषमुखाश्चनागाः ॥ तवस्वरूपंजगदीशसम्यग्दर्शितन्मेद्विरदाननाद्य ३९ तेनैवजातःपरिपूर्णकामस्तथापियाचेतववदेववाक्यात् ॥ प
राजयोमेनकदापिभूयात्प्रत्यक्षतामेहिविचिंत्यमानः ४० अविस्मृतिःस्यात्तवपादपद्मेसर्वेषुदेवेषुवरिष्ठताच ४१ अलक्ष्योलक्षतांयातस्ततोलक्षविनायकः ॥
नम्नाख्यातोभवात्रत्वंभक्तकामसुरद्रुमः ॥ ॥ लक्षउवाच ॥ ॥ सर्वंतद्भवितास्कंदयद्यत्प्रार्थितमद्यमे ४२ अविस्मृतिश्चसांनिध्यंचिंत्यमानस्यमेभवेत् ॥
पराजयोरिपूणांतेदेवश्रैष्ठ्यंभविष्यति ४३ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंवरान्ददौदेवोमयूरंनिजवाहनम् ॥ ददौस्कंदायसुप्रीतोविनयाच्चतपोबलात् ४४ म
यूरध्वजइत्येवंनामख्यातंततोभवत् ॥ गजाननउवाच ॥ मूर्तिंयास्यंतिहस्तात्तेतारकाद्यामहासुराः ४५ लक्षविनायकइतिनाम्नाहंभक्तवत्सलः ॥ भविष्या
मिचिरादत्रक्षेत्रेत्वद्वाक्यतोनघ ४६ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवमुक्त्वातुविकटस्तत्रैवांर्हितोभवत् ॥ ततःस्कंदोमहामूर्तिंकृत्वास्थाप्यद्विजैःसह ४७ लक्षवि
नायकइतिनामचक्रेशुभंतदा ॥ मोदकैर्लक्षसंख्याकैःपुष्पैर्दूर्वांकुरैरपि ४८ पूजयामासतांमूर्तिंअन्यैर्द्रव्यैस्तथाविधैः ॥ ब्राह्मणान्भोजयामासतावत्संख्यायु
तान्द्विजान् ४९ स्तुत्वानत्वाययौस्कंदःशंकरंलोकशंकरं ॥ मयूरमारुह्यततःसर्वंचाकथयत्रतं ५० मयूरध्वजइतिचनामदेवकृतंजगौ ॥ ताराकासुरनाशायय
यौस्कंदःशिवाज्ञया ५१ स्मृत्वागजाननंदेवंपरिगृह्यशिवाशिषः ॥ देवसेनापतित्वेसावभिषिक्तःसुरर्षिभिः ५२ सेनानीस्तारकंदष्ट्वायुद्धंचक्रेमहाबलः ॥
लक्षवर्षांतरेतंसमारयामासशक्तितः ५३ युद्धंतद्वर्णितुंशक्तिःशेषस्यापिनवैभवेत् ॥ तारकेनिहतेदैत्येननंदुःसर्वदेवताः ५४ मुनयोलोकपालाश्चनागाश्च
मानवास्तथा ॥ मुमुचुःपुष्पवर्षाणिस्कंदस्योपरिनिर्वृताः ५५ सर्वेदेवाश्चलोकाश्चस्वंस्वंस्थानंययुस्तदा ॥ स्वाहास्वधावषट्कारान्यथापूर्वंचचक्रिरे ५६ ॥
ब्रह्मोवाच ॥ ॥ एवंप्रभावोदेवोसौकथितस्तेगजाननः ॥ व्रतप्रभावोपिमयायथावत्तेनिरूपितः ५७ त्रयस्त्रिंशत्कोटिसुरैरवध्योसौमहासुरः ॥
स्कंदेननिहतःसंख्येदेवव्रतप्रभावतः ५८ इंद्रादिदेवतावृंदैःपूजनीयोभवच्चसः ॥ ॥ व्यासउवाच ॥ ॥ अनुष्ठानंकृतंतेनकस्मिन्स्थानेसमाधिना ५९ प
रमेणविशाखेनतन्मेब्रूहिप्रजापते ॥ ब्रह्मोवाच ॥ अनुष्ठानंकृतंतेनयत्रास्तेघुसृणेश्वरः[1] ॥ प्रसिद्धोवर्ततेनाम्नाआसीत्लक्षविनायकः ॥ एलोभूत्तत्रनगरेपश्चा
द्राजाभिविश्रुतः ॥तन्नाम्नानगरंख्यातंततस्तदभवन्मुने ६१ इतिश्रीगणेशपुराणेउपासनाखंडेतारकवधोनामाऽध्यायः ८७ ॥ ॥ मुनिरुवाच ॥ ॥ श्रुतमा
ख्यानकंब्रह्मन्गजाननव्रताश्रयं ॥ दग्धश्चेन्मदनस्तेनशंकरेणरुषाग्निना १ दृश्यतेसर्वलोकेषुमदनोद्यापितत्कथं ॥ एतत्कथयमेसर्वंविस्तराच्चतुरानन २ ॥

१ घृष्णेश्वर इतिपाठान्तरम् ।

स्तवैः ॥ ॥ देवाऊचुः ॥ ॥ त्वत्तोयज्ञक्रियाब्रह्मन्संस्काराःसर्वएवहि १५ अपांत्वमसिहेतुश्चदेवानांमुखमेवच ॥ अग्निहोत्रप्रणेतात्वंगार्हपत्यादिनाम
भिः ॥ १६ ॥ त्वमेवपिबसीशाब्धिवारिनित्यंमहत्तरम् ॥ त्वमेवपचसेनृणांजठरेषड्रसानपि १७ त्वमेवसर्वजंतूनांसंधौसंधौविचेष्टसे ॥ त्वयात्यक्तंप्रेत
संज्ञांलभतेदह्यतेत्वया १८ हेतुस्त्वमसिदेवेशजंतूनांप्राणधारणे ॥ त्वयाद्भिश्चविनानान्नंपक्तुंशक्यंनचक्कचित् ॥ त्वमेवब्रह्मारुद्रश्चसूर्यश्चानेकरूपधृक् १९
त्वमेवजायसेमूलंक्रोधस्यजगदीश्वर ॥ यत्रयत्रभवेत्तेजस्तत्तद्रूपंतवैवच ॥ २० ॥ अतस्त्वांप्रार्थयामोद्यत्रिलोक्याउपकारक ॥ त्रैलोक्याक्रमणं
तेनतारकेणकृतंविभो २१ जानासितांनभोवाणींकामस्यापिचतांगतिं ॥ पार्वतीहरयोर्बोधंचिरंक्रीडानिमग्नयोः २२ कुरुगत्वान्यरूपेणभिक्षांयाचस्वतत्रवै
एवंकृतेजगत्कार्यंअस्माकंचभविष्यति ॥ २३ ॥ ॥ ब्रह्मोवाच ॥ ॥ इतिदेववचःश्रुत्वाकाषायवसनोद्विजः ॥ भूत्वाशुष्मायायौतत्रयत्रास्तांपार्व
तीश्वरौ २४ क्रीडासक्तौबहिःस्थित्वाभिक्षांदेहीत्युवाचसः ॥ त्रिवारंप्लुतशब्देनद्वाभ्यामपिश्रुतःस्वनः २५ ऊचतुर्विस्मितौतौतुपरस्परमुभौवचः ॥ परिध
त्तांशुकेस्वेस्वेकुतोत्रायंसमागतः २६ किमस्मैचप्रदातव्यमितिचिंतांचचक्रतुः ॥ उमांजलावधाद्वीर्यमशक्तातस्यधारणे २७ जानतीभाविनंचार्थंददौसाभि
क्षुकायतत् ॥ भूमौत्यक्तंदहेदेतत्त्रैलोक्यंसचराचरम् २८ हरवीर्यमित्यपिबद्वह्निःशापभयात्तयोः ॥ गर्भवाननलोजातोलज्जावानपितापवान् २९ यत्र
यत्रययौवह्निःशर्मलेभेनतत्रवै ॥ उषस्युत्थायगंगायांतुलासंस्थेदिवाकरे ३० स्नातुंयावत्सशौचादिकुरुतेतावदेवह ॥ आगताःषट्स्त्रियस्तत्रस्नातुमूर्जे
समाहिताः ३१ अग्निनायत्समुत्सृष्टंगंगेयंचहरप्रिया ॥ धारयिष्यतिशक्ताचेज्जलरूपासुशीतला ॥ ३२ ॥ शितवीर्यंचतत्ताभिःप्राशितंषड्विभागतः ॥
तस्मिन्नेवक्षणेसोग्निरंतर्द्धिंसमपद्यत ॥ ३३ ॥ अंशुकानिचयातानिदूरदेशंगतेनले ॥ परिधायस्ववस्त्रंतास्ततोयातानिजंगृहम् ॥ ३४ ॥ ददृशुःपतयस्ता
सांमुखान्यत्युज्ज्वलानिच ॥ गर्भिण्यइतितेज्ञात्वाज्ञानदृष्ट्यामुनीश्वराः ३५ बहिश्चक्रुर्गृहात्सर्वानप्रदर्श्यमुखंत्विदम् ॥ ताःसमेत्यपुनर्गंगातीरेशरसुशोभि
ते ३६ मुमुचुःस्वस्वगर्भंताःशुद्धाःस्नातागृहान्ययुः ॥ षट्सुतासुप्रयातासुस्वंस्वंगर्भंविमुच्यवै ३७ षण्मुखोद्वादशभुजोबालस्तत्रव्यजायत ॥ तस्यहुं
कारमात्रेणनिपेतुर्भानिखात्भुवि ३८ चकंपेधरणीसर्वाशेषःपातालमेवच ॥ द्रुमाउन्मीलिताःसूर्योनीहाराच्छादितोभवत् ३९ एतस्मिन्नंतरेतत्रनारदोदिव्य
दर्शनः ॥ कैलासंगिरिशंद्रष्टुंगच्छन्मार्गेददर्शतं ४० अतिदीप्ततरंबालंदुर्दर्शंबलवत्तरं ॥ प्रणिधानेनतंज्ञात्वातूष्णींकैलासमाययौ ४१ उवाचपार्वतींशंभुंत्र
त्तांतंसर्वमेवच ॥ जहर्षपृथिवीसर्वाज्ञात्वातंगिरिशात्मजम् ४२ देवदुंदुभयोनेदुर्गंधर्वाजगुरद्भुतं ॥ ॥ नारदउवाच ॥ ॥ आगच्छतामयादृष्टोगौरिमार्गेत
वात्मजः ४३ षण्मुखोद्वादशभुजोसूर्यकोटिसमप्रभः ॥ गंगातीरेनिपतितस्त्यक्तस्तेषण्मुखोनुकिं ४४ कोटिकंदर्पशोभाढ्योगर्जितक्षोभिताखिलः ॥
कथंनिष्ठुरताकारिगौरिसुंदरबालके ४५ ॥ ॥ कउवाच ॥ ॥ इत्युक्त्वांतर्हितेतस्मिन्गौरीबालकमभ्यगात् ४६ इतिश्रीगणेशपुराणेउपासनाखण्डेस्कंदो

पाख्यानंनामपञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ कउवाच ॥ दृष्ट्वासातादृशंबालंसहस्नुतपयोधरा ॥ आलिलिंगमुदाबालंतद्धस्तद्हृदयासती १ तामूचेममबालो
यंगंगागंभीरनिस्वना ॥ ममायमितितांप्राहवह्निर्बालोगिरेःसुतां २ कृत्तिकाद्याश्चतांप्राहुरस्मज्जातोयमर्भकः ॥ अस्माकमेवबालोयमितिचुक्रुशुरातुराः ३
एवंविवदमानास्तायातावह्निपुरोगमाः ॥ कैलासेदेवनिलयेगिरिशंचंद्रशेखरं ४ गौरीविवेशप्रथमंकटिन्यस्तस्वबालका ॥ शिवोगृहीत्वातंस्वांकेशिरस्या
घ्रायमंत्रतः ५ रमयामासपरयामुदादेवस्त्रिलोचनः ॥ गंगावह्निःषट्स्त्रियस्तागृहंजग्मुर्यथागतम् ६ तन्नामकरणार्थायब्रह्माणंचबृहस्पतिम् ॥ आहूयशिव
ऊचेतौनामास्यक्रियतामिति ७ ब्रह्माबृहस्पतीऊचतुः ॥ कार्त्तिकेमासिजातोयंकार्त्तिकेयइतिस्फुटं ॥ नामास्यप्रथमंदेवपार्वतीनंदनोपिच ८ शरद्वीपेयमुत्प
न्नःशरजन्माततोपिच ॥ कृत्तिकाभ्योपिजातत्वात्कार्त्तिकेयइतिस्मृतः ९ यतोस्यमातरःषट्ताःसषाण्मातुरइत्यपि॥ अयंपुत्रस्तारकाजित्तारकंचविजेष्यति १०
देवसेनापतिर्भावीसेनानीरितिशब्दितः ॥ ततएवमहासेनःषण्मुखत्वात्षडाननः ११ स्कन्नंत्रिवारंरेतोयत्तेनस्कंदोयमुच्यते ॥ तयोस्तुवदतोरेवंशक्राद्याआययुः
सुराः १२ आननंदुश्चनेमुस्तंपूपुजुस्तुष्टुवुर्जगुः ॥ व्यानशेरोदसीदिव्यवाद्यशब्दोरसातलं १३ ततस्तेप्रार्थयामासुःसेनान्यंप्रणिपत्यच ॥ त्रैलोक्यकंटकंदेव
जहित्वंतारकासुरं १४ नानाभिषेकसंभारैःसेनापत्येभिषिच्यतं ॥ वैदिकैस्तांत्रिकैर्मंत्रैर्नानामुनिसमीरितैः १५ ततोनुज्ञांगृहीत्वातेदेवाःस्वस्थानमागमन् ॥
ऋषयोपिनिरुद्योगास्तपस्तेपुर्यथापुरा १६ सेनान्यांविद्यमानेनोनभयंविद्यतेक्वचित् ॥ सबालोववृधेत्यंतंशुक्लपक्षेयथाशशी १७ एकदाबालभावात्सउड्डीयश
शिनंययौ ॥ गृहीतुंब्रह्मणावारितेदशंसाहसंकुरु १८ बुद्ध्याबृहस्पतिंशक्त्याजिगायेंद्रंचसोर्भकः ॥ एकदासुखमासीनंपार्वत्यासहितंशिवं १९ प्रणम्यपरिप
प्रच्छसर्वकामार्थसिद्धये ॥ स्कंदउवाच ॥ पितर्मयाश्राविमहाकथानानाविधाःशुभाः २० सर्वसिद्धिकरंदेवपुत्रसंपत्प्रवर्द्धनं ॥ सर्वपापहरंचैवधर्मार्थकाममोक्षदं
२१ त्रैलोक्यस्यगुरोस्त्वत्तस्तृप्तिर्नास्तितथापिमे ॥ वदमेसर्वशत्रूणांजयकारिव्रतंशुभम् २२ ईश्वरउवाच ॥ सम्यक्पृष्टंत्वयास्कंदसर्वलोकोपकारकं ॥ व्रतंतेहंप्र
वक्ष्यामिसर्वसिद्धिकरंनृणां २३ सर्वपापक्षयकरंधर्मार्थकाममोक्षदं ॥ सर्वशत्रुक्षयकरंपुत्रसंपत्प्रवर्द्धनं २४ अलक्ष्मीसंकटहरंगणनाथस्यतोषकृत् ॥
यःकरोतिनरोभक्त्यासपूज्यस्त्रिदशैरपि २५ इच्छाविहारीभवतिस्रष्टिस्थित्यंतकृच्चसः ॥ दर्शनात्तस्यचान्येषांमहापापंलयंव्रजेत् २६ नान्येषांस्कंदव
रदचतुर्थीव्रतसाम्यता ॥ एवमाकर्ण्यवचनंसेनानीःशंकरेरितम् २७ पुनःपप्रच्छपितरंमाहिमानंव्रतस्यसः ॥ स्कंदउवाच ॥ विस्तरेणममब्रूहिमाहात्म्यंव्रतसं
भवम् २८ कस्मिन्मासिदिनेचास्यप्रारंभःक्रियतेहर ॥ कोविधिःकिंफलंचास्यकस्याभूत्प्रत्ययोस्यच २९ एतन्मेसकलंब्रूहियदितुष्टोसिशंकर ॥ सर्वलोको
पकारायव्रतस्यास्यप्रसिद्धये ३० ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखण्डेस्कंदोपाख्यानेषडशीतितमोऽध्यायः ८६ ॥ ॥ शंकरउवाच ॥ ॥ अहंतेकथ
यिष्यामिव्रतस्यास्यविधिंपरम् ॥ श्रावणेतुसितेपक्षेचतुर्थ्यामारभेद्व्रतम् १ तिलामलककल्केनप्रातःस्नानंविधायच ॥ नित्यनैमित्तिकंसर्वंसमाप्यक्रोधवर्जि

॥ ब्रह्मोवाच ॥ तृतीयंतुयदानेत्रंरुषोद्घाटितवान्हरः ॥ अपराधंतुविज्ञायमदनस्यरतिस्तदा ३ आक्रंदतीमृतंकामंहरांतिकमुपागमत् ॥ साष्टांगंप्राणिपत्य
नंतुष्टावचयथामति ४ रतिरुवाच ॥ नमामिदेवंगिरिजासहायंवृषध्वजंभालविलोचनंच ॥ यःपातिलोकान्खलुसत्वयुक्तोनिर्मातिलोकान्रजसागुणेन ५
यःस्वेच्छयासंहरतेखिलेशोजगत्तमोविष्टतनुर्महेशः ॥ योनुःकपालंवहतेजनानांभिक्षाशनःपूरयतेखिलार्थान् ॥ ६ ॥ दीनानुकंपीभगवान्महेशोगतप्रि
यायाःशरणंममास्तां ॥ कर्त्तुंतथाकर्त्तुमदीनसत्वःशक्तोन्यथाकर्त्तुमपीहदेवः ७ समेविधत्तांशरणंगतायाःसौभाग्यमुच्चैर्मृतजीवनेन॥ नोचेदहंप्राणविसर्जनेनय
शःकरिष्येविपरीतमीश ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ एवंतयास्तुतःशंभुःप्रसन्नस्तामथाब्रवीत् ॥ ॥ शंभुरुवाच ॥ ॥ वरंवृणुमहाभागेकामपत्निशु
भानने ९ ददामितुष्टस्तोत्रेणसर्वान्कामान्त्वद्दिस्थितान्॥ इत्थंशिववचःश्रुत्वारतिस्तंदृष्टाप्रणम्यतम् १० सौभाग्यकामातंदेवंनिजगादभृशातुरा ॥ ॥ रतिरु
वाच ॥ ॥ स्वामिन्यदिप्रसन्नश्चेच्छृणुमेपरमंवचः ११ रसायांदिविभूमौवाकांताःस्युःकामिनीगुणाः ॥ ममलावण्यलेशोनतेषुक्वापित्रिलोचन १२ मांदृष्ट्वा
मुमुचुःशक्रमुख्यावीर्यमपत्रपाः ॥ ततोमेमहतीलज्जाजातामेतामपाकुरु १३ लावण्यंचवृथाजातंविनाकामेनशंकर॥ अयशोदहतेमह्यंरतिःसाविधवेतिच १४
भर्त्तुर्दानेनदेवेशमांजीवयदयानिधे॥ एवंतयाप्रार्थितोसौशंकरोलोकशंकरः १५ उवाचश्लक्ष्णयावाचाहर्षयन्कामयोषितम् ॥ शिवउवाच ॥ चिंतांमाकुरुक
ल्याणिनलज्जांकर्त्तुमर्हसि १६ स्मृतमात्रस्त्वयाबालेकामःस्याद्दृष्टिगोचरः ॥ मनसाचिंतितोवापिमनोभूरितिसंज्ञितः १७ पूरयिष्यतितेकामान्मान्यात्वंच
भविष्यसि ॥ विष्णोःसकाशादुत्पत्तिंरमायांप्राप्स्यतेयदा १८ भर्तातवजनेख्यातोनाम्नाप्रद्युम्नसंज्ञितः॥ भविष्यतिमहाभागेगच्छेदानींनिजालयं १९ साग
ताशिववाक्येनमंदिरंभृशसुंदरं ॥ सस्मारतंपतिंसातुपुरोनंगःसमाययौ २० ईश्वरेच्छावशात्तस्याःप्रत्यक्षंसमजायत ॥ रतिश्चाश्चर्ययुक्तासाजरदृषेपतिनासह
२१ततोनंगोययौशंभुंप्रणम्याभिदधेवचः॥ अनंगउवाच ॥ विनापराधंदेवेशगमितोनंगतांकथम् २२ इंद्रादिदेवताश्चैदैस्तारकासुरपीडितैः ॥ मुनिभिश्चाविशा
खस्यत्वत्तउत्पत्तिवेदिभिः २३ प्रार्थितस्तवनिष्ठायाभंगंकर्त्तुमहंविभो॥ उपकारायसर्वेषामकार्षंकर्मताद्दशम् २४ उपकारसमंपुण्यंनचास्तिभुवनत्रये॥ विपरी
तंतुतज्जातंममदैवात्सुरेश्वर२५त्रयस्त्रिंशत्कोटिदेवेष्वहंचारुतरःपुरा॥ उपमाचारुपुरुषेममैवदीयतेखिलैः२६कथंतिष्ठामिदेवेशस्वांगहीनःपरेतवत् ॥ अतोमयि
महादेवकृपयानुग्रहंकुरु२७॥ ब्रह्मोवाच ॥ ततएकाक्षरंमंत्रंगणेशस्यददौशिवः॥ अनंगायप्रणमतेनुष्ठानंचादिशच्चतं२८ततोनंगोययौरम्यंजनस्थानंसुसिद्धिदं॥
तत्रानुष्ठानमकरोदनंगःशंकराज्ञया २९ संवत्सरशतंपूर्णंततापसतपोमहत् ॥ एकाक्षरंजपन्मंत्रंगणेशध्यानतत्परः ३०वायुमात्राशनोनित्यंमदारनिपशागवान् ॥
ततःप्रसन्नोभगवान्देवदेवोगजाननः ३१ आविरासीद्दशभुजोमहामुकुटशोभितः ॥ ज्वलद्रत्नप्रभाचारुकुंडलांगदमंडितः ३२ कोटिसूर्यप्रतीकाशोमुक्तामा
लाविभूषितः ॥ दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः ३३ सिंदूरारुणशुंडास्योदशायुधलसत्करः॥ शेषालंकृतनाभिश्चनानालंकारराजितः ३४ सिंहस्कंधो

महाश्रीमांश्रीत्कारत्रासिताखिलः ॥ इंद्रादयोपिमुनयआविर्भूतेगजानने ३५ आययुरप्सरोभिश्वयक्षगंधर्वकिन्नरैः ॥ दिव्यवादित्रनिर्घोषैःपुपूजुस्तेगजानन
म् ३६ उपचारैःषोडशभिर्भक्त्यादेवंपृथक्पृथक् ॥ कामोपितततउत्थायप्रणिपत्याखिलान्सुरान् ३७ ववंदेदेवचरणौपूर्वंनत्वामुनीनपि ॥ प्रशशंसतदादेवंवि
कटंकरुणाकरम् ३८ ॥ कामउवाच ॥ धन्यस्त्वमसिदेवेषुपरब्रह्मस्वरूपवान् ॥ निराकारोपिसाकारोजातोसिभक्तवत्सल ३९ अद्यधन्यंममजनुस्तपोधन्य
तरंचमे ॥ यत्तवांघ्रियुगंदृष्टंसर्वदुःखविमोचनम् ४० कारणंसर्वसिद्धीनांधर्मार्थकाममोक्षदम् ॥ धन्येनेत्रयुगेमेद्ययाभ्यांदृष्टःपरःपुमान् ४१ यंनजानंतिवे
दांताःसांख्यापातंजलादयः ॥ नेतिनेत्यभवंस्तूष्णींवेदोपियत्रकुंठितः ४२ अनंतकोटिब्रह्मांडरोमकूपोखिलेश्वरः ॥ येनमंत्रेणसोदर्शिमंत्रोधन्यतरोपिसः ४३
गणेशउवाच ॥ सम्यगुक्तंरतिपतेनमांब्रह्मादयोविदुः ॥ यदासाकारतांयामितेपिजानंतिमांतदा ४४ ममैवानुग्रहात्कामदृष्टवानसिमांतदा ॥ यतोहंपरितुष्ट
स्तेतपसामनुनातथा ४५ वृणुमत्तोखिलान्कामान्कामेकामंददामिते ॥ ब्रह्मोवाच ॥ इतिदेववचःश्रुत्वापुनरूचेमनोभवः ४६ आनुपूर्व्येणसकलंवृत्तांतंशि
वकारितम् ॥ तस्मैचाकथयत्कामःप्रसन्नार्थप्रदायिने ४७ अनंगतांस्वस्यरतेराक्रंदंमनुमेवच ॥ अनुष्ठानंचिरकृतंशिवदत्तंवरंतथा ४८ वृणोतिस्मवरंतस्मात्सु
प्रसन्नाद्गजाननात् ॥ कामउवाच ॥ यदिप्रसन्नोभगवांस्तन्मेदेहिसदेहताम् ४९ मान्यतांसर्वदेवेषुप्राग्वल्लावण्यमेवच ॥ भक्तिंदृढांत्वच्चरणेत्रैलोक्यविजयंतथा ५०
॥ इतिश्रीग० उ० खंडेअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ गणेशउवाच ॥ यद्यत्तेप्रार्थितंकामतत्तत्तेभविताखिलम् ॥ रमोदराजनिंप्राप्यसांगस्त्वंसर्वसुंदरः १ भ
वितासर्वमान्यश्चत्रैलोक्यविजयीतथा ॥ पुष्पंफलंविसलयंकाभिन्यवयवामरुत् २ उद्बोधकानितेसंतुज्योत्स्नाचंदननीरजे ॥ मरालांडजशब्दश्चजेतास्येतैर्हरा
दिकान् ३ दर्शनात्स्मरणादेषांमनस्यापिभविष्यसि ॥ मनोभूःस्मृतिभूरेवंनामापिस्याज्जनेषुते ४ अविस्मृतिर्मच्चरणेदृढाभक्तिश्चतेभवेत् ॥ स्मृतोहंपुरतःस्यां
तेमहत्कार्यउपस्थिते ५ ॥ ब्रह्मोवाच ॥ एवंतस्मैवरान्दत्त्वाकामायाथगजाननः ॥ अंतर्दधेमहाभागपश्यत्सुचसुरर्षिषु ६ तत्रकामोमहामूर्तिंगणेशस्यतथावि
धाम् ॥ संपाद्यस्थापयामासपूजयामासतांतदा ७ रतिनिर्मितपक्वान्नैर्मोदकैर्लड्डुकादिभिः ॥ महोत्कटेतिनामास्यतेजस्वित्वात्तथाकरोत् ८ प्रासादंनिर्ममेकांतं
रत्नस्तंभविराजितम् ॥ रुक्मिण्याउदराज्जातस्त्यक्तोदैत्येनवारिधौ ९ मत्स्येनगिलितस्तत्रसमत्स्योधीवरैस्ततः ॥ शंबरायार्पितेनापिमायावत्यैनिवेदितः १०
विभिन्नेस्मिंस्तदुदरान्निर्गतोवर्द्धितस्तया ॥ नारदोकथयत्तस्यैकामोयंवर्द्धितस्त्वया ११ उपदिष्टेनेकमायाःशंबरंसततोवधीत् ॥ गणेशस्यप्रसादेनबहूनेको
व्यजिग्यत १२ मायावत्याशिक्षिताभिर्मायाभिर्बहुभिश्वसः ॥ प्रद्युम्नइतिविख्यातःसरस्वत्याःपुरंययौ १३ सर्वदेवेषुमान्यश्चत्रैलोक्यजयकारकः ॥
गजाननप्रसादेनबभूवानंदनिर्वृतः १४ रुक्मिणीप्रभृतिस्त्रीभिर्दृष्टःकृष्णइवापरः ॥ ततउत्थाययाताभिर्लज्जिताभिःसमंततः १५ बुद्धापुत्रंनारदस्यवा
क्येनमुमुदुश्वताः ॥ आलिलिंगुस्तमभ्येत्यप्रणनामरतिश्वताः १६ सर्वापुरीहर्षयुतातस्मिञ्ज्ञातेबभूवसा ॥ ॥ कउवाच ॥ ॥ एवंजनस्थानगतगणेशस्यम

हामुने १७ महिमाकथितोयत्ररामेणाच्छेदिनासिका ॥ शूर्पणख्यास्ततस्तत्तुनाम्नाख्यातंतुनासिकम् १८ तत्राद्यापिहिदृश्यंतेउपलामोदकाइव ॥ एव
माराधितस्तेनकामेनासौगजाननः १९ षडक्षरेणमंत्रेणशेषेणाराधितोयथा ॥ रतिश्चमदनश्चापिननंदतुरुभौयथा २० ॥ व्यासउवाच ॥ कथमाराधितोब्रह्म
न्शेषेणासौगजाननः ॥ किमर्थंकिंचतेनाप्तंसुप्रसन्नाद्गजाननात् २१ एतत्सविस्तरंब्रूहिपृच्छतश्चतुरानन ॥ प्रष्टुःश्रोतुश्चवक्तुश्चयतःपुण्यंविवर्धते २२ ॥ ब्रह्मोवा
च ॥ ॥ सम्यक्पृष्टंत्वयाब्रह्मन्कथयामिकथामृतम् ॥ शृणुष्वावहितोभूत्वासर्वंसत्यवतीसुत २३ कस्मिंश्चित्समयेशंभुःपार्वत्यासहितोमुने ॥ सुखासी
नोगिरिवरेरम्यसानुशिलोच्चये २४ नानाद्रुमलताकीर्णेनिर्झराराववशब्दिते ॥ गुंजंतिभ्रमरायत्ररुक्मपंकजवासिनः २५ चंपकाशोकबकुलमालतीकुसुमा
निलः ॥ आनंदयतिचित्तानिवसतांयस्यशेखरे २६ आययुस्तत्रगंधर्वाअप्सरोयक्षकिन्नराः ॥ देवाश्चमुनयोनागास्तंद्रष्टुंगिरिजापतिम् २७ केचित्तंप्रणिपा
तेनसाष्टांगेनाभ्यवादयन् ॥ उच्चैर्जगुश्चगंधर्वाननृतुश्चाप्सरोगणाः २८ पुपूजुस्तंदशभुजंव्याघ्राजिनधरंहरम् ॥ नंदिभृंगिगणाकीर्णंभालचंद्रंत्रिशूलिन
म् २९ भस्मांगंशेषशिरसंशंकरंवृषभध्वजम् ॥ अपरैरर्चितंदेवमुपचारैर्मनोमयैः ३० निमील्यनयनेतस्थुःकेचिद्ध्यानपरायणाः ॥ वसिष्ठोवामदेवश्चजमद
ग्निस्त्रितोद्विजः ३१ अत्रिःकण्वोभरद्वाजोगौतमाद्यामुनीश्वराः ॥ तुष्टुवुर्विविधैःस्तोत्रैस्तत्रतंपार्वतीपतिम् ३२ स्तुवत्सुतेषुमुनिषुशेषोगर्वपरंययौ ॥ अहमे
वश्रेष्ठतरोलोकेषुत्रिषुनापरः ३३ यतःश्रेष्ठतरःशंभुस्तस्याहंशिरसिस्थितः ॥ धराधरणसामर्थ्यंमयिनान्यत्रकुत्रचित् ३४ वासुकेरज्जुभूतान्मत्कुलीनाद
मृतंसुरैः ॥ प्राप्तंततोमरत्वंचतस्मान्नान्योस्तिमत्परः ३५ तद्हृदिस्थंतदागर्वंज्ञात्वाशंभुस्त्रिलोककृत् ॥ विज्ञायाखिलहृत्कूतूष्णीमुत्तस्थौसहसाशिवः ३६
आस्फाल्यद्धरापृष्ठेशेषंतादृशगर्वितम् ॥ एकैकोमस्तकस्तस्यदशधादशधाभवत् ३७ मूर्छितःप्रहाराद्वैसगतप्राणइवाभवत् ॥ ततःप्रभृत्यसौजातःसहस्र
फणिमंडितः ३८ जीवशेषःशुशोचाथशेषोशेषाहिभूषणः ॥ अलंकरणभूतोहंत्रैलोक्येशहरस्यह ३९ इमामवस्थांसंप्राप्तोनजानेकेनकर्मणा ॥ चलितुंनै
वशक्तोमिपक्षहीनइवांडजः ४० किंकरोमिक्वगच्छामिकोमेत्राताधुनाभवेत् ॥ कोमेनिजपदप्राप्त्युपायंकथयेच्छुभम् ४१ कोवामेपनयेद्दुःखमितिचिंताप
रस्तुसः ॥ ददर्शतेनमार्गेणगच्छंतंनारदंमुनिम् ४२ जहर्षकिंचिन्नागेंद्रःस्वप्नंप्राप्येवभिक्षुकः ॥ अतिकष्टामवस्थांतांनारदोलोकयत्पुरः ४३ निश्चेष्टंनिरनु
च्छ्वासंध्याननिष्ठंयथामुनिम् ॥ अशेषविषयज्ञोपिशेषंपप्रच्छनारदः ४४ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेएकोननवतितमोध्यायः ॥ ८९ ॥ ॥ छ ॥
॥ ॥ नारदउवाच ॥ ॥ किमर्थमेवंजातोसिनिस्तेजादुःखितोभृशम् ॥ कथंभग्नशिराःकस्याचरोऽप्रियतरंमुनेः १ किंवाक्षुब्धोगिरीशस्तेकारिगर्वस्त्वयाथ
किम् ॥ वदयत्कारणंशेषप्रतीकारंपुरावदे २ त्वांविनाधारयेत्कोनुदराचरयुतांधराम् ॥ अनुक्तवतितस्मिंस्तुस्वयमेवाब्रवीन्मुनिः ३ उपायंनागराजस्यस्व

१ अत्राध्यायसमाप्तिरेकस्मिन्पुस्तके ।

पूजयामासनानामंगलवस्तुभिः ११ बद्धांजलिरुवाचेदंसुप्रसन्नोगजाननं ॥ धन्योमेजनकोमाताततपोज्ञानंवपुश्चहृत् १२ धन्येयंधरणीतातवीरुद्वृक्षफलानिच
धन्यएकाक्षरोमंत्रोयेनदृष्टोखिलेश्वरः १३ गजाननःप्रसन्नात्मापरमात्मापरात्परः ॥ यत्रकुंठाश्चतुर्वेदावेदांतामूकतांगताः १४ अगोचरोमनस्तर्कैःसोयंदेवोमये
क्षितः ॥ यस्मादाविर्भवंतीमेहरेशाग्निमुखाःसुराः १५ पातालानिचसप्तैवभुवनानिचतुर्दश ॥ यत्रतानिलयंयांतिसोयंदेवोमयेक्षितः १६ योनिर्गुणोनिराधी
शोगुरुगम्योनिराकृतिः ॥ ब्रह्मेतियंविदुःकेचित्सोयंदेवोमयेक्षितः १७ ॥ कउवाच ॥ एवंवाक्यामृतरसैःपरितुष्टोगजाननः ॥ उवाचकश्यपंमंत्रंस्तुवंतंविवि
धैःस्तवैः ॥ १८ ॥ ॥ गणेशउवाच ॥ अक्तेःस्तवादनुष्ठानात्प्रीतस्तेहंमुनेधुना ॥ वरंवरयमत्तस्त्वंयंयंसमनसेच्छसि १९ ॥ कश्यपउवाच ॥ सृष्टिंनानावि
धांकर्तुंसामर्थ्यंदेहिमेप्रभो ॥ त्वदंघ्रिकमलेभक्तिमविस्मरणमेवच २० यायाःप्रत्यक्षतांतत्रस्मरेत्त्वांयत्रचाप्यहं ॥ तादृशंदेहिमेपुत्रंनाम्नाकश्यपनंदनम् २१
गणेशउवाच ॥ सर्वंतेवांछितंमत्तोभविताशुमहामुने ॥ भक्तिर्मेविस्मृतिःस्यान्नसंकटेचांतिकंव्रजे २२ करिष्यसिविचित्रांत्वंसृष्टिंममप्रसादतः ॥ कउवाच ॥
एवमुक्त्वामुनिंदेवस्तत्रैवांतरधीयत ॥ कश्यपोपिमुदायुक्तोनिजस्थानंतदाययौ २३ कदाचित्कश्यपोकस्माद्शरीरप्रपीडितः ॥ नचालभक्तापिशर्म
गृहमध्यंततोगमत् २४ नित्यंनैमित्तिकंकाम्यंकर्मध्यानंचनास्मरत् ॥ तंतथाविह्वलंदृष्ट्वायोषितोस्यचतुर्दश २५ दित्यादितिर्दनुःकद्रुर्विनताद्याःपुरःस्थिताः
बुभुजेक्रमशस्तास्तुनानागारेषुकश्यपः २६ कालेयथोक्तेसुषुवेदितिर्दैत्याननेकशः ॥ अदितिर्देवगंधर्वान्दनुश्चदानवानथ २७ क्रमेणाकिन्नरायक्षांःसि
द्धचारणगुह्यकाः ॥ पशवश्चतथारण्याग्राम्याश्चासन्ननेकशः २८ पृथिवीपर्वतावृक्षाःसमुद्राःसरितोलताः ॥ धान्यानिधातवोरत्नामुक्ताःकृमिपिपीलिकाः
२९ सर्पाःपक्षिगणास्ताभ्यःसर्वमासीच्चराचरम् ॥ एवंदृष्ट्वासंतानंजातंनानाविधंतदा ३० जहर्षकश्यपोधीमान्नानामंत्रान्समादिशत् ॥ ॥ शोधयि
त्वाऋणधनंसिद्धारिचक्रमीक्ष्यच ३१ षोडशार्णंचकस्मैचित्तथाष्टादशवर्णकम् ॥ एकाक्षरंचकस्मैचिदन्यस्मैचषडक्षरम् ३२ पंचार्णमष्टाक्षरंचद्वादशाक्षर
मेवच ॥ कस्मैचिच्चमहामंत्रंददौसमुनिपुंगवः ३३ कुर्वंत्वनुष्ठितंतावद्यावद्देवोनिरीक्ष्यते ॥ गजाननोखिलाधारःसर्वसिद्धिप्रदायकः ३४ एवमाज्ञापयत्तांश्च
तेचजग्मुस्तदैवहि ॥ तपसेबहुशोदेशान्जेपुःस्वंस्वंमनुंतदा ३५ आसनेभोजनेदेवंनिद्रायांजागरेपिच ॥ अनन्यभक्त्यादेवेशंसस्मरुस्तेगजाननम् ३६ दिव्यव
र्षसहस्रांतेपरितुष्टोगजाननः ॥ आविरासीदनेकात्मातत्पुरःकरुणानिधिः ३७ योयथाध्यातवान्देवंतादृशस्तत्पुरोभवत् ॥ कस्यचित्पुरतश्चासीन्मेघाभो
ष्टमहाभुजः ३८ कस्यचित्पुरतस्त्वासीच्छशिवर्णश्चतुर्भुजः ॥ अग्रेकस्यचिदारक्तःषड्भुजोसौगणेश्वरः ३९ सहस्रनयनस्तावद्भुजोसावपिकस्यचित् ॥
भातिबालस्वरूपोपियुवावृद्धोपिभासते ४० दशद्वादशदोर्दंडोधूम्रवर्णोमहन्महः ॥ अष्टादशभुजोप्यासीत्कोटिसूर्यसमप्रभः ४१ तेजोरूपीमहाकायआ

१ निराधारइत्यपिक्वचित्पठः

खुवाहनपृष्ठगः ॥ सिंहगोबर्हिगोवापिगजास्योनेकवक्त्रवान् ४२ दृष्ट्वादेवंतुतेसर्वेनैकधातुष्टुवुर्मुदा ॥ बद्धाञ्जलिपुटानम्राभक्त्यादेवंगजाननम् ४३ ॥ सर्व
उचुः ॥ यतोनंतशक्तेरनेकाश्चजीवायतोनिर्गुणादप्रमेयाद्गुणास्ते ॥ यतोभातिसर्वंत्रिधाभेदभिन्नंसदातंगणेशंनमामोभजामः ४४ यतश्चाविरासीज्जगत्सर्व
वेत्तुस्तथाब्जासनोविश्वगोविश्वगोप्ता ॥ तथेंद्रादयोदैत्यसंघामनुष्यासदातंगणेशंनमामोभजामः ४५ यतोवह्निभानूभवोभूर्जलंचयतःसागराश्चंद्रमाव्योमवा
युः ॥ यतःस्थावराजंगमावृक्षसंघाःसदातंगणेशंनमामोभजामः ४६ यतोदानवाःकिन्नरायक्षसंघायतश्चारणावारणाःश्वापदाश्च ॥ यतःपक्षिकीटायतो
वीरुधश्चसदातंगणेशंनमामोभजामः ४७ यतोबुद्धिरज्ञाननाशोमुमुक्षोर्यतःसंपदोभक्तसंतोषकःस्युः ॥ यतोविघ्ननाशोयतःकार्यसिद्धिःसदातंगणेशंनमामो
भजामः ४८ यतःपुत्रसंपद्यतोवांछितार्थोयतोभक्तिविघ्नास्तथानेकरूपाः ॥ यतःशोकमोहौयतःकामएषसदातंगणेशंनमामोभजामः ४९ यतोनंतशक्तिः
सशेषोबभूवधराधारणेनेकरूपेचशक्तः ॥ यतोनेकधास्वर्गलोकाहिनानासदातंगणेशंनमामोभजामः ५० यतोवेदवाचोविकुंठामनोभिःसदानेतिनेतीतितायंगृणं
ति ॥ परब्रह्मरूपंचिदानंतभूतंसदातंगणेशंनमामोभजामः ५१ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखण्डेएकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥
कउवाच ॥ ॥ एवंनत्वाचस्तुत्वाचसर्वेतेतुगजाननम् ॥ पुनरूचुर्गणाध्यक्षमद्यधन्यतमावयम् १ धन्यंतपोनोदानंचज्ञानंयज्ञश्चपूर्वजाः ॥ अद्यनो
दृष्ट्योधन्यायाभिर्दृष्टोगजाननः २ एवंवाक्यामृतैस्तेषांस्तुतिभिःपरितोषितः ॥ उवाचश्रृण्वतांतेषांगंभीर्याद्द्विरदाननः ३ नैतादृशंमयादर्शिब्रह्मवि
ष्णुशिवादिषु ॥ यत्साक्षाद्दृश्यतेसर्वैरूपंमेनिर्गुणस्ययत् ४ अतितुष्टेनयास्तुत्यावरान्दातुमिहागतः ॥ यद्यद्वोवांछितंतत्तद्वृणुध्वमखिलंतुयत् ५ एवमुक्ता
स्तदातेनविकटेनमुनीश्वर ॥ यस्ययद्वांछितंतत्तद्वव्रुस्तस्माद्गजाननात् ६ असंख्यत्वात्तद्वराणांनास्तिशक्तिश्चतुर्मुखैः ॥ गदितुंसर्वथातस्मादुक्तंसंक्षेपतोम
या ७ तास्तान्ददौवरान्यान्यान्सर्वेवव्रुर्गजाननम् ॥ पुनरप्यवदत्सर्वानिदंस्तोत्रंममप्रियम् ॥ त्रिसंध्यंयःपठेदेतद्विद्यावान्पुत्रवान्भवेत् ॥ आयुरारोग्यमै
श्वर्यंयशोवृद्धिंजयोदयम् ॥ प्राप्नुयाद्वांछितानर्थानन्तेचपरमंपदम् ॥ पुनरूचेगणाधीशःस्तोत्रमेतज्जपेन्नरः ॥ त्रिसंध्यंत्रिदिनंतस्यसर्वकार्यंभविष्यति ८ योज
पेदष्टदिवसंश्लोकाष्टकमिदंशुभम् ॥ अष्टवारंचतुर्थ्यांतुसोऽष्टसिद्धीरवाप्नुयात् ९ यःपठेन्मासमात्रंतुदशवारंदिनेदिने ॥ समोचयेद्बंधनात्तंराजबद्धंनसंशयः १०
विद्याकामोलभेद्विद्यांपुत्रार्थीपुत्रमाप्नुयात् ॥ वांछितंलभतेसर्वमेकविंशतिवारतः ११ योजपेत्परयाभक्त्यागजाननपरोनरः ॥ एवमुक्त्वाततोदेवःसर्वेषामेव
पश्यताम् १२ अंतर्दधेऽखिलाधारःसुमुखोसौगजाननः ॥ तेचचक्रुस्तदामूर्तिंगणेशस्यशुभाननाम् १३ प्रतिष्ठाप्यचतांस्थूलेप्रासादेरत्ननिर्मिते ॥ सुमुखे
तिचतस्यास्तेनामचक्रुःसुविश्रुतम् १४ संपूज्यचनमस्कृत्वास्वंस्वंस्थानंययुःसुराः ॥ सर्वेतेमुनयोलोकाःसर्वकार्यरतास्तदा १५ केचित्तस्यानामचक्रुरेकदंत
इतिस्फुटम् ॥ गंधर्वैःकिन्नरैरन्यास्थापितामूर्तिरुत्तमा १६ प्रासादेकांचनेश्रेष्ठेऽनेकधापरिपूज्यच ॥ कपिलेतिचनामास्याःस्थापयामासुरुत्तमम् १७ गुह्यका

श्चारणाःसिद्धामूर्तिमन्यांप्रचक्रिरे ॥ महालयेप्रतिष्ठाप्यनेमुश्चपुपुजुश्चताम् ॥ गजकर्णेतिनामास्याश्चक्रुस्तेतुस्फुटार्थकम् ॥ तत्प्रभावाद्विमानस्थाःसर्वेतोदिव
माक्रमन् १९ लंबोदरेतिनाम्नाचस्थापितासर्वमानवैः ॥ श्वापदैरखिलैरन्यास्थापितामूर्तिरुत्तमा २० विकटेतिचनाम्नातांपुपूजुस्तेययुर्वनम् ॥ गिरयश्चद्रुमा
श्चान्यांमूर्तिंस्थाप्यप्रपूज्यच २१ विघ्ननाशनइत्येवंनामकृत्वास्थितास्तुकौ ॥ तत्प्रसादाच्चतेख्याताःपर्वताश्चद्रुमास्तथा २२ सर्वैःपक्षिगणैर्मूर्त्तिःस्थापितारत्न
कांचनी ॥ गणाधिपेतिनाम्नातैःपूजिताचनमस्कृता २३ सर्वैर्विषधरैरेकास्थापितागणनायकी ॥ यस्याहूतिःकृतातैस्तुधूम्रकेतुरितिस्फुटा २४ सर्वैर्जला
शयैरेकाप्रतिमास्थापिताशुभा ॥ गणाध्यक्षेतिनाम्नासापूजितापरमोत्सवैः ॥ कृमिकीटादिभिश्चैवंवनस्पत्योषधीगणैः ॥ स्थापितापरमामूर्तिर्भालचंद्रेतिविश्रु
ता २६ अन्यैःसचेतनैरन्यारत्नप्रासादमध्यगा ॥ वैनायकीमहामूर्तिः पूजिताभक्तिभावतः २७ गजाननाख्ययाख्यातासर्वेषांसर्वकामदा ॥ तेतेजगत्त्रयेख्या
तास्तत्तज्जात्याबभूविरे २८ सुखिनःस्वस्वकार्येषुदक्षादेवप्रसादतः ॥ प्रत्येकनामकथनेनशक्तिर्भमवर्त्तते २९ सारंसारंप्रगृह्यैवकृतंनाम्नांसहस्रकम् ॥ ततो
पिसारभूतानिप्रोक्तानिद्वादशैवतु ३० समुद्रमथनाद्यद्वद्रत्नानीवचतुर्दश ॥ एवंसंक्षेपतोब्रह्मन्माहिमातेभिवर्णितः ३१विस्तराद्वक्तुंशेषोनेशोनेशोप्यहंहरिः॥इंद्रा
दिमशकानांचजीवानांयक्षरक्षसाम् ३२ तत्रकागणनाकार्यामयासत्यवतीसुत ॥ तस्मात्सर्वेषुकार्येषुपूजनीयोगजाननः ३३ योनपूजयतेदेवंदेवंविघ्नविनाश
नम् ॥ सदुरात्मापरित्याज्यश्चांडालइवदूरतः ३४ ॥ मुनिरुवाच ॥ अनुक्रमेणकथयनामानिद्वादशैवमे ॥ श्रवणात्पठनाद्येषांसर्वेनिर्विघ्नतामियात् ३५ ॥ ब्रह्मो
वाच ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ३६ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियः
पठेच्छृणुयादपि ३७ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ३८ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजम् ॥ प्रसन्नवदनंध्याये
त्सर्वविघ्नोपशांतये३९ कोटिकन्याप्रदानानिकोटियज्ञव्रतानिच ॥ तपांसियानिसर्वाणितीर्थान्यायतनानिच ४० स्वर्णभारसहस्राणिकोटिदानानियान्यपि ॥ कृ
च्छ्राणितप्तकृच्छ्राणिपराकेंदुव्रतानिच ४१ शतांशमेषांपुण्यस्यतानिनामानिनयांतिच ॥ इमानिप्रातरुत्थायशुचिर्भूत्वासमाहितः ४२ यःपठेन्मानवोभक्त्या
विघ्नानोयांतितंनरम् ॥ सिद्ध्यंतिसर्वकार्याणिमोक्षमंतेव्रजत्यसौ ४३ तस्यदर्शनतोलोकादेवाःपूताभवंतिच ॥ अतएवमुनेसौराःशाक्ताःशैवाश्चवैष्णवाः ४४
उक्त्वाद्वादशनामानिसर्वकार्याणिकुर्वते ॥ गाणेशाअपिकुर्वंतिकिमत्रापिचकौतुकम् ४५ नसिद्ध्यंतिहिकार्याणिद्वादशान्यतमस्यह ॥ उच्चारणंविनाब्रह्मंस्तस्मा
देकंसमुच्चरेत् ४६ दुष्टानांनास्तिकानांचकार्यंयद्यपिसिद्ध्यति ॥ तेपिबीजंसमुच्चार्यमज्ञानादपिकुर्वते ४७ एवंतेमहिमासर्वःकथितोलेशतोमुने ॥ उपासनाफ
लंनानायथामतिनिरूपितम्४८विष्णुनाकथितंयावत्तावत्तवनिरूपितम् ॥ सोपिनांतंजगामास्यगणेशोपासनस्यह ४९ गणेशनाममहिमापूर्णोज्ञातोनते
नच ॥ भृगुउवाच ॥ एवंतेकथितोराजन्नद्भुतोमहिमामया ५० ब्रह्मणासुप्रसन्नेनयोव्यासायनिरूपितः ॥ उपासनाखंडमिदंवर्णितंनृपतेमया ५१ यदितेश्रव

णेश्रद्धातदाग्यदपिवर्णये ॥ चरितंगणनाथस्यसोमकांताघनाशनम् ५२ सूतउवाच ॥ इतिवःकथितंनानाकथांतरसमन्वितम् ॥ उपासनंगणेशस्यशौनकाद्या महर्षयः ५३ वेदव्यासायमुनयेब्रह्मणायत्समीरितम् ॥ भृगुणासोमकांतायवर्णितंपापनाशनम् ५४ शृणुयाद्योगणेशस्यपुराणमिदमुत्तमम् ॥ ससर्वामापदं हित्वाभुक्त्वाभोगाननेकशः ५५ पुत्रपौत्रसमायुक्तोज्ञानविज्ञानसंयुतः ॥ लभंतेपरमांमुक्तिंगणेशस्यप्रसादतः ५६ नतस्यपुनरावृत्तिःकल्पकोटिशतैरपि ॥ यःश्रावयेन्महाभक्त्यायथोक्तफलभाग्भवेत् ५७ यथाप्तंसोमकांतेनशृण्वतापरमादरात् ५८ ॥ ॥ इतिश्रीगणेशपुराणेउपासनाखंडेब्रह्मव्यासभृगुसोम कांतसंवादेगजानननामनिरूपणंनामद्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ श्रीमद्गजाननार्पणमस्तु ॥ ॥ श्रीशंवंदे ॥

॥ अङ्कितोऽयमुपासनाखंडः पूर्वार्धो गोपाळनारायणजनतया स्वमुद्रालये ॥

॥ इति श्रीमद्गणेशपुराणे पूर्वखंडं समाप्तम् ॥

श्रीमहागणाधिपतयेनमः ॥ ॥ अथोत्तरखण्डः ॥ ॥ मुनयऊचुः ॥ ॥ सम्यगाख्यानमाख्यातंत्वयासूतमहामते ॥ सादरंश्रुतमस्माभिर्नचतृप्तिंगतावयम्
१ यथानतृप्यतेजंतुरन्नमश्नन्दिनेदिने ॥ अन्यत्कथांतरंब्रूहियेनतृप्यामहेवयम् २ ॥ ॥ सूतउवाच ॥ ॥ उक्तंचोपासनाखंडंक्रीडाखंडंवदामिवः ॥ यथाकृतं
गणेशेननानादैत्यविहिंसनम् ३ साधुद्विजगवांचैवपालनंपरमादरात् ॥ तदहंसंप्रवक्ष्यामिश्रूयतांस्थिरचेतसा ४ ॥ मुनयऊचुः ॥ यावद्यावत्कथ्यतेतत्पुरा
णंतावत्तावद्वर्द्धतेश्रोतुमिच्छा ॥ तस्मात्सम्यक्कथ्यतांसर्वलोकःसंसाराब्धेर्येनसद्यःप्रमुच्येत् ५ ॥ सूतउवाच ॥ यदुक्तंब्रह्मणापूर्वंव्यासायामिततेजसे ॥ भृगु
णासोमकांतायतदेतद्वोब्रवीम्यहम् ६ ॥ व्यासउवाच ॥ पद्मयोनेवदविभोगणेशचरितंशुभम् ॥ यद्यद्रूपंसमास्थायययच्चकृतवान्विभुः ७ कृपावतात्वया
ब्रह्मन्ममवाक्यादुदीर्यताम् ॥ उपासनाखंडमिदंश्रुत्वातृप्तिंनयामिच ८ येनयेनावतारेणयंयंदैत्यंमहाबलम् ॥ अहनद्विकटस्तत्तत्कर्मास्यवक्तुमर्हसि ९ तदी
यंबालचरितंलीलानानाविधाअपि ॥ श्रुत्वात्वद्वदनांभोजान्मनोनिर्वृतिमेष्यति १० ॥ ॥ सूतउवाच ॥ ॥ श्रुत्वानानाविधान्प्रश्नानुवाचकमलासनः ॥ कथां
नानाविधांदिव्यांव्यासायपरिपृच्छते ११ ॥ ब्रह्मोवाच ॥ साधुपृष्टंत्वयाव्यासहृदयानंदकारिणा ॥ वक्तुर्विवर्द्धतेप्रीतिःसादरेश्रोतरिप्रभो १२ अवाच्यमपि
वक्तुंमेपुण्यश्लोकेभवेत्त्वयि ॥ शक्तिर्गरीयसीयद्वद्वक्तुःश्रोतरिकथ्यताम् १३ इदानींसर्वमाख्यास्येगणेशचरितंतव ॥ नानावतारानकृत्वासभूभारंहृतवान्वि
भुः १४ हत्वानानाविधान्दैत्यान्स्वस्थानेस्थापयत्सुरान् ॥ साधूनांपालनरतोदुष्टनिर्मूलनक्षमः १५ इतिहासंशृणुमुनेगणेशाख्यानसंश्रयम् ॥ विष्टरश्रव
साप्रोक्तंश्रवणात्सर्वकामदम् १६ ॥ विष्णुरुवाच ॥ युगेयुगेभिन्ननामागणेशोभिन्नवाहनः ॥ भिन्नकर्माभिन्नगुणोभिन्नदैत्यापहारकः १७ सिंहारूढोदशभु
जोकृतेनाम्नाविनायकः ॥ तेजोरूपीमहाकायःसर्वेषांवरदोवशी १८ त्रेतायुगेबर्हिरूढःषड्भुजोप्यर्जुनच्छविः ॥ मयूरेश्वरनाम्नाचविख्यातोभुवनत्रये १९ द्वा
परेरक्तवर्णोसावाखुरूढश्चतुर्भुजः ॥ गजाननइतिख्यातःपूजितःसुरमानवैः २० कलौतुधूम्रवर्णोसावश्वारूढोद्विहस्तवान् ॥ धूम्रकेतुरितिख्यातोम्लेच्छानीक
विनाशकृत् २१ यंयंसदैत्यंहंतिस्मतदिदानींब्रुवेमुने ॥ अंगदेशीयनगरेरौद्रकेतुरभूद्विजः २२ सर्वशास्त्रार्थतत्वज्ञोवेदवेदांगपारगः ॥ समोजीवेनाग्निहोत्रीसुर
गोद्विजपूजकः २३ ईश्वरोपासकोनित्यंसर्वागमविशारदः ॥ यस्यपत्नीशारदाख्यारूपलावण्यशोभिता २४ ईदृशीनाप्सरोमध्येनाप्तासुनायिकास्वपि ॥ य
द्वक्त्रनिर्जितश्चंद्रःश्रितयाक्षयमाप्यवान् २५ अनेकदिव्याभरणैर्भासयंतीधरातलम् ॥ यथानक्षत्रमालाभिर्भासतेव्योममंडलम् २६ कदाचित्सागर्भवतीशारदो
त्पललोचना ॥ शारदाशारदेमासिशरच्चंद्रसुशोभिते २७ शरीरतेजसायस्यानप्राज्ञायतकिंचन ॥ दोहदान्पूरयत्यस्यैषयंयंसाकामयत्सती २८ एवंसानवमेमा
सियमलौसुषुवेसुतौ । अतिकांततरौस्वांतनंदनावुभयोरुभौ २९ आजानुबाहूदीर्घाक्षौदृष्ट्वाप्रोवाचतत्पिता ॥ अद्याहमनृणोजातोधन्यमद्यतपोमम
३० वंशोधन्योजनुर्धन्यंयत्पुत्रौवीक्षितौमया ॥ अर्घ्याद्यैर्द्विजवर्यान्ससंपूज्यचगणाधिपम् ३१ स्वस्तिवाचंचकाराशुमातृपूजनपूर्वकम् ॥ भक्त्याभ्युदयि

कंश्राद्धंजातकर्माकरोद्द्विजैः ३२ संपूज्यब्राह्मणानभक्त्यादददौदानान्यनेकशः ॥ सुहृदोमानयामासवासोरत्नधनादिभिः ३३ नानावादित्रनिर्घोषैःशर्करांचगृहेगृहे ॥ दापयामासतांबूलंपुत्रजन्मसुनिर्वृतः ३४ यथाध्यानपरोयोगीप्राप्यसद्वस्त्वनुत्तमम् ॥ ततोदशाहेतीतेसावाकार्यद्विजपुंगवान् ३५ समर्च्यपरयाभक्त्याज्योतिःशास्त्रविशारदान् ॥ पप्रच्छचैतयोर्नामकिंकार्यंद्विजसत्तमाः ३६ अतीतानागतज्ञानाद्विचार्यकथयंतुमे ॥ तेचोचुःप्रणिधानेनदेवांतकनरांतकौ ३७ नामनीअनयोब्रह्मन्नन्वर्थेकुरुनोमते ॥ इतितद्वचनंश्रुत्वाद्विजभक्तिरतोद्विजः ३८ स्वशाखोक्तेनविधिनानामनीविदधेतथा ॥ ब्राह्मणान्भोजयामाससर्वांश्चनागरांस्तथा ३९ ववृधातेततस्तौतुमेरुमंदारसन्निभौ ॥ यथाकच्छाश्रितौतालौयथावंशांकुरौबलात् ४० यत्रयत्रपदन्यासंकुर्वातेतौयदृच्छया ॥ रसातलगतस्यात्रशेषस्यनमतेशिरः ४१ दृश्यतेमंडलंभानोस्तिष्ठतोःशिरसिस्थितम् ॥ पित्रोःप्रदर्शयंतौतौकौतुकानिष्टशंतयोः ४२ कदाचिन्नारदोकस्माद्रौद्रकेतुगृहंययौ ॥ श्रुत्वाकीर्तिंबालकयोःकौतुकादग्रहीत्सुतौ ४३ मूर्ध्न्याघ्रायांकमारोप्यपितरावववदत्तयोः ॥ ॥ नारदउवाच ॥ ॥ श्रुत्वाकीर्तिंसमायातःपुत्रयोरद्भुतांशुभाम् ४४ अग्रेद्भुततराचापिभविष्यत्यनयोर्मुने ॥ महद्भाग्यंतवमुनेयल्लब्धावीदृशौसुतौ ४५ दृष्ट्वान्योहर्षमायातिकावार्त्तास्वजनस्यह ॥ इत्याकर्ण्यशुभंवाक्यंनारदेनसमीरितं ४६ तावाहतुर्मुनिंनत्वापितरौनारदंतदा ॥ तवप्रसादाद्दीर्घायुःपुत्रयोरस्तुसांप्रतं ४७ अनुग्रहंकुरुतथाययैतौवीर्यवत्तरौ ॥ भवेतांलोकविख्यातौसर्वज्ञौरिपुदंडिनौ ४८ ॥ ॥ कउवाच ॥ ॥ रुद्रकेतोःशारदायाःपुत्रयोर्भक्तिमीक्ष्यसः ॥ पंचाक्षरींमहाविद्यामुभयोरुपदिष्टवान् ४९ उवाचपुत्रौकामारिरनयासंप्रसाद्यताम् ॥ मस्तकेभयहस्तंचस्थाप्यानुष्ठानमादिशत् ५० एवमुक्त्वातमामंत्र्यरौद्रकेतुंमहामुनिः ॥ ततस्त्वंतर्दधेब्रह्मन्नारदोदिव्यदर्शनः ५१ अंतर्हितेमुनौतौचावदतांपितरौमुदा ॥ अनुष्ठानायनावाज्ञांभवद्भ्यांसंप्रदीयतां ॥ ५२ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेनारदोपदेशोनामप्रथमोध्यायः ॥ १ ॥

॥ छ ॥ व्यासउवाच ॥ अनुष्ठानंकथंब्रह्मन्कुत्रवातौप्रचक्रतुः ॥ तत्सर्वंविस्तराद्ब्रूहिसादरंममपृच्छतः १ ब्रह्मोवाच ॥ साधुपृष्टंत्वयाव्याससर्वंतेकथयेधुना ॥ चक्रतुस्तावनुष्ठानंदेवांतकनरांतकौ २ पित्रोराज्ञांगृहीत्वैवजग्मतुर्गहनंवनं ॥ नसंचारोयत्रवायोर्नानाद्रुमलताकुलं ३ वापीकासारसहितंपुष्पपल्लवशोभितम् ॥ विशालगह्वरगिरिनानाप्रस्तरशालिच ४ तत्रस्थितावुभावेतौप्रारभेतांमहत्तपः ॥ एकांगुष्ठस्थितौचोभौतत्रतौस्थिरचेतसा ५ जपंतौनारदप्रोक्तांविद्यांपंचाक्षरींशुभां ॥ ध्यायंतौशंकरंदेवंसहस्रपरिवत्सरान् ६ निराहारौवायुभक्षौशरदांदिसहस्रकं ॥ सहस्रवर्षंपत्राणिपक्वानिजक्षतुश्चतौ ७ एवंदशसहस्राणिवर्षाणिजपतोर्ययुः ॥ विवृद्धेभूरितपसिततश्चतेजसातयोः ८ सूर्योभून्मंदकिरणोभस्मोद्धूलितदेहयोः ॥ व्याघ्राजिनेचाक्षमालेबिभ्रतोगजचर्मणी ९ पुपूजतुरुषःकालेशंभुंकुसुमपल्लवैः ॥ तस्मिंस्तपोवनेतातत्योरद्भुततेजसा १० जातिवैराःसुनिर्वैराआसन्सिंहगजादयः ॥ एवंतत्तपसातुष्टःपंचवक्त्रस्त्रिलोचनः ११ दशबाहुरपर्णांगोव्याघ्रचर्मशूलवान् ॥ बिभ्रच्छिरसिगंगांचडमरुंदक्षिणेकरे १२ फणिहारसमायुक्तोरुंडमालालसद्गलः ॥ वृ

षारूढोनीलकंठःप्रभयाभासितांबरः १३ नानालंकारसंयुक्तःश्वेतांगश्चंद्रशेखरः ॥ दृष्ट्वातौतादृशंदेवंहर्षमापतुरुत्तमम् १४ ननर्ततुरुभौपश्चात्साष्टांगंप्रणिपेत
तुः॥ बद्धांजलिपुटौतौतंदेवदेवंसमूचतुः १५धन्यौनौपितरौदेवजनुषीनयनेतपः॥धन्यंकुलंचदेहौचयतोदृष्टोमहेश्वरः १६ वेदांतागोचरोगम्योवाचोयस्मादुपावृ
ताः॥ आगमःकुंठितोयत्रषट्शास्त्राण्यथमानसम् १७सहस्रवदनःस्तोतुंनक्षमःसनकादयः ॥ नशक्ताःसर्वजगतःकर्तापातापहारकः १८ रंकंकरोतिराजानंराजानंरंक
मेवच ॥ सर्पंकरोतिवलयंवलयंसर्पमेवच ॥ मृतंकरोतिजीवंतंजीवंतंमृतमेवच १९ अधनंयोधनाढ्यंचधनाढ्यमधनंतथा ॥ श्रुत्वैवंसतयोर्वाणींप्रोवाचचउमाप
तिः२० साधुसाधुश्रुतंवाक्यामृतंवांसमुदामया ॥ तपसापरितुष्टोवांवृषारूढःसहोमया २१आगतोध्याननिष्ठाभ्यांयाचेतांवांछितान्वरान् ॥ कउवाच ॥ अंधकारे
रिदंवाक्यंश्रुत्वातौप्रोचतुस्तदा २२ हर्षगद्गदयावाचादेवांतकनरांतकौ ॥ यदितुष्टोसिदेवेशसर्वेशजगदीश्वर २३ यदित्वयावरादेयायद्यनुग्राह्यताचनौ ॥ तदादे
वमनुष्येंद्रयक्षरक्षःपिशाचतः २४ मानवोरगगंधर्वाप्सरःकिन्नरतोपिच ॥ सर्वशस्त्रास्त्रतोवन्यग्राम्यपश्वादितोपिच २५ ग्रहनक्षत्रभूतेभ्योदानवासुरतोपिच
नदिवानचरात्रौवाकृमिकीटादितोपिवा २६ मृत्युःकदापिनौस्यात्त्वत्प्रसादाज्जगदीश्वर ॥ त्रैलोक्यराज्यंनौयच्छभक्तिंतेचरणेपिच २७ ॥ कउवाच ॥ तौजगा
दततःशूलीप्रसन्नस्तपसातयोः ॥ समाकर्ण्यवरान्सर्वान्निजभक्तामरांघ्रिपः २८॥ शिवउवाच ॥ यद्यद्वांवांछितंसर्वंतत्तथानतदन्यथा ॥ अभयंसर्वतोमृत्युस्त्रै
लोक्येराज्यमेवच २९ लप्स्यथोलप्स्यतेचापिभवद्भ्यामंतकोभयं ॥ तयोःशीर्ष्णोरधाच्छंभुरभयंकरपंकजं ३० एवंप्राप्येप्सितान्कामानंतर्धानंययौशिवः॥
तावनुज्ञांबतोगृह्यतस्मिन्नंतर्हितेगृहं ३१ ईयतुस्तंपरिक्रम्यप्रणम्यचप्रपूज्यच ॥ हर्षेणपितरौदृष्ट्वानेमतुर्भृशहर्षितौ ३२ आलिंग्यपितरौतौतुनिजवृत्तांतमू
चतुः ॥ आघ्रायमस्तकंप्राहपितातौतनयौमुदा ३३ युवयोःसुवरप्राप्त्यादर्शनाच्छंकरस्यच ॥ पावितंजन्मचकुलमर्जितंसुमहद्यशः ३४ श्रुत्वोदंतंशीतला
निजातान्यंगानिमेसुतौ ॥ जाताचामृतपानस्यपरातृप्तिर्नसंशयः ३५ मात्राभ्यक्तौबुभुजतुस्ततोन्नंविविधंशुभम् ॥ पित्रासमंब्राह्मणैश्चवेदशास्त्रविशारदैः ३६
ततःसापूजयामासनानालंकारभूषणैः ॥ तौपुत्रौब्राह्मणांश्चैवतेभ्योगृह्याशिषोबहु ॥ विससर्जप्रणम्यैतान्व्यतीयतुरुभौनिशाम् ३७ ॥ इतिश्रीगणेश
पुराणेउत्तरखंडेद्वितीयोध्यायः २ ॥ छ ॥ कउवाच ॥ ततःप्रातःसमुत्थायगुरुंध्यात्वासभाज्यच ॥ स्मृत्वानत्वाखिलान्देवान्जग्मतुर्नैर्ऋतींदिशम् १
कृत्वामूत्रपुरीषेतुदंतजिह्वाविशोध्यच ॥ स्नात्वासंध्यामुपास्यैतावीष्टान्देवान्पुपूजतुः २ संपूज्यब्राह्मणान्भक्त्याददतुर्धनवाससी ॥ आज्यमालोक्यकांस्य
स्थंददतुर्ब्राह्मणायतत् ३ सदक्षिणंसमालोक्यदर्पणंनिर्मलंतथा ॥ परिधायचवासांसिविचारंचक्रतुस्तुतौ ४ ॥ ज्येष्ठउवाच ॥ अहंविजेष्येस्वर्लोकान्वर
दानान्महेशितुः ॥ मृत्युलोकंचपातालंजयत्वंतत्प्रसादतः ५ ॥ कउवाच ॥ ॥ एवंतौनिश्चयंकृत्वाविलोक्यशुभवासरम् ॥ एकोययौस्वर्गलोकंवायुवेगस

१ व्यतीयुस्तेनिशांसुखमितिपाठः ।

मोजवे ६ यातोमरावतींतत्रबभंजाराममंडलम् ॥ बध्वापरिकरंतस्थौशक्रस्यपुरतोबली ७ कोलाहलोमहानासीद्देवानांधावतांभृशम् ॥ कोयंकोयंकथंया
तोकस्मादिंद्रसमीपतः ८ घ्नंतुबध्नंतुसुदृढंदूरीकुर्वंत्वसुंनरम् ॥ इतितेधावमानास्तेसर्वेतेननिराकृताः ९ उड्डीयोड्डीयसहसानिपत्यचपुनःपुनः ॥ तदुड्डानान्निप
तितास्त्रीगर्भाश्चमहाद्रुमाः १० कंपितापृथिवीसर्वासपर्वतवनाकरा ॥ तदंगदीप्तास्थामास्तेजाताविबुधसत्तमाः ११ यथामयजितोमत्यौयातिसद्योविवर्णताम् ॥
तद्वत्तद्दर्शनात्सर्वेविवर्णत्वंगताःसुराः १२ इंद्रोपिविह्वलोजातोविवर्णश्चतदामुने ॥ केचिद्दशदिशोयाताःसन्नद्धाःकेपिचाभवन् १३ केचित्तंशरणंयाताअत्यधी
राःसुराधमाः ॥ ततइंद्रश्चतुर्देतंवज्रहस्तःसमारुहत् १४ जगर्जसुमहाभीमंचकंपेभुवनत्रयम् ॥ किंपश्यतेत्युवाचैनान्सन्नद्धान्सुरसत्तमान् १५पौरुषंक्कगतंतावद्या
वदत्रागतोसुरः ॥ ततस्तेपुरतोजग्मुःसंग्रामायकृतोद्यमाः १६ रणोत्सुकान्सुरान्प्रेक्ष्यप्रोचेदेवांतकोहरिम् ॥ किमर्थंश्रमसेशक्रविचारयवरान्मम १७ अंतको
भयसंत्रस्तःपलायनपरोगतः ॥ तृणप्रायंतुतेवज्रंमन्येहंशंकराज्ञया १८ मच्छ्वासात्सर्वतोयांतिदेवास्त्वद्दृष्टिवर्तिनः ॥ श्रूयतांमद्वचःशक्रसाम्रंवदीयतांमम १९
पदानिस्वानिसर्वाणिस्थीयतांयत्रकुत्रचित् ॥ अन्यथासकलंहित्वावृथामृत्युंप्रयास्यसि २० देवांतकोतिमन्नामनजानासिकथंसुर ॥ कउवाच ॥ ॥ इतितद्व
चनंश्रुत्वाबिभिदेहृदयंहरेः २१ शक्रस्यचमुखादग्निःप्रबलोनिर्गतोबहिः ॥ अतितप्तेयथातैलेजलपाताद्यथाभवेत् २२ ततऊचेमहेंद्रस्तंक्रोधावेशसमन्वितः ॥
त्वादृशाःकतिकतिननिहतादानवामया २३ त्वमिदानींवराद्दर्वादागतोस्यसुराधम ॥ वज्रपाताद्धतोनूनंधरण्यांनिपतिष्यसि २४ अन्यपदप्रधानोहिसमासो
नाम्नितेबली ॥ ततःशक्रोहनत्तंतुवज्रेणदृढमुष्टिना २५ वज्रंतच्छतधाभिन्नमामभांडंच्युतंयथा ॥ देवांतकोच्छिन्नरोमातिष्ठदाजौनिराकुलः २६ त
तोसौमुष्टिनापृष्ठेजघानसुरसत्तमम् ॥ तेनासौपतितोभूमौवाताहतइवद्रुमः २७ पौरुषंतस्यवुध्वैवपपालबलसूदनः ॥ अधावद्देगतःपृष्ठेसिंहोमृगगणानिव
२८ व्यादायभीषणंवक्त्रंपलतंतमुवाचसः ॥ पलायसेकिमधुनावल्गनाक्वगतातव २९ संमुखोभवशक्रत्वंसर्वैर्देवगणैःसह ॥ असंमुखंपलायंतंनहंति
वीरसत्तमः ३० स्वयंतत्पुरतोभूत्वामारयामासतान्सुरान् ॥ मुखेचपेटिकांदत्वागतासूंस्तानपातयत् ३१ भ्रामयित्वाततश्चैकंपोथयामासभूतले ॥
लत्तयामुष्टिनाकांश्चित्कूर्पराघाततोपरान् ३२ कंठेगृहीत्प्राणघातंचकर्षचापरान्सुरान् ॥ केषांचिज्जानुनीभित्त्वाकेषांचिच्चभुजावपि ॥ ऊरुयुग्मंचकेषांचि
त्क्षिपद्दूरतोपितान् ३३ उत्तानाःपतिताःकेचित्केचिन्न्युब्जास्तथासुराः ॥ केचिन्मुखप्रहारंचचक्रुर्गंतुमनीश्वराः ३४ केचित्तुतर्कयामासुर्मनसादुःखितेनच ॥
अकस्मात्प्रलयंकिंनुप्रारभज्जगदीश्वरः ३५ सुविशीर्णाःसुराःसर्वेगजाःसिंहार्दितायथा ॥ ततःस्वयंजगर्जाशुजयशालीसुरांतकः ३६ यथामेघेषुगर्जत्सुगर्जंतेबर्हि
मंडली ॥ भास्करींभास्करस्त्यक्त्वायातोदूरतरंततः ३७ सर्वेपिपपलुर्देवास्त्यक्त्वास्वस्वपदानिच ॥ ततःस्वयंशक्रपदेतस्थौनिर्भयचेतसा ३८ सर्वेसुरागता
हैमंगिरिगह्वरमुत्तमं ॥ कंदमूलफलान्यादान्नियुर्दुःखेनवासरान् ३९ ततोगुर्भूतलाद्दिग्भ्योसंख्येयादैत्यदानवाः ॥ चक्रुर्नानाविधैर्द्रव्यैर्नानातीर्थाहृतैर्जलैः ४०

नानर्षिमंत्र निचयैरभिषेकंसुरांतके ॥ शंखभेरीमृदंगादिदुंदुभीनांचनिस्वनैः ४१ ऊचुस्तंस्वामिनंदैत्यास्त्वाद्यदैत्यकुलेनच ॥ जातोवाभवितावापिभवानाज्ञां
करोतुनः ४२ ॥ ॥ कउवाच ॥ ॥ एवमेकाकिनातेनजिताःशक्रपुरोगमाः ॥ राज्यंचकारदेवानामरक्षच्चामरावतीं ४३ ततोगात्सत्यलोकंसदैत्यकोटिसमन्वि
तः ॥ ब्रह्मापिप्रययौतत्रयत्रदेवाःपुरागताः ४४ तत्रैकंनायकंस्थाप्यवैकुंठमगमद्वशः ॥ ब्रह्मणोयानमारुह्यकदाचिच्छाक्रमेवच ४५ लक्ष्म्यासहततःपूर्वंक्षीरा
ब्धिमगमद्धरिः ॥ अत्याप्तंपरमंदैत्यंतत्रस्थाप्यव्यचारयत् ४६ किंमयानाजितंदैत्यान्ब्रुवंतुयामितत्रवै ॥ तेब्रुवन्नैवशेषोस्तिदेवानांविषयःक्वचित् ४७ लोकपा
लपदेस्थाप्यनानादैत्यान्जनस्यच ॥ निरातंकोनिरुद्योगःसंरक्षस्वामरावतीं ४८ इत्यमात्यवचःश्रुत्वामुदापरमयायुतः ॥ देवांतकश्चकारासौतद्वाक्यंसम्यगीरि
तम् ४९ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेतृतीयोऽध्यायः ॥ ३ ॥ ॥ व्यासउवाच ॥ ॥ देवांतकस्यचरितंश्रुतंभक्त्यातवाननात् ॥ इदानींवदमेब्रह्मन्नरांतक
विचेष्टितम् १ ॥ कउवाच ॥ शृणुष्वावहितोब्रह्मन्सम्यक्सत्यवतीसुत ॥ कथयिष्येधुनातत्तुदृष्टंज्ञातंपरमादरम् २ नरांतकोमहींगत्वानानादैत्यगणान्वितः ॥
चकारकदनंराज्ञांमारयामासकांश्चन ३ सर्वेतंशरणंयाताहष्ट्वाराज्ञोहतान्बहून् ॥ यद्यत्सैन्यंपश्यतिस्मतत्तद्धातिदिशोदश ४ यथाज्ञानेनचाज्ञानंयथासूर्यो
दयेतमः ॥ एवंभूमंडलंसर्ववशेचक्रेनरांतकः ५ येतुतंशरणंयातास्तदीयस्वात्पदेस्थिताः ॥ येहतास्तत्सुतास्तेनस्थापिताःकरदाःकृताः ६ येतुयुद्धोद्यताभूपा
स्तेपिसेवाकृतोभवन् ॥ तेषांपदेषुदैत्यान्सोस्थापयत्स्वस्यसंमतान् ७ पालयामासपृथिवींसमुद्रवलयांकितां ॥ आतंकभारसंतप्तादेवदानवकिन्नराः ८ मुन
योयुर्गिरिगुहांयज्ञस्वाध्यायवर्जिताः ॥ वेदत्यागस्यदोषेणमनसाचाभ्यसन्श्रुतीः ९ आतंकाक्रांतमनसोनतपस्यांचचक्रिरे ॥ ततोनरांतकोदैत्यान्नागलोकजि
गीषया १० प्रास्थापयत्सुबलिनोनानामायाविशारदान् ॥ तेतार्क्ष्यरूपाःसंयाताबभक्षुरुरगोत्तमान् ११ असंख्याताभक्षितास्तैस्ततःशेषोययौपुरः ॥
मुक्ताफलानिरत्नानिसहनागांगनायुतः ॥ १२ ॥ अनेकदिव्यवस्त्राणिप्रगृह्यरुचिराणिसः ॥ तानिसर्वाणिदत्त्वैवसामचक्रेसुरैःसह ॥ १३ ॥ शासनंपरिज
ग्राहनरांतकसमीरितं ॥ करभारंवार्षिकंसस्वीचक्रेनंतशीर्षकः १४ तथापिदैत्यस्तत्राप्यस्थापयद्दैत्यपुंगवं ॥ अनेकदैत्यसहितंसर्वाध्यक्षंरसातले १५ आज्ञा
पयामासचतंतत्रस्थंसनरांतकः ॥ यदैवविकृतिंपश्येरुरगाणांतदैवनः १६ दूतमुखात्सूचयस्वहनिष्यामोखिलानहीन् ॥ इत्थंशिक्षाप्यतंतेतुदैत्याःसर्वे
नरांतकं १७ मृत्युलोकेस्थितंयातावृत्तांतंसर्वमब्रुवन् ॥ नरांतकःसंदाप्रैषीन्मृत्युपाताललोकजं १८ देवांतकायवृत्तांतंसर्वस्ययमनुष्ठितम् ॥ उपायनानिसर्वा
णिस्वर्लोकेदुर्लभानिच १९ देवांतकोथप्रैषीत्तंदुर्लभंयच्चभूतले ॥ एवंत्रैलोक्यराज्यंतौचक्रातेपरयामुदा २० ॥ ॥ सोमकांतउवाच ॥ ॥ कथमेतौहतौ
केनरूपेणतद्वदस्वमे ॥ केनास्त्रेणचशस्त्रेणअवतारेणकेनच २१ ॥ ॥ भृगुरुवाच ॥ ॥ एवमेवकृतप्रश्नोव्यासमूचेचतुर्मुखः ॥ यांकथांपरयाप्रीत्याताामेव
त्वांब्रवीम्यहम् ॥ २२ ॥ ॥ कउवाच ॥ ॥ दुर्जयौवरगर्वीतौयेनरूपेणघातितौ ॥ येनावतारेणमुनेयेनशस्त्रेणचास्त्रतः २३ संप्राप्ताब्रह्मणालोकादेवा

श्वस्वपदेस्थिताः ॥ तत्सर्वंकथयिष्यामिसादरंश्रूयतांमुने २४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तर०चतुर्थोऽध्यायः ४ ॥ ॥ ब्रह्मोवाच ॥ ममैवमानसःपुत्रः
कश्यपोबुद्धिमत्तरः ॥ पुण्यवान्धर्मशीलश्चतपस्वीविजितेंद्रियः १ अतिकारुणिकोलोकेदुःखशोकावमर्दनः ॥ वर्तमानंभूतभाविजानातिमीलितेक्षणः २ मन
सासृष्टिसंहारकर्त्तावेदांतपारगः ॥ सर्वशास्त्रार्थतत्त्वज्ञःसमलोष्टाश्मकांचनः ३ अदितिर्यस्यज्येष्ठासीत्पत्नीनाम्नातिवल्लभा ॥ सर्वलक्षणसंपूर्णानुपमासात्रिवि
ष्टपे ४ त्रिलोकींभस्मसात्कर्तुंपातिव्रत्येनतेजसा ॥ शेषोयस्यगुणान्वक्तुंनेशोवक्त्रसहस्रकैः ५ सेवंतेयांसदाचाष्टनायिकागुणलब्धये ॥ शक्रादिसुरवृंदानिजन
यामासयानघा ६ मूलप्रकृतिरूपासाताहक्रूपंसमाश्रिता ॥ साकदाचित्स्वकंकांतंमुदितंमुदिताब्रवीत् ७ स्वामिन्विज्ञप्तुमिच्छामिकृपांकृत्वावदस्वतत् ८
पतिंविनानचान्यास्तिगतिःसद्योषितांप्रभो ॥ कश्यपउवाच ॥ सम्यगुक्तंत्वयाभद्रेममप्रीतिकरेनघे ९ तवब्रवीमिसमापृच्छयत्तेमनसिवर्त्तते ॥ अदितिरुवाच
इंद्रादयोदेवगणाःस्वस्यपुत्रत्वमागताः १० परमात्माचिदानंदईश्वरोयःपरात्परः ॥ यदास्वपुत्रतामेष्यत्तदामेस्यात्स्थिरंमनः ११ तस्यसेवांकर्तुमीहेउपायं
तत्रमेवद ॥ येनसंपुत्रतामेष्येत्कृतकृत्यंमनोभवेत् १२ ॥ मुनिरुवाच ॥ साधुप्रोक्तंमहाभागेवचनंपरितोषकं ॥ यथाजलंतृषार्त्तस्यक्षुधितस्यचभोजनम् १३
तथामेवचनंजातंतवदेविसुतोषकृत् ॥विनापुण्यंकथंयायात्परमात्मास्वपुत्रतां १४ तत्रोपायंवदेतंचत्वंहृदिकुरुस्थिरंप्रिये ॥ योगोचरःश्रुतीनांचब्रह्मादीनामगोचरः
१५ निर्गुणोनिरहंकारोनिरीहोनिर्विकल्पकः ॥ योमायाविषयोमायानर्तकोमायिमोहनः १६ मायातीतोपिमायायाआधारःकारणातिगः ॥ मायाविस्तारकारीच
कार्यकारणकारणं १७ कथंसाकारतांगच्छेदनुष्ठानंविनाप्रिये ॥ अदितिरुवाच ॥ कस्यध्यानंकथंकार्यंअनुष्ठानंमयाधुना १८ केनमंत्रेणवाकुर्वेतद्वदस्वमहामुने ॥
कउवाच ॥ एवंपृष्टोमुनिस्तस्यैनाममंत्रंसमादिशत् १९ पंचाक्षरंचतुर्थ्यंतमोंकारपल्लवान्वितं ॥ नमोंतंध्यानसहितंन्यासदैवतसंयुतं २० पुरश्चरणमार्गंचसर्वंतस्यै
न्यवेदयत् ॥ ततःसामुदिताब्रह्मन्प्रणिपातपुरःसरं २१ कश्यपंनिजभर्त्तारंपूजयामाससादरं ॥ तदनुज्ञांसमादायजगामतपसेवनं २२ स्नातापवित्रवसनाध्यायंती
स्थिरचेतसा ॥ विनायकंदेवदेवंन्यासंकृत्वायथाविधि २३ स्थानेद्रुमलताकीर्णेनिर्वातेनिरुपद्रवे ॥ अदितिर्दृढकरणाशुभासनपरिग्रहा २४ जजापपरमंमंत्रंस्म
रंतीसाविनायकं ॥ अनन्यवृत्तिमनसासाक्षात्कारमभीप्सती २५ निराहारावायुभक्ष्याजपध्यानपरायणा ॥ तस्यास्तपःप्रभावेननिर्वैराःप्राणिनोभवन् २६
धर्षितादेवताःसर्वाःकिमियंसाधयिष्यति ॥ एवंवर्षशतंतेपेऽदितिःसापरमंतपः २७ क्लेशान्बहुविधांस्तस्याद्दृष्ट्वादेवोविनायकः ॥ स्त्रीभावेचतथाधैर्यमावि
रासीद्विनायकः २८ तेजोराशिःपुरस्तस्याःसूर्यकोटिसमप्रभः ॥ गजाननोदशभुजोकुंडलाभ्यांविराजितः २९ कामातिसुंदरतनुःसिद्धिबुद्धिसमायु
तः ॥ मुक्तामालांचपरशुंबिभ्रद्योमेवपुष्पजम् ३० कांचनंकटिसूत्रंचातिलकंमृगनाभिजम् ॥ उरगंनाभिदेशेतुदिव्यांबरविराजितम् ३१ महोराशिंपुरोदृ
ष्ट्वाचकंपेत्वादितिर्भृशम् ॥ निमील्यनयनेमूर्छामियायान्यपतद्भुवि ३२ जपंध्यानंविसस्मारचिंतयामासचेतसा ॥ किमागतंममपुरोभाग्यंकिमिदमद्भुतम् ३३

विस्मृताहंजपंध्यानकिंवायंपरमेश्वरः ॥ वरंदातुंसमायातोमहसाभासयन्दिशः ३४ एवंसाविह्वलायावत्तावद्देवोजगादताम् ॥ ॥ विनायकउवाच ॥ ॥ सो
हंदेविदिवारात्रौयंध्यायासिचचेतसा ३५ दृष्ट्वानिष्ठांतपोघोरंवरंदातुमुपस्थितः ॥ वरयस्ववरान्मत्तोयान्यान्कामयसेहृदा ३६ तांस्तान्दास्यामिसंतु
ष्टस्तपसानेनसुव्रते ॥ ॥ कउवाच ॥ ॥ तदीयंवाक्यमाकर्ण्यस्वस्थाजाताऽदितिस्तदा ३७ बद्धांजलिपुटादीनाप्रणनामविनायकम् ॥ अवदन्नतदादेवम
तर्क्यंमनसासदा ३८ ॥ ॥ अदितिरुवाच ॥ ॥ त्वमेवसृजसेविश्वंपासिहंस्यखिलेश्वरः ॥ नित्योनिरंजनोदेवोनिर्गुणोनिरहंकृतिः ३९ नानारूपधरो
नित्योयोगगम्योखिलार्थकृत् ॥ इदानींसौम्यरूपेणवरंदेहिविनायक ४० यदितुष्टोसिदेवेशयदिदेयोवरोमम ॥ तदामेपुत्रतांयाहिततोमेकृतकृत्यता ४१ तत
स्तेसेवनंयास्येसाधूनांपालनंभवेत् ॥ दुष्टानांनिधनंदेवलोकानांकृतकृत्यता ४२ ॥ ॥ विनायकउवाच ॥ ॥ अहंतेपुत्रतांयास्येपास्येसाधूंश्चकंटकान् ॥ हानि
ष्येसकलांवांछांपूरयिष्येतवापिच ४३ ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वांतर्दधेसौदेवदेवोविनायकः ॥ सादितिःकश्यपंगत्वासर्ववृत्तांतमब्रवीत् ४४ ॥ अदि
तिरुवाच ॥ तवाज्ञयागतारण्यंतपस्तप्तंमहत्तरम् ॥ वरंदातुंमहोरूपआगतोसौगजाननः ४५ दृष्ट्वास्वरूपंभीतास्मिततोप्रार्थिविनायकः ॥ तेननानाविधा
दत्तावरामेमुनिसत्तम ४६ यास्येपुत्रत्वमित्युक्त्वांतर्दधेसौविनायकः ॥ सिद्धकार्यातवबलादागतास्वाश्रमंमुने ४७ ॥ कउवाच ॥ इतितस्यावचःश्रुत्वावर
दानंसुधोपमम् ॥ जहर्षमुनिमुख्योसौतयासहमुनीश्वर ४८ रेमातेपरमप्रीत्याअमृतादिवनिर्वृतौ ४९ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेपंचमोऽध्यायः ॥ ५ ॥
भृगुरुवाच ॥ अथसामेदिनीदुष्टदैत्यभारप्रपीडिता ॥ वेषांतरंसमास्थायजगामकमलासनम् १ दीनाहस्तांजलिंबद्ध्वाजगादपद्मसंभवम् ॥ भूमिरुवाच ॥
जाताहंमलिनादीनाहीनायज्ञव्रतादिभिः २ स्थानभ्रष्टास्तथादेवाःसेंद्राःसर्षिगणाविधे ॥ अतिभारातिसंतप्ताकंत्वाहंशरणंगता ३ येनोपायेनदुष्टानांनाशः
स्यात्तद्विधीयताम् ॥ नोचेद्रसातलंयास्येसपर्वतजनाकुला ४ ॥ भृगुरुवाच ॥ इतिवाक्यंधरित्र्याःसश्रुत्वाकस्तामथाब्रवीत् ॥ अहंसर्वेलोकपालाइंद्राद्यादे
वतागणाः ५ ऋषयोपिस्वधास्वाहारहितादुःखिताभृशम् ॥ भ्रष्टस्थानाभ्रष्टमंत्राभ्रष्टाचारायथालये ६ सर्वेवयंप्रार्थयामोदेवदेवंविनायकम् ॥ ब्रह्मरू
पंनिराकारंजगत्करणकारणम् ७ यदासाकारतांयायाल्लोकानांदैवयोगतः ॥ तदाशंसर्वलोकानांस्यात्तवापिवसुंधरे ८ ॥ ॥ भृगुरुवाच ॥ ॥ इत्युक्त्वातुष्टु
वुर्देवंब्रह्माद्यर्षिगणामुदा ॥ निराकारंचसाकारंबद्धांजलिपुटास्तदा ९ नमोनमस्तेखिललोकनाथनमोनमस्तेखिललोकधामन् ॥ नमोनमस्तेखिललो
ककारिन्नमोनमस्तेखिललोकहारिन् १० नमोनमस्तेसुरशत्रुनाशनमोनमस्तेत्दृतभक्तपाश ॥ नमोनमस्तेनिजभक्तपोषनमोनमस्तेलघुभक्तितोष ११
निराकृतेनित्यनिरस्तमायपरात्परब्रह्ममयस्वरूप ॥ क्षराक्षरातीतगुणैर्विहीनदीनानुकंपिन्भगवन्नमस्ते १२ निरामयायाखिलकामपूरनिरंजनायाखि
लदैत्यदारिन् ॥ नित्यायसत्यायपरोपकारिन्समायसर्वत्रनमोनमस्ते १३ एवंस्तुत्वापुनःप्रोचुर्देवदेवंविनायकम् ॥ तेसर्वेमुनयोदेवाविह्वलाभृशदुःखिताः

१४ हाहाभूतंजगत्सर्वंस्वधास्वाहाविवर्जितं ॥ वयंमेरुगुहांयाताआरण्याःपशवोयथा १५ अतोमुंत्वंमहादैत्यंजहिविश्वंभराधुना ॥ एवंस्तु
वत्सुसर्वेषुप्राहवाणीनभोगता १६ कश्यपस्यगृहेदेवोवतरिष्यतिसांप्रतं ॥ करिष्यत्यद्भुतंकर्मपदानिवःप्रदास्यति १७ दुष्टानांनिधनंचैवसाधूनांपालनंत
था ॥ ॥ भृगुरुवाच ॥ ॥ एवमाकर्ण्यतांवाचंब्रह्माप्रोवाचमोदिनीम् ॥ कउवाच ॥ स्वस्थाभवधरेदेविनभोवाणीविनिश्चयात् ॥ देवाःसर्वेमृत्युलोकेवतारि
ष्यंतित्वत्कृते ॥ हरिष्यतिमहाभारमवतीर्णोविनायकः १९ ॥ ॥ भृगुरुवाच ॥ इत्युक्तासातदातेनब्रह्मणाहृष्टमानसा ॥ स्वस्थानमगमत्साथस्वस्थचित्ताध
रातदा २० ततोबहुतिथेकालेदितिःसागर्भमादधे ॥ तेजोतिववृधेतस्यादिनेदिनेयथाशशी २१ संपूर्णेनवमेमासेसुषुवेपुत्रमुत्तमम् ॥ ब्रह्मवाक्यादभूत्ख्या
तोनाम्नाकश्यपनंदनः २२ दशभुजोबहुबलःकर्णकुंडलमंडितः ॥ कस्तूरीविलसद्भालोमुकुटभ्राजिमस्तकः २३ सिद्धिबुद्धियुतःकंठेरत्नमालाविभूषितः ॥ चिं
तामणिलसद्वक्षाजपापुष्पारुणाधरः २४ उन्नसोभ्रुकुटीचारुललाटोदंतदीप्तिमान् ॥ देहकांत्याहततमादिव्यांबरयुतःशुभः २५ एतादृशंनिरीक्ष्यैनंबालंतात्पित
रौतदा ॥ तत्तेजसाहतदृशौकिंचिद्द्रष्टुंनशेकतुः २६ बलादुन्मील्यनयनेदृष्ट्वातद्रूपमुत्तमम् ॥ ननंदतुरुभौपश्चाद्बालस्ताविदमब्रवीत् २७ बालउवाच ॥ मात
स्त्वयायतःपूर्वंसहस्रपरिवत्सरं ॥ येनरूपेणसंध्यातस्तनयत्वेनयाचितः २८ तदानानावरान्दत्वापुत्रत्वंतेगतोधुना ॥ सोहंभूभारहरणंविधास्येसेवनंद्वयोः २९
ब्रह्मादीनांपदप्राप्तिर्दुष्टदैत्यविनाशनम् ॥ भृगुरुवाच ॥ इत्थमाकर्ण्यतद्वाक्यंसानंदाश्रूबभूवतुः ३० चक्रवाकौयथावीक्ष्यनभसीवदिवाकरम् ॥ ऊचतुस्तंत
दापुण्यमद्भुतंनौसमुद्यतम् ३१ येननौपुत्रतांयातःपरमात्माविनायकः ॥ धन्यंकुलंनौपितरौजनुषीज्ञानमेवच ३२ यतश्चराचरगुरुःसर्वसाक्षीनिराकृतिः ॥ नि
त्यानंदमयःसत्यःपुत्रत्वमगमच्छुभम् ३३ यस्मिंश्चराचरंप्रोतंसूत्रेमणिगणाइव ॥ यःसर्वगःसर्ववेत्तासएवत्वंनसंशयः ३४ इदंरूपंपरंदिव्यमुपसंहरसांप्रतम् ॥
प्राकृतंरूपमास्थायक्रीडस्वकुहकोयथा ३५ यदायद्रूपकृत्यंतेतदातत्त्वंविधास्यसि ॥ इत्थमाकर्ण्यतद्वाक्यंपिदधेरूपमात्मनः ३६ द्विभुजःप्राकृतो
बालोरुरोदधरणीतले ॥ रसातलंचगगनंनादयन्विदिशोदिशः ३७ तच्छब्दश्रवणाद्वंध्याजातागर्भवतीद्रुमाः ॥ नीरसाःसरसाःशक्रोजहर्षदेवतागणैः ३८
भयंबभूवदैत्यानांववृधेधरणीतदा ॥ चकारजातकर्मास्यकश्यपोब्राह्मणैःसह ३९ प्राशयित्वामधुघृतंपस्पर्शमंत्रतश्चतम् ॥ अपाययत्स्तनौबालं
मंत्रपाठपुरःसरं ४० छित्त्वानालंतुसंक्षाल्यबालंप्रास्वापयच्चसा ॥ ददौदानान्यनेकानिब्राह्मणेभ्योमुनिस्तदा ४१ अदापयत्प्रतिगृहंसप्तमेदिवसेदितिः ॥
इक्षुसारंपंचमेतुवायनानिमहामुदा ४२ महोत्कटेतिनामास्यचक्रएकादशेपिता ॥ बालोपिववृधेशीघ्रंशुक्लपक्षेयथाशशी ४३ सर्वेभ्यउत्कटोय
स्मान्महोत्कटइतिस्मृतः ४४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेविनायकाविर्भावोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ ॥ वसि
ष्ठवामदेवाद्यामुनयस्तनयंतदा ॥ जातंमहोत्कटंश्रुत्वादर्शनायप्रतस्थिरे १ यातागृहंकश्यपस्यतेनार्घपरिपूजिताः ॥ विष्टरंपाद्यमर्घ्यंचदत्वागांचापिदक्षि

णाम् २ बद्धांजलिपुटोऽवोचद्धन्योहंपितरौतपः ॥ यदिंद्रहरिपूज्यंवःपादपद्मंमयेक्षितम् ३ कंचिदागमनेहेतुंज्ञातुमीहेतपोधनाः ॥ तेषांमध्येश्रेष्ठत
मोवसिष्ठःप्राहतंमुनिम् ४ ॥ ॥ वसिष्ठउवाच ॥ ॥ श्रुतस्तेतनयोब्रह्मन्नारदात्सुमहोत्कटः ॥ तंद्रष्टुंत्वांचसंप्राप्तानान्यत्किंचित्प्रयोजनम् ५ ॥ ॥ क
उवाच ॥ तत्कालंसादितिर्बालंद्रष्टुंतेषामथानयत् ॥ उत्कटान्येषकर्माणिकरिष्यतिमहोत्कटः ६ द्वात्रिंशल्लक्षणयुतोवसिष्ठःप्राहतंमुनिम् ॥ अवतीर्णोमहा
तेजाःपरमात्माविनायकः ७ अनेकान्यस्यविघ्नानिभविष्यंतिमहामुने ॥ तानिसर्वाणिनश्यंतिरक्षणीयःक्षणेक्षणे ८ यतोस्यरक्तौचरणौध्वजांकुशविरा
जितौ ॥ ततःसंपूजयामासमुनिःकश्यपनंदनम् ९ प्रार्थयामाससर्वैस्तंभूभारहरणंकुरु ॥ साधूनांपालनंदेवदुष्टदानवघातनम् १० तेसर्वेमुनयोजग्मुस्तंप्र
णम्ययथागतम् ॥ ततःसख्यातिमगमन्नाम्नाकश्यनंदनः ११ एकस्मिन्दिवसेप्रातःस्नातुंयातेमुनौबहिः ॥ अस्वापयत्स्वतनयमदितिर्गृहमाययौ १२ च
कारयज्ञसंभारांस्तावदेकानिशाचरी ॥ विरजेत्याभिविख्यातविकरालेक्षणानना १३ हलदंतादीर्घनासापादचूर्णितभूधरा ॥ दीर्घस्तनीललज्जिह्वागोपुर
स्पर्द्धिसद्मगा १४ जग्राहबालकंसातुसर्वभक्ष्यानिशाचरी ॥ क्षुधिताभक्षयच्छीघ्रंपक्वंराआफलंयथा १५ शनैर्जगामगगनंजलंपातुंभुवंययौ ॥ पपौजलंबहुतरं
पपातपृथुलोदरा १६ मूर्छामवापमहतींमर्पदष्टोनरोयथा ॥ लुलोलधरणीपृष्ठेमहाशूलवतीयथा १७ मुंचमुंचेतिजल्पंतीपदंगंतुमथाक्षमा ॥ हाहाकारंप्रकु
र्वतीघ्नतीवक्षःशिरोमुखम् १८ तावद्देहांतरेतस्यावव्रधेमुनिनंदनः ॥ विदार्यजठरंतस्यावक्षस्येवास्थितोभवत् १९ यथाजालंविदार्यैवबहिर्यातिमहाझषः ॥
सातदैवमाराबकृत्वाप्राणान्जहौखला २० चूर्णयामहासदेहेनपंचयोजनगान्द्रुमान् ॥ विरजाविरजास्तेनप्रापितानिजधामसा २१ दृष्टेस्पृष्टेकृपासिंधौजगदी
शेकथंभवेत् ॥ ज्ञानदेमोक्षदेनॄणामावृत्तिर्भवसागरे २२ अदितिर्गृहकार्याणिसंपाद्यबहिरागता ॥ नददर्शतदाबालंरुरोदभृशदुःखिता २३ गृहेगृहेनिरीक्ष्यै
वनालभत्क्वापिबालकम् ॥ ततोपतद्धरापृष्ठेहाहाकारंप्रकुर्वती २४ अन्याश्चरुरुदुस्तस्याःश्रुत्वारोदनमुच्चकैः ॥ आश्चर्यंपरमंचक्रुःसर्वलोकाभयातुराः २५
साशुष्कवदनादीनाविललापमुहुर्मुहुः ॥ मुखंचसांजनेनेत्रेमृजंत्यश्रुजलाकुले २६ कल्पद्रुमइवप्राप्तःकेननीतोममार्भकः ॥ वरदानंकथंतस्यवृथास्याज्जगदी
शितुः २७ दत्तंनिधानंदैवेनकेननीतंदुरात्मना ॥ कथंभूदतराजाताल्ब्धाविज्ञानसागरा २८ कथंदरिद्राजाताहंलब्ध्वाकांचनपर्वतम् ॥ एवंविलपतीवक्षोघ्न
तीसाप्याननंशिरः २९ आश्रमाद्बहिरागच्छत्क्रोशमात्रंनिशाचरीम् ॥ ददर्शपतितांतस्यावक्षस्येवचतंशिशुम् ३० क्रीडंतंहास्यवदनंप्रबुद्धमिवकामिनम् ॥
धावमानातमादायालिलिंगचचुचुंबच ३१ उवाचानंदपूर्णासामहद्भाग्यंममाधुना ॥ यद्राक्षसीशयान्मुक्तोबालकोदैवयोगतः ३२ ययौसबालास्नात्वासानि
जमाश्रममंडलम् ॥ वृत्तांतंसर्वमाचष्टेश्रुत्वासोप्याहकश्यपः ३३ भूतभाविविशेषज्ञैरुक्तंयन्मुनिभिःप्रिये ॥ तदेतत्सत्यमभवत्तदाशीर्वचनादयम् ३४
जीवितोखिलभक्ष्यायाबालकःपुण्ययोगतः ॥ ततोरक्षांचकारासौददौदानान्यनेकशः ३५ शांतिकंकारयामासस्वस्तिवाचनपूर्वकम् ॥ क्षणमात्रंनहातव्यो

दितिमेवंसमादिशत् ३६ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेविरजाराक्षसीमोक्षणंनामसप्तमोध्यायः ॥ ७ ॥ ॥ कउवाच ॥ ॥ विरजांनिहतांश्रुत्वाराक्षसींब
लवत्तराम् ॥ उद्धतोधुंधुरश्चापिराक्षसौबलवत्तरौ १ आगतावाश्रमपदंकश्यपस्यमहात्मनः ॥ शुकरूपधरौबालोदृष्ट्वाप्रोचेऽदितिंतदा २ त्यक्त्वास्तनंदीयतां
मेउभौरंतुंशुकाविमौ ॥ सोचेतंखगमौशक्यौभूरायानास्त्रियाक्वचित् ३ अथापिधर्तुंयाताचेदुड्डीयैतौगमिष्यतः ॥ कटेरुत्तीर्यजग्राहबालस्तौश्येनवत्तदा ४
पक्षाघातेनचंच्वाचजघ्नतुस्तौभृशंचतम् ॥ तावदास्फालयत्सोपितौबलेनधरातले ५ जहतुस्तौतदाप्राणान्निजरूपधरावुभौ ॥ तद्देहभारभीत्याभूर्भृशंविह्व
लिताभवत् ६ भग्नावृक्षौसनिनदौदेहौनिपतितौतयोः ॥ गव्यूतिमात्रंतौदृष्ट्वादितिस्तंपुनरग्रहीत् ७ शरीरेदृष्टशेतेनमुनिनाविस्तृतेतयोः ॥ छित्वाददाहतौ
लोकःकाष्ठसंचययोगतः ८ चकाराद्भुतशांतिंसबालकाभ्युदयेच्छया ॥ आश्चर्यंपरमंचक्रेशिशोर्दृष्ट्वापराक्रमम् ९ उवाचपरमप्रीतोदितिंपुत्रयुतांतदा ॥
यौनदेवेनशक्रेणनहतौराक्षसेश्वरौ १० शुकरूपधरावेतौलीलयाशिशुनाहतौ ॥ अदितिंचचुकोपासौकिमर्थंमोचितस्त्वया ११ रक्षितोजगदीशेनकायु
ष्यंनास्यविघ्नहे ॥ अविस्मरोरक्षणीयोबालोयंयत्नतःसति १२ कथंचनिहतावेतौगिरिसारौनिशाचरौ ॥ निशाचरस्थलमिदंकथंजीवेच्छिशुर्मम १३ ॥
कउवाच ॥ उक्त्वापरस्परंतौतुस्नाप्यबालंतथाविधम् ॥ स्नात्वासुषुपतुस्तत्रदंपतीविस्मयान्वितौ १४ ततश्चतुर्थेवर्षेसस्वाश्रमात्परतोययौ ॥ कासारंजल
जैर्युक्तंनक्रमत्स्यगणैर्युतम् १५ तमालवृक्षसरलजंब्वाम्रपनसान्वितम् ॥ नानावृक्षलताकीर्णंफलपुष्पसुशोभितम् १६ नानापक्षिगणाकीर्णंनानामुनिग
णान्वितम् ॥ अतिस्वच्छजलंरम्यंसुजनस्येवमानसम् १७ व्यतीपातेसोमवत्यांस्नातुंतत्रागमद्दितिः ॥ उपवेश्यस्वकंबालमाकंठंजलगाभवत् १८ बालउ
ड्डीयतांगंतुंजलमध्येपपातह ॥ चिक्रीडसजलेयावत्तावन्नक्रोदधारतम् १९ धावधावेतिजननीचुक्रोशजलमध्यगा ॥ आगत्यजननीबालंगृहीतुंनैवचाशकत्
२० आकृष्यतेजलेतेनजनन्याबहिरेवसः ॥ सनक्रोबालसहितांदूरंदूरेचकर्षह २१ बालोवदत्ततस्तांसनमोच्योहंसुतस्त्वया ॥ सहत्वयासहैवाहंमरिष्येनब
लंमम २२ दृष्ट्वासबालामाकंठमग्नांतांविह्वलांभृशम् ॥ निष्कासितुंबलाच्छिष्याउड्डीयपतितावने २३ तस्माद्बलवतोनक्रात्तेपिशक्तानचाभवन् ॥ ततो
त्यंतंबलंतस्यदर्शयामासबालकः २४ लीलयैवतदानक्रंपृथिव्यांजलतोक्षिपत् ॥ वायुर्यथाफलंपक्वंग्रावाणंबालकोयथा २५ शरीरंदृश्यतेतस्यविशीर्णंपति
तंभुवि ॥ गतचेष्टंगतप्राणंयोजनायतमद्भुतम् २६ सबालासहशिष्यैःसामुदंप्रापादितिस्तदा ॥ ततोदिव्यवपुश्चित्रगंधर्वस्तमुवाचह २७ अहमासंपुराराजागं
धर्वाणांगजानन ॥ विवाहेसर्वगंधर्वाममगेहमुपागताः २८ पूजिताःपरयाभक्त्यानभृगुःपूजितोमया ॥ वैवाहिकानिकार्याणिकुर्वताकुपितोमुनिः २९ शशा
पमांनक्रवरोभविष्यसिसरोगतः ॥ समाकर्ण्यमुनेःशापमुपशापंतमर्थयम् ३० ततोभृगुरुवाचेत्थंयदाकश्यपनंदनः ॥ गजाननःस्पृशेत्त्वांतुतदास्वंवपुराप्स्यसि
३१ इदानींमासिविज्ञातोबालरूपीगजाननः ॥ त्वमेवजगतांनाथःकर्त्तापातापहारकः ३२ निर्गुणोनिरहंकारःसदसत्कारणंपरम् ॥ नानावतारैर्भक्तानांपालकोदु

घ्नाशनः ३३ सर्वव्यापीपूर्णकामोनेकब्रह्मांडनायकः ॥ मुनीनामप्यगम्यस्त्वंमनोवागनिरूपितः ३४ इतिस्तुत्वाचनत्वाचसंपूज्यबालरूपिणं ॥ गजाननंप्र
यातोसौकृत्वाप्रदक्षिणांमुहुः ३५ अदितिर्बालकंगृह्यलालयित्वास्तनंददौ ॥ आश्चर्यमानसायातापप्रसन्नानिजमंदिरम् ३६ प्रणम्यकश्यपंसर्वंवृत्तांतंसमभाष
त ॥ सविस्मितोब्रवीच्चैनामयंतुपरमेश्वरः ३७ लीलाविग्रहवान्मन्येमानुषदेहमाश्रितः ॥ अत्यद्भुतानिचान्यानिकर्माण्येषकरिष्यति ३८ देवासुरैरशक्या
निद्रष्टव्यानिप्रसादतः ॥ अस्मिन्भक्तिर्दृढाकार्याजनैरात्महितेप्सुभिः ३९ इतिश्रीगणेश पु० उत्तर० नक्रमोक्षणंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥
कउवाच ॥ ॥ अन्यत्तेकथयिष्यामिचरितंबालरूपिणः ॥ गजाननस्यावहरंशृणुष्वैकमनामुने १ एकस्मिन्समयेहाहाहूहूस्तुंबरुरेवच ॥ वीणागानरतावी
णाहस्ताहरिपरायणाः २ शंखचक्रगदापद्मतुलसीदामभूषणाः ॥ गोपीचंदनलिप्तांगाःपीतांबरधराःशुभाः ३ कैलासंगंतुकामास्तेकश्यपस्याश्रमं
ययुः ॥ अतिसंमानितास्तेनपूजिताश्चयथाविधि ४ उवाचप्रणतस्तान्सोनायासेनसतांदृशिः ॥ केनपुण्येनसंजाताधर्मार्थकाममोक्षदा ५ धन्यंतपोज
निर्माताापितरौज्ञानमाश्रमः ॥ प्रयोजनंनजानेहंचलनेतद्वदंतुमे ६ इतितद्वचनंश्रुत्वासंहृष्टास्तेतमब्रुवन् ॥ कैलासंगंतुकामानांजातंत्वद्दर्शनंहिनः ७
दुरितंविलयंयातंजातंचसफलंजनुः ॥ अदूरेपरमासिद्धिर्विश्रांतिःपरमाचनः ८ अनुजानीहिगच्छामोगिरिशंद्रष्टुमुत्सुकाः ॥ श्रुत्वावाक्यानितेषांतुपुनरू
चेतपोनिधिः ९ भुक्त्वाव्रजंतुविश्राम्याप्यभुक्त्वेतोनकोगतः ॥ मज्जनायजलंतेभ्योदत्त्वापाकमकारयत् १० देवार्चनरताःस्नात्वाबभूवुर्मुनिसत्तमाः ॥ तेपिसं
पूज्यशर्वाणींशर्वंविष्णुंविनायकं ११ रविंविष्णुमयंध्याननिष्ठाआसन्मुहूर्ततः ॥ तदाविनायकोबालोरमित्वाबालकैर्बहिः १२ आगतोंतर्गृहंतावत्पंचमू
र्तिंददर्शसः ॥ गृहीत्वाबहिरेवाशुचिक्षेपाग्निगृहंययौ १३ अस्मांगरागंसर्वत्रकृत्वालीनोभवत्ससः ॥ विसृज्यध्यानंनापश्यन्मूर्तीस्तेपुरतःस्थिताः १४
ततस्तेविस्मिताःसर्वेपरस्परमथाब्रुवन् ॥ केनदैत्येननीतानोमूर्तयःकर्महेतवः १५ गंधर्वाराक्षसायक्षानेतुंमूर्तीःकिमागताः ॥ किंवासत्वपरीक्षार्थमं
तर्धानंगताइमाः १६ ततःक्रोधेनमहताकश्यपंप्रष्टुमागताः ॥ अवदन्हेकथंध्याननिष्ठानांमूर्तयोगताः १७ क्रीडंतिजातिवैरास्तआश्रमेइतरेतरम् ॥
देवाबिभ्यतितत्कस्मादाश्रमेदस्यवःस्थिताः १८ इतिश्रुत्वावचस्तेषांकश्यपोतिरुषान्वितः ॥ अभोजिनोविनिश्चित्यमूर्तिप्राप्तिंविनाचतान् १९ ततः
शिष्यान्समाकार्यकश्यपोमुनिसत्तमः ॥ तानुवाचनमेजन्मावध्यत्रतस्करोभवत् २० दैवादिदानींकोजातोदस्युस्तत्त्रवदंतुमे ॥ क्रोधवाक्यंनिशम्येत्थंऊचुः
शिष्यागुरुंप्रति २१ नवयंतस्कराःस्वामिन्पुत्रस्तेविदितस्तव ॥ दोषानुवर्णनेदोषाअस्माकंतन्नचक्ष्महे २२ तेषांब्राह्मींसमाकर्ण्ययष्टिहस्तोमुनिस्तदा ॥ पुत्र
मन्वेषयन्यातोवह्न्यागारेददर्शतम् २३ तेषांपुरःसमानीतोदृष्टस्तैःशिवसन्निभः ॥ उवाचतत्समक्षंतंकश्यपःक्रोधसन्निभः २४ मूर्तीर्नयशीघ्रंत्वंनोचे
त्पुत्रमरिष्यसि ॥ मयाननीतारतास्तातप्रत्युवाचसनिर्भयः २५ ब्रवीषियत्पथंयत्तंतमेवकरोम्यहम् ॥ एवंवदन्पितुर्भीत्यारुरोदभ्रशमर्भकः २६ प्रसार्य

वदनंभूमौपतितोभृशविह्वलः ॥ जननीचतदायातातासुवाचततोर्भकः २७ यदिमेभक्षितादेवास्तर्ह्यास्येदृश्यतांमम ॥ प्रसारितेतदास्येसाददर्शाविश्व
मंतरा २८ विस्मितामूर्च्छितामूमौपतिताभयविह्वला ॥ ततस्तेदृदृशुस्तत्रगंधर्वाःकश्यपोपिच २९ कैलासंशंकरंसांगंवैकुंठंविष्णुमेवच ॥ ब्रह्माणंसत्यलो
कंचशक्रंचैवामरावतीम् ३० सपर्वतवनाकीर्णांधरणींलोकसंयुताम् ॥ सरितःसागरान्यक्षान्रक्षांसिपन्नगानपि ३१ वृक्षान्पक्षिगणांश्चैवभुवनानिचतुर्द
श ॥ इंद्रादिसर्वलोकांश्चपातालानिदिशोदश ३२ ततोमाताप्रबुद्धासास्तनपानंददौमुदा ॥ ननामकश्यपस्तंतुदृष्ट्वेत्थंविश्वरूपिणं ३३ तर्कयामासमनसिसा
क्षादीश्वरएवयः ॥ अवतीर्णोममगृहेतमहंताडितुंगतः ३४ ततःसकश्यपःप्राहमुच्यतांशिशितान्प्रति ॥ नायंबालस्ताडयितुंमयाशक्योमहाबलः ३५ भी
षयंतूग्ररूपेणसमष्टिव्यष्टिरूपवान् ॥ भवतांयदिशक्तिश्चेत्ताड्यतांमूर्तिहेतवे ३६ तद्वचुर्नवयंकिंचिद्भक्षयामस्तवालये ॥ अन्नंवाकंदमूलादिपंचायतनमंतरा
३७ इत्युक्त्वंतोददृशुर्बालकंपंचधापिते ॥ शिवाशिवेनवीशेमाननरूपंतमेवाहि ३८ प्रणेमुस्थिराचित्तास्तेपुपूजुस्तुष्टुवुर्जगुः ॥ क्षणंतेददृशुर्बालंक्षणंपंचस्व
रूपिणम् ३९ क्षणंमहाभीतिकरंक्षणंतंविश्वरूपिणम् ॥ ततस्तस्मैनिवेद्यान्नंषड्रसंबुभुजुश्चते ४० ततस्तेनुनुवुर्भक्त्याबालंतंविश्वरूपिणम् ४१ ॥ त्रयऊचुः ॥
अज्ञानेनविमोहितंजगदिदंसंसारचक्रेभ्रमन्नानाभेदधियास्वरूपविमुखंनानाविधिभ्रामितम् ॥ नानापाशनियंत्रितंनिजकृतैःकर्मांकुरैर्भ्रंशितंनानारूपमरूपम
कमगुणंहित्वाभवंतंविभो ४२ अन्येतेचरणारविंदनिरताहित्वाफलंयाजकाआत्मानंस्वपरेषुवर्ष्मसुसदासंचिंतयंतोमलाः ॥ तेज्ञानेनविधूयसर्वकलुषंदग्ध्वां
कुरान्कर्मजांस्त्वामेवाशुविशंतिसर्वसरितोवार्द्धिंयथामेवजाः ४३ येकेचिद्भजनानुरक्तमनसःसिद्धिंगताभूयसींतेतत्रैवनिमग्नमानसतयाविस्मृत्यपादांबुजं ॥
तेकृच्छ्रादुपरुद्धचोत्तमपदंतस्मात्पतंतोनिजादज्ञानान्नविदुर्विषंहिपिबतोहित्वामृतंदुर्लभम् ४४ तस्मान्नोजननंभवेद्यदिशुभंयद्वाशुभंत्वत्स्मृतिरास्तांतत्रनिरं
तरंशुभकरीभक्तिश्चदुःखाशिनी ॥ एवंचेन्नमतांकदापिहिभवेत्संसारपाथोनिधेर्निस्तारोभवतःकृपेक्षणवशात्सर्वात्मनेतेनमः ॥ ४५ ॥ तवावतारान्नहिकोपि
शक्तोवेत्तुंकथंवाकतिचित्कदेति ॥ योगीशमायेशगुणेशभूमन्नमोनमस्तेभगवन्नमस्ते ४६ ॥ कउवाच ॥ एवंस्तुत्वागतास्तेतुकैलासंगिरिशालयं ॥ पंचाय
तनमर्चंतोविस्मिताबालचेष्टितं ४७ ॥ इतिश्रीगणेशपुराणेउत्तर०बालचरितेहाहादिस्तुतिर्नामनवमोध्यायः ॥ ९ ॥ छ ॥ कउवाच ॥ ततस्तुपंचमेवर्षे
सचौलंव्रतबंधनम् ॥ चकारकश्यपोधीमानसूत्रोक्तविधिनाशुभम् १ शुभेमुहूर्तेलग्नेचब्राह्मणैर्वेदपारगैः ॥ आकारिताःशिष्यगणैर्देवदानवराक्षसाः २ मुनयो
यक्षनागाश्चतथाराजर्षयोपिच ॥ वैश्याःशूद्रास्तथायातानानोपायनपाणयः ३ ववदुर्बहुवाद्यानिनृदेवैराहतानिच ॥ गणेशपूजनंचक्रेस्वस्तिवाचनमेवच ४
मंडपस्थापनंचक्रेमातृकापूजनंतथा ॥ चकाराभ्युदयश्राद्धंब्राह्मणानांतथार्चनम् ५ सुहृदांवस्त्रदानंचचकारसयथार्हतः ॥ अन्येषांचतथातेपिवस्त्राणिनिददुः

१ शक्रंतल्लोकमेवचइति पाठान्तरम् ।

पुरः ६ होमांतेपुनरानर्चब्राह्मणान्कश्यपस्ततः ॥ अंतःपटंवेदिकायांधारयित्वाससत्वरम् ७ कृत्वाग्निस्थापनंपूर्वमुपनिन्युश्चबालकम् ॥ सुवासिन्योब्राह्मणा
स्तमक्षताभिरवाकिरन् ८ तन्मध्येराक्षसाःपंचदुष्टाब्रह्मलिंगिनः ॥ अक्षैस्तमाकिरन्दुष्टास्तत्प्राणहरणेच्छया ९ विघातश्चैवपिंगाक्षोविशालःपिंगलस्तथा ॥ च
पलश्चमहापुंड्राअक्षमालाविभूषिताः १० जलपात्रभृतोनर्घ्यवस्त्रांबरधराःशुभाः ॥ विशीर्णोजायतदेहःकुमारस्यतदक्षतः ११ ज्ञात्वाकुमारस्तान्दुष्टान्मंत्रयामा
सतंडुलान् ॥ महोत्कटःप्रचिक्षेपतंडुलान्पंचपंचसु १२ तदैवनिर्गतप्राणानिजरूपंसमाश्रिताः ॥ करालाःपतिताभूमौविशीर्णादशयोजनम् १३ वज्राघाताद्य
थापेतुर्गिरयस्तुबिडौजसः ॥ कोलाहलोमहानासीद्रजसाच्छादितादिशः १४ कथंव्यापादिताःपंचराक्षसाःकूटरूपिणः ॥ क्षणेनानेनबालेननजानीमोखिला
अमुं १५ अवतीर्णोभुवोभारंहर्तुंकिंपरमेश्वरः ॥ एवंततोगरिष्ठेतेब्रह्माद्यादेवतागणाः १६ ववर्षुःपुष्पवर्णाणिविमानवरमाश्रिताः ॥ नीतेषुतेषुप्रेतेषुब्राह्मणाः
कश्यपोपिच १७ उपनीतेतत्रशिशौवासश्चमेखलामपि ॥ उपवीताजिनेदंडंददुस्तस्मैस्वमंत्रतः १८ ततोऽजलिंपूरयित्वाप्रोद्वीक्ष्यमंडलंरवेः ॥ होमंसर्वंसमा
प्यैनंसावित्रींकश्यपोब्रवीत् १९ पादमर्धंततःसर्वांभिक्षांमातापुरादद‍ौ ॥ असंख्यातास्ततोभिक्षाददुस्तेसर्वआगताः २० उपादिश्यततश्चैनंशौचाचारानने‍क
शः ॥ पुनश्चब्राह्मणान्पूज्यवासांसिकांचनंचगाः २१ महत्यरिष्टेतीतेस्मिंस्तेभ्योभक्त्याददौमुनिः ॥ वसिष्ठस्तंसभामध्येनिनायब्रह्मणोंतिकम् २२ सोपिक
मंडलुजलैरस्यतीर्थंगृहीतवान् ॥ सर्वदाविकसत्पद्मंददावस्मैकरस्थितम् २३ ब्रह्मणस्पतिरित्येवंनामचक्रेतदास्यसः ॥ संपूज्यनामचक्रेस्यआरभूतिर्बृहस्पतिः
२४ रत्नमालांददौचास्मैकुबेरोपिगलस्थिताम् ॥ सुरानंदेतिनामास्यसंपूज्यचचकारह २५ सर्वप्रियेतिनामास्यदत्त्वापाशमपांपतिः ॥ शृण्वत्सुसुरसंघेषुच
कारशंकरोपिच २६ त्रिशूलंडमरुंदत्त्वाविरूपाक्षेतिचाभ्यधात् ॥ दत्त्वाचंद्रकलांनामभालचंद्रेतिचाकरोत् २७ रामस्यजननीचास्मैसखीबालायचार्पयत् ॥
परशुंपरशुहस्तेतिनामचक्रेस्फुटंमुदा २८ पुनःसंपूज्यसिंहंसाददौवाहनमुत्तमम् ॥ सिंहवाहनइत्येवंचक्रेनामातिसुंदरम् २९ उपादिशद्दुष्टनाशंकुरुशीघ्रंविना
यक ॥ सागरोद्विजरूपेणमुक्तामालांददावथ ३० मालाधरेतिनामास्यकृतवान्परिपूज्यच ॥ आसनार्थंततस्तस्मैशेषःस्वात्मानमर्पयत् ३१ फणिराजासने
त्येवंनामचक्रेस्वयंमुदा ॥ दाहशक्तिंददौवह्निर्धनंजयेतिनामच ३२ प्रभंजनेतिनामास्मैवायुश्चवलमुत्तमं ॥ एवंसर्वेयथाशक्त्यादत्त्वानामानिचक्रिरे ३३ ते
षांनिर्वचनेशक्तिर्नकस्यापिभवेन्मुने ॥ अपूपूजन्नचैनंसशक्रोमदविमोहितः ३४ नवाकिंचिद्ददौचैनंउपायनवरंशुभम् ३५ अहंत्रिलोकीनमितःसुरेशोवृद्धोमृता
शीलघुमर्भकंतम् ॥ गजेंद्रगामीहरिशूलपाणिप्रपूजितःकश्यपजंनमस्ये ३६ सिंहोयथानात्तितृणंसमुद्रःपल्वलोदकम् ॥ नयाचतेतथान्यंवाकल्पवृक्षोखिलंद
दत् ३७ एवंतस्याशयंबुद्ध्वाकश्यपःप्रणिधानवान् ॥ उवाचधर्मसंयुक्तंवचस्तद्धितकाम्यया ३८ यत्राद्भुतानिकर्माणियत्रस्युश्चगुणाकराः ॥ सनमस्यश्चपूज्यश्च
ब्राह्मणोपिचनिर्गुणः ३९ इतिश्रीगणेशपुराणेउत्तरखंडेनानानामनिरूपणंनामदशमोऽध्यायः ॥ १० ॥ कश्यपउवाच ॥ अयंतुमद्गृहेकोपिह्यवतीर्णःपरःपुमान् ॥

अनिर्वाच्यगुणोहीनोगुणैस्त्रिभिरनावृतः १ एतद्विरोधयंकुर्यात्सपदभ्रंशतामियात् ॥ एतस्याद्भुतकर्माणिशृणुमेगदतःसुर २ विरजाराक्षसीघोराहंतुमेनं समागता ॥ साहतातेनबालेनपतिताहिद्वियोजना ३ उद्धतश्चैवधुंधुश्चदैत्यौपरमदुर्मदौ ॥ शुकरूपधरावेनंनिहंतुंसमुपागतौ ४ पक्षेधृत्वापोथितौतौ शिलायांगतजीवितौ ॥ निपेततुर्धरापृष्ठेविशालौसर्वदृग्गतौ ५ तथैवचित्रगंधर्वोजलेनकत्वमागतः ॥ एतस्यस्पर्शमात्रेणगतोदिव्यशरीरताम् ६ हाहा हूहूतुंबरूणांसत्वसंशोधनायसः ॥ जहारपंचायतनंपंचधास्वयमप्यभूत् ७ सर्वेषांचसमक्षंवोनिहताःपंचराक्षसाः ॥ एवंमुनिवचःश्रुत्वाबभाणबलवृत्रहा ८ इंद्रउ वाच ॥ ॥ नदृष्टेस्यगुणोत्कर्षस्तावन्मान्योभवेत्कथम् ॥ कउवाच ॥ ततोदिदेशवायुंसनयैनंव्योममंडलम् ९ तस्यानुज्ञापदंवायुर्युगांतसदृशोववौ ॥ आं दोलयन्सर्वलोकंभ्रामयन्कुधरान्भृशम् १० अकालःप्रलयःकिंनुप्रारब्धोलोकनाशनः ॥ इत्येवंभृशसंविग्नाऋषयश्चचकंपिरे ११ बटुंनेतुंसमायातोमहाश क्त्याप्रभंजनः ॥ नचासनंत्वस्यचलंरोमवासमपद्यत १२ अग्नेवायौतुसंप्राहशुष्माणंपाकशासनः ॥ दहैनंत्वंबटुंशीघ्रंद्रष्टव्याशक्तिरद्यते १३ तदाज्ञांशिरसागृह्य जगामतमुषर्बुधः ॥ निर्दहन्निवत्रीन्लोकान्प्रलयानलसन्निभः १४ अस्मीकुर्वन्द्रुमान्सर्वान्शोषयन्सर्वसागरान् ॥ तंदहंतंजनान्सर्वान्दृष्ट्वाकश्यपनंदनः १५ तत्क्ष णादगिलद्रोगीभेषजंगुटिकामिव ॥ गिलितेतादृशेवह्नौक्रोधसंरक्तलोचनः १६ सहस्रलोचनोलोकाल्लोचनैःसर्वलोचनैः ॥ तावद्ददर्शतंतत्रसहस्राधिकलोचनम् १७ असंख्यशीर्षमुकुटमनंतश्रोत्रसंयुतम् ॥ अनंतहस्तचरणमनंतोदारविक्रमम् १८ शशिसूर्याग्निनयनंशिखाव्याप्तनभस्तलम् ॥ सप्तपातालचरणंसप्तलोकै कमस्तकं १९ असंख्यसूर्यसंकाशंअसंख्येंद्रसुसेवितम् ॥ असंख्यकेशसंयुक्तंनानाब्रह्मांडरोमकम् २० आमूलाग्राद्यथावृक्षेभवंत्यौदुंबराणिवै ॥ औदुंबरेवा मशकासंख्यातीताभवंतिहि २१ तथैवैकैकरोमांचंसंख्यातीतांडसंयुतम् ॥ पश्यंस्तत्रैवैकतरंभ्रांतःशक्रोविवेशह २२ पश्यतिस्मसतन्मध्यैत्रैलोक्यंसचराचर म् ॥ अरण्यकदलीकोशपत्रेपत्रेयथाफलम् २३ असंख्यातंजगत्तत्रपश्यतिस्मशचीपतिः ॥ बभ्रामभ्रांतचित्तोसौनालभन्निर्गमंततः २४ ततोननामभूर्ध्नासावे वंभग्नमनोरथः ॥ प्रार्थयामासदेवेशंतदाशक्रोगजाननम् २५ ॥ शक्रउवाच ॥ भूभारहरणार्थंयोजातःकश्यपनंदनः ॥ अचिंत्योमहिमायस्यकिंसुवर्ण्योभवे न्मम २६ निर्गमंदेहिदेवेशकुक्षेरत्यंतविस्तरात् ॥ अदृष्टपाराहर्षीपिह्लादशभ्रमतामया २७ तवकुक्षौमयादर्शिभुवनानिचतुर्दश ॥ स्थानेस्थानेविभक्तानिप्र तिरोमांचमेकराट् २८ समष्टिव्यष्टिरूपाणिमहाविस्तारवंतिच ॥ दृष्टानितवरूपाणिसुसौम्यानितराणिच २९ अद्भुतान्यप्यसंख्यानिवक्त्राणिनयनानिच ॥ दृष्टादुर्दर्शरूपाणिजगत्क्षोभकाराणिते ३० दैत्यदानवपूर्णानिसुरमानववंतिच ॥ यक्षरक्षःपिशाचादिचतुराकरवंतिच ३१ विकरालमहोरूपमुपसंहरविश्व कृत् ॥ गतोमोहःस्मृतिर्लब्धाप्रसादान्निखिलेश्वर ३२ कायेनमनसाबुद्ध्यावाचात्वांशरणंगतः ॥ प्राकृतंदर्शयविभोरूपंतेभक्तवत्सल ३३ ॥ कउवाच ॥ ए वंयावत्प्रार्थयतेस्वात्मानंतावदेवसः ॥ सभामध्यगतंतंचददर्शब्रह्मचारिणम् ३४ पश्यतांसर्वलोकानांसाष्टांगंप्रणनामतम् ॥ अतिविस्मितचित्तोसौलज्जाहर्ष

समन्वितः ३५ शृण्वत्सुसर्वदेवेषुतुनावब्रह्मचारिणम् ॥ जातंमुनिगृहेशांतंक्रीडामानुषरूपिणम् ३६ ॥ शक्रउवाच ॥ जानेनत्वानंतशक्तिंपरेशंविश्वात्मानंवि
श्वबीजंगुणेशम् ॥ विश्वाभासंविश्ववंद्यंत्रिसत्यंत्रेधाभूतंजन्मरक्षार्तिहेतुम् ३७ एकंनित्यंसच्चिदानंदरूपंसर्वाध्यक्षंकारणातीतमीशम् ॥ चेष्टाहेतुंस्थावरेजंगमेचवां
छापूरंसर्वगंत्वाभिवंदे ३८ सर्वेशानंसर्वविद्यानिधानंसर्वात्मानंसर्वबोधावभासम् ॥ सर्वातीतंवाङ्मनोगोचरंत्वांसर्वावासंसर्वविज्ञानमीडे ३९ ॥ ॥ कउवा
च ॥ ॥ एवंस्तुत्वाचनत्वाचसंपूज्यस्वांकुशंददौ ॥ कल्पवृक्षंचदास्यौद्वेविनायकइतिस्फुटम् ४० चकारनामशक्रोथस्मरणात्सर्वसिद्धिदम् ॥ जयशब्दैर्नमःश
ब्दैर्वाद्यशब्दैरनेकधा ४१ गंधर्वगीतनिनदैरप्सरोनृत्यनिस्वनैः ॥ व्याप्तमासीत्पुष्पवर्षैस्तदाव्योमधरातलम् ४२ प्रतिकूलवहानद्यआसन्पूर्ववहाःशुभाः ॥ प्र
सन्नमासीद्दिक्चक्रंववुर्वाताःसुखावहाः४३प्रदक्षिणार्चिषःशांताआसन्सर्वत्रवह्नयः ॥ ततःप्रसन्नःशक्रायददावभयमेकराट्४४अवितानभयंक्वापितवशक्ररणाजिरे ॥
पठस्वस्तोत्रमेतत्त्वांत्रिसंध्यंभक्तितत्परः ४५ अन्योपियःपठेद्भक्त्याश्लोकत्रयमिदंनरः ॥ ससर्वान्प्राप्नुयात्कामान्सर्वत्रविजयीभवेत् ४६ ततःशक्रोनमस्कृत्यवरं
प्राप्यशुभावहं ॥ ततःसर्वेनमस्कृत्यस्वंस्वंस्थानंययुर्मुदा ॥ ४७॥ इतिश्रीगणेशपुराणेउत्तर०बालचरितेएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ कउवा
च ॥ ॥ ततस्तुसप्तमेवर्षेप्रवृत्तेसौविनायकः ॥ स्नात्वानित्यविधिंकृत्वामुकुटभ्राजिमस्तकः १ आयुधानिचचत्वारिसिंहारूढोदधारसः ॥ अंकुशंपरशुं
पद्मंपाशंसर्वभयापहं २ दंडाजिनेकुंडलेचकांचनेरत्नसंयुते ॥ बिभ्रत्कमंडलुंदर्भान्कौशेयंपीतमुत्तमम् ३ कस्तूरीतिलकंचंद्रंललाटेक्षीणतेजसं ॥ मु
क्ताफलमयींमालांकंठेनाभौफणीश्वरं ४ रोदसीकंपयन्नुच्चैर्जगर्जासौस्वलीलया ॥ मेघस्वनइतिभ्रांत्याचातकाव्याददुर्मुखम् ५ उच्छलंत्योमहानद्यः
सिषिचुर्व्योममंडलं ॥ तदाननंदतुरुभावदितिःकश्यपोपिच ६ धन्यावयंपूर्वजानइत्यात्मानंप्रशंसतुः ॥ एतस्मिन्समयेकाशीराजोप्याश्रममभ्यगात् ७
परस्परालिंगनेनमुमुदुस्तेखिलास्तदा ॥ न्यविशंतासनेसर्वेनमस्कृत्यपरस्परम् ८ स्वाद्वन्नंभोजयामासमुनिस्तंषड्रसैर्नृपम् ॥ विश्रांतंपरिपप्रच्छकिमागमन
कारणं ९ श्रीमतांदर्शनंनोद्यजातंपुण्यवशान्नृप ॥ पुरोहितस्यमेनत्वंवृत्तांतंकिंगृहीतवान् १० ॥ ॥ कउवाच ॥ ॥ एवंमुनिवचःश्रुत्वाजगादनृपसत्त
मः ॥ क्षमापराधंमेब्रह्मन्राज्याकुलितचेतसः ११ पुत्रस्यमेविवाहोस्तित्वामाकारयितुंप्रभो ॥ आगतोहंमुनेजातःकृतार्थस्तवदर्शनात् १२ चलशीघ्रं
विवाहंत्वंसंपाद्यपुनरेवाहि ॥ नश्लाघ्योलोकवर्येषुविनाचैवागमंतव १३ अहमेवसमायातोतस्त्वांनेतुंमहामुने ॥ ॥ मुनिरुवाच ॥ नाहमेष्येनृपश्रेष्ठचातु
र्मास्यरतोधुना १४ पुत्रंनयसमर्थंमेयदीच्छसिजनाधिप ॥ ॥ राजोवाच ॥ ॥ पुत्रमाज्ञापयमुनेगमिष्यावोजवान्वितौ १५ एवंनृपवचःश्रुत्वामुनिःपुत्र
मथाब्रवीत् ॥ वचोनुरोधाद्राज्ञोस्यप्रेषयेत्वांविनायक १६ विद्यमानेतुमहतिदुःखेविरहजेतव ॥ तामाज्ञांशिरसावंद्यचरणावुभयोरपि १७ मातापित्रोर्ब
हिरगाद्राज्ञाचारोपितोरथे ॥ सोपिनत्वातयोःपादौस्वयमारुरुहेरथम् १८ आजगामादितिस्तंचप्रावदन्नृपसत्तमम ॥ अयंमेबालकोराजन्रक्षणीयो

निरंतरम् १९ उत्पातोजायतेतत्रयत्रमेबालकोभवेत् ॥ अतोयंयत्नतोरक्ष्यःपक्ष्मणीवकनीनिकाम् २० यथानयसिपुत्रंमेतथात्रत्वंसमानय ॥ ओमित्युक्त्वा
दितिंराजाप्रणिपत्यविसृज्यताम् २१ सहतेनययौशीघ्रंरथेनानिलरंहसा ॥ गच्छतारथमार्गेणराज्ञाप्रापमहाटवी २२ नरांतकपितृव्यस्यस्थानंतत्रातिसुं
दरम् ॥ रौद्रकेतोर्बलीभ्राताधूम्राक्षोनामनामतः २३ दशवर्षसहस्रंसतपस्तेपेसुदारुणम् ॥ सहस्रकिरणंनित्यंनित्यमाराधयन्मुदा २४ प्रार्थयन्सर्वसंहार
करमायुधमुत्तमम् ॥ त्रयाणांभुवनानांसइच्छन्वश्यत्वमात्मनः २५ वृक्षस्कंधालंबिपादोधोमुखोधूममापिबन् ॥ एवंबहुगतेकालेमोघंशस्त्रमुपस्थितम् ॥
२६ प्रेषितंभानुनातस्मैराक्षसायतपस्यते ॥ व्योमव्यापियस्यतेजोददर्शसविनायकः २७ शीघ्रमुड्डीयजग्राहगरुत्मानिवपन्नगम् ॥ तदाविस्मयमापेदेका
शीराजोमहामनाः २८ तर्कयामासमनसिलाभेहानौचजीवने ॥ नास्तिदैवातिरेकेणनिमित्तंभुवनत्रये २९ ममनैवाभवत्प्राप्तिःसहसातस्यतस्यया
ज्ञातुंतदस्त्रसामर्थ्यंतोलयित्वाक्षिपच्चसः ३० ऊर्ध्वंगतंतदैवाशुरवंकृत्वाभयानकम् ॥ धूम्राक्षेपतितंतत्तुसतदैवाद्विधाभवत् ३१ गंडशैलाद्रुमास्ताभ्यांखंडा
भ्यांचूर्णिताःशम् ॥ धनुःपंचशतंपृथ्वीपतद्भ्यांव्यापितातदा ३२ ततस्तस्यसुतौख्यातौजघनोमनुरेवच ॥ शुश्रूषायांरतौतस्यपितरंवीक्ष्यताद्दशम् ३३
क्रोधाविष्टौददृशतुस्तंविनायकमंतिके ॥ दुद्रुवतुःप्रसार्यैवंवक्त्रंकालांतकोपमम् ३४ बद्धुमानीयापितरंकथंघातितवानसि ॥ इत्यूचतुःकाशिराजंरोषाविष्टौनि
शाचरौ ३५ रक्षितोसिपुरापित्राममपूर्वंनरांतकात् ॥ तंमारयित्वायत्नेनकथंजीवासिरेनृप ॥ ३६ ॥ कउवाच ॥ इत्याकर्ण्यनृपोवाक्यंचकंपेभृशविह्वलः ॥
तर्कयामासमनसिकथमानीतवानहम् ३७ नंदनंकश्यपस्यैनमपस्मारमिवस्थितम् ॥ क्रुद्धोनरांतकश्चेन्मेबलाद्राज्यंग्रहीष्यति ३८ तदामेरक्षिताकःस्यात्त
तःशपथमारभत् ॥ ॥ नृपउवाच ॥ ॥ एतदर्थंमयानीतोनैवायमर्भकःक्वचित् ३९ ब्राह्मणेश्वरयोरत्रशपथोमेनिशाचरौ ॥ पुरोहितस्यपुत्रोयंविवाहार्थं
समाहृतः ४० नविघ्नंकुरुतंतत्रनीयतांबालकोह्ययम् ॥ इत्यस्यवचनांतेमुनिपुत्रोजगादतम् ४१ कथंबध्वाशत्रुहस्तेशिशुंमांत्वंप्रयच्छसि ॥ अदितिं
कश्यपंवापिवदिष्यसिकिमुत्तरम् ४२ क्रुद्धश्चेत्कश्यपस्त्वांहिकुर्याद्भस्मनसंशयः ॥ एवंवदतितस्मिंस्तुबालकेमुनिनंदने ४३ आक्षितुंतंसमायातौविडा
लौमूषकंयथा ॥ प्रसार्यवदनंबालोघोरंशब्दमथाकरोत् ४४ चकंपेचात्रिभुवनंतौचनिश्वासयोगतः ॥ संप्राप्तौमेघपटलंवात्ययैवयथातृणम् ४५ मुहूर्त्ताद्वि
तयेजातेव्यस्तौध्वस्तौनिपेततुः ॥ नरांतकस्यनगरेजघनोमनुरेवच ४६ गिरिशीर्षेगंडशैलौमहावातेरितौयथा ॥ पतद्भ्यांतच्छरीराभ्यांचूर्णितानिगृहा
णिच ४७ मुखहस्तरवाआसन्हाहाकारोमहानभूत् ॥ किमिदंकिमिदंदूताधावमानाययुस्तदा ४८ मृतौधूम्राक्षतनयौश्रुत्वासम्यग्व्यलोकयन् ॥ सचेतनौ
चेतौदृष्ट्वासावधानावकुर्वत ४९ दूतास्तावूचतुःसर्ववृत्तांतमनुपूर्वशः ॥ वधंपितुःकाश्यपेयात्तस्यश्वासान्निपातनम् ५० सगच्छतिस्यंदनेनकाशीराजेन

१ सहपातस्यतस्ययाइतिपाठान्तरम् ।

संयुतः ॥ एवंदूतान्निशम्यैनंनरांतकमथाब्रुवन् ५१ पितृव्यंनिहतंश्रुत्वासापराधंनरांतकः ॥ ऋषिपुत्रंतथायांतंकाशीराजेनसंयुतम् ५२ क्रोधेनारक्तनय
नःपुरःपश्यन्निशाचरान् ॥ आज्ञापयत्तमानेतुंसहस्त्रप्रमितांस्तदा ५३ धृत्वानेयोमुनेःपुत्रोयुद्धकृन्नेत्सहन्यताम् ॥ काशीराजरथोवापिशीघ्रंगच्छंतुरा
क्षसाः ५४ आज्ञामात्रेणतेजग्मुस्त्वरयावातरंहसः ॥ काश्यपेयंचनृपतिंददृशुस्तेचतौचतान् ५५ ततोविनायकश्चक्रेभीमशब्दंभयावहम् ॥ ततोनिशाचराः
पेतुस्त्यक्त्वाप्राणांस्तुकेचन ५६ केचित्पलायिताःकेचिद्भग्नपादाःप्रपेदिरे ॥ केषांचिन्मस्तकाभिन्नाःकेचिच्छीर्णोदराःशरैः ५७ भग्नास्याभग्ननेत्राश्च
भग्नोरुबाहवःपरे ॥ प्रपलाय्यगतायेतुआगतास्तेनरांतकम् ५८ उदंतंसर्वमाचख्युर्विनायककृतंतदा ५९ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेनिशाचरव
धोनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ दूताऊचुः ॥ ॥ विनायकंरथस्थंतंआज्ञांप्राप्यगतावयम् ॥ सर्वैरेवतदादृष्टःकृतांतसदृशस्तुसः १ सर्वेनिशाचराःस्वामि
न्मृतास्तद्भीतितोनघ ॥ वयंतवप्रसादेनजीवंतस्त्वांसमागताः २ ईश्वरीयकृपायोगात्सिंहवृंदाद्गजाइव ॥ त्रैलोक्येतुपुमान्नास्तियोयुध्येत्सहतेनवै ३ ॥ क
उवाच ॥ ॥ इत्थंनिशम्यतद्वाक्यंजगदेसनरांतकः ॥ किंवावदथबालिश्यात्कबालःक्वनरांतकः ४ किंकर्तव्यंपतंगेनप्रलयानलसन्निधौ ॥ मेरुगिरिःप
तेत्किंवाखननतामूषकेनच ५ ततश्चाज्ञापयद्दैत्यान्काशिराजपुरींप्रति ॥ लुंठनंतत्रकर्तव्यंयेनव्यग्रोभवेन्नृपः ६ तस्मिन्व्यग्रेसोपिभवेत्कश्यपस्यसु
तोपिच ॥ नोचेद्दुभौनिहंतव्यौसर्वैःसर्वप्रयत्नतः ७ ततोददौमहार्हाणितेभ्योरत्नान्यनेकशः ॥ वस्त्राणिचविशिष्टानिशस्त्राणिविविधानिच ८ तेतंतदानम
स्कृत्ययुःकाशीशपत्तनम् ॥ परस्परंसमूचुस्तेदिक्चक्रंव्याप्यसेनया ९ तत्रयोभून्महासेनानीरिवंसोदिशत्तदा ॥ यस्यदृष्टिगतोदैत्याःसतुतेननिहन्यताम्
१० अन्यथाममदंड्यःसतस्याहंप्राणनाशकृत् ॥ एवंतेनसमादिष्टादैत्याजग्मुर्दिशोदश ११ विनायकस्तेनराज्ञारथस्थेनगतःपुरीम् ॥ नानाध्वजपताकाभि
श्चित्रितांरंगमालया १२ वाद्यदुंदुभिनिर्घोषैःपूजाद्रव्यैरनेकधा ॥ अमात्यानागराश्चैवप्रतिजग्मुर्विनायकम् १३ उपचारैःषोडशभिर्भक्त्यासर्वेप्यपूजयन् ॥
राजानंचततोजग्मुर्नगरीमंतराखिलाः १४ तस्मिन्प्रविष्टेप्रासादान्रुरुहुर्योषितोखिलाः ॥ काश्चिद्द्रष्टुंबहिर्याताव्यस्तालंकरणांबराः १५ अनादृतपितृभ्रातृभर्तृ
मातृसुहृज्जनाः ॥ त्यक्त्वाभोजनपात्रंचभुक्तवंतंपतिंचकाः १६ एकानिरुद्धासर्वैःसाध्यात्वादेवंविनायकम् ॥ भक्त्यानिमील्यनयनेजहौप्राणांस्तदद्भुतं १७ला
जवर्षैःपुष्पवर्षैर्ववर्षुस्तंकुमारिकाः ॥ विमानस्थादेवगणाददृशुस्त्तंमहोत्सवम् १८ ब्राह्मणाःपरमात्मानंपश्यंतिस्मविनायकम् ॥ क्षत्रियास्तंमहावीरंपश्यंति
स्मरणोत्सुकं १९ वैश्यास्तंददृशुःसर्वेरुद्रंसंहारकारकम् ॥ शूद्रास्तंहरिरूपेणनृपरूपेणचालुकन् २० यस्ययस्ययथाभावस्तादृशंसोभ्यवीक्षत ॥ यथारक्ते
सितेपीतेस्फटिकस्तादृशाकृतिः २१ एकएवपुमान्यद्वत्पिताभ्राताचशालकः ॥ ततोविनायकोपश्यत्पुरमध्येमहासुरौ २२ विघंटदंतुरंतंसमाह्वयतसा
दरं ॥ तौदैत्यौदुष्टमनसौबालकैःसमुपागतौ २३ आलिंगितुंकृतोद्योगौतेनज्ञातौदुराशयौ ॥ आलिंग्यचूर्णयामासपुष्पंहस्तगतंयथा २४ त्यक्तौभूमिगतौ

तौतुरेजतुर्दशयोजनौ ॥ काशिराजश्चलोकाश्चदृष्ट्वाश्चर्यंतुमेनिरे २५ मुमुचुःपुष्पवर्षाणिदेवास्तस्मिन्नभोगताः ॥ साधुसाध्वितिशब्दैश्चजयशब्दैश्चकेचन २६
मुनयश्चैवदेवाश्चतुष्टुवुस्तंविनायकम् ॥ मायामानुषरूपेणचरंतंबाललीलया २७ शक्रादीनामजेयौयौतावनेनहिचूर्णितौ ॥ ततोवीथीरतिक्रम्यरथोयातोग्र
तोग्रतः २८ ततोन्यावसुरौदृष्टौहंतुमेनंसमीयतुः ॥ पतंगविधुलौनाम्नावात्यारूपौमहाबलौ २९ ततोव्याकुलितोलोकोरजसाच्छादितोखिलः ॥ प्रासादा
वृक्षसंघाश्चपतितावसुधातले ३० प्रावारनिचयाभांतिगगनेपक्षिसन्निभाः ॥ केषांचिन्मस्तकात्पेतुरुष्णीषाणिदिशोदश ३१ कोलाहलोमहानासीन्नप्रा
ज्ञायतकिंचन ॥ रथोपिगगनंगंतुमुद्यतस्तंभितोमुना ३२ निःसारमनुजाःपेतुःसद्योजाताइवावनिम् ॥ ततोतिबलिनौज्ञात्वादधाराशिखयोरुभौ ३३ एके
नमुष्टिनादेवोभ्रामयित्वाबलाच्चिरम् ॥ तत्याजसधरापृष्ठेव्यमूतौददृशेजनः ३४ तर्कयामासदेवोयंकश्यपस्यसुतोबली ॥ यतोनेनहतावेतावसुरौयोजना
यतौ ३५ अस्मिन्वयसिकस्यापिनेदृशंवीक्ष्यतेबलम् ॥ एतावदृष्टसामर्थ्यंकाशीराजोप्यनंदत ३६ अवप्लुत्यरथात्तस्मात्तन्ननामविनायकं ॥ उवाचचमहायोगि
न्बालस्यापिनतेकृतिः ३७ ब्रह्मादिज्ञानविषयाकुतःस्याच्चर्मचक्षुषः ॥ जगदुत्पादकोनेकरूपोस्यवनहेतवे ३८ नसंख्यावर्त्ततेस्वामिन्नवताराणांचतेविभो ३९
ततोग्रतोरथोयातस्त्वरयान्नृपतेर्गृहं ४० ततोददर्शबालोसौदैत्यंपाषाणरूपिणम् ॥ ततोहनत्परशुनाशतधासोभवत्तदा ४१ तस्माद्विनिःसृतोभीमोदं
ष्ट्रादशनभासुरः ॥ श्मश्रुलोदीर्घकायश्चपुरुषःपिंगलोमहान् ४२ ततस्तेबालकाःसर्वेलोकाश्चान्येपिदुद्रुवुः ॥ तंचापिन्यहनन्मुष्ट्यासचापिन्यपतद्भुवि ४३
अमंसतजनाबालंभगवंतंधृताकृतिम् ॥ ततोराजाहृष्टमनारथादुत्तीर्यबालकम् ४४ अंतःप्रवेशयामासस्वयमादायसत्वरम् ॥ रत्नवर्णमयेस्वीयेआसनेचोपवे
श्यतम् ४५ उपचारैःषोडशभिःप्रपूज्यचयथाविधि ॥ महार्हवस्त्राभरणैर्दिव्यैश्चैवसुगंधिभिः ४६ परमाह्लादसंयुक्तस्तुष्टावचननामच ॥ अन्नंचषड्रसंनानाप
क्वान्नंव्यंजनान्वितम् ४७ सुहृद्भिर्भोजयामासपरमान्नमनेकधा ॥ ततोनानाफलान्याशुददौतेभ्योनराधिपः ४८ ततोष्टांगंचतांबूलंरत्नकांचनसंयुतम् ॥
ततःस्वयंबुभोजाशुशिशुभिःपरिवारितः ४९ ततःप्रस्वापयामासकृतसंध्याविधिंचतम् ॥ पर्यंकेरुचिरेदीपवितानपरिशोभिते ५० स्वयंतदाज्ञयाराजासु
ष्वापप्रिययासह ॥ अयासांश्चतुरःस्थाप्यजागरायतदंतिके ५१ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥
क उवाच ॥ ॥ ततःप्रभातउत्थायशौचंकृत्वायथाविधि ॥ चकारमज्जनंसोथसंध्यांचक्रेयथाविधि १ होमंचकारसमिधःस्थाप्यकृष्णाजिनंशुभम् ॥ निधाय
दंडंचिक्रीडबालकैःसविनायकः २ निशम्यकीर्त्तिंतत्रत्योब्राह्मणोवेदशास्त्रवित् ॥ धर्मदत्तइतिख्यातोमुनिपुत्रादिदृक्षया ३ आगतोनृपवर्यस्यकाशिराजस्यवे
श्मसः ॥ राज्ञासंमानितःसोथपप्रच्छनृपसत्तमम् ४ क्वासौमहाबलःपुत्रःकश्यपस्यवदस्वमे ॥ ततोलोकाजगुरयंक्रीडतेबालकैःसह ५ ततउत्थायविप्रोसौ
पाणौधृत्वावदच्चतम् ॥ ममामित्रसुतस्त्वंहिश्रुताकीर्त्तिर्मयातव ६ अतस्त्वांस्वगृहंनेतुमागतोहंनसंशयः ॥ पुनीहिपादरजसासर्वंनःसफलीकुरु ७ परब्रह्म

स्वरूपोसिपरमात्मापरात्परः ॥ भूभारहरणार्थायजातोसिकश्यपालये ८ क्रीडामानुषरूपोसिजानेत्वांतत्वतोर्भक ॥ ततोविनायकःप्राहकिमर्थंत्वमिहागतः ९
आज्ञामात्रेणतेतातकथंनायामितेतिकम् ॥ इत्युक्त्वात्वरयायायाद्धर्मदत्तपुरःसरः १० धूलिमुद्धूलयद्भिस्तैर्बालकैरनुगैर्बली ॥ मार्गेतुगच्छतस्तस्यनरांतकसमी
रितौ ११ कामसंज्ञश्चक्रोधश्चद्वावेतौराक्षसाधमौ ॥ परस्परंयुध्यमानौहंतुमंतिकमागतौ १२ युध्यमानौनिपतितौबालकेदुष्टमानसौ ॥ खररूपौयथावर्हि
पतंगाविवदुर्मदौ १३ ततस्तेबालकाःसर्वेदुद्रुवुस्तेदिशोदश ॥ ततोविनायकोधृत्वातयोःपादौबलेनसः १४ भ्रामयामासबहुधापोथयामासभूतले ॥ ततस्तौ
पतितौभूमौव्यसूलोकाव्यलोकयन् १५ समकंपत्त्रिभुवनंपतद्देहरवात्तदा ॥ लोकवार्त्तासुविश्वासंधर्मदत्तोन्वपद्यत १६ दृष्ट्वातस्यमहत्कर्मप्रत्यक्षेणमहामुनिः ॥
ततोययौधर्मदत्तस्तेनसाकंपुरःसरः १७ ददर्शकुंजरंमत्तंगूढरूपंमहाबलम् ॥ इतस्ततोविद्रवंतंजनंहंतुंसमुद्यतम् १८ इतस्ततोमहावीराःपलायनपराययुः ॥
कोलाहलोमहानासीज्जनानांतत्रधावताम् १९ रजसाव्यापिसकलंनीहारेणेवपर्वताः ॥ गजोयातोराजगजान्मत्तान्हंतुंमहाबलः २० गजयुद्धंमहाघोरंप्रासाद
स्थाव्यलोकयन् ॥ बभंजुरश्वशालांतेदृष्ट्वाबद्धान्हयानपि २१ उद्बंधनाहयायाताग जाश्चककुभोदश ॥ धर्मदत्तोगृहीत्वातंगृहांतर्गंतुमुद्यतः २२ आस्फाल्यतत्क
रंबालोरुरोहकरिणंबलात् ॥ बिभेदगंडंसृणिनावारंवारंविनायकः २३ असृक्प्रवाहःपरितोनिपपातमहीतले ॥ सगजोबृंहितंकृत्वासर्वलोकभयावहम् २४ पत
तातेनभग्नानिविस्तीर्णेनायतेनच ॥ संख्यातीतान्यगाराणिसर्वोपस्करवंतिच २५ चकंपेपृथिवीसर्वासपर्वतवनाकरा ॥ ततोंधकारेविगतेतत्रेयुर्नागराजनाः २६
भीतभीतामहारौद्रेमृतेतस्मिन्निरीक्ष्यतम् ॥ बालंतुबलिनोगत्वातस्मादुत्तारयन्बलात् २७ धर्मदत्तःपुनश्चैनंकटावेवाभ्यधारयत् ॥ गृहमध्येनिनायाशुपुनरुत्पा
तशंकया २८ निवृत्तेस्वनिमित्तेसद्विजातिभ्योददौधनम् ॥ पूजयामासचैवैनमुपचारैःपृथक्पृथक् २९ वस्त्रालंकारकुसुमैर्नानानैवेद्यसंचयैः ॥ भोजयामासवि
धिवत्सिद्धिबुद्धीउभेददौ३० दक्षिणार्थंधर्मदत्तोननामदंडवत्क्षितौ ॥ उवाचचप्रसन्नात्माहर्षगद्गदयागिरा ३१ ममभाग्यंतुफलितंयद्दृष्टंचरणांबुजम् ॥ जगदीशो
जगत्कर्ताजगत्साक्षीजगद्गुरुः ३२ ममवाक्यादिहायातउद्धर्तुंममपूर्वजान् ॥ एवंब्रुवन्नेवमुनिःस्वासनेसन्निवेशितः ३३ विनायकेनदेवेनपूजितोबहुभक्तितः ॥ ततो
तिशुशुभेबालःसिद्धिबुद्धियुतोभृशम् ३४ गंगागौरीयुतोयद्वच्छूलपाणिस्त्रिलोचनः ॥ एतस्मिन्नंतरेतत्रजृंभानाम्न्यागताशुभा ३५ पीतांबरवराचारुकंकणाद्या
द्भूषणा ॥ अतिदुष्टमनाःसातुपत्नीधूम्राक्षरक्षसः ३६ सोवाचमधुरांवाचंनिधानमिदमुत्तमम् ॥ इत्यरिष्टानिजायंतेतानिनश्यंत्ययत्नतः ३७ कथंचारुभवेद्रो
गोमातापित्रोरमुष्यवै ॥ एवमुक्त्वास्त्रियःसर्वाउवाचचविनायकम् ३८ महद्भाग्यंममाविभोयज्जातंतवदर्शनम् ॥ पारिश्रांतोसिदेवेशनानादुष्टविनाशनात् ३९
अभ्यंगंकुरुतैलेनसुगंधेनमहामते ॥ अंगंतेमर्दयिष्यामितैलमुद्वर्त्तनंतथा ४० ओमित्युक्तेततस्तेनविषहस्तासमादधे ॥ तैलेनचरणौतस्यविषोत्कर्षाविं

१ क्रोधश्चेइत्यपिपाठः । २ नानोपवनवंतिचेतिपाठः ।

घायिना ४१ ममर्दजृंभतीजृंभआलोकास्तांसाधुमेनिरे ॥ सासिषेवेभावदुष्टाशुभभावापतितथा ४२ ततस्तस्यशरीरस्यदाहएवाभवन्महान् ॥ ततो
ज्ञानेनबुद्धातांदुष्टभावांनिशाचरीम् ४३ नारिकेलफलेनाशुमस्तकेतांजघानसः ॥ ततःसापतिताभूमौनिजरूपंसमास्थिता ४४ असृक्प्रवाहमध्येसावि
स्तीर्णायोजनद्वयम् ॥ धर्मदत्तश्चलोकाश्चतदाश्चर्ययुताबभुः ४५ पूजयामासविधिवद्भोजयामासतंपुनः ॥ पक्वान्नंविविधंस्वादुरसैःषड्भिःसमन्वितम् ॥
४६ अस्मिन्नवसरेदेवाःपुष्पवर्षंप्रचक्रिरे ॥ नीराजनंलाजवर्षमंगनाःपूजनानिच ४७ ततःसकाशिराजस्तमाकारयितुमागमत् ॥ रथोपरिनिवेश्यैनंवाद्यघो
षसमन्वितः ४८ गंधर्वगानसहितानृत्यंत्यप्सरसःपुरः ॥ निनायस्वगृहंराजाविनायकमनामयम् ४७ गच्छन्सदद्दशेबालःसिंहारूढोधृतायुधः ॥ अनेक
वीरसंयुक्तोदेवैरिवशतक्रतुः ५० सिद्धिबुद्धियुतोभातिगंगोमाभ्यांयथाशिवः ॥ नानाबंदिस्तूयमानःप्रविवेशनृपालयम् ५१ एवंबालचरित्रंयःशृणुयाज्जग
दीशितुः ॥ सर्वान्कामानवाप्नोतिनारीभिर्बाध्यतेक्वचित् ५२ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरित्रेचतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ ॥ कउवाच ॥
अपरस्मिन्दिनेराजालोकैःसहसभांययौ ॥ विनायकेनसहितोमित्रामात्यसमन्वितः १ तानुवाचततःसर्वान्बालकस्यगुणान्बहून् ॥ गुणवंतंप्रधानंतंपु
रस्कृत्यमहाशयम् २ अहंहिकश्यपंयातआकारयितुमंतिकम् ॥ विवाहस्यचसिद्ध्यर्थंपुत्रस्तेनेहयोजितः ३ प्रस्थितोनेनयावत्तावदद्राक्षमद्भुतम् ॥ अ
रिष्टानांसमूहंचनदृष्टंनचवैश्रुतम् ४ आदावनेननिहतोधूम्राक्षोराक्षसाधिपः ॥ जघनश्चमनुश्चापिसहस्रार्द्धयुतोहतः ५ योऽयोमनीतवानेनंनगरेदंतुरोह
तः ॥ विघंटोबालरूपश्चविधूलश्चमहाबलः ६ पतंगश्चैवनगरेवातरूपधरोहतः ॥ कूटोनामहतोनेनद्वारिपाषाणरूपधृक् ७ कामक्रोधावपिहतौ
स्वरवेषधरावुभौ ॥ गजरूपधरःकुंडोहतोनेननिशाचरः ८ यानिचान्यान्यरिष्टानिनाशयिष्यतिबालकः ॥ इदानींनिश्चयःकार्योविवाहस्यद्विजैःसह ९
देवतास्थापनस्यापिहरिद्रामंडपस्यच ॥ विवाहोपस्कारार्थंचज्योतिःशास्त्रविशारदैः १० ॥ ॥ कउवाच ॥ एवमाकर्ण्यतद्वाक्यममात्यावूचतुर्नृपं ॥ अयंबा
लःपुरेयावद्वर्त्ततेनृपसत्तम ११ तावद्विवाहोनभवेदितिनोभातिनिश्चितम् ॥ अस्मिन्स्थितेमहोत्पाताभविष्यंतिदिनेदिने १२ पक्षेमासेगतेराजन्विवाहंकर्तुम
र्हसि ॥ ओमित्युक्तेनृपेणाथजग्मुःसर्वेनिजालये १३ राजाविनायकश्चापिभुक्त्वासुषुपतुःसुखम् ॥ ततोनिशीथेसंप्राप्तेसुप्तेसर्वजनेमुने १४ ज्वाला
मुखोव्याघ्रमुखोदारुणोथत्रयोसुराः ॥ इच्छंतोपचितिंपूर्वहतानांदैत्यरक्षसां १५ संपूर्णंनगरंदग्धुमाद्यऐच्छत्तदासुरः ॥ दारुणोवायुरूपेणतत्सहाया
र्थमुद्यतः १६ व्याघ्रास्योभक्षितुंतत्रपलायनपरानभूत् ॥ एवंतेनिश्चयंकृत्वाप्राक्रोशन्सुमहास्वनैः १७ त्रैलोक्यंकंपितंसर्वंतदासंशयितंभृशम् ॥ प्रल
यःपरचक्रंवाकिमागतमितिब्रुवन् १८ व्याघ्रास्यःसुमहाकायःस्थाप्योष्ठंधरणीतले ॥ पूर्वंपरंचगगनेमध्येजिह्वानदीइव १९ उत्सृजन्मुखतोज्वालाः

१ मोचितइतिपाठान्तरम् ।

सांबरंपत्तनंदहन् ॥ यथाहनुमतादग्धानगरीपुच्छवह्निनः २० तथाददाहनगरींदुष्टोसौमुखवह्निनः ॥ दग्धावृक्षालतारामाःप्रासादनिचयास्तदा २१ कोला
हालोमहानासीन्मुखहस्तरवस्तथा ॥ हित्वासर्वाणिकार्याणिविद्रवंतिजनादिशः २२ नगराद्बहिरायांतंव्याघ्रास्योग्रसतेनरं ॥ तदेवभोजनंतस्यबालका
श्चोपदंशकाः २३ केचिद्विस्रस्तवसनाविवस्त्राश्चापरेययुः ॥ स्त्रियःकूर्पासकाःकाश्चित्काश्चित्पर्यंशुकाययुः २४ व्याघ्रास्यंविवरंमत्वाविविशुर्जीवितेच्छया ॥
अन्यानाकारयंत्यस्तानभक्षयतसोसुरः २५ अकालेप्रलयेप्राप्तेकाशीराजोविनायकं ॥ सर्वंविहायराज्यंस्वंस्त्रीपुत्रादिस्ववस्तुसः २६ स्कंधेगृहीत्वाभ्र
मतेनानास्थानेगृहेगृहे ॥ अतिदुःखेनसंतप्तस्तेजसाचैवशुष्मिणः २७ कथंमयाबालएषसर्वारिष्टप्रवर्त्तकः ॥ सर्वस्वहारकोमौढ्याद्धुर्निमित्तस्यकारणम् २८
विनैनंकिमहंब्रूयामदित्यैकश्यपायच ॥ निरस्तानिचपूर्वाणिमहारिष्टान्यनेनहि २९ आस्तेतूष्णीमिदानींकिंनजानेत्रापिकारणं ॥ एवंशोचन्नदुर्गमुच्चैरुरोहस
हतेनसः ३० तत्रापिदहनोवायुसहायःसमुपागमत् ॥ कुंभैश्चमृन्मयैःपात्रैःसिषिचुःसेवकास्तदा ३१ ततस्त्योनिर्ययुर्हित्वाक्रीडांबालयुताबहिः ॥ अवतीर्यत
तोराजाविह्वलोधःसमाययौ ३२ अश्वाश्वतरवीराश्वरथनागपदातयः ॥ निर्ययुर्नगरात्सर्वेपौराश्चसहगोधनाः ३३ विनायकःकाशिराजंकाशिराजोविनायकम् ॥
गवेषयामासतदावर्तमानेजनक्षये३४सर्वेषुलोकेषुगतेषुमध्येसव्याघ्रतुंडोनमिमीलतुंडं ॥ यावन्नतुंडेविशतिस्मदेवोविनायकोनंतगुणोमहात्मा३५उदयेतुरवेर्जा
तेददर्शाथविनायकः ॥ व्याघ्रास्यंदग्धनगरंजनपूर्णंचतन्मुखं ३६ वह्निंचनिकटेवीक्ष्यविवेशतन्मुखंबलात् ॥ तस्मिन्नगतेनिजास्येतुन्यमीलयतसोसुरः ३७ आ
स्यंगह्वरसंकाशंसर्वसंहरणेच्छया ॥ दारितुंबालकस्तत्रववृधेतीवतत्क्षणात् ३८पाटयामासतद्देहंव्याघ्रदेहेनरोदसी ॥ अभूच्चटचटाशब्दोवंशानांपाट्यतामिव ३९
ततोद्वेधाभवद्दैत्योगतासुरभवत्क्षणात् ॥ तदेकंशकलंतस्यगगनेसतुचिक्षिपे ४० वायुनाभ्रमतिस्मैतद्दूरेदेशेपपातच ॥ अर्धेनपततातेनचूर्णितंगहनंवनं ४१ अपरं
चाभवत्क्रीडागृहंबालमुदावहम् ॥ उदतिष्ठंस्ततोलोकाअपरानप्यबोधयन्४२ततोग्निमपिबत्सर्वंपादावाताद्चूर्णयत् ॥ विदारणंमहाकायंज्वालासुरयुतंतदा४३
एवंनिहत्यतान्दुष्टान्योगमायाबलेनसः ॥ अजीवयन्मृतान्सर्वान्नगरंचयथापुरा ४४ अकार्षीन्निजगर्जाशुकेसरीवविनायकः ॥ सर्वलोकाश्चराजाचततस्तंतुष्टुवु
र्मुदा ४५ नमोनंतशक्तेगुणानामधीशनमोरिष्टहंत्रेनमःसृष्टिकर्त्रे ॥ नमोविश्वपात्रेनमोविश्वहंत्रेनमोज्ञानदात्रेनमोज्ञानहंत्रे ४६ अकालप्रलयाद्देवत्वीतिहोत्राज्जगत्प
ते ॥ लीलावतारदैत्येभ्योरक्षितालीलयात्वया ४७ कस्यसामर्थ्यमेतावद्वह्निंपातुंमहाबलम् ॥ भूगोलसदृशास्यंकोहन्यादन्योमहासुरम् ४८ मृतानांजीव
नंकोनुत्वदन्यःकर्तुमुत्सहेत् ॥ त्वमेवजननीदेवत्वमेवजनकोविता ४९ महाभाग्यंजनानांमेयेनतेसान्निधिःकृतः ॥ एवमुक्त्वारुरोहाश्वंसिंहयानंविनायकः ५०
स्वंस्वंवाहनमारूढाःसर्वेवीराःसहस्रशः ॥ सुखेनमांदिरंगत्वानित्यकर्माकरोन्मुदा ५१ स्वंस्वंचमांदिरंयाताःसर्वेपौरानिरामयाः ॥ वाद्यत्सुसर्ववाद्येषुतुष्टुवुर्बंदि

१ नरयानमितिवापाठः ॥

नोनृपम् ५२ काशिराजोथविप्रेभ्योददौदानान्यनेकशः ॥ स्वस्तिवाच्यपुपूजाशुदेवास्तंचविनायकम् ५३ उपायनानिदेवायनानालोकाददुस्तदा ॥ वि
नायकोपिविप्रेभ्योददौतानियदृच्छया ५४ अमात्यानांचवीराणामंशुकानिददौनृपः ॥ विसृज्यसर्वान्भुक्त्वातौसुखेनस्वापमीयतुः ५५ यइदंशृणुयाद्भ
क्त्यानगरीमोक्षणंनरः ॥ सर्वान्कामानवाप्नोतिनारिभिर्बाध्यतेक्वचित् ॥ ५६ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेनगरीमोक्षणंनामपंचदशो
ध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ ॥ कउवाच ॥ ॥ शृणुव्यासप्रवक्ष्यामिकथामाश्चर्यकारिणीम् ॥ यांश्रुत्वामानवोभक्त्यासुखमत्यंतमश्नुते १ उत्था
यकल्पेराजासौनित्यंकृत्वायथाविधि ॥ विनायकालयंगत्वास्नात्वातंपरिपूज्यच २ संप्रार्थयद्भोजनार्थंततोबालंविनायकम् ॥ ततोददौसउद्गारंनानापक्वा
न्नसंभवम् ३ शेषंददर्शतत्रासौलड्डुकान्पायसादिकम् ॥ अपूपान्वटकान्पुण्यमोदनंसूपसंयुतम् ४ दधिदुग्धंमधुघृतंकथिकापात्रसंचयम् ॥ मणिमुक्तामयीं
मालांनानालंकरणानिच ५ अपश्यत्तस्यदेहेसावनर्घ्याणिनवानिच ॥ पुनर्नत्वाचपप्रच्छनृपतिस्तंविनायकम् ६ केनभक्तेनपूजेयंकृतातेजगदीश्वर ॥ तमहं
ज्ञातुमिच्छामिद्रष्टुंचत्वत्प्रसादतः ७ एवमुक्तोनृपेणाथवदतिस्मविनायकः ॥ भक्तायकाशिराजायनिजभक्तकृतार्हणाम् ८ ॥ देवउवाच ॥ शृणुराजन्प्रवक्ष्या
मियत्पृष्टोहमिहत्वया ॥ तदहंतेप्रवक्ष्यामिसंक्षेपेणनृपात्मज ९ दंडकारण्यदेशीयेपुरेनामलसंज्ञके ॥ भ्रूशुंडनाम्नाभक्तोभूद्भूतभव्यभविष्यवित् १० स्रष्टुंपातुंचसं
हर्तुंशक्तस्त्रैलोक्यमाशुयः ॥ ब्रह्माभवश्चविष्णुश्चनित्यंयद्दर्शनार्थिनः ११सर्वकालंममध्यानध्वस्तपापोजितेंद्रियः ॥ पुरातपस्यतस्तस्यभ्रूमध्यान्निसृतःकरः १२
भ्रूशुंडीतिततःख्यातस्त्रिषुलोकेषुसर्वदा ॥ अतिभक्त्यामृत्युलोकेसादृश्यंप्रापितोमम १३ अद्यशुक्लचतुर्थ्यांतुपूजयामाससमांमुदा ॥ घृतंदुग्धंदधिमधुपश्यमे
गात्रवन्नृप १४ भुक्तशेषमिदंचान्नंदृष्टंतेनृपसत्तम ॥ कउवाच ॥ ततऊचेकाशिराजोदेवदेवजगत्पते १५ तमहंद्रष्टुमिच्छामिकथंसोत्रागमिष्यति ॥ विना
यकउवाच ॥ ॥ गच्छराजंस्त्वमद्यैवतस्यचाश्रममंडलम् १६ संपूज्यप्रणिपत्यापिविवाहायतमाह्वय ॥ प्रार्थनीयःप्रयत्नेनवाच्यंचमद्वचोपिच १७ विनाय
कोममगृहमागतोस्तियतोमुने ॥ सचातिवृद्धस्त्वत्कृतात्पूजनाद्वाङ्कितोमुने ॥ सोपित्वद्दर्शनाकांक्षीतेनेहप्रेषितावयम् १८ ममापिदर्शनेकांक्षामहतीपूजनेत
व ॥ गृहंचसंपदोमेत्वमागत्यसफलीकुरु १९ एवमुक्तेत्वयाराजञ्छ्रुतेचममनामानि ॥ भ्रूशुंडीममभक्तःसतत्क्षणादागमिष्यति २० ॥ ॥ कउवाच ॥ ॥
एवमुक्तःसतेनाथप्रस्थितःपरिपूज्यतम् ॥ तूणीरकार्मुकधरोहयमारुह्यशीघ्रगम् २१ नदीवनानिचगिरीनतिक्रम्यशनैर्ययौ ॥ प्रापतस्याश्रमंराजावरुरोहहया
ततः २२ दृष्ट्वामुनिंभ्रूशुंडींसप्रणिपातंचकारह ॥ तेनापिमानितःसोथपुपूजेतमृषिंमुदा २३ पश्यतिस्ममहारण्यमुपविष्टस्तदाज्ञया ॥ सरोवृक्षलतापुष्पैः
फलैरम्यंतदाश्रमम् २४ कैलासोविष्णुलोकोथसत्यलोकोनतादृशः ॥ वेदघोषैःशास्त्रघोषैर्गीतनृत्यैर्विराजितम् २५अग्निहोत्रैश्चकासारैःपाक्षिभिर्जलजैरपि ॥ द

१ आश्रमेमलनामानि इतिपाठोऽन्यत्र ।

ज्ञातमाश्रमंराजामुमुदेहृष्टमानसः २६ दंडवत्प्रणिपत्यासौतंमुनिंसर्वमब्रवीत् ॥ विवाहकृत्यंतत्पूजामाज्ञांवैनायकीमपि २७ तस्मादेहिममगृहमितिचप्रार्थयन्नृपः ॥ ॥ ऋषिरुवाच ॥ ॥ कस्त्वंवदमहाराजकोसौतेपिविनायकः २८ ॥ ॥ नृपउवाच ॥ ॥ काशिराजइतिख्यातमांविद्धिरविवंशजम् ॥ कश्यपस्यसुतःसोपिदैवतंतेविनायकः २९ तंभोक्तुकामेनमयाश्रुताकीर्तिस्तवापिच ॥ चतुर्थ्यांपूजितःसम्यक्नानोपहारसंचयैः ३० तेतत्रदर्शितास्तेनतृप्तेननगरेमम ॥ तेनोक्तंममनाम्नैवायास्यतिसमुनिर्नृप ३१ अतोहमेवसंयातःप्रार्थितुंत्वांमहामुने ॥ तवापिदर्शनंमत्वादुर्लभंचर्मचक्षुषाम् ३२ ॥ कउवाच ॥ ॥ एवमुक्तोनृपतिनाभृशुंडिर्विस्मयान्वितः ॥ उवाचकिमिदंसत्यमुतवासत्यमेवच ३३ योगोचरोवेदविदांवेदांतानांचचेतसः ॥ सकथंत्वद्गृहेतिष्ठेदितिसंदिह्यतेमनः ३४ त्रयस्त्रिंशत्कोटिदेवादर्शनार्थंसमागताः ॥ सकथंतववाक्येनयामीत्युक्त्वास्वमाश्रमम् ३५ यदितिष्ठतिदेवोसौतवगेहेनराधिप ॥ स्वरूपंवदतस्याहंततोयास्यामितेगृहम् ३६ ॥ नृपउवाच ॥ अनंतानिस्वरूपाणिगणितुंनक्षमोविधिः ॥ शेषोवातस्यकोन्योहिवक्तुमीशोभवेद्द्विज ३७ अवतीर्णःसांप्रतंसकश्यपस्यगृहेमुने ॥ विनायकेतिनाम्नापिविख्यातोभुवनत्रये ३८ अत्यद्भुतेनरूपेणसप्तवर्षात्मकेनच ॥ अद्भुतानिचकर्माणिमहांतिजगदीश्वरः ३९ अशक्योयानिकर्तुंवैतानितेनकृतानिच ॥ स्वरूपंतेभिवक्ष्यामियेनरूपेणमेगृहे ४० वसतेदेवदेवोसौब्रह्मचारिस्वरूपतः ॥ अवतीर्णोयदासोभूद्दिव्यकांतिश्चतुर्भुजः ४१ दिव्यमाल्यांबरधरोदिव्यालंकारसंयुतः ॥ दिव्यायुधधरोधीमान्दिव्यगंधानुलेपनः ४२ प्रार्थितःकश्यपेनासौप्राकृतोभूत्तदैवसः ॥ मुनिरुवाच ॥ नायंदेवोममध्यानगोचरोराजसत्तम ४३ यस्यप्रभावान्मेशुंडाजातादेवर्षिदुर्लभा ॥ यत्रकुत्रापियास्येहंसचेदाकारयिष्यति ४४ ॥ कउवाच ॥ एवंश्रुत्वामुनिवचश्चिंताविष्टोब्रवीन्नृपः ॥ ममभाग्यमभाग्यंचमहदेतदुपस्थितम् ४५ त्वदाशयामहाघोरान्पर्वतान्गहनानिच ॥ अतिक्रम्येहसंप्राप्तःप्राप्तंत्वद्दर्शनंमहत् ४६ बलात्कारोनमेत्रास्तिगंतुचैवालयंविभो ॥ ततोमुनिःकरुणयानृपमूर्ध्निकरंददौ ४७ निमीलयाक्षिणीराजन्नित्युक्तःसतथाकरोत् ॥ उन्मील्यनयनेपश्यत्क्षणमात्रादसौनृपः ४८ गृहांतर्गतमात्मानंपूर्ववत्तदनुग्रहात् ॥ विनायकायतंसर्वंवृत्तांतंसमभाषत ४९ दर्शनाद्धर्षसंपन्नोनागतोदुःखसंयुतः ॥ नागतस्तववाक्येनममयत्नान्मुनिस्तुसः ५० ब्राह्मणेषुबलात्कारोभस्मसर्वंकरिष्यति ५१ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेनृपप्रत्यागमोनामषोडशोऽध्यायः ॥ ॥ १६ ॥ ॥ कउवाच ॥ ॥ आगतंराजशार्दूलंपुनःपप्रच्छसादरम् ॥ मेघगंभीरयावाचासर्वज्ञोपिविनायकः १ त्वयाकिमुक्तंतत्राथतेनवाभाषितंनुकिम् ॥ वदमेनृपतत्सर्वंश्रुत्वावक्ष्यामितेमतिम् २ ॥ ॥ नृपउवाच ॥ ॥ तस्मैतेकथितंवाक्यंमयापिप्रार्थितंबहु ॥ सउवाचमुनिःकस्त्वंकोसावपिविनायकः ३ उपास्यरूपंबिभ्रत्यात्तदायास्येतमीक्षितुम् ॥ एवंनिराकृतस्तेनमार्गेचिंतापरस्त्वमाम् ४ प्रेषयामासस्वगृहंदत्त्वामूर्ध्निकरंमम ॥ नि

१ अयं देवोममेत्यपिपाठः ।

मीलितदृशंचक्रेक्षणादुन्मील्यलोचने ५ तावद्ददर्शपुरतःस्थितंस्वांस्वगृहेसुर ॥ स्मृत्वाश्रमपदंतस्यहर्षश्चेतसिजायते ६ अहसीदितिशुत्वैववाक्यंतस्याविनाय
कः ॥ विनायकउवाच ॥ श्रांतोसिनृपशार्दूलपुनर्गच्छतमाश्रमम् ७ गजाननेतिमन्नामश्रुत्वायास्यत्यसौमुनिः ॥ एवंवदतितस्मिंस्तुसर्वरूपेविनायके ८
तावद्ददर्शभ्रूशुंडेरात्मानमाश्रमेस्थितं ॥ पुनर्द्दृष्टासनृपतिंहृदितर्कांनथा करोत् ९ किमर्थंपुनरायातोराजाकिंवावादिष्यति ॥ ततऊचेनमस्कृत्यराजातंमुनिपुंगवं
१० आकारयतित्वांविप्रस्वामीतवगजाननः ॥ नाममात्रेश्रुतेतस्यजहर्षचमुमूर्छच ११ रोमांचितशरीरोसौआनंदाश्रुमुमोचह ॥ यदिपक्षीभवेतांमेतदोड्डीयग
तोभवम् १२ इत्युत्कंठतयाविप्रःप्रतस्थेभूभुजासह ॥ भ्रूशुंडौचलितेपृथ्वीकदाप्यचलितेमुनौ १३ चचालसंमुखीभूत्वाकंपंतीतमथाब्रवीत् ॥ रक्षमांमुनि
शार्दूलनभर्मित्तोधरेतव १४ गजाननंनिजंनाथंद्रष्टुंयामित्वरान्वितः ॥ इत्युक्त्वातांपुरोयातुंचलितोसौद्विजोत्तमः १५ पदेदत्तेतृतीयेतुदर्शयामासतांपुरीं ॥
दृष्ट्वापुरींनृपोहर्षादुवाचमुनिपुंगवम् १६ त्वत्प्रसादादिदंप्राप्तंपत्तनंवेगवत्तया ॥ तपतांजपतांदुर्ज्ञोमहिमाभवतांमुने १७ इत्युक्त्वाशिबिमनयत्स्वगृहंतंनृपोत्त
मः ॥ उपवेश्यभ्रूशुंडिंतमासनेकांचनोत्तरे १८ अपूजयन्महाभक्त्यापाद्यार्घ्यविष्टरादिभिः ॥ ऋषिरुवाच ॥ प्रतारितोहंनृपतेनेक्षेतावद्गजाननं १९ तंप्रदर्श
यनोचेत्त्वांशप्स्यायास्येनिजाश्रमम् ॥ नृपउवाच ॥ क्रीडतेबालभावेनबालमध्येगजाननः २० वीरोयथाधूलिलिप्तस्तथैवायंविराजते ॥ ददर्शचमुनिस्तंतु
शुंडादंडविराजितम् ॥ कोटिसूर्यप्रतीकाशंद्विभुजंद्विरदाननम् [1] २१ उवाचनृपतिंक्रोधात्कथमेनंनमाम्यहम् ॥ विकंमहांतंयोराजन्मनुतेसौलघीयसे २२ तृण
मत्तिकथंसिंहोगजगंडविदारणः ॥ कउवाच ॥ श्रुतंतेनमुनेर्वाक्यंतमुवाचततोर्भकः २३ कौतुकाविष्टचित्तोसौलीलाविग्रहवान्विभुः ॥ विनायकउवाच ॥ की
दृक्सभवेत्स्वामीभ्रूशुंडेवदसांप्रतम् २४ मुनिरुवाच ॥ दिव्यांबरोदशभुजोमुक्तामालाविभूषितः ॥ सिद्धिबुद्धियुतःकर्णकुंडलाभ्यांविराजितः २५ शुंडादंड
मुखोलंबकर्णःसिंदूरमंडितः ॥ अहिशोभिमहानाभिःक्वणच्चरणनूपुरः २६ महामुकुटशोभाढ्योदशायुधलसत्करः ॥ एकदंतोभालचंद्रःक्षुद्रघंटाविराजितः २७
मयूरवाहनोदेववृंदवंदितपादुकः ॥ ॥ कउवाच ॥ इतितद्वचनंश्रुत्वापद्मासनगतःस्वयं २८ तादृग्रूपोभवद्बालःसृष्टिरक्षापहारकृत् ॥ भ्रूशुंडीतंनिरीक्ष्यैवस्व
स्योपास्यंगजाननम् २९ लुलुंठभूमौप्रेम्णासप्रतिपत्तिपराङ्मुखः ॥ ननर्तपरमानंदोरोमांचितशरीरवान् ३० देहभावंप्रपद्याथप्रणनामयथाविधि ॥
पूजयामासविधिवदुपचारैःपृथक्पृथक् ३१ आलिंग्यदशदोर्दंडैःपरमात्माजहर्षह ॥ सगद्गदौनिरीक्ष्यैतौसाश्रूराजाततोप्यभूत् ३२ ऊचेराजामहापुण्यंफलितंपू
र्वजन्मजम् ॥ देवभक्तभवंसौख्यंदृष्टमद्यमयाद्भुतं ३३ उभाभ्यांप्राणिपत्याथपुपूजचयथाविधि ॥ महासनगतौतौतुपरस्परमथोचतुः ३४ ॥ गजाननउवाच ॥
तवनिष्ठामयाज्ञायिराज्ञाचापिनिवेदिता ॥ अतएषधृतोवेषोदशदोर्दंडमंडितः ३५ यथायथाजनोन्योपिध्यात्वामांभजतेमुने ॥ तथातथाहंरूपाणिकरोमिचदद्दा

१ चतुर्भुजंकोटिसूर्यप्रकाशंद्विभुजंपुनःइत्यर्धेपाठः।

मिच ३६ वांछितंतस्यलोकस्यविश्वासेनभजत्यसौ ॥ दुष्टभारभयाक्रांताधरित्रीसत्यलोकगा ३७ ब्रह्माणंशरणंयातातेनाहंप्रतिबोधितः ॥ अदित्याश्ववरेणाहंजा
तःकश्यपनंदनः ३८ भुवोभारंहरिष्यामिशक्रादींश्चनिजेपदे ॥ स्थापयिष्यामिदैत्यानांनाशंकृत्वाप्यनेकधा ३९ तवोत्कटमनुष्ठानंदृष्ट्वाहमीदृशोभवम् ॥ देवांत
कंसहभ्रात्राहत्वायामिनिजंपदम् ४० ऋषिरुवाच ॥ दृष्ट्वातवांघ्रियुगलंसर्वलोकसुखावहं ॥ सर्वक्लेशहरंदेववंद्यंकांक्षितदंप्रभो ४१ कृतकृत्यःपवित्रश्चजातोहंतव
दर्शनात् ॥ वरंमेदेहिविश्वात्मंस्तेनतृप्तोभवाम्यहं ४२ यदायदाहंध्यायामिरूपेणानेनविभ्रप ॥ तदातदामेप्रत्यक्षोभवेथाःकरुणानिधे ४३ आशापूरकइत्येवंनामते
ख्यातिमेतुच ॥ गजाननउवाच ॥ यदायदावांछसेत्वंतदायास्यामितेंतिकं ४४ अकिंभावादिदंनामत्वयोक्तंख्यातिमेष्यति ॥ कउवाच ॥ एवंवरंसौसमाकर्ण्यप्रणनाम
मुदामुनिः ४५ प्रणतेतुमुनौतस्मिन्पुनःप्रोचेगजाननः ॥ निधायमस्तकेहस्तंशनैस्तस्यद्विजस्यसः ४६ यद्यत्तेवांछितंब्रह्मंस्तत्सर्वंसिद्धिमेष्यति ॥ अविस्मृतिश्च
भवितामममनित्यंमुनेतव ४७ ॥ कउवाच ॥ एवमुक्त्वाबालरूपीचिक्रीडसविनायकः ॥ सोपिपद्मासनगतोध्यानमेवान्वपद्यत ४८ आश्चर्यंपरमंचक्रुःसर्वलोकास्त
दाद्भुतं ॥ निरीक्ष्यबालरूपस्यचरितंपरमात्मनः ४९ काशिराजोवदत्तत्रधन्योहंजगतीतले ॥ दर्शनंप्राप्तवानस्यब्रह्मादीनांसुदुर्लभम् ५० तंचबालंकरेधृत्वानिना
यांतर्गृहंमुदा ॥ भोजयामासस्वाद्वन्नंशाययामासपूर्ववत् ॥ आज्ञांगृहीत्वासुष्वापस्वयंचपूर्ववन्मुने ५१ ॥ इतिश्रीगणेशपु० उत्त० बाल० सप्तदशोऽध्यायः ॥ १७ ॥
॥ व्यासउवाच ॥ अपरेहनिसंप्राप्तेकाकथासमपद्यत ॥ तांमेकथयलोकेशशृण्वंस्तृप्यामिनक्वचित् १ ॥ कउवाच ॥ शृणुष्वावहितोब्रह्मन्कथयामिसमास
तः ॥ विनायककृतांदिव्यांकथांपापापनोदिनीम् २ उदितेतुदिवानाथेनित्यकर्मसमाप्यतौ ॥ क्रीडार्थमगमद्बालोराजाभद्रासनंतथा ३ दैत्योथब्राह्मणोभूत्वा
ज्योतिःशास्त्रविशारदः ॥ तालीयंपुस्तकंवामेमालांदक्षेकरेदधत् ४ पाटलंपरिधानंचशिरोवस्त्रंमहत्तरम् ॥ गोपीचंदनसंभूतांस्तिलकान्द्वादशापिच ५ अति
दीर्घतमश्मश्रुराजगामनृपांतिकम् ॥ समीपमागतंयावत्तावद्राजाननामतं ६ उत्थायतंसमीपेसस्वासनेसन्यवेशयत् ॥ पप्रच्छकुशलंतस्मैकार्यंचागमनंकुतः ७
किंचतेनामविप्रेंद्रकिंज्ञानंकिंचतेतपः ॥ वदसत्यंमुनेकत्वाकृपांमयिकृपानिधे ८ ॥ कउवाच ॥ एवंपृष्टःसतेनाशुदत्त्वाशीर्वचनंपुरा ॥ अनुक्रमेणसकलंनिजगा
दमहामुने ९ हेमज्योतिर्विदित्येवंनाममेनृपनंदन ॥ गंधर्वलोकादायातोवस्तुंतवसमाश्रये १० भूतंभवद्भविष्यंचशांतिकानिचवेद्म्यहम् ॥ प्रश्नांश्चकथयिष्या
मियान्यांस्त्वंपृच्छसेनघ ११ अरिष्टान्यत्रजातानिज्ञातानितानिमेनृप ॥ भावितेदुष्टचिह्नंचविज्ञायाहंसमागतः १२ त्वदाश्रयेणवस्तुंमेवांछास्तिनृपसत्तम ॥
नृपउवाच ॥ किंनिमित्तमरिष्टानिजायंतेत्रमहामुने १३ अग्रेपिकानिभावीनिसत्यमेववदस्वमे ॥ तवप्रतीतौजातायांस्थापयिष्येनिजेगृहे १४ वृत्तिंचकल्पयि
ष्यामियोगक्षेमकरींतव ॥ गणकउवाच ॥ यावद्विनायकस्तेस्तिगृहेकश्यपनंदनः १५ तावद्विघ्नानिजायंतेयतोविघ्नाधिपस्तुसः ॥ असंचारेवनेचैनं
त्यक्त्वायाहिनृपात्मज १६ नभविष्यतिविघ्नंतेनगरेवागृहेपिच ॥ अस्मिन्स्थितेजलंसर्वंनगरंप्लावयिष्यति १७ तस्मिन्कथंचिन्नष्टेतुपर्वतावायुनोदिताः ॥ चू

र्णयिष्यंतिनगरंनृपनास्त्यत्रसंशयः १८ एतत्कथंनजानीषेपूर्वंनासन्नुपद्रवाः ॥ राज्ञाविश्वसितव्यंनोकपटेलुब्धकेशुचौ १९ अतिशूरेस्वोत्कटेचस्वात्मपातं
प्रपश्यता ॥ एतेघ्नंतिचराजानंराज्यकामामहाशयाः २० एतत्कथयितुंयातोज्ञात्वाराज्यच्युतिंतव ॥ हिताहितमवश्यंहिवक्तव्यंजानतानृपे २१ विविच्यनृपमे
वाक्यंयथेच्छसितथाकुरु ॥ कउवाच ॥ एवमाकर्ण्यतद्वाक्यंराजातंपर्यभाषत २२ ॥ राजोवाच ॥ अतीतानागतज्ञानादुक्तंसर्वंत्वयामुने ॥ मिथ्यैवभासते
मह्यंतत्स्वज्ञानेप्रपंचवत् २३ त्वदुक्तप्रत्ययेजातेदास्यामिवेतनंतव ॥ नज्ञातोबालकश्चायंत्वयागणकसत्तम २४ ब्रह्मांडंकमलाकांतंअपरंशूलिनंहरं ॥ ज
नयिष्यतिवांछाचेद्ब्रह्मांडानिबहूनिसः २५ यदितेनिश्चयोवाक्येस्वकीयेब्राह्मणोत्तम ॥ नयैनंगहनंघोरंत्यक्त्वैनंपुनरेहिच २६ लोकद्वेषकृतोनेननिहताबल
वत्तराः ॥ स्वदेष्टारंकथमयंनजानेस्थापयिष्यति २७ अनिष्टमस्यमनसिनवयंचिंतितुंक्षमाः ॥ अनेननगरीराज्यंत्रातमुत्पाततोबहु २८करोतींद्रमनिंद्रंवाशक्रंशक्रं
लघुंगुरुं ॥ उच्चंनीचंतथानीचमुच्चमीशमनीश्वरं २९ संश्रुत्यवाणींनृपतेर्गणकोभूद्वषारुणः ॥ राजानंपुनराहैवंवक्तुंकिंचिदवाङ्मुखः ३० मयातवहितंप्रोक्त
मनिष्टंतवभासते ॥ नजातुलंघयेत्कोपिभाविसुष्ठुतथेतरत् ३१ नृपतेदर्शयैनंमेबालकंलक्षणानिते ॥ कथयिष्येततोबालान्सर्वानाकारयन्नृपः३२ अग्रेवि
नायकःप्राप्तोधावमानास्ततोखिलाः ॥ गणकंसनमस्कृत्यपप्रच्छकुतआगतः ३३ सामुद्रलक्षणज्ञोसिज्योतिःशास्त्रविशारदः ॥ भूतभाविभविष्यज्ञवद
मेभाग्यजंफलम् ३४ ॥ कउवाच ॥ सधैर्यंबालवाक्यंतदाकर्ण्यकपटीद्विजः ॥ तर्कयामासमनसिकथंस्वास्तिगतिर्भवेत् ३५ अनेननिहतादुष्टाबलिनोनेक
रूपिणः ॥ शिशोर्हस्तंगृहीत्वासवदतिस्मशुभाशुभम् ३६ चतुर्थेदिवसेपुत्रत्वंकूपमध्येपतिष्यसि ॥ चेन्निर्गतःकथंचित्त्वंसिंधौमज्जनमेष्यसि ३७ ततोपिजी
वितश्चेत्तुध्वांतमग्नोभविष्यसि ॥ ततोपिजीवितेशैलस्त्वयिकोपिपतिष्यति ३८ महांतौकालपुरुषौजीवंतंभक्षयिष्यतः ॥ एतान्यरिष्टानितवभविष्यंति
नसंशयः ३९ प्रतीकारंब्रवीम्यत्रनिर्भयार्थंकुरुष्वतम् ॥ ततोन्यत्रमयासार्धंयाहिदिनचतुष्टयम् ४० पुनरत्रानयिष्यामिशपथोमेतवाग्रिजः ॥ निशम्यवाचं
बालोसौजगामांतर्गृहंशनैः ४१ राज्ञोहस्तात्प्रगृह्याशुमुद्रिकांरत्ननिर्मिताम् ॥ कृत्वातांस्वकरेबालोवदतिस्मद्विजंप्रति ४२ गणकाशुवदत्वंनोगतंवस्तुमह
त्तरम् ॥ केननीतंकदाप्राप्तंभूयात्तेप्रत्ययोभवेत् ४३ इत्युक्तःसतुबालेनविचार्यजनसंसदि ॥ बभाणहास्यवदनोमुद्रिकायादिलभ्यते ४४ ममै
वयदिदेयासातदेदानींब्रवीम्यहम् ॥ तथेतिबालकेनोक्तेतवैवकरगेतिसा ४५ इत्थमुक्तोजिह्मवेषधारिणावाडवेनसः ॥ तयामंत्रितयाबालोन्यवधीत्तंहृदिक्षणा
त् ४६ सतयाभिन्नहृदयोवज्राहतइवाचलः ॥ निपपातधरापृष्ठेचालयन्वसुधांभृशं ४७ पततातस्यदेहेनचूर्णितंनगरंकियत् ॥ काशिराजोजनाःसर्वेआश्चर्यंमे
निरेतदा ४८ जहर्षुर्देवताःसर्वाःपुष्पवृष्टिंसुचक्रिरे ॥ स्वर्गभूवाद्यघोषैर्वैर्व्याप्तामूद्भूतलंतदा ४९ ॥ ॥ जनाऊचुः ॥ ॥ कथंज्ञातोनेनदुष्टोब्राह्मणोब्रह्मवे
षभृत् ॥ राज्ञापिनकृतंदैवाद्वाक्यंतस्यदुरात्मनः ५० अयंबालोनमंतव्योभूभारहरणेमरः ॥ अवतीर्णःकश्यपस्यगृहेसौकरुणानिधिः ५१ मुद्रिकाघातमात्रे

णकथंप्राणान्जहौबली ॥ इत्युक्त्वापुपूजुःसर्वेनेमुस्तंतुष्टुवुर्जगुः ५२ ददौदानानिविप्रेभ्योराजाराजीवलोचनः ॥ द्विजचारणबंदिभ्योदीनेभ्यश्चाप्यनेकशः
५३ नागरान्मानयित्वाताविससर्जततःसभाम् ॥ बालोपिबालकैरंतुंययौपूर्ववदज्ञवत् ५४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेकपटिदैत्यव
धोनामाष्टादशोध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ कउवाच ॥ ॥ बालकेनहतंश्रुत्वाब्राह्मणवेषधारिणम् ॥ नरांतकोमहादैत्योकूपकंकंदरा
सुरम् १ प्रेषयामासबलिनंब्रह्मलब्धवरंतदा ॥ दत्त्वाबहूनिवस्त्राणिरत्नानिविविधानिच २ ॥ ॥ दैत्यउवाच ॥ ॥ गच्छतंसुमुहूर्तेनहंतुंबालंतमाशु
च ॥ नानोपायैर्मारितानांकुरुतान्निष्कृतिंबलात् ३ ॥ ॥ कउवाच ॥ ॥ एवंतेनसमाज्ञप्तावसुरौकूपकंदरौ ॥ सेनयाचतुरंगिण्यागव्यूतिंसंप्रतस्थतुः ४
निवृत्त्यसेनांचततईयतुर्भ्रंशहर्षितौ ॥ विचारंचक्रतुर्मार्गेकूपोहंकूपतामियाम् ५ बालोभवक्रीडमानंमयितंक्षिपयत्नतः ॥ मंडूकरूपःकूपस्थोभक्षयिष्यामि
तत्क्षणात् ६ अंतर्धानंकरिष्यावःकृत्वाकार्यंमहत्तरम् ॥ एवंतौनिश्चितमतीकाशीराजपुरंमहत् ७ प्रापतुरभवत्कूपोमहान्नृपनृपाजिरे ॥ कंदरोबालरूपोभू
द्रंतुंतेषुमनोदधे ८ राजाथददृशेकूपंसुजलंतंजहर्षच ॥ यावत्पश्यातिमध्येसौमंडूकंतंददर्शह ९ नदंतंमंजुलांवाणींपीतवर्णंभयानकम् ॥ कंदारोबालमध्य
स्थोजगादतंविनायकम् १० बहिर्याहिमहाबाहोपश्यकूपंमनोहरम् ॥ ददर्शकूपंबालैःसबहिरागत्यतत्क्षणात् ११ अत्यंतंसुंदरंदृष्ट्वातंकूपंबालकैःसह ॥ चि
क्रीडेविविधैर्भावैर्नानानिलयनैरपि १२ मध्याह्नेजलमध्यस्थाःसिषिचुस्तेपरस्परम् ॥ मज्जनोन्मज्जनंचक्रुःकारयंतःपरस्परम् १३ उड्डानंजलमध्येतेदूरादाग
त्यचक्रिरे ॥ एवंरमित्वातेतत्रगृहान्गंतुंसमुद्यताः १४ तावद्विनायकोपश्यज्जलमध्येनिजंवपुः ॥ जानंस्तंतुंजलेसर्वान्पश्यन्नासीद्बहिःपुरा १५ तावत्तुनो
दतंदृष्टोजलमध्येसकंदरः ॥ अगाधंतज्जलंज्ञात्वालोडयामासलीलया १६ स्वेच्छयारमणोलक्ष्म्याक्षीराब्धिमिववाडवः ॥ अधोयातिमुहूर्तेसउपरिष्टात्त
थैवच १७ मायामास्थायसगणोमज्जितुंसमजायत ॥ चरणौहस्तकमलेचिक्षेपबहुधाशिशुः १८ लुलुपुःसर्वशोबालास्तावत्तेनधृतोबलात् ॥ चरणेकंदरो
नीतस्तत्कूपतलमादरात् १९ अमज्जयद्बलात्तंचमुंचमुंचेतिसोब्रवीत् ॥ विनायकोपितंप्रोचेमुंचमुंचेतिमामपि २० उभौसमबलौतौतुमज्जनोन्मज्जनेर
तौ ॥ हिरण्यकशिपुर्लक्ष्मीनृसिंहाविवदुर्धरौ २१ अधस्ताद्बहुकालंतौगतौज्ञात्वाखिलार्भकाः ॥ चक्रुरार्तस्वरंदुष्टंमृतोबालइतिस्फुटम् २२ अपशब्दंत
थाश्रुत्वाययुःस्त्रीवृद्धबालकाः ॥ काशिराजोपिचुक्रोशकिंकार्यमितिचाब्रवीत् २३ अगाधनीरेकूपेस्मिन्कथंजीवेत्सबालकः ॥ कोप्यूचेचापरःप्राहशीघ्रंनिः
सारितोयदि २४ उपायोभविताकश्चिज्जीवनायास्यनिश्चितम् ॥ येनयत्प्रार्थ्यतेदास्येतदस्मैजीवितंस्वकम् २५ निष्काश्यतांबहिर्बालोवेगेनचबलेनच ॥
इतिराजवचःश्रुत्वाकूपमध्येगतास्त्रयः २६ मग्नास्तेदैत्यकृतयामाययानापरेजनः ॥ अवतर्तुंमनश्चक्रेततोराजाशुशोचतम् २७ ॥ राजोवाच ॥ किंमयाकारिदु
रितंयेननमेदुःखमीदृशम् ॥ कथंबालोमयानीतःसुखार्थंदुःखदोभवत् २८ दर्शयिष्येकथंतस्यापितृभ्यांमुखमेवच ॥जनायवाकथमिदंकथमस्यमृतिर्भवेत् २९

निरस्तान्यत्यरिष्टानिमहांतिबालकेनह ॥ कथमस्यवशंयातोनजानेदेवचेष्टितम् ३० एवंसर्वेषुशोचत्सुस्त्रीवृद्धबालकेषुच ॥ मंडूकरूपीकूपस्थोव्यादायमुखमा
स्थितः ३१तावदेवागतोबालोनोदितःकंदरेणसः ॥ तेनापिनोदितोदैत्योदैत्यास्यैन्यपतत्खलाः ३२ भक्षयामासकूपस्तंमत्स्योमत्स्यमिवालघुः ॥ गिलितोबाल
इतिसनिजरूपंसमास्थितः ३३कूपोपिगगनस्पर्द्धीचक्रेश्लाघ्यंयशोर्जितम् ॥ सर्वेषामेवदैत्यानामानृण्यंगतवानहम् ३४इत्युजहर्षमनसामत्वादेवमविक्रमम् ॥
कंदरस्तुरुषाविष्टोविदार्यास्यमहोदरम् ३५निर्गम्यवेगमास्थायसबालोंतर्हितःक्षणात् ॥ विदारितंमेजठरमितिकूपोपिकंदरम् ३६ अदशत्कंठदेशेसजीवग्राहंरुषा
तदाएवंपरस्परवधात्पतितौविह्वलौभृशम् ३७पादहस्तावमर्देनचूर्णितंनगरंकियत् ॥ यथासुंदोपसुंदौतुपरस्परवधान्मृतौ ३८परस्परवधात्तद्वन्मृतौतौकूपकंदरौ
राजभृत्यैरपाकृष्यत्यक्तौतौनगराद्बहिः ३९ तत्क्षणादाजिरेकूपोपिदधेसविनायकः ॥ ददृशेपूर्ववत्क्रीडन्सर्वबालयुतोजनैः ४० आश्चर्यमेनिरेतत्रबालाराजाजना
अपि ॥ ऊचुःपरस्परंकेचित्कापटव्येयेनयुज्यते ४१ आमूलान्नश्यतेसोथस्वयमेवनसंशयः ॥ पतंगोदीपनाशार्थमायातिनश्यतेयथा ४२ अस्यचालयितुंशक्तो
नस्यात्कालोपिरोमच ॥ दृष्टंबहुविधंचास्यसामर्थ्यमवतारिणः ४३ जेतुमीशंगतःकामःस्वयंभस्मत्वमागतः ॥ काशिराजस्तुतत्श्रुत्वासत्यंसत्यमितिब्रुवन्
४४ ददौदानानिविप्रेभ्योविससर्जप्रपूज्यतान् ॥ विनायकंनमस्कृत्यगतालोकानिजान्गृहान् ४५ केचिदालिंग्यतंबालंययूराज्ञाप्रपूजितं ॥ देवाश्चपुष्पवर्षाणि
मुमुचुस्तुष्टुवुर्जनाः ४६ ॥ कउवाच ॥ एवंनज्ञायतेब्रह्मन्कार्याकार्यंमरुद्बलं ॥ मायास्वरूपंपुंभाग्यंराक्षसाचरणंमुने४७अवतारगुणावापिनज्ञेयाःपरमात्मनः४८
॥ इतिश्रीगणेशपुराणेउत्तरखण्डेकूपकंदरवधोनामएकोनविंशतितमोऽध्यायः ॥१९ ॥ व्यासउवाच ॥ काशिराजगृहेब्रह्मन्विवाहःसकदाभवत् ॥ तन्ममाचक्ष्व
भगवान्विस्तराच्चतुरानन १ कउवाच ॥ एकैकंनश्यतेरिष्टमपरंयातिवैपुनः ॥अस्मिन्नष्टेकरिष्यामीत्येवंयावद्विचार्यते२कूपेचकंदरेनष्टेत्रयोप्यन्येतदारिताः ॥अंधको
भासुरस्तुंगोराक्षसाःक्रूरदर्शनाः ३ जिघांसयागताबालंततोयुद्धमवर्तत ॥ श्रुत्वायेषांतुसंग्रामंब्रह्माद्याःप्रापलन्भयात् ४ दिग्गजामर्दितायैस्तुविबुधानांतुका
कथा ॥ कदायंकश्यपसुतोभविताहष्टिगोचरः ५ नाशयामोनेकधातमितिव्यवसिताभृशं ॥ यावंतःप्रेषितावीरास्तावंतोनिधनंगताः ६ वयमेनंहनिष्यामो
ऽजित्वायामोनवैगृहान् ॥ वह्निरूपंसमास्थायदाहयामोमुनेःसुतं ७ अंधकस्त्वब्रवीत्तत्रतमसाव्याप्यखंदिशः ॥ अंधकारंकरिष्यामिधरायामथसर्वतः ८ त
तःपरस्परदर्शिनस्यात्तेषांकदाचन ॥ अंभासुरोब्रवीत्तत्रमहींसर्वांजलेनह ९ आपुरंप्लावयिष्यामिसमंतान्नगतिर्भवेत् ॥ तुंगोब्रवीदहंतुंगोगिरिर्भूत्वापुरींतुतां
१० आलोड्यचूर्णयिष्यामिसपक्षइवपर्वतः ॥ अंधकारेजलेवह्नौपर्वतेसर्वतःस्थिते ११ कोपिगंतुंनशक्नोतिकथंबालोगमिष्यति ॥ एवंनिश्चितसंकल्पाजगर्जु
स्तेत्रयोभृशं १२ तेषांगर्जितशब्देनकंपितंभुवनत्रयं ॥ तत्यजुर्निजवेलांतेसागराःक्षुभितोदकाः १३ ततोरविंसमाच्छाद्यतस्थौतत्रांधकासुरः ॥ अंधकारेम
हाघोरेनप्राज्ञायतकिंचन १४ अकस्माद्रजनीप्राप्ताव्यवसायपरैर्जनैः ॥ स्नानासंध्याजपासक्तैर्होमासक्तैर्द्विजैस्तदा १५ तपःसुवेदघोषेषुविवाहोपनयादिषु ॥

कीर्तनेषुपुराणेषुद्विजदेवार्चनादिषु १६ सक्तैर्नानाविधैर्लोकैर्निशाप्रापात्रतादिषु ॥ जजल्पुःकिमुविंध्योयंरुणद्धिसूर्यमंडलम् १७ अथवाप्रलयोभावीवो
परागःसमागतः ॥ सभायामूचुरासीनंराजानमितिपंडिताः १८ तर्कयंतियावदेवगावोऽगुःस्वगृहांतरं ॥ असंभावितवेलासुचक्रुर्दीपान्गृहेगृहे १९
कथमस्तमितिर्जातानपाकोनचभोजनम् ॥ व्यस्मयंततदानार्योदुदुहुर्गाश्चकाश्चन २० दीपिकाभिःकाष्ठदीपैर्व्यवहारंजनास्तदा ॥ चक्रुर्दुःखेनकार्याणिवणि
जोब्राह्मणादयः २१ सेवकानांमहानंदःकामिनांचाभवत्तदा ॥ सालसानांप्रसुप्तानांनिद्रालूनांतथैवच २२ एवंकृतेचांधकेननाम्नाचांभासुरस्तदा ॥ मेघरूपे
णववृषेधाराहस्तिकरोपमाः २३ शंपाप्रकाशतोलोकाःक्षणमीक्षांप्रचक्रिरे ॥ जलधाराभयात्सर्वेगृहमध्येस्थितास्तदा २४ प्रासादान्यपतन्केचिद्गृहाणां
भित्तिकाअपि ॥ अंतःकेचिद्बहिःकेचिन्मृताजनचयास्तदा २५ झंझावातहतावृक्षाःपतिताधरणीतले ॥ सौदामिनीभिर्निर्दग्धाद्रुमागृहचयाबहु २६ उत्तीरा
भिर्नदीभिःसासमुद्रैरिवसंप्लुता ॥ नगरीसर्वलोकाढ्यासर्वसत्त्वसमाकुला २७ ॥ ॥ कउवाच ॥ प्रलयंदैत्यमायांचज्ञात्वासकरुणाकरः ॥ विनायकोकरोन्मा
यांबलेनवटमुच्चकैः २८ निर्ममेतत्क्षणादेकंलतागुल्मैःसुशोभितं ॥ शतयोजनविस्तीर्णंजटाशाखासमन्वितं २९ पक्षिरूपेणतत्रासौस्थितोगगनलेहिनी ॥
पक्षौभूमौप्रतिष्ठाप्यस्पृशंश्चशिरसानभः ३० प्रकाशयामासपुरींपीत्वाचंच्वाजलंमहत् ॥ करेणाशोषयद्धन्यकरीवपल्वलोदकं ३१ जनाहर्षाद्द्विजगदुर्ग
तोविघ्नोगतंजलं ॥ गतेंधकारेददृशुर्वटंसांद्रतरंचतं ३२ पक्षिणंचाद्भुताकारंनदृष्टंनचवैश्रुतं ॥ सर्वेजनाययुस्तत्रन्यग्रोधेस्थातुमुत्सुकाः ३३ अश्वैर्गजैरथैरुष्ट्रैः
शिबिकाभिर्नृभिस्तुतैः ॥ स्त्रीभिर्दासैःकाशिराजोवटस्याधःसमाययौ ३४ पशवःसारमेयाश्चबिडालावनगोचराः ॥ विनायकप्रभावेणनवृष्टिस्तत्रनोत
मः ३५ चक्रुःसर्वेपूर्ववत्तेवर्णाःकर्मयथाविधि ॥ पौराःसद्व्यवसायेषुसमसज्जंतपूर्ववत् ३६ सर्वेषांरक्षणंकर्तुंपाक्षिरूपमधारयत् ॥ जगदीशोगणेशोनुनजा
नीमोत्रकिंचन ३७ विस्तार्यपक्षान्वृष्टिंयोन्यषेधीदैत्यकारिताम् ॥ वृष्टिंसोल्कांसकरकांस्वयंसेहेसुखेनसः ३८ इतिलोकास्तर्कयित्वास्थितानिर्व्याकुलास्त
दा ॥ एकादशगतावस्थाएवंतत्रास्थितस्यच ३९ नाज्ञासीत्कोपिचरितंविनायककृतंद्विज ॥ दृष्ट्वाविनायकंबालंक्रीडंतंबालयूथगम् ४० ततोदैत्यौक्षणिशक्तीनि
श्चेष्टौसमपद्यताम् ॥ तुंगोजगर्जबहुधानादयन्प्रादिशोदिशः ४१ गिरिरूपंसमास्थायहनिष्येपक्षिणंक्षणात् ॥ ब्रुवन्नेवंबभूवाशुपर्वतोभूत्तदैवसः ४२ सरोनदी
समायुक्तःपंचयोजनविस्तृतः ॥ दिव्यौषधीभिर्दीप्ताभिर्भासयन्गगनंदिशः ४३ नानापक्षिसमायुक्तोवाडवाश्रममंडितः ॥ सपक्षंपर्वतंदृष्ट्वापतमानंसपक्षिराट्
४४ उड्डीयपरिबभ्रामवारयामासतज्जलम् ॥ घूर्णयन्पक्षवातेनजंगमाजंगमंजगत् ४५ प्रस्थानिपतिताभूमौपर्वतानामितस्ततः ॥ चंच्वादधेसतुंगाद्रिंकाश्यपिः
फणिनंयथा ४६ सहतेनाभ्रमन्खेसौलक्षयन्दानवावुभौ ॥ अंधकंचरणैकेनपरेणांभासुरंचसः ४७ अतिक्रम्यभुवर्लोकमियायसमहाखगः ॥ आतिभ्रमण
खिन्नास्तेतप्ताश्चसूर्यरश्मिभिः ४८ निपेतुर्व्यसवोभूमौत्रयःपर्वतसन्निभाः ॥ पतंतश्चूर्णयामासुर्वनान्युपवनानिच ४९ दृष्ट्वादैत्यशरीराणिस्त्रीबालसहिताज

नाः ॥ ययुस्तेनगराभ्याशेवीक्ष्याश्चर्यंपरंययुः ५० खंडानि तच्छरीराणांगंडशैलाइवाबभुः ॥ निरस्यमायांदैत्यानांततोलोकाविसिस्मिरे ५१ वटंतंदेवरूपे
णदद्दृशुर्नचवैपुनः ॥ अंतर्हितेवटेपक्षिरूपंतत्याजसोर्भकः ५२ ततोविनायकंबालंकाशिराजोलिलिंगह ॥ पृष्ट्वाकुशलसंप्रश्नंनागराश्चनृपश्चतम् ५३ पुपूजुः
परमप्रीत्याविघ्ननाशंविनायकम् ॥ प्रशशंसुर्मुदादेवंकश्यपस्यसुतंजनाः ५४ नजानीमोवयंदेवंमायांदैत्यकृतांपराम् ॥ सामर्थ्यंतेगुणांश्चापियत्रवेदाविकुंठिताः
५५ लीलयारक्षिताःसर्वेमोचिताबहुसंकटात् ॥ वातागताविनाशंचउत्पाताश्चैवदृष्टय. ५६ आतिविंबरवेःसम्यगंधकारेगतेलयम् ॥ मनांसिसर्वलोकानांप्रसन्ना
निमुदातदा ५७ नद्यःप्रसन्नसलिलाःसर्वमासीद्यथापुरा ॥ ववर्षुःपुष्पवर्षाणिदेवदेवेविनायके ५८ नानावाद्यनिनादैस्तेऽलंकृतंपुरमाविशन् ॥ ददुर्दानानिविप्रे
भ्योदेवोनःप्रियतामिति ५९ शांतिहोमंविधायासौनृपोदाद्रोधनंबहु ॥ विसृज्यसर्वान्बुभुजेविनायकयुतोनृपः ६० ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालच
रितेदैत्यत्रयवधोनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ कउवाच ॥ ॥ शृणुद्विजमहाश्चर्यंकथ्यमानंमयातव ॥ विनायकस्यचरितंसर्वपापहरंनृणा
म् १ अंभासुरस्ययोमूर्धासगतोनिजमंदिरम् ॥ भ्रमरायानिरीक्षिष्टसखीसातांव्यबोधयत् २ प्रसुप्तांकांचनेतल्पेसोत्थायांगणमाययौ ॥ पौत्रंशिरोनिरीक्ष्यैवमू
र्छितापतिताभुवि ३ निघ्नतीनिजवक्षःसाकराभ्यांशोकनिर्भरा ॥ निपतद्भूषणाखिन्नानागामृष्टेवपद्मिनी ४ विभिन्नवलयाछिन्नकूर्पासातनुमध्यमा ॥ हस्याहस्य
महद्गात्रालुंठतीभुविविह्वला ५ निषिध्यमानासखिभिर्भ्रातृभिःस्वजनैरपि ॥ त्रिमुहूर्तैःप्रबुद्धासाकिंचिद्वक्तुंप्रचक्रमे ६ उत्थायचकराभ्यांतुनिजघानपुनःशिरः ॥
भ्रमर्युवाच ॥ ॥ येनेयंपृथिवीसर्वात्रासितासामरावती ७ मूर्ध्नासहस्रंशेषस्यभ्रूकटाक्षेणकंपितम् ॥ येनराज्येभिषिक्तौतौदेवांतकनरांतकौ ८ यस्यक्ष्वे
डितमात्रेणरोदसीकंपिताभृशम् ॥ सकथंपतितःकुत्रनिहतःकेनवासुतः ९ यद्दृष्ट्वाकंपितःकालःसकथंनिधनंगतः ॥ एवमाक्रंदतीदीनाविवत्सेवपयस्विनी १०
एवंविलपतींतांतुव्यषेधयत्सखीजनः ॥ नदृष्टासखिकेनापिमृतेनसहवैमृतिः ११ अतिशोकेनशोकोन्यःप्राप्यतेमूढजंतुभिः ॥ यदिस्नेहेनपुत्रंत्वंशोचसेऽस्यहितं
कुरु १२ चारान्प्रेषयवृत्तांतग्रहणायास्यसर्वतः ॥ दग्धतांमस्तकोमंत्रैरेवमस्यहितंकुरु १३ सुहृदामश्रुपतितंप्रेतस्यतन्मुखेपतेत् ॥ दहत्येनंनतत्त्याज्यमि
त्याहुःपरमर्षयः १४ एवमाकर्ण्यतद्वाक्यंसोवाचतांसखींरुषा ॥ अयंमूर्द्धामहाभागेस्थाप्यतांयत्नतःसखि १५ आनयिष्येऽदितेःपुत्रमस्तकंसहतेनच ॥ दाह
यिष्याम्यमुंतस्मात्स्थाप्यतांतैलमध्यतः १६ साराक्षसीराक्षसवर्ययुक्तासमाययौराजपुरींनिहंतुम् ॥ विनायकंतंनिजरूपगोपिनीपतंगपत्नीवधनंजयांतिकम् ॥
आगतादितिरूपेणभासयंतीदिशोदश ॥ अतिलावण्यनिलयासर्वालंकारशोभिनी १८दाडिमीबीजदशनाबिंबोष्ठीतनुमध्यमा ॥ विलसत्पद्मनयनामुक्तादामल
सत्कुचा १९ वीरासुमुहिरेदृष्ट्वातादृशींनृपसद्मगां ॥ मनसाकामयंतिस्मयदालिंगनचुंबने २० तर्कयामासुरपरेरंभाकिंनुतिलोत्तमा ॥ मेनकावाघृताचीवानागीय
क्षीशिवानुकिं २१ उर्वशीवारतीराज्ञीकश्यपस्यादितिर्नुकिं ॥ ज्ञात्वातुराजपत्नीतांप्रणनामादितिंमुदा २२ पूजयामाससौभाग्यद्रव्यैर्भूषांशुकादिभिः ॥ उवा

चचसुचार्वंगीप्रेमगद्गदयागिरा २३ महाभाग्येनदृष्टासित्वंदेवजननीमया ॥ विनायकप्रसादेनकान्यथादर्शनंतव २४ राज्ञीमेवंब्रुवंतींतुसाश्रुकंठावदद्वचः ॥
आदितिरुवाच ॥ ममबालोबहुदिनंस्थापितःकुत्रवर्त्तते २५ अत्युत्कंठतयासुभ्रूर्दर्शनार्थमिहागता ॥ स्त्रीणांस्वभावंजानासिमायाव्याकुलचेतसाम् २६ शो
कसंतप्तगात्राहंतमालिंगामिचार्भकम् ॥ तत्संसर्गसुशीतांगीप्राप्स्येसंतोषमुत्तमम् २७ इतितद्वचनंश्रुत्वासादरासासंभ्रमा ॥ गवेषितुंतुतंबालंराज्ञीदूतान
चोदयत् २८ अन्येचख्युःकाशिराजंकश्यपस्त्रियमागताम् ॥ सस्नात्वागृहमागत्यतांदृष्ट्वाहर्षमापह २९ तांप्रणम्यमहाभक्त्याप्रोचेबद्धांजलिर्नृपः ॥ मेरा
ज्यंजन्मपितरौधनंदृष्टिःश्रुतंतपः ३० दृष्टाशक्तिर्देवमाताजगज्जननकारिणी ॥ नशक्तिर्वर्ततेसम्यग्वर्णितुंतेगुणान्मम ३१ बालोविनायकस्तेयंशक्रादधिकवि
क्रमः ॥ अवदानान्यनेकानिकृतानिबहुधासुरैः ३२ अशक्यानिमयावक्तुंरक्षसांनिधनानिच ॥ तस्यापिवर्णितुंनास्तिगुणानांशक्तिरल्पिका ३३ विश्राम्यतां
क्षणंमातर्ममभाग्यंमहत्तरम् ॥ यदनेनहतामायाबलमाश्रित्यदानवाः ३४ अपरिक्षतेनवपुषाबालस्तेवसतेसुखम् ॥ त्वंकिमर्थमिहायातायाताचेत्स्थीयतांक्षणं
३५ निवृत्तेस्मिन्विवाहेतुप्रापयिष्येउभावपि ॥ सोवाच॥किमिदंभाषसेराजन्वियोगादस्यमेभवत् ३६महान्खेदोनचसुखंलेभेक्वापीहकिंचन ॥ कउवाच॥एवं
वदत्यांतस्यांसआगतोसौविनायकः३७प्रेषितोबालकैःसर्वैरागताजननीतव ॥ सालिलिंगततोबालमश्रुपूर्णामुदाजगौ ३८ चिरकालंस्थितोस्यत्रमांविहायाति
निष्ठुर ॥ त्वद्वियोगेनसंतप्तागतासर्वंविहायच ३९ जीविताशांपरित्यज्यत्वदर्थेतपआचरं ॥ अतिक्लेशेनलब्धोसितान्क्लेशान्वेत्तिचेश्वरः ४० विनात्वयाक्षणोमे
तोयुगकल्पसमोभवत् ॥ एवंलाघववाक्यासौदुष्टभावेनभामिनी ४१ अतिप्रेमबलात्सातंकटिदेशेदधारह ॥ सोपितच्चेष्टितंज्ञात्वागस्तस्याःपरिचिंतयन् ४२
गूढाभिसंधिस्तांप्रोचेपूर्वंकिमेत्वयाहृतम् ॥ एवंतस्मिन्ब्रुवत्येवलड्डुकंसाततोददौ४३ अत्तेस्मिन्पुनरन्यंसामहाविषयुतंददौ ॥ अत्तेस्मिन्पुनरन्यंसययाचेलड्डुकंब
लाव्४४काशिराजश्चपत्नीचप्रार्थयामासतुस्तदा ॥ उत्तिष्ठोत्तिष्ठमातस्त्वंसबालाभोजनंकुरु४५ यावदुत्तिष्ठतेसातुतावद्वृद्धार्भकेणसा ॥ गिरींद्रसारवपुषासाततो
विह्वलाभवत् ४६ मुंचमुंचेतितंप्राहमाताहंतवबालक ॥ बहुकालेनद्रष्टुंत्वामागतास्नेहपाशतः ४७ कथंचूर्णयितुंमांत्वमुद्यतोसिगिरिर्यथा ॥ कराभ्यांनुनुदे
साततावन्निद्रांययौचसः ४८ प्रसार्यचरणौहस्तौश्वासोच्छ्वासपरायणः ॥ इतिराजान्यषेधत्तांविह्वलांभारपीडिताम् ४९ मानिद्राभंगमस्याशुकुरुत्वंजननीस
ती ॥ उद्धर्तुंबालकंकेचिच्चक्रुःकरुणयामनः ५० उत्थापितुंचालितुंवासर्वेनाशकुवंस्तदा ॥ प्रार्थयामासुरपरेबालंराजीवलोचनम् ५१ अनुक्रोशंकुरुशिशोजन
नीतेमरिष्यति ॥ चालयामासचरणौहस्तौसाथशिरोधराम् ५२ किमिदंक्रियतेबालपितरंकिंवदिष्यसि ॥ एवंवदत्सुलोकेपुसामृताथनिशाचरी ५३ दशयो
जनदेहेनव्यापितंभूतलंतया ॥ पलायनपराःकेचित्तांदृष्ट्वातिभयानकाम् ५४ ययुःकेचिन्नतांद्रष्टुंविचित्रजनवृत्तयः ॥ राजाचविस्मितस्तत्रजनाःसर्वेविलोक्यता
म् ५५ कथंकपटरूपेयमागताबालघातिनी ॥ ऋषिपत्नीस्वरूपेणनज्ञाताराक्षसीतिच ॥ अत्यद्भुतंज्ञानमस्यसामर्थ्यंचविलोकितम् ॥ इतिब्रुवाणास्तुनरास्ततस

मींपमुदाययुः ५७ बालमुत्थाप्यतस्यास्तुपुष्पभारसमंजगुः ॥ अपनेयेतितेप्याहुर्दुष्टादुष्टस्वरूपिणी ५८ परस्यानिष्टमिच्छेद्यःसएवनिधनंव्रजेत् ॥ तुष्टुवुःपारि
पूर्ण्यैनंकाशिराजोजनाअपि ५९ ऋषयोलोकपालाश्चभक्त्यादेवंविनायकम् ॥ नाथस्त्वमसिदेवानांमनुष्योरगरक्षसाम् ६० यक्षगंधर्वविप्राणांगजाश्वरथपक्षि
णाम् ॥ भूतभव्यभविष्यस्यबुद्धींद्रियगणस्यच ६१ हर्षस्यशोकदुःखस्यसुखस्यज्ञानमोहयोः ॥ अर्थस्यकार्यजातस्यलाभहान्योस्तथैवच ६२ स्वर्गपाता
ललोकानांपृथिव्याजलधेरपि ॥ नक्षत्राणांग्रहाणांचपिशाचानांचवीरुधाम् ६३ वृक्षाणांसरितांपुंसांस्त्रीणांबालजनस्यच ॥ उत्पत्तिस्थितिसंहारकारिणेतेन
मोनमः ६४ पशूनांपतयेतुभ्यंतत्वज्ञानप्रदायिने ॥ नमोविष्णुस्वरूपायनमस्तेरुद्ररूपिणे ६५ नमस्तेब्रह्मरूपायनमोनंतस्वरूपिणे ॥ मोक्षहेतोनमस्तुभ्यंन
मोविघ्नहरायते ६६ नमोऽभक्तविनाशायनमोभक्तप्रियायच ॥ अधिदैवाधिभूतात्मतापत्रयहरायते ६७ सर्वोत्पातविघातायनमोलीलास्वरूपिणे ॥सर्वांतर्या
मिणेतुभ्यंसर्वाध्यक्षायतेनमः ६८ अदित्याजठरोत्पन्नविनायकनमोस्तुते ॥ परब्रह्मस्वरूपायनमःकश्यपसूनवे ६९ अमेयमायान्वितविक्रमायमायाविनेमा
यिकमोहनाय ॥ अमेयमायाहरणायमायामहाश्रयायास्तुनमोनमस्ते ॥ एवंस्तुत्वातुतेसर्वेययुःस्वंस्वंगृहंमुदा ॥ त्यक्त्वातांराक्षसींछित्त्वाखंडशोदूरतःपुरा
त् ७१ यइदंपठतेस्तोत्रंत्रिसंध्योत्पातनाशनम् ॥ नभवंतिमहोत्पाताविघ्नाभूतभयानिच ७२ त्रिसंध्यंयःपठेत्स्तोत्रंसर्वान्कामानवाप्नुयात् ॥ विनायकःसदात
स्यरक्षणंकुरुतेनघ ७३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेराक्षसीवधोनामएकविंशतितमोऽध्यायः ॥ २१ ॥ कउवाच ॥ अपरस्मिन्नदिनेराजाप्रातः
स्नानकृतोद्यमः ॥ पौराःसर्वेवितर्क्यैवंनायंदेवोनमानुषः १ नदेवश्चेत्कथंपंचमहांतोदेवदुर्धराः ॥ अजेयाःशक्रहरिभिर्हतादैत्यामहाबलाः २ देवएवभवेद्बालमध्ये
ऽयंक्रीडतेलघु ॥ इतितर्क्यततस्तावदागताराजदर्शनम् ३ राजापिभद्रमगमद्उवाचसकलान्प्रति ॥ निरूपयंतुयत्कार्यंतद्वःसिद्धिंप्रयास्यति ४ किमर्थंप्रातरेवेह
पौरायूयंसमागताः ॥ तऊचुर्नरहस्यंयत्स्वाभिप्रेतमृतेवचः५त्वयायंहिसमानीतोमुनिपुत्रोविनायकः ॥ नास्यदास्यमभून्नोहिकिंचित्क्वापिकदाचन ६त्वयातुपूजि
तोनेकवारंस्वशरणेस्थितः ॥ यद्यत्तवगृहेयातितत्तन्नःप्रेषयस्यहो ७ अयंतुनकथंराजन्प्रेषितोनुविनायकः ॥ राजोवाच ॥ सम्यगुक्तंयत्रजनाविभज्यभुज्यतेतुयत्
८ अमृतंयातिचविषंविषमन्यद्भवेत्तुतत् ॥ अस्मिन्यस्यभवेद्भक्तिर्देवेवामानुषेपिवा ९ सएनंस्वगृहेनीत्वापूजयेद्भोजयेदपि ॥ जनास्तुत्रिविधाःपौरारजःसत्व
तमोगुणैः १० परीक्षंतेमरादुष्टाःपुण्यवंतोभजंत्यपि ॥ केचिदेनंविनिंदंतिप्रशंसंतिचकेचन ११ यस्ययस्यभावोयादृक्स्यात्सतथावर्ततेनरः ॥ नजहातिघृष्य
माणश्चंदनःस्वसुगंधिताम् १२ कस्तुरीकर्दमयुतःपलांडुर्वानिजंगुणम् ॥ भवतांयदिभक्तिश्चेदनन्यास्मिन्सुतेमुनेः १३ नीयतांपूजयंत्वाशुभोजनायाप्रियाय
च ॥ परीक्षार्थंननेयोसौजनकोजननीमम १४ मयाकथंनरावाच्यानीत्वैनंपूजयंत्विति ॥ अस्यशक्तिंदृढांदृष्ट्वाममभक्तिर्विशिष्यते १५ नायंचेन्मत्पुरीकृत्या
कुतोयूयंक्वचाप्यहम् ॥ इतिराजवचःश्रुत्वापुनरूचुश्चनागराः १६ यथावदसिकल्याणतत्तथानतदन्यथा ॥ अस्माकंकार्यसिद्धिर्यातांकुरुष्वजनाधिप १७नी

त्वेमंस्वगृहेबालंपूजयामोयथार्हतः ॥ एतस्मिन्नंतरेबालोवदत्तान्सदसिस्थितान् १८ जानन्नंतर्गतंतेषांसर्वसाक्षीजगद्गुरुः ॥ विनायकउवाच ॥ किमर्थंमांप्रार्थ
यंतोभवंतोतिमहत्तराः १९ अहंबालोमुनिसुतोमत्पूजनफलंनुकिम् ॥ भविष्यतिनजानेहंभवतांव्ययकारिणाम् २० विवाहोव्रतबंधोवायज्ञोवान्योमहोत्स
वः ॥ तदाभवद्गृहेयास्येहव्यंकव्यंयदाभवेत् २१ असंख्याताभवंतोहिकथमेकोगृहंव्रजे ॥ वकेशिनींकिमर्थंवागांधोक्ष्यथभवद्विधाः २२ वांछितार्थीकथंयाचे
त्यक्त्वाकल्पद्रुमंद्रुमम् ॥ अन्यत्क्षुद्रंवांछितंवातद्यूयंसमुत्सुकाः २३ कउवाच ॥ विनायकवचः श्रुत्वाश्रेणीमुख्याजगुःपुनः ॥ अस्मिन्विवाहेसंपन्नेनस्थास्यति
क्षणंभवान् २४ राज्ञःप्रसादाद्धृष्टोसिभक्तिनःसफलीकुरु ॥ अवाप्तकामस्यचतेसृष्टिस्थित्यंतकारिणः २५ सर्वांतर्यामिणःसर्वचित्तवृत्तीर्विजानतः ॥ कर्तुंवाप्य
न्यथाकर्तुमकर्तुंवाक्षमस्यह २६ चिदानंदस्यनैवास्तिपूजाभिर्नःप्रयोजनम् ॥ भक्तिप्रियोदेवइतिनिगमंनवृथाकुरु २७ निशम्येतिवचस्तेषांतानूचेथविनाय
कः ॥ एवंचेद्भवतांभक्तिस्तदायास्येनृपाज्ञया २८ एवमाकर्ण्यतद्वाक्यंसर्वेपिस्वगृहान्ययुः ॥ मंडपान्विदधुःकेचित्केचिद्वस्त्रगृहाणिच २९ तोरणान्विदधुर्भ
क्त्यादर्शशोभाकृतानिच ॥ भाजनानिमहार्हाणिसुगंधचंदनानिच ३० द्रव्याणिचसुगंधीनिमृगनाभिभवानिच ॥ फलानिचविचित्राणिवासांस्याभरणानि
च ३१ पक्वान्नानिविचित्राणिपंचामृतयुतानिच ॥ स्थापितामूर्तयोनानामुक्तामालाविभूषिताः ३२ एवंगृहेगृहेसर्वेसामग्रींचक्रुरुत्सुकाः ॥ एकोभून्नगरप्रांतेब्रा
ह्मणोवेदशास्त्रवित् ३३ शुक्लनामाशुक्लवृत्तिःशांतोदांतःक्षमान्वितः ॥ श्रौतस्मार्तकर्मनिधिर्ब्रह्मनिष्ठोतिथिप्रियः ३४ यस्यपत्नीमहाभागाविद्रुमानामनामतः ॥
निस्पृहाज्ञानसंपन्नासर्वावयवसुंदरा ३५ दरिद्राज्ञाननिष्ठासापतिप्राणापतिव्रता ॥ तस्यागृहगतंद्रव्यंनभस्तारांकितंस्फुटम् ३६ नस्वर्णंराजतंताम्रंभाजनंरीति
जंनच ॥ गौरावल्कलसंवीतातेजोज्वालासुशोभना ३७ यदंगतेजसाव्याप्तंदृश्यमानंनदृश्यते ॥ तेनवृत्तेनतुष्टासागृहशोभाविधायिनी ३८ तस्यास्तोषेणतुष्टो
भूद्विनयेनचसेवया ॥ स्वस्थःस्थितोज्ञाननिष्ठस्तिष्ठत्यकृतभोजनः ३९ कदाचिद्भिक्षितुंयातोवारितस्तुगृहेगृहे ॥ महोत्सवंप्रकुर्वद्भिर्विनायककृतेजनैः ४० य
लब्धंतेनतुष्टोसौभार्यामित्याब्रवीदिदं ॥ श्रूयतांपत्निनगरेवारितोहंगृहेगृहे ४१ आयास्यतिप्रतिगृहंपूजार्थंसविनायकः ॥ योवतीर्णोमुनिगृहंभूभारहरणोद्यतः
४२ आयास्यतिगृहंचेत्सपूजार्थंयत्नमाचर ॥ साब्रवीन्महतींपूजांत्यक्त्वान्नंत्वद्गृहेकथं ४३ भवतांसोकिंचनानांकथंवागृहमेष्यति ॥ गंधपुष्पंपर्युषितंपक्वंकंद
फलंमुने ४४ भविष्यतिकृतंसम्यगसम्यक्स्वल्पमप्यहो ॥ किंवाप्रयोजनंतस्यगृहेणभवतांप्रभो ४५ इतिप्रियावचःश्रुत्वापुनरूचेमुनिःप्रियां ॥ समांभक्तिंवि
जानातिदीनानाथप्रभुःप्रभुः ४६ भक्तिप्रियोस्तिदेवोयंनलोभवशगोविभुः ॥ अर्णसाचपलाशेनपुष्पेणप्रीयतेहिसः ४७ सुवर्णैनिचयैर्वापिनाहिदंभा
त्समर्पितैः ॥ इत्याकर्ण्यवचस्तस्यविद्रुमापुनरब्रवीत् ४८ एवंचेत्तर्हियत्सिद्धंतदेतस्मैनिवेद्यतां ॥ ततोष्टादशधान्यानांकृत्वापिष्टंपपाचसा ४९ ओदन
श्चकृतोजीर्णतंदुलानांजलाधिकः ॥ मुष्टिपिष्टंपर्णपुटेपक्त्वाभुंक्तेदिनेदिने ५० तत्तेनदीयमानेनद्रव्येणचैलमानयत् ॥ गंधाक्षतंचपुष्पाणिधूपंदीपंमहार्तिके

५१ वन्यंफलंवल्कलंचस्थापयामासचैकतः ॥ शुष्कामलकखंडानिमुखवासार्थमेवच ५२ प्रसार्यदर्भनिचयंसुसिके स्वांगणेध्वजं ॥ चकारकशिपूनासौध्या
ननिष्ठोभवन्मुनिः ५३ नैवेद्यंवैश्वदेवंचकृत्वापूर्वंप्रयत्नतः ५४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ ६ ॥ ॥
कउवाच ॥ ॥ सबालोबालमध्येतुचिक्रीडेकौतुकान्वितः ॥ राजाभद्रासनगतोनृत्यंसर्वजनैःसह १ यावत्पश्यतिवेश्यानांतावदेवागतावुभौ ॥ देवलोका
त्सदोरम्यंसनकश्चसनंदनः २ उद्भासितंतयोर्दीप्त्यासूर्याभ्योरिवतत्सदः ॥ आसनादुदतिष्ठत्सनृपतिःसहसेक्ष्यतौ ३ शिरःस्थाप्यपादपद्मेसाष्टांगंप्रणनामतौ ॥
बद्धांजलिरुवाचाथअद्यधन्यंकुलंमम ४ राज्यंज्ञानंचदेहश्चपत्नीपुत्रादिकंचयत् ॥ इत्युक्त्वापाणिनाधृत्वास्वासनेचोपवेश्यतौ ५ उपचारैःषोडशभिरपूजयत
भक्तितः ॥ तौचविश्रामयामासपादसंवाहनादिभिः ६ पुनःपुनःप्रणम्यासौवक्तुंसमुपचक्रमे ॥ राजोवाच ॥ ॥ मुनीनांन्यस्तदंडानांनिस्पृहाणांचसर्वदा ७
कार्यंलिप्सानकाचित्स्यादाज्ञामीहेतथाप्यहं ॥ तपोराज्यंकुलंशीलंसार्थकंकर्तुमुद्यतः ८ ॥ ॥ तावूचतुः ॥ ॥ अवाप्तसर्वकामोसौपरब्रह्मस्वरूपवान् ॥
लीलावतारीभगवान्कश्यपस्यसुतस्तव ९ गृहेनानाकौतुकानिकुरुतेद्भुतविक्रमः ॥ श्रुत्वावदानंतस्यात्रद्रष्टुमावांसमागतौ १० अन्यथाशक्रभवनत्या
गेकिन्नःप्रयोजनं ॥ गृहेयस्यकल्पतरुःसोन्यंकिंयाचयिष्यति ११ तस्यांघ्रिकमलंनत्वागन्छावःस्वस्थलंनृप ॥ एवंतयोरागतयोःश्रुत्वावाक्यंविनायकः १२
वदतोरागतःक्रीडांत्यक्त्वामोदकहस्तकः ॥ पंचखाद्यमयंभक्ष्यंमोदकंलीलयादधत् १३ तयोस्तंदर्शयामासनृपोहास्यपरोमृदु ॥ सोयंसमागतोदेवायेद्दर्शनेस
मुत्सुकौ १४ आगतोयन्नकर्तव्यंकुरुतंतद्यथेप्सितः ॥ तंनिरीक्ष्यमुनीतौतुपरस्परमथोचतुः १५ अनेनदूषितोनूनंकश्यपोमुनिसत्तमः ॥ तत्पुत्रतांसमासाद्यस्वाचा
रत्यजताभृशं १६ स्पृष्टास्पृष्टविचारोस्यभक्ष्याभक्ष्यविधिर्नच ॥ दर्शनेस्पर्शनेचास्यमहान्दोषोभवेत्खलु १७ कथंस्वनियमांस्त्यक्त्वास्थितःक्षत्रियवेश्मनि ॥ स्वध
र्मेनःस्थितानांतुदर्शनेनास्यकिंभवेत् १८ शुश्रावतांगिरंदेवोनृपसन्निहितस्तदा ॥ उवाचवाक्यंवाक्यज्ञोवाचस्पतिरिवापरः १९ क्वगतंभवतोज्ञानंवृथाश्रमवतो
मुनी ॥ स्वर्गंत्यक्त्वाकथमिहसंप्राप्तौप्राकृताविव २० श्रुत्वेत्थंवचनंतस्यनृपतिंतावथोचतुः ॥ मायामयस्यदेवस्यमाययामोहितोभृशम् २१ देह्यनुज्ञांगमिष्या
वोनिजमाश्रममंडलम् ॥ ततोनृपतिशार्दूलोदृढभक्तिप्रणोदितः २२ स्थीयतांश्रूयतांवाक्यंमदीयमित्युवाचतौ ॥ भक्त्याचप्रार्थयामासस्नात्वाभुक्त्वानुगम्य
ताम् २३ निशम्यप्रार्थनांतस्यप्रोचतुर्मुनिपुंगवौ ॥ नभुञ्ज्वेतेराजकीयमन्नंतस्माद्व्रजावहे २४ तदनुज्ञांसमासाद्यमणिकर्णींततोगतौ ॥ विनायकःसर्वबालै
रनुयातोसुदारमन् २५ स्नात्वागतःशुक्लगृहंज्ञात्वातद्भक्तिमादृतः ॥ यथाधावतिगौर्वत्संयथामातारुदच्छिशुम् २६ यथाकृष्णःसभानीतांद्रौपदींशरणागता
म् ॥ दृष्ट्वातौदंपतीदेवंपादयोर्विनिपेततुः २७ आनंदाश्रूणिमुंचंतौवाचागद्गदयागिरा ॥ लिलिंगतुर्मुदादेवंननृतुर्हर्षनिर्भरौ २८ नविंदतुःप्रकर्तव्यंदेहातीता
ताविवासतुः ॥ रोमांचांचितगात्रौतौबाष्पधारामुमुंचताम् २९ मुहूर्तात्लब्धसंज्ञौतौनेमतुर्जगदीश्वरम् ॥ ततऊचेमुनिर्दैवंदीननाथेतियत्तव ३० विख्यातं

त्रिषुलोकेषुनामपापहरंशुभम् ॥ सार्थंकंकृतमद्यैवजन्मनःपाददर्शनात् ३१ प्रासादनिचयांस्त्यक्त्वागतःपर्णकुटीमिमाम् ॥ धन्योवंशोमदीयोद्यजन्मज्ञानंत
पोवयः३२अपूजयत्ततस्तंसकुशासनगतंमुनिः ॥प्रक्षाल्यचरणद्वंद्वंजलंतच्छिरसादधत् ३३ गंधाक्षतंपुष्पमालाधूपंदीपंददावथ ॥ दूर्वांकुरान्शमीपत्रंसुतैलंके
तकंशुभम् ३४ खाद्यंस्वल्पंपुरःस्थाप्यफलमारण्यकंतथा ॥ पुष्पांजलिंमंत्रपूतांदत्वानत्वासलज्जितः ३५ कदन्नंकथमस्मैतद्देयमित्येवचिंतयन् ॥ अभिप्रायंवि
दित्वातंदेवदेवोविनायकः ३६ याचेमातःकिमन्नंतेगृहेतद्दीयतांमम ॥ भक्त्यादत्तंकदन्नंमेऽधिकंस्यादमृतादपि ३७ विषंभवतियद्दत्तंदंभेनाश्रद्धयान्वितम् ॥
विस्तीर्णमोदनंशुष्कंभास्करींबहुधान्यजाम् ३८ आस्थापयत्पुरस्तस्यमुनिपत्नीह्रियान्विता ॥ तैलंचसकलंदृष्ट्वाप्राहसंस्तंचबालकाः ३९ अभक्षयत्सप
क्वान्नसद्दशंपरमादरात् ॥ प्रतिग्रासंजलंपीत्वाजघासबलवत्तरम् ४० ततस्तेनौदनःपात्रेनिक्षिप्तोमुनिनाखिलः ॥ तज्जलंचलितंदिक्षुबालोरोद्धुंनचाशकत् ४१
ततोभवद्दशभुजोबुभुजेचौदनंचतैः ॥ आश्चर्यंददृशुर्लोकाहसंतोहस्ततालतः ४२ अपूर्वंपाचितोयंनुजानुदघ्नजलेनयः ॥ इत्यूचुर्बुभुजुर्बालारुच्यापायसक
ल्पया ४३ साकंतेनचयैर्भुक्तंगतास्तेदेवतुल्यताम् ॥ अशोचन्नितरेपश्चाद्येहसन्विस्मितैरदः ४४ कोलाहलोमहानासीन्नगरेक्वविनायकः ॥ केचिदूचुःशुक्लगृहे
भुनक्तिशीर्णमोदनम् ४५ रोद्धुंक्तादशभुजोओदनंचभुनक्तितैः ॥ भुक्तेतस्मिन्विशुद्धेसशुष्कमामलकंददौ ४६ मुखशुद्धिंतेनचक्रेजगदात्माविनायकः ॥
प्रसन्नःशुक्लमवदत्प्रीतोभावेनतेनघ ४७ वरान्वृणुमहाभागमत्तोयानभिकांक्षसे ॥ शुक्लउवाच ॥ सर्वान्नागरिकांस्त्यक्त्वाभोक्तुंरुक्षान्नमागतः ४८ अयमेववरो
मह्यंयज्जातंतवदर्शनम् ॥ प्रभुवाक्यानुरोधेनयाचेभक्तिंत्वयिस्थिराम् ४९ अंतेमोक्षंचमेदेहियेननावर्ततेपुनः ॥ नसंसारसुखेचित्तंरमतेमेविनायक ५० ॥ क
उवाच ॥ एवमस्त्वितितंप्रोच्यपूर्ववद्द्विभुजःशिशुः ॥ गृहंतस्मैशक्रगृहाद्वरंसद्रत्नकांचनम् ५१ अत्युत्तमंस्वरूपंचज्ञानंसंपदमर्पयत् ॥ अनुज्ञातोययौताभ्या
मन्यत्रबालकैर्वृतः ५२ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेशुक्लवरप्रदानंनामत्रयोविंशतितमोध्यायः ॥ २३ ॥ कउवाच ॥ व्यलोकयंस्तंनगरेतस्मि
न्सर्वेमहाजनाः ॥ विधायपूजासामग्रींभोजनस्याप्यनेकधा १ गृहेगृहेराजगृहेसर्वामात्यगृहेपिच ॥ गवेषयंतिस्मजनास्तदाकश्यपनंदनम् २ अपृच्छंतजनाः
सर्वेकाचिद्दृष्टोविनायकः ॥ नेतिनेतिश्रुतिर्वक्तियंसकस्याक्षिगोचरः ३ भवेन्नालोकितोस्माभिरितितत्रावदन्जनाः ॥ पुरप्रांतेतुयेतत्रतेशृण्वन्जनवाक्यतः ४
स चागतःशुक्लगृहंततस्तेतद्गृहंययुः ॥ नापश्यंस्तमथापृच्छंस्तेनोक्तंसइतोगतः ५ सतुमायामयोबालोजनान्वंचितुमुत्सुकः ॥ विसृज्यबालकान्पश्चाद्द्वारेणाग
त्यसुप्तवान् ६ केचित्तंददृशुःसुप्तंहर्यक्षमिवगह्वरे ॥ केचित्तंक्रोधवशगानिनिंदुर्बालकोलघुः ७ पिशाचइवकिंयातोदरिद्रस्यगृहंप्रति ॥ ईशश्चेत्सर्वभावज्ञः
सर्वेषांप्रियमाचरेत् ८ उत्थाप्यतंकरेधृत्वायाहीतिशरणंशुभम् ॥ सफलंकुरुनःसर्वंत्वदर्थमुपकल्पितम् ९ गतःखेदोभ्रमणजोदृष्ट्वात्वच्चरणांबुजम् ॥ या
हियाहिगृहान्नस्त्वंभोक्तुंबालगणैःसह १० सऊचेसांप्रतंभुक्तंपुनरूचुर्जनास्तुतम् ॥ दरिद्रस्यगृहेकिंतेभुक्तंस्याद्भैक्ष्यवर्तिनः ११ नापोपिपिबतेक्वान्नंकथंभुक्तं

त्वयाविभो ॥ ॥ गणेशउवाच ॥ ॥ उदरंपरिपूर्णमेयातुंशक्तिश्चनास्तिमे १२ ॥ ॥ कउवाच ॥ ॥ ततःसर्वेविदित्वातंभुक्तंशुक्लगृहेजनाः ॥ निराशाअग्रसंक
ल्पारुष्टादीनाविचेतसः १३ संभाराव्यर्थतांयातानानाक्लेशार्थसंचिताः ॥ बुभुजुस्तान्स्वयंदुष्टादांभिकाभक्तिवर्जिताः १४ येभक्तास्तेनिराहारास्तस्थुर्ध्या
नपरायणाः ॥ एवंसर्वेषुलोकेषुज्ञात्वाध्यानस्थितेषुसः १५ एकोनानास्वरूपोभूद्घटाकाशइवस्फुटम् ॥ जलपूर्णेषुकुंभेषुरविर्नानायथेक्षते १६ क्वचित्पर्यंक
शयनःक्वचिज्जपपरायणः ॥ क्वचिद्दानरतःक्वापिभोजनायसमुत्सुकः १७ क्वचित्पाठयतेशिष्यान्सांगंवेदंसहार्थकम् ॥ क्वचिद्व्याकुरुतेशास्त्रंक्वचिच्चपठतिस्व
यम् १८ एवंनानास्वरूपैःसनानागृहगतोबभौ ॥ अयमस्मद्गृहंयातःपूर्वमित्यभिमेनिरे १९ तैलमुद्वर्तनंस्नानंपूजनंभोजनंददुः ॥ एवंसर्वेजह्रषिरेकाशिराज
समन्वितम् २० दृष्ट्वादेवंपरमयामुदासाधुविनायकम् ॥ पुपूजुर्भोजयामासुर्द्विजान्सुहृद्गणानपि २१ पंचामृतंचपक्वान्नंव्यंजनंपायसौदनौ ॥ अन्यद्रुचिकरं
सर्वंबुभुजुस्तेयथारुचि २२ एवंद्विजेषुदेवेषुकाशिराजेसुहृत्स्वपि ॥ आशीर्वत्सुसभाविष्टःकाशिराजोन्वपृच्छत २३ माययामुनिपुत्रस्यमोहितोनेकधाकृतेः ॥
राजोवाच ॥ ॥ विनायकोगतोभोक्तुंनानागृहइतिस्फुटम् २४ अयंमेनिकटेप्यस्तिकोनुभुंक्तेगृहेगृहे ॥ क्वचिच्चशिबिकारूढोयातिभोक्तुंविनायकः २५ ग
जारूढःक्वचिद्यातिहयारूढश्चकुत्रचित् ॥ एवंसर्वेषुलोकेषुपूजाव्यग्रेषुबालके २६ ततस्तौनगरींयातौतत्रतत्रविनायकम् ॥ अपश्यतांभुक्तवंतंपरावृत्यसमी
यतुः २७ यत्रयत्रगृहेयातौतत्रतत्रविनायकम् ॥ निर्वृत्यसकलंनित्यंभिक्षार्थंपर्यगच्छताम् २८ शयानंशयनेदिव्येभक्षयंतंफलानिच ॥ चर्वयंतंचतांबूलंक्व
चिद्गंधादिचर्चितम् २९ क्वचिन्नृत्यंप्रपश्यंतंगणिकानांगणान्वितम् ॥ क्रीडंतमक्षैःकुत्रापिकचिद्बुद्धिबलेनच ३० नानालंकारसंयुक्तंदिव्यवस्त्रान्वितंक्वचित् ॥
पठंतंचजपंतंचध्यानेनतमपश्यताम् ३१ स्तूयमानंक्वचिद्भक्तैस्तुवंतंजगदीश्वरम् ॥ दर्शयंतंविभूतिंस्वांभक्तायानेकशःक्वचित् ३२ युवानंरमयंतंस्वाःस्त्रियोत्यं
तमनोरमाः ॥ चिकित्सयंतंवृद्धंचसेवंतंरसमुत्तमम् ३३ रिंगंतंभक्षयंतंचमृदंकुत्रचिदंगणे ॥ परिश्रांतंपिबंतंकंक्रीडाभिःकंदुकादिभिः ३४ एवंतौक्षु
धितौश्रांतौपर्यटंतौगृहेगृहे ॥ सर्वत्रदृष्ट्वातंदेवंपरस्परमथोचतुः ३५ अत्रास्तिनिर्मलःशुक्लोब्राह्मणोनगरेशुचिः ॥ यावोभोक्तुंतस्यगृहेइत्युक्त्वातत्रजग्म
तुः ३६ तत्रापिसोंगणगतोदृष्टस्ताभ्यांविनायकः ॥ नगरेनात्रभोक्तव्यंनतुशेषंविनायकात् ३७ इत्युक्त्वाबहिरायातौपुरोदृष्ट्वाविनायकम् ॥ तिर्यग्गति
धरौभूत्वाततोपिसमपश्यतां ३८ प्राच्यांप्रतीच्यांचदिशितमेवतौसमंततः ॥ अधश्चोर्ध्वंसर्वगतंविनायकमपश्यतां ३९ विनायकस्वरूपंचतौपुनर्विश्वरू
पिणं ॥ सर्वंविनायकमयंवस्तुमात्रमपश्यतां ४० अथाभावयतांशंभुंविष्णुंतौभृशविस्मितौ ॥ अपश्यतांहृदितदातंचतंचविनायकम् ४१ निमील्यनयने
चांतस्तमेवमुनिसत्तमौ ॥ उद्घाट्यनयनेचापिस्वांतएनमपश्यतां ४२ किरीटिनंकुंडलिनंमुक्तामालांबरांगदं ॥ कटिसूत्रेणहैमेनमुद्रिकाभिश्चभूषितं ४३ सिं
हारूढंदशभुजंसिद्धिबुद्धियुतंशुभं ॥ भालचंद्रंमृगमदातिलकंनागभूषणं ४४ सूर्यकोटिप्रभंसृष्टिस्थितिसंहारकारिणं ॥ त्यक्त्वाभेदंतत्वविदौनेमतुश्चर

णांबुजं ४५ नुतःस्मपरयाभक्त्यादेवदेवंविनायकं ॥ तस्यैवकरुणाप्राप्तप्रबोधौतौतुमुनीश्वरौ ४६ इतिश्रीगणेशपुराणेउत्तरखंडेविनायकभोजनकथनंनामच
तुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ तावूचतुः ॥ सर्वेषांकारणानांत्वंकारणंकारणातिगः ॥ ब्रह्मस्वरूपोब्रह्मांडकारणंव्यापकःपरः १ पासीदंस्टजसेविश्वंत्वमे
वहरसेनघ ॥ नानारूपैररूपस्त्वंनानामायाबलान्वितः २ त्वमेवपंचभूतानियक्षगंधर्वराक्षसाः ॥ कस्त्वांस्तोतुंसमर्थःस्याच्चराचरस्वरूपकं ३ नेतिनेति
ब्रवीतिस्मत्वद्रूपाज्ञानतःश्रुतिः ॥ आवांविमोहितौज्ञातुंनेशाथेरूपमुत्तमं ४ महिमानंनजानीवोनेकरूपस्यतेविभो ॥ कृतकृत्यौभवत्पाददर्शनात्स्वःप्रभो
धुना ५ नानावतारैर्भूभारंहरसेनंतशक्तिः ॥ ॥ कउवाच ॥ ॥ एवंतयोःस्तुतिंश्रुत्वाप्रीत्याप्रोवाचतावुभौ ६ विनायकोबालरूपीकौतुकीमायिकोपि
च ॥ तत्वज्ञौमत्प्रसादाच्चसर्वज्ञौचभविष्यथः ७ एवंदत्वावरंदेवस्तत्रैवांतरधीयत ॥ ततस्तौमूर्तिमतुलांकृत्वासम्यग्विनायकीं ८ कृत्वाप्रासादमतुलंरत्न
कांचनसंयुतं ॥ स्थापयामासतुरुभौसनकश्चसनंदनः ९ आख्यांचचक्रतुस्तस्यावरदोयंविनायकः ॥ गणेशकुंडमितिचक्रतुंताभ्यांसरोवरं १० अत्रस्ना
त्वापूजयेद्योवरदंतंविनायकं ॥ सकामानखिलान्प्राप्यभुक्त्वाभोगाननेकशः ११ अवाप्यपुत्रान्पौत्रांश्चविद्यामायुर्यशोमहत् ॥ धनंधान्यंयशश्चापितत्व
ज्ञानंचशाश्वतं १२ अंतेवैनायकंधामयातिनास्त्यत्रसंशयः ॥ ॥ कउवाच ॥ ॥ यत्रदेवाःसगंधर्वायक्षाश्चाप्सरसांगणाः १३ दृष्ट्वासंपूज्यदेवेशंतत्रैवांतर्हि
ताःक्षणात् ॥ संप्राप्तविस्मयौतौचजग्मतुर्दिवमुत्तमं १४ काशिराजोपितत्रैत्यसामात्यःसप्रजस्तुतं ॥ नानाद्रव्यैरलंकारैर्वस्त्रैरुच्चावचैरपि १५ पक्वान्नै
श्चाप्यनेकैश्चफलैर्नानाविधैरपि ॥ रत्नैर्मुक्ताफलैःपुष्पैर्दक्षिणाभिरनेकशः १६ पुपूजपरयाभक्त्याब्राह्मणैःसहमंत्रतः ॥ ब्राह्मणान्पूजयामासवस्त्राल
कारकांचनैः १७ आशिषःपरिगृह्यैवनगरंपुनरागमत् ॥ तथैवताःप्रकृतयःपुपूजुस्तंविनायकं १८ तथैवब्राह्मणान्पूज्यजगृहुराशिषःपराः ॥ ततःप्रजास्तं
पुपूजुर्यथाशक्तिविनायकं १९ सर्वेतेहृष्टमनसःपुरंप्राविविशुस्तदा ॥ इतितेसर्वमाख्यातंविनायकविचेष्टितं २० सर्वपापहरंपुण्यंकिमन्यच्छ्रोतुमिच्छसि ॥
॥ ॥ मुनिरुवाच ॥ ॥ श्रुतंचरित्रंशुक्लस्यशुक्लाभिक्षारतस्यच २१ धातुस्पर्शविहीनस्यगृहंयातोविनायकः ॥ भुजैर्दशभिरादायह्योदनंशिथिलं
जलैः २२ जग्ध्वात्यक्त्वाश्रमंतस्योदारिद्र्यंचव्यनाशयत् ॥ दत्तंगृहंतुशुक्लस्यशक्रस्यनगराद्वरं २३ संपदोपितथादत्तायाःसंतिह्यलकाधिपे ॥ स्वरूपं
चतथादत्तंयन्नास्तिमकरध्वजे २४ ज्ञानंतस्मैतथादत्तंयन्नास्तिचतुराननें ॥ अत्रकिंकारणंब्रह्मंस्तन्मेव्याख्यातुमर्हसि २५ ॥ ॥ कउवाच ॥ ॥ सम्यक्
पृष्टंत्वयाव्यासपरमेशकथायतः ॥ पुनातिप्राश्निकंश्रोतॄन्वक्तारंभक्तितःश्रुता २६ मनोमेहिस्थितंवक्तुंतत्पृष्टंहित्वयाविभो ॥ सम्यक्तेहंवदिष्यामिभक्तिग
म्यस्यचेष्टितम् २७ सर्वज्ञःसर्वदर्शीचसर्वगःसर्वचित्तवित् ॥ भक्त्यैवतुष्यतेदेवोभावोहितोषकारणम् २८ भक्त्याहृतंपलाशंचजलंपुष्पंमनोहरम् ॥ तेनै
वपरितुष्टोसावात्मानंचप्रयच्छति २९ दंभेनहेलयावापिलज्जयापिपरस्यवा ॥ महाधनंमहावित्तंरत्नानिविविधानिच ३० कांचनंराजतंमुक्तादत्तंसर्वंवृथाभवे

त ॥ शमीपत्रेणतुष्टोसौव्याधायादात्सलोकताम् ३१ प्रसंगतोपिदत्तेनभावंकृत्वाहृदंहृदि ॥ अनायासेनलब्धेनतस्माद्भक्तिर्गरीयसी ३२ ॥ ॥ इतिश्री
गणेशपुराणेउत्तरखण्डेबालचरितेभक्तिप्रशंसाकथनंनामपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ मुनिरुवाच ॥ ॥ किंकर्मकृतवा
न्व्याधःकथंपत्रंसमर्पितमम् ॥ किंनामासकथंप्राप्तःसालोक्यंतद्वदस्वमे १ ॥ ॥ कउवाच ॥ ॥ विदर्भदेशेनगरमादिर्षाख्यंबभूवह ॥ विख्यातंत्रिषु
लोकेषुकुबेरनगरोपमं २ भीमोनामाभवद्व्याधोनगरेमांसविक्रयी ॥ परेषांदोषकथनेदोषेयश्चापिवर्तते ३ प्रश्नेकृतेतुवक्तव्यंयाथातथ्यान्नमत्सरात् ॥ सभी
मोदोषबहुलोबाणकोदंडवान्वने ४ शरपूर्णेषुधीखड्गीचापंबिभ्रच्चशस्त्रिकां ॥ अवधीत्प्राणिनोनित्यंकुटुंबभरणेरतः ५ पथिकान्ब्राह्मणांश्चापिनिर्दयोनि
र्जनेवने ॥ कदाचिन्नगरेतस्मिन्समारब्धोमहोत्सवः ६ प्रातरेववनंयातोबहुमांसजिघृक्षया ॥ विक्रयेच्छुर्द्रव्यलुब्धोकुटुंबस्यापिपोषकः ७ जवानमृगयूथां
स्तान्मांसभारयुतःपुरं ॥ यावत्प्रविशतेतावदागतोराक्षसोमहान् ८ मनुष्यगंधहृष्टोसौययौतस्यांतिकंक्षणात् ॥ पिंगाक्षोनामतःपिंगनेत्रःसर्वभयंकरः ९
मनुष्यश्वापदाशीसदुष्पूरइवहव्यभुक् ॥ चकंपेसचतंदृष्ट्वाव्याधोभूमावथापतत् १० पतितानिचशस्त्राणिनेत्रेप्याच्छादितेबलात् ॥ उन्मीलयन्नयने
पश्यच्छमीवृक्षंसमीपतः ११ आरुरोहचभीमस्तंराक्षसोपिसमारुहत् ॥ तावन्निक्षेपशाखांसतत्पत्रंवायुनेरितम् १२ पपातगणनाथस्यवामनस्थापितस्यह ॥
मस्तकेतेनतुष्टोसावुभाभ्यांपूजितःस्फुटम् १३ वामनायवरान्दातुंस्फुटोयोभूद्गजाननः ॥ बलिंविजेतुकामायकश्यपस्यात्मजायसः १४ अत्यंतंतु
ष्यतेदेवोदूर्वयाचशमीदलैः ॥ रत्नकांचनसंयुक्तादिव्यवस्त्रसमन्विता १५ दूर्वांकुरंविनापूजानिष्फलाजायतेनृणां ॥ शमीपत्रेगवासास्यात्सफला
नान्यथाक्कचित् १६ यज्ञदानव्रतैरन्यैस्तपोभिर्नियमैरपि ॥ तथानप्रीयतेदेवःकांचनैरत्नसंचयैः १७ दूर्वाभिश्चशमीपत्रैर्यथासुप्रीयतेविभुः ॥ तयो
स्तुष्टोदेवदेवःप्रेषयद्यानमुत्तमम् १८ स्वरूपधारिभिर्युक्तंकिंकरैर्निजलोकतः ॥ तेषांनिरीक्षणान्नष्टःपापपर्वतराशयः १९ कृपयाचगणेशस्यतयोराक्ष
सभीमयोः ॥ यथाग्निकणसंपर्कान्नश्यंतेतृणपर्वताः २० त्यक्त्वादेहौदिव्यदेहौगृहीत्वायानमास्थितौ ॥ दूतैःसंपूजितौनानावस्त्रभूषाविलेपनैः २१ नाना
वादित्रनिर्घोषैःस्त्रीगंधर्वैर्युतंमहत् ॥ नीतौतौदेवनिकटेनेमतुस्तौविनायकम् २२ अशेषपापनिर्मुक्तौप्रापतुस्तौसरूपतां ॥ आकल्पंस्थापितौतेनगणेशेननिज
स्थले २३ एवंभावप्रियोदेवःप्रीयतेभक्तिभावतः ॥ तथैवमुष्टिमात्रान्नात्संतुष्टोभूद्द्विजस्यसः ॥ शुक्लस्यप्रददौदिव्यमलकासदृशंगृहम् २४ तस्माद्दूर्वाशमीपत्रै
र्विनापूजावृथाभवेत् ॥ नमहत्यादांभिकयापूजयाप्रीयतेतथा २५ यथाभावेनकृतयास्वल्पयासौगजाननः २६ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेभीमरा
क्षसमोक्षणंनामषड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ व्यासउवाच ॥ ॥ पूर्वजन्मनिव्याधोसौकआसीद्राक्षसोपिसः ॥ किंशीलःकिंसमाचार

१ मादोशाख्यमितिपाठः । २ चिच्छेदेतिपाठः ।

रतन्ममाचक्ष्वनाभिज १ अनुष्ठानंकृतंतेनवामनेनकथंप्रभो ॥ कथंतस्मैवरोदत्तोगजाननस्वरूपिणा २ लोकोगणेशस्यकथंपृथगन्यत्रतिष्ठति ॥ कथंशमीप्रि
यातस्यसर्वमेतद्वदाशुमे ३ ॥ कउवाच ॥ शृणुवक्ष्यामितेसर्वंयद्यत्पृष्टंत्वयामुने ॥ राजासीत्पूर्वजनुषिसव्याधोवेदपारगः ४ सर्वशास्त्रप्रवक्ताचसर्वलक्षणल
क्षितः ॥ यज्वाविनीतोन्हीमांश्चदेवतातिथिपूजकः ५ गजाश्वरथपत्तीनांसंख्यायस्यनविद्यते ॥ दाताशूरश्चमेधावीसमृद्धोमघवानिव ६ ध्वजश्चशत्रुजिद्यस्य
प्रधानौबुद्धिमत्तरौ ॥ यतोधरीकृतःकाव्योगिरांपतिरपिस्फुटम् ७ यौतौक्षितितलेजेतुंसमर्थौशस्त्रतेजसा ॥ पत्नीसुलक्षणास्यासीत्नाम्नाचमदनावती ८ प
तिव्रताधर्मशीलासुमुखीसर्ववेदिनी ॥ नतयासदृशीकाचित्त्रिषुलोकेषुकामिनी ९ दीनानाथवृद्धजनेकृपालुरतिथिष्वपि ॥ यजतोर्ददतोरेवंरतयोःपूजनेसता
म् १० तयोर्वृत्तेनतुतुषुःपौराजानपदाजनाः ॥ अमित्राअपिगृण्हंतिषड्गुणान्साधुसंमतान् ११ एवंसपुण्यकीर्तिःसन्शशासपृथिवीमिमाम् ॥ बहुसंवत्सरं
दैवात्कालधर्ममुपेयिवान् १२ मरिष्यमाणश्चक्रेसौगोसहस्रंयथाविधि ॥ महादानान्यपिददौदशाष्टौचेतराणिच १३ मृतेस्मिन्नगरीसर्वाशुशोचनृपतिंतदा ॥
अपुत्रत्वात्सहैवास्यपत्नीसहगतिंययौ १४ मंत्रिणौसर्वसंस्कारान्कारयामासतुर्द्विजैः ॥ एकादशाहेददतुर्नानादानानिभक्तितः १५ गतेमासेमंत्रयतोराज्यार्हंकुलजं
नरम् ॥ धीमंतंसत्वसंपन्नंशूरंसत्यपराक्रमम् १६ दुर्धर्षस्यसुतंतस्यदायादस्यमहाबलम् ॥ क्षेत्रजंसांबनामानंराज्ञाशिष्टंचतावुभौ १७ अमात्यौनिश्चयंकृत्वाराज्यं
दातुंतुतस्यह ॥ पौरजानपदान्सर्वान्ब्राह्मणान्परिपृच्छ्यच १८ शुभेमुहूर्तेलग्नेचनानासंभारसंचयैः ॥ कारयामासतुरुभावभिषेकंद्विजैःसह १९ ॥ ॥ मुनि
रुवाच ॥ ॥ कथंक्षेत्रात्समुत्पन्नःकिंजातीयःपितामह ॥ ससांबस्तन्ममाचक्ष्वसर्वज्ञोसिकृपानिधे २० ॥ ॥ कउवाच ॥ दुर्धर्षेणकृतायत्नाःपुत्रार्थंबहुधामुने
॥ नचजातःसुपुत्रोस्यदुष्टदैवयुतस्यह २१ तस्यपत्न्याप्रमदयाकैवर्तासक्तचित्तया ॥ जनितःसुमुहूर्तेसनज्ञातोजारजस्त्विति २२ यावंतिराजचिह्नानितावंति
ददतुश्चतौ ॥ निवेद्यकोशसहितंसर्वंराज्यंसराष्ट्रकम् २३ अमात्यपदनिष्ठौतौजातावास्तांयथापुरा ॥ सराज्यंप्राप्यदुर्द्धर्षसुतोमत्तःश्रियाभवत् २४ स्त्रीमांसम
दिरासक्तोमत्तोगजइवालसः ॥ दुराचाररतोनित्यंनयमार्गपराङ्मुखः २५ आदायधनिनांसर्वंधनंतान्निरवासयत् ॥ अपमानंचकाराशुब्राह्मणानांसतामपि २६
बहिश्चकारतान्सर्वान्वृत्तिमाच्छिद्यसांततिम् ॥ शिष्टःस्मप्रकृतीनीतिंनतद्वाक्यंसमाददे २७ वारंवारंयदातौतंशिष्टःस्मकरुणायुतौ ॥ अमात्यौसबबंधाशुनिग
डाभ्यांरुषान्वितः २८ शिक्षापयंतौपितरौतस्यतंदुर्हृदंसुतम् ॥ यत्प्रसादात्त्वयाप्राप्तंराज्यंनिहतकंटकम् २९ विनिग्रहंकथंसाध्वोस्तयोस्त्वंकुरुषेखल ॥ अना
दृत्यतुतद्वाक्यंपीयूषमिवपामरः ३० शृंखलाभ्यांनिबद्धौतौकारागारेध्यवासयत् ॥ अतिदुष्टोदुष्टबुद्धिनामाभूत्तत्सखानिशम् ३१ तमेवसचिवंचक्रेदत्वाश्वंकां
चनंगजम् ॥ रत्नानिदिव्यवासांसिरांकवास्तरणानिच ३२ दासीदासानसंख्यातान्पानान्यन्नंचनारिकम् ॥ नकरोत्यस्यवाक्यंयस्तस्यछेत्स्येशिरोबलात् ३३
इत्युक्त्वासर्वलोकेषुसांबोंतःपुरमाययौ ३४ ॥ इतिश्रीग०उत्त०बालचरितेसप्तविंशतितमोध्यायः ॥ २७॥ कउवाच ॥ सराजकार्यंकुरुतेस्वयंभुंक्तेवरस्त्रियः ॥

राष्ट्रेशृणोतिरामांसोऽपतिंवासपर्तितथा १ बलादानयतेभोक्तुंकंदतांरुदतामपि ॥ नवागणयतेज्ञातिभेदंविषयलंपटः २ याचोन्नतकुचानारीतस्यदृष्टिपथंगता ॥
तामालिंगत्यसौकामीचुंबतीमांयभत्यपि ३ परद्रव्याणिगृण्हातिस्त्रियोपिसबलात्पुनः ॥ सोपिताद्दग्गुणोमंत्रीदुष्टबुद्धिपथेरतः ४ एवंदुराचाररतौनकन्यांनचमा
तरं ॥ नवर्जयंतःसंभोगेभगिनीमपिनिर्घृणौ ५ नब्रह्महत्यांमनुतोनस्त्रीबालवधंतथा ॥ एवंपापसमाचारौपापस्यपर्वताविव ६ आस्तामुभौदुष्टबुद्धीराजामात्यौ
सुदुःसहौ ॥ नब्राह्मणोयतिर्वापितद्गृहेयातिभिक्षितुं ७ नराष्ट्रेनामतस्यापिगृण्हातिप्रकृतेरपि ॥ एकदामृगयार्थंतौयातःस्मगहनंवनं ८ घ्नतःस्ममृगयूथानिपक्षि
यूथान्यनेकशः ॥ तानिप्रापय्यनगरमश्वारूढौस्वयंपुनः ९ वैनायकंमहास्थानंपथितौपश्यतःस्मह ॥ यस्मिन्विराजतेमूर्तिर्जीर्णावैनायकीशुभा १० स्थापिता
रामपित्रासापुत्रार्थंकुर्वतातपः ॥ भक्त्यासाक्षात्कृतोयत्रदेवदेवोविनायकः ११ दशाक्षरेणमंत्रेणध्यायताबहुवासरं ॥ दत्त्वातस्मैवरान्देवोविदधेवांछितानपि १२
ततोवसिष्ठहस्तेनतेनेयंस्थापितादृढा ॥ वरदेतिचनामास्यावसिष्ठेनकृतंततः ॥ अस्यदर्शनतोनॄणांपुरुषार्थाश्चतुर्विधाः ॥ स्मरणात्पूजनाद्वापिसेत्स्यंतेनात्रसंशयः
१३ एवंवसिष्ठवाक्येनस्थानंतद्भुविपप्रथे ॥ गणेशभजनेनास्यस्मरणेनार्चनेनच १४ रामलक्ष्मणभरताःशत्रुघ्नसहिताःसुताः ॥ जातालोकेषुविख्याताःसर्व
ज्ञाःशूरसंमताः १५ एवंदृष्ट्वामहारम्यंप्रासादंराजनिर्मितं ॥ उत्तरेतुरश्वपृष्ठाद्राजामात्यौपुपूजतुः १६ पत्रैःपुष्पैर्नेमतुस्तंसर्वपापहरंविभुं ॥ प्रदक्षिणीकृ
त्यविभुमीयतुःक्षणमात्रतः १७ एतदेवपरंपुण्यंदैवाज्जातंतयोस्तदा ॥ एवंपापसमाचारौराज्यंकृत्वाथमम्रतुः १८ बध्वापाशैर्यम्यदूतैर्नीतौतौशमनांतिकं ॥
चित्रगुप्तंसमाहूयपप्रच्छसशुभाशुभं १९ तेनोक्तंनतयोरस्तिपुण्यलेशोरवेःसुत ॥ पापानांगणनानास्तिदूतांश्चैवेदमब्रवीत् २० बध्यतांबध्यतामेतौलोह
दंडेनपात्यतां ॥ कुंडेवीचिमयेपंक्तिसहस्रपरिवत्सरान् २१ एकैकस्मिन्क्रमेणैतौकुंडेभुक्त्वाघसंचयान् ॥ क्षिप्यतांमृत्युलोकेचनीचयोनिगतावुभौ २२ अ
नयोःपुण्यलेशोस्तिदूताःशृणुततत्कृतिं ॥ प्रसंगादर्चितोदृष्टोदेवआम्यांगजाननः २३ तेनपुण्येनसोप्येताबुद्धरिष्यतितत्रवै ॥ एवमाकर्ण्यतद्वाक्यंदूतैर्बद्धौ
हतौदृढं २४ कुंभीपाकेशोणितोदेनिरयेरौरवेपितौ ॥ निक्षिप्तौकालकूटेचक्रमशःशतवत्सरान् २५ तामिस्रेचांधतामिस्रेपूयशोणितकर्दमे ॥ कंटकेतुक्षतां
गौतौसंतप्तौतप्तवालुके २६ विक्षतौक्रिमिभिस्तत्रभ्रंशसूचीमुखैरुभौ ॥ असिपत्रवनेघोरेततोनीतावुभावपि ॥ २७ ॥ यत्रशस्त्राभिघातेनवर्ष्माभिद्यतिता
पिनां ॥ ततस्तप्तशिलायांतौनिष्पिष्टौघनघाततः २८ भुंजंतौनरकानेकविंशतिंबहुवासरं ॥ नदुःखंशक्यतेवक्तुंशेषेणाशेषतस्तयोः २९ एवंकतिसहस्राणि
भुक्त्वाभोगाननेकशः ॥ निस्तीर्णभोगौतौपापशेषेणभुवमागतौ ३० एकोजातःकाकयोनौकौशिकोभूत्परोपिच ॥ ततएकोदर्दुरोभूदपरःसरटोभ
वत् ३१ ततएकोविषधरोपरोभूद्वृश्चिकोपिच ॥ तत्रापिकुर्वतःपापंनानालोकान्विदंशतः ३२ श्वमार्जारयोर्योनौजातौनकुलसूकरौ ॥ वृकजंबूकयोर्योनौ
जातौघोटकगर्दभौ ३३ ततउष्ट्रगजौजातौततोनक्रमहाझषौ ॥ ततोव्याघ्रमृगौजातौततोवृषभमाहिषौ ३४ एवंनानायोनिगतौजातौचांडालकीटकौ ॥

राक्षसीभिल्लयोर्योनौततश्चांतेसमीयतुः ३५ पिंगाक्षोदुर्बुद्धिरितिनाम्नाख्यातौचभूतले ॥ आजन्मकृतपापस्यकथ्यतेबहुदोषता ॥ ३६ ॥ यदातौराजप्रकृ
ति। स्तांपापरतौपुरा ॥ एकंपुण्यंतयोरासीन्मृगयायांप्रसर्पतोः ३७ विनायकस्यनमनंदर्शनंचप्रदक्षिणा ॥ अर्चनंफलपुष्पाद्यैस्तुष्टआसीद्गजाननः ३८
॥ अगाधंतत्तयोःपुण्यमासीत्तज्जन्मसंचितम् ॥ यदापुराराक्षसोसौभीमंभक्षितुमागतः ३९ सआरूढःशमीवृक्षंतत्पत्राणिचमस्तके ॥ पतितानिगणेशस्यतु
ष्टोभूत्सद्वयोरपि ४० दिव्यदेहंतयोर्दत्वास्वर्लोकंप्रापयद्विभुः ॥ एतत्तेकथितंपूर्वजन्मकर्ममयातयोः ४१ ॥ शमीपत्रार्चनादेवतुष्टोभूत्सगजाननः ॥ यथायं
स्थापितस्तेनवामनेनतदप्यहम् ४२ कथयामिमुनेसर्वंतदनुष्ठानमेवच ॥ यथाचगणनाथोस्यप्रसन्नोवरदोभवत् ४३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबाल
चरितेभीमराक्षसयोर्जन्मवर्णनंनामअष्टाविंशतितमोऽध्यायः ॥ २८ ॥ कउवाच ॥ मयाज्ञप्तःकश्यपोसौसृष्टिंनानाविधांकुरु ॥ सविनीतोमहाज्ञानीभूतभव्यभ
विष्यवित् १ अतिवैश्वानररवितेजाःसुतपसांनिधिः ॥ सृष्टिसामर्थ्यसंप्राप्तौततापसुमहत्तपः २ षडक्षरेणमंत्रेणध्यात्वादेवंगजाननम् ॥ दिव्यवर्षसहस्रांते
सदेवोवरदोभवत् ३ ईप्सितानस्यसर्वान्सददौनानावरान्शुभान् ॥ ततोसौमनसायद्यदकल्पयतल्लाघवात् ४ तत्तदग्रेपश्यतिस्मवरदानप्रभावतः ॥
चतुर्दशसुपत्नीषुक्रतुदानादनेकधा ५ चकारतेजसासर्वंजगत्स्थावरजंगमं ॥ तासुश्रेष्ठेचद्वेपत्न्यौदित्यदितीतिनामतः ६ अदित्यापितपस्तप्तंविष्णुप्री
णनहेतवे ॥ संवत्सराणामयुतंततस्तुष्टोजनार्दनः ७ जगत्याःपालनायासौधर्मसंस्थापनायच ॥ शक्रादितत्सुतानांचदुष्टानांनिग्रहायच ८ पुत्रतामग
मत्तस्यास्तयापूर्वंप्रसादितः ॥ अथसास्वामिनंप्राहदितिर्होमायसादरं ९ ऋतुंमेदेहिभगवन्बाधतेमदनानलः ॥ इत्याकर्ण्यवचस्तस्यामुनिस्तांप्राहसादरं
१० अयंकालोघोररूपोहोमकालउपस्थितः ॥ क्षणमाचरधैर्यंत्वंपश्चाद्रंस्येत्वयासह ११ अस्मिन्कालेभवेद्दुष्टमपत्यंदेवधर्मध्रुक् ॥ इतिस्वामिवचः
श्रुत्वाहस्तेधृत्वाननामतं १२ उवाचरक्तनयनादग्धुकामाजगत्त्रयं ॥ इदानीमेवमेवांछानकृताचेत्त्वयामुने १३ देहत्यागंकरिष्यामिविह्वलामदनाग्नि
ना ॥ यथातथास्तांदेवान्मेजपत्यंदेवधर्मध्रुक् १४ इतितद्वचनंश्रुत्वाशरणागतवत्सलः ॥ ददौहृष्टुंतदातस्यैहोमंस्नात्वाचकारह १५ ततश्चास्याःसु
तोजज्ञेहिरण्याक्षोमहाबलः ॥ हिरण्यकशिपुश्चोभौचेरतुस्तपउत्कटं १६ पंचाक्षरंमहामंत्रंपितुस्तौबहुवत्सरं ॥ एकांगुष्ठस्थितौवायुमात्रभक्षौसव
लिमकौ १७ अथाययौमहादेवोवरदातुंकृपानिधिः ॥ तुष्टुवतुस्ततस्तंतौभक्त्यादेवंत्रिलोचनं १८ कृतांजलिपुटौचोभौप्रणिपातपुरःसरं ॥ यथाश
क्तियथाज्ञानंतद्दर्शनस्फुरन्मती १९ योदेवोवृषवाहनोदशभुजश्चंद्रार्द्धनागान्वितोनानारूपगणौर्गिरींद्रतनयायुक्तोजगत्कारणं ॥ योव्याघ्राजिनकृत्तिमां
स्त्रिनयनोयःशूलधृक्कामहाभक्तेच्छापरिपूरणैकनिलयोधर्मार्थमोक्षप्रदः २० इतिस्तुत्वामहादेवंसर्वव्यापिनमीश्वरं ॥ नमश्चक्रतुर्देवंभक्तवांछासुरद्रु
मं २१ तावुवाचततस्तुष्टोवृणुतंवरमित्यसौ ॥ वृणुतस्तौवरान्देवादमृतिंयक्षरक्षसः २२ किन्नरैर्मानुषश्रेष्ठैःपिशाचैश्चारणादिभिः ॥ नशस्त्रैर्ना

द्रंशुष्कैश्चजंतुभिर्जलजैरपि २३ स्थावरैर्जंगमैरन्यैर्नदिवाननिशासुच ॥ नपृथिव्यांनचचाकाशेनांतरालेतथोषसि २४ तथेतितावुवाचेशस्तथावांतर्द्
धेहरः ॥ तदैवतावजयतांरोदसीचरसातलं २५ देवस्थानानिसर्वाणिबलादाक्रम्यतौस्थितौ ॥ हिरण्यकशिपोर्जातःप्रल्हादोनामनामतः २६ त
नयोविष्णुभक्तेषुगरीयान्वंशकंटकः ॥ जपन्नारायणंदेवंपित्रासंताडितोभृशं २७ अनेकयातनायांसरक्षितोनेकधामुना ॥ जलेस्थलेविषादग्नेर्वि
ष्णुनाकरुणावता २८ हिरण्यकशिपुःसायंसर्वलोकभयंकरः ॥ नारसिंहेनवपुषानखरैःसविदारितः २९ वाराहेणहतःपूर्वोदंष्ट्रयावसुधात्हता ॥ विरोचनः
सुतस्तस्यबलिस्तस्याभवत्सुतः ३० विरोचनःसूर्यभक्तोमुकुटंप्राप्तवांस्ततः ॥ ऊचिवांस्तंचसप्राश्वःपरहस्तोयदास्पृशेत् ३१ मुकुटस्यतदाध्वंसोभाविताना
त्रसंशयः ॥ ससूर्यवरदानेनचक्रेत्रिभुवनंवशे ३२ च्युतस्थानास्ततोदेवाअच्युतंशरणंययुः ॥ सचिंतांमहतींकृत्वानिश्चयंनाध्यगच्छत ३३ ततस्तेनधृतंरू
पंसर्वयोषिद्वरंस्त्रियः ॥ तेनतंरमयामासबहुकालंविरोचनम् ३४ ततःससुरतंकर्तुमुद्यतोभूत्कुबुद्धिमान् ॥ ततस्तंसुदतीप्राहममैकावासनास्तिभोः ३५ अभ्यंगं
कुरुपूर्वंत्वंततोहिरंस्यसेमया ॥ इतिश्रुत्वासतद्वाक्यंकामासक्तोन्वमोदत ३६ उत्तार्यमुकुटंसाथमूर्ध्नितैलंव्यमर्दयत् ॥ सतदाशतचूर्णोभूत्तत्सारूप्यंसआप्तवान्
३७ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेविरोचनवधोनामएकोनत्रिंशोध्यायः २९ ॥ कउवाच ॥ बलिस्तुहरिभक्तत्वान्नकिंचिदन्वतप्यत ॥ वेदवेदांग
वित्प्राज्ञःसर्वशास्त्रविशारदः १ परनिंदापरद्रव्यपरद्रोहपराङ्मुखः ॥ दातायज्वामानयितामान्यानांपरमादरात् २ गच्छन्वदन्स्वपन्भुंजंस्तिष्ठन्नपिजपन्पिबन् ॥
ध्यायतिस्महरिंनित्यंभक्त्यासंस्थिरचेतसा ३ एकदाशुक्रमाहूयपारपूज्ययथाविधि ॥ पप्रच्छतंबलिर्नीतिंशक्रोभुंक्तेमरावतीं ४ कथंचभागोनास्माकंभ्रा
तृत्वेसततंस्थिते ॥ इतिमेसंशयंप्राज्ञछेत्तुमर्हस्यशेषतः ५ ॥ शुक्रउवाच ॥ तवपूर्वैरेतदर्थंकृतंवैरंनिरंतरं ॥ सुरैःसार्द्धंमहाआगतेसर्वेनाशमापिताः ६ देवै
र्विष्णुसहायैस्तुनानामायाबलाश्रयात् ॥ त्यक्त्वावैरंभवान्साधुयजतांशतसंख्यया ७ तत्पुण्यस्यबलादैंद्रंपदंपूर्णमवाप्स्यसि ॥ बलिरुवाच ॥ सम्यगुक्तंत्व
याब्रह्मन्नीतिशास्त्रविशारद ८ साम्नोदानविधेर्भेदाज्जघन्योनिग्रहोमतः ॥ सोपिपुण्यबलात्सिध्येत्तस्मात्पुण्यंदृढंमतं ९ ॥ कउवाच ॥ एवंसनिश्चयंकृत्वाव
सिष्ठादीन्समाह्वयत् ॥ भृग्वादींश्चमुनीन्पूज्यसुमुहूर्तेसमारभत् १० यज्ञंमहासमारंभंसर्वानंदकरंपरं ॥ सर्वेतेयज्ञकुंडानिप्राचीसाधनपूर्वकं ११ चक्रुश्चकार
यामासुर्यज्ञसंभारसंचयान् ॥ वेदिकामंडपादींश्चभूमिशोधनपूर्वकं १२ कृत्वाभ्युदयिकंश्राद्धंस्वस्तिवाचनपूर्वकं ॥ मातृणांपूजनंकृत्वास्थापयामासुरादरात् ॥
मंत्रैर्नानाविधैर्विप्राःसर्वामंडपदेवताः १३ रेजातेदंपतीतत्रश्वेतवस्त्रावलंकृतौ ॥ अमात्यराजसुत्हृदांपौराणांचगणैर्वृतौ ॥ १४ ॥ सम्मानितास्त्रियोपरश्चनृग
वाक्षैस्तंमहोत्सवं ॥ अन्वारब्धाब्राह्मणास्तेपूर्वांगानिन्यवर्तयन् १५ आलभंतपशुंवेदकल्पवाक्यानुसारतः ॥ तत्तद्देवायतन्मंत्रैर्जुहुतिस्मविधानतः १६ यज्ञ
वाटेचतुर्द्वारेसर्वेषामनिवारिते ॥ आयांतियांतिसर्वेपिपूजितास्त्रिविधाजनाः १७ विवदंतेमहावादैरेकतोविदुषांजनाः ॥ नृत्यंत्यप्सरसोन्यत्रपठंतेवैदिकाःकुतः

१८ गायंतिवैष्णवाःशैवामृदंगतालवादनैः ॥ भुंजतेब्राह्मणाःस्वेच्छाभोजनंषड्रसैःक्वचित् १९ कथयंतिकथानानाकथाःशृण्वंतिमोदकाः ॥ एवंसुवितते य
ज्ञेवसिष्ठाद्यामहर्षयः २० वेसोर्धारांसुमहतींपातयामासुरग्निषु ॥ उत्तरांगानिसंपाद्यरथेतौस्थाप्यदंपती २१ कर्तुंचावभृथस्नानंसर्वेलोकाविनिर्ययुः ॥ नाना
वादित्रनिर्घोषैर्वरबंदीरवैरपि २२ वेदघोषैर्बहुविधैःसामगानैर्हरिप्रियैः ॥ स्नात्वागत्यहरिंसोथतोषयामासतान्द्विजान् २३ अनेकरत्ननिचयैर्धनैर्वस्त्रैरने
कशः ॥ गोभिरश्वैर्गजैर्गंधैरिच्छाविषयपूरणैः २४ एकोनशतमेवंतेतस्ययज्ञानपारयन् ॥ शतेयज्ञेसमारब्धेशक्रश्चिंतापरांययौ २५ कनीयांसंसशरणंस्व
पदभ्रंशशंकया ॥ क्षीरसागरमध्यस्थंशेषशायिनमीश्वरम् २६ मयासंवाहितपदंसेव्यमानंसुरैरपि ॥ गीयमानंनारदेनवीणाहस्तेनसादरम् २७ तुं
बरुप्रमुखैरन्यैरप्सरोगणकिन्नरैः ॥ अस्तौदसौहरिंदृष्ट्वातंहरिंस्वेष्टसिद्धये ॥ प्रणम्यसंपुटंकृत्वापाण्योर्भावेनसादरम् २८ ॥ शक्रउवाच ॥ नमोनंतशकेनमो
विश्वयोनेनमोविश्वभर्त्रेनमोविश्वकर्त्रे ॥ नमोदैत्यहंत्रेनमोनेकरूपनमोसक्तचित्तार्थदायास्तुनित्यम् २९ ॥ कउवाच ॥ एवंस्तुत्वाब्रवीदेनंवासवोबालिचेष्टि
तम् ॥ बलिर्विरोचनसुतोविख्यातोभुवनत्रये ३० ग्रहीष्यतिममपदंमखाच्छतगुणादयम् ॥ यावत्तस्यमखाणिसर्वेज्ञातंतुविष्णुना ३१ ततऊचेसभगवानिं
द्रंसंकटचिंतया ॥ ममभक्तोबलिःशक्रतपस्वीविजितेंद्रियः ३२ तपसःफलमेतेनभोक्तव्यंश्रुतिवाक्यतः ॥ नजायतेवृथाकर्मशुभंवायदिवाशुभम् ३३ साध
यिष्येभवत्कार्यंस्थिरीकुरुमनोहरे ॥ ततःसगर्भतांपेदेअदित्याजठरेविभुः ३४ सुषुवेनवमेमासिसादितिस्तनयंशुभम् ॥ प्रभयातस्यतेदीपानिष्प्रभत्वमु
पागमन् ३५ स्नात्वाशीतजलेनाशुजातकर्मयथाविधि ॥ चकारकश्यपोधीमान्स्वस्तिवाचनपूर्वकम् ३६ कृत्वापितृमहायज्ञंमातृपूजनपूर्वकम् ॥ ददर्शबाल
कंपश्चात्प्राशयित्वाघृतंमधु ३७ ह्रस्वंपृथुलमूर्द्धानंलघुपादंबृहत्तनुम् ॥ दिव्यज्ञानसमायुक्तंदिव्यदेहंचतुर्भुजम् ३८ नानालंकारसंयुक्तंज्ञात्वाविष्णुमथा
नमत् ॥ उवाचचप्रसन्नात्मातपोवंशोद्यचक्षुषी ३९ ज्ञानंतथाश्रमोधन्योधरास्वर्गोरसातलम् ॥ धन्यास्त्वद्दर्शनादेतेसच्चिदानंदरूपिणः ४० ॥ ॥ कउवाच ॥
एवमाकर्ण्यतद्वाक्यमुवाचजगदीश्वरः ॥ अदित्यास्तपसातुष्टःपुत्रत्वमहमागतः ४१ हर्तुंभूभारमतुलंज्येष्ठकार्यंचसाधितुम् ॥ इत्युक्त्वाप्राकृतोभूत्वारुद
त्स्तन्यंपपावथ ४२ नामनिष्क्रमणंकर्मचक्रेन्नप्राशनंमुनिः ॥ तृतीयेचौलमब्देसपंचमेव्रतबंधनम् ४३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेवामनावता
तारककथनंनामत्रिंशोऽध्यायः ॥ ३० ॥ कउवाच ॥ वेदांश्चचतुरःसांगानध्यापयततंमुनिः ॥ एकस्मिन्दिवसेतातंवामनःपर्यपृच्छत १ केनोपायेनदेवानांप
दप्राप्तिर्भविष्यति ॥ भूभारहरणंतन्मेयथावद्वक्तुमर्हसि २ ॥ ॥ कश्यपउवाच ॥ उपदेशंकरिष्यामिमंत्रस्यसिद्धिदस्यते ॥ षडक्षरस्यविघ्नेशतोषकस्यममा
त्मज ३ तस्मिन्प्रसन्नेविघ्नेशेजगदस्थित्यंतकारिणि ॥ अनेकब्रह्मांडविधौसर्वकारणकारणे ४ सर्वेकामाःप्रसिध्यंतितदर्थंयत्नमाचर ॥ ॥ कउवाच ॥ ॥
एवमुक्त्वाददौतस्मैसुमुहूर्तेमहामनुम् ५ तदैवचलितस्तस्मादाश्रमाद्धर्षसंयुतः ॥ प्रणम्यतमनुज्ञाप्यजगामतपसेशिशुः ६ भ्रमतादहशेतेनाविदर्भेस्थान

मुत्तमम् ॥ लतावृक्षसमाकीर्णंकासारपरिशोभितम् ७ तत्रपद्मासनंकृत्वाजजापतंमनुंशुभम् ॥ षडक्षरंवर्षमात्रंनिराहारोजितेंद्रियः ८ निर्वाणंतस्यतज्ज्ञा
त्वाविरासीत्सिद्धिबुद्धियुक् ९ मयूरवाहनोदेवःशुंडादंडविराजितः ॥ विलसद्दशदोर्दंडोरत्नमालाविभूषितः १० आशीविषलसन्नाभिर्नानालंकारशोभि
तः ॥ आगतोदृढभक्तंतंधेनुर्वत्समिवादरात् ११ वामनस्तंपुरोदृष्ट्वासर्वतेजोभिभाविनम् ॥ सर्वसिद्धिकरंदेवंसर्वविघ्ननिवारणम् १२ नुनावपरयाभक्त्या
देवदेवंगजाननम् १३ ॥ वामनउवाच ॥ अव्यक्तंव्यक्तहेतुंनिगमनुततनुंसर्वदेवाधिदेवंब्रह्मांडानामधीशंजगदुदयकरंसर्ववेदांतवेद्यम् ॥ मायातीतंस्ववेद्यं
स्थितिविलयकरंसर्वविद्यानिधानंसर्वेशंसर्वरूपंसकलभयहरंकामदंकांतरूपम् १४ तंवंदेविघ्नराजंविधिहरमुनिभिःसेव्यमानंसनागैस्तेजोराशिंत्रिसत्यंत्रि
गुणविरहितंतत्त्वमस्यादिबोध्यम् ॥ भक्तेच्छोपात्तदेहंनिजजनसुखदंतत्त्वबुद्धिप्रकाशंसांबाद्यैःस्तूयमानंसकलतनुगतंभुक्तिमुक्तिप्रदंतम् १५ ॥ कउवाच ॥
॥ इतिस्तुतोदेवदेवःप्रसन्नःप्राहवामनम् ॥ वरंवरयतुष्टोहंयत्तेमनसिवर्तते १६ स्तोत्रेणतपसाचैवपरितुष्टोददामितत् ॥ वामनउवाच ॥ नतेस्वरूपंविदु
रजाद्याब्रह्मर्षयोयेसनकादिकाद्याः ॥ दृष्टोसिसत्वंजगतामधीशस्त्वत्तःकमन्यंवरमद्ययाचे १७ अथापितेवाक्यभिदाभयात्त्वांयाचेवरंतंममनाथदेहि ॥ प
राजयोमेनभवेत्कदापिकार्येखिलेविघ्नभयंनचस्यात् १८ उद्यतोस्तिबलिःशक्रपदमत्तुंक्रतोर्बलात् ॥ सचमांशरणंयातस्तस्यसिद्धिर्यथाभवेत् १९ त
थाकुरुजगत्कर्तर्यदितुष्टोसिमेनघ ॥ ॥ गजाननउवाच ॥ एतत्तेभवितासर्वंस्मरणान्ममसुव्रत २० सेत्स्यंतिसर्वकार्याणिमहांतिचलघूनिच ॥ ॥ कउ
वाच ॥ एवमुक्त्वागतेदेवेवामनोकारयच्छुभाम् ॥ काश्मीरोपलजांसोथस्थापयन्मूर्तिमुत्तमाम् २१ चतुर्भुजांत्रिनयनांशुंडादंडविराजिताम् ॥ प्रसन्नकरिह
स्ताभ्यांभक्तानामभयप्रदाम् २२ स्मरणाद्दर्शनाद्ध्यानात्पूजनात्सर्वकामदाम् ॥ प्रासादंकारयामासरत्नकांचननिर्मितम् २३ तत्रैकंब्राह्मणंस्थाप्यग्रामंद
त्वाधनानिच ॥ त्रिकालंपूजनंतस्यकारयामासतेनसः २४ आगतःस्वगृहंनत्वापितरंसर्वमब्रवीत् ॥ तपश्चतत्फलंचाथयज्ञंगंतुमपृच्छत २५ कश्यपेना
भ्यनुज्ञातोवामनोदर्भदंडभृत् ॥ सूत्रकृष्णाजिनधरोमेखलीयज्ञमाययौ २६ ह्रस्वाकृतिंमुनिंदृष्ट्वामुनयोविस्मितास्तदा ॥ नायंमुनिर्यतस्तेजोदृश्यते
परमाद्भुतम् २७ तंदृष्ट्वापरमायांतंबलिरुत्थायसत्वरम् ॥ कोसित्वमितिपप्रच्छनत्वातंकुतआगतः २८ किंवांछसिवदविभोपितामाताचकस्तव
वसतिस्तवकुत्रास्तिततऊचेसवामनः २९ नस्मरेपितरौराजन्ननाथंविद्धिमांकृशम् ॥ त्रैलोक्यंवसतिर्मेस्तियाचेभूमिंत्रिभिःपदैः ३० मितांकर्तुंपर्णकु
टींशक्तिश्चेदस्तिदीयताम् ॥ ॥ कउवाच ॥ इतिवाक्यंमुनेःश्रुत्वाहृदिज्ञात्वाकृपायुतम् ३१ तंदातुमुद्यतंभूमिमूचेकाव्योबलिंतदा ॥ शुक्रउवाच ॥ नब्रा
ह्मणोहरिरयंकपटंरूपमास्थितः ३२ हरिष्यतित्रिभुवनंपदत्रयमिषेणतु ॥ मादीयतामस्यकिंचिदितिसत्यंब्रवीमिते ३३ तमुवाचमहादैत्योमूढकिं

१ ब्रह्मचारिहरिरयमितिपाठः ।

वदसेवचः ॥ हरिश्चेद्विमुखोगच्छेत्सर्वंमेसुकृतंनयेत् ३४ अस्मात्पात्रंकिमन्यत्स्यादस्मैदत्तमनंतकम् ॥ इत्युक्त्वातंपुनःप्राहवामनंदैत्यपुंगवः ३५ ब्रह्मन्द
त्तामयाभूमिःसंकल्पःक्रियतामिति ॥ वामनःप्राहराजानंसंकल्पयितुमुद्यतः ३६ तावद्धारांनिरुध्यैवस्थितःशक्रोन्यदेहतः ॥ ददौशलाकांतत्पात्रे
भग्ननेत्रोबहिर्गतः ३७ ततःपाणितलेतस्यवामनस्यजलंददौ ॥ स्मृत्वागणेशंववृधेवामनोहर्षनिर्भरः ३८ मूर्ध्नाक्रम्यस्वर्गलोकमेकपादेनरोदसी ॥ पाताला
न्यपरेणापिदत्तंतन्मस्तकेपरम् ३९ ततऊचेबलिंदेवोगच्छत्वंधरणीतलम् ॥ त्वांविनाहंकथंयामीत्येवमाहबलिस्तुतम् ४० इत्याकर्ण्यवचस्तस्यपुनस्तंप्राह
वामनः ॥ सान्निध्यंममतत्रापिभवितात्वदनुग्रहात् ४१ इंद्रोमांशरणंयातःप्रियंकार्यंहितस्यमे ॥ तवापिममभक्तस्यप्रियंपश्चाद्भविष्यति ४२ ऐं
द्रेपदेनिवृत्तेस्यपदंदास्येतवैवतत् ॥ ततोब्रह्मादयोदेवास्तुष्टुवुर्वामनंविभुम् ४३ मुमुचुःपुष्पवर्षाणिवाद्यानिववदुःसुराः ॥ पुपूजुस्तेपिसर्वेचजगुश्च
ननृतुःपरे ४४ ततश्चांतर्दधेदेवोवामनोनंतविक्रमः ॥ स्वंस्वंस्थानंगतादेवायथापूर्वंमुदान्विताः ४५ ॥ ॥ कउवाच ॥ ॥ एवंतेनकृतामूर्तिर्विख्या
ताभूज्जगत्त्रये ॥ गजाननस्यदेवस्यसर्वेषांकामदानृणाम् ४६ इत्येतत्कथितंसर्वंप्रसंगाद्बलिचेष्टितम् ॥ लाघवंवामनस्यापिमहिमासुमुखस्यह ४७ अदोपा
ख्येपुरेतेनस्थापितस्यमहात्मना ॥ दशबाहोःप्रसिद्धस्यदेवदक्षिणभागतः ४८ प्रियत्वंतस्यशम्यास्तेकथयिष्येधुनास्फुटम् ४९ ॥ ॥ इतिश्रीगणेशपुरा
णेउत्तरखण्डेबालचरितेएकत्रिंशोध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ कउवाच ॥ ॥ शृणुष्वावहितोब्रह्मन्नितिहासंपुरातनम् ॥ प्रियव्रतायाकथय
त्स्वयमेवगजाननः १ ॥ ॥ गजाननउवाच ॥ ॥ शमीपत्रस्यमहिमाशृणुष्वार्यमहाफलम् ॥ नयज्ञैर्नचदानैश्चव्रतैःकोटिशतैरपि २ नजपैःपूजनैर्वा
पिममतोषस्तथाभवेत् ॥ नपद्मैर्नान्यकुसुमैःशमीपत्रैर्यथाभवेत् ३ शमीतिकीर्तनादेवपापंनश्यतिवाचिकम् ॥ स्मरणान्मानसंपापंस्पर्शनात्कायजंतथा ४
नित्यंतत्पूजनाद्ध्यानाद्वंदनाच्चैवभक्तितः ॥ निर्विघ्नकरमायुष्यंज्ञानंपापक्षयोपिच ५ वांछासिद्धिरचापल्यंजायतेनात्रसंशयः ॥ ॥ मुनिरुवाच ॥ ॥ को
सौप्रियव्रतोराजाकिंशीलःकुत्रवाभवत् ६ कथंवैतस्यकथितागुणाःशम्यामहात्मना ॥ एनंमेसंशयंब्रह्मन्कृपयानुदसुव्रत ७ ॥ ॥ कउवाच ॥ ॥ अ
त्राप्युदाहरंतीममितिहासंपुरातनम् ॥ शंकरस्यचसंवादंपार्वत्यासहपुत्रक ८ ॥ ॥ पार्वत्युवाच ॥ ॥ कथंशमीप्रियादेवसर्वज्ञजगदीश्वर ॥ गजाननस्यमे
शंसयदितेमय्यनुग्रहः ९ ॥ शंकरउवाच ॥ ॥ शृणुप्रियेप्रवक्ष्यामिकथामेकांशुचिस्मिते ॥ यथाप्रियागणेशस्यशमीतिज्ञास्यतेतथा १० प्रियव्रतोनामरा
जापूर्वमासीन्महामतिः ॥ सत्यवान्धर्मसंपन्नोधर्मात्माशंसितव्रतः ११ तेजस्वीचवदान्यश्चवेदशास्त्रार्थतत्त्ववित् ॥ सर्वलक्षणसंपन्नश्चतुरंगबलाधिकः १२
पालयामासपृथिवींप्रजाःपुत्रानिवौरसान् ॥ कीर्तिश्चप्रथमाभार्याप्रभातस्यापराभवत् १३ धूर्तश्चकुशलस्तस्यप्रकृतीमंबभूवतुः ॥ कुशलौनीतिशास्त्रे
षुषडाननपराक्रमौ १४ बुध्यापराक्रमेणापिरसासर्वावशीकृता ॥ सतुराजावशंनीतःप्रभयातस्यभार्यया १५ क्रीडतेहर्निशंसोथनानालंकारशोभया ॥

यौवनाक्रांतवपुषारंआदिग्योतिरम्यया १६ क्षणमात्रंनसहतेवियोगंसतयासह ॥ धिक्करोतिसदाज्येष्ठांतद्वचोनशृणोत्यपि १७ रुषानिरीक्षतेतासतन्मूर्तिंचिंतयन्न
पि ॥ स्वयंनभाषतेकिंचिन्नगृण्हातितयार्पितं १८ ततस्तस्याभवत्पुत्रःप्रभायांपतिसन्निभः ॥ जातकर्मचराजास्यकृत्वाधर्ममनेकधा १९ नामचास्याकरोत्पद्मना
भिरित्थंद्विजेरितं ॥ शुक्लपक्षेयथाचंद्रोववृधेसोपिबालकः २० बुद्धिमान्कुशलोयुद्धेपितृतोप्यधिकोभवत् ॥ पंचमेव्रतबंधंचचकारास्यनृपस्तदा २१ प्रियव्रतोम
हाबुद्धिर्मंद्राणामधिपोबली ॥ पांचालराजकन्यांसभार्यांतस्याप्यमेलयत् २२ अतिवैभवयुक्तौतौविवाहंचक्रतुस्तयोः ॥ कदाचिद्दस्यसापत्नीज्येष्ठादासीत्वमापि
ता २३ पादसंवाहनंकर्तुमागताभर्तृसन्निधिं ॥ निपपातमहीपृष्ठेसपत्न्याचरणाहता २४ दुःखितारुदतीहीणाजगामनिजमंदिरं ॥ कमहंशरणंयायांकोमेदुःखंव्यपो
हयेत् २५ सपत्न्यामानितायामेत्रातास्याद्धरिरव्ययः ॥ स्मृतमात्रस्तुयस्त्राताद्रौपद्याःकरुणानिधिः २६ यांनैवमनुतेभर्तानकोपिमनुतेपितां ॥ अतोनजीवितेना
र्थःशोषयिष्येकलेवरं २७ पिबेहालाहलंवापिपतेवापींजलान्वितां ॥ नमनोनिश्चयंयातितस्याविह्वलचेतसा २८ एतस्मिन्नंतरेदैवाद्देवलोब्राह्मणोत्तमः ॥ पुरोहितः
समायातःसजगादगजाननीं २९ उपासनांक्लेशहंत्रींसर्वकामफलप्रदां ॥ सातदैवप्रपद्याशुमूर्तिंमंदारनिर्मितां ३० गजाननस्यसंपूज्यस्नात्वाशुद्धदिनेतुसा ॥ उपविष्टा
पूजयितुंपरमेणसमाधिना ३१ त्यक्त्वाहरंहरिंचांबांतेजोयुक्तंपरंरविं ॥ सर्वैःसंपूज्यतेदेवदेवआदौगजाननः ३२ विचार्यमाणेपंचानांभेदोनैवोपलभ्यते ॥
योभेदेनेक्षतेचैतान्सयातिनरकान्नरः ३३ एकएवपरानंदपूर्णोसौपरमेश्वरः ॥ स्वेच्छयापंचधाजातोलोकानुग्रहकारणात् ॥ एकएवपुमान्यद्वत्पुत्रमातुलना
मभिः ३४ सासम्यक्षोडशभिस्तमुपचारैःपुपूजह ॥ दूर्वापुष्पैर्दक्षिणाभिर्नमस्कारैरनेकधा ३५ कृत्वाकरपुटंसातुतुष्टावजगदीश्वरं ॥ कीर्तिरुवाच ॥ त्व
मेवजगदाधारस्त्वमेवसर्वकारणं ३६ त्वमेवब्रह्माविष्णुश्चबृहद्भानुस्त्वमेवहि ॥ चंद्रोयमोवैश्रवणोवरुणोवायुरेवच ३७ त्वमेवसागरानद्योलताकुसुमसंहतिः ॥
सुखंदुःखंतयोर्हेतुस्त्वंनाशस्त्वंविमोचकः ३८ इष्टविघ्नकरोनित्यंमहाविघ्नकरोविराट् ॥ त्वमेवपुत्रलक्ष्मीदस्त्वमेवसर्वकामधुक् ३९ त्वमेवविश्वयोनिश्चत्वमे
वविश्वहारकः ॥ त्वमेवप्रकृतिस्त्वंवैपुरुषोनिर्गुणोमहान् ४० त्वमेवशशिरूपेणसर्वमाप्याययसेजगत् ॥ त्वमेवभूतभव्यंचभाविभावात्मकःस्वराट् ४१ शरण्यः
सर्वभूतानांशत्रूणांतापनःपरः ॥ कर्मकांडपरोयज्वाज्ञानकांडपरःशुचिः ४२ सर्ववेत्तासर्वविधिःसर्वसाक्षीचसर्वगः ॥ सर्वव्यापीसर्वविष्णुःसर्वसत्यमयःप्रभुः ४३
सर्वमायामयःसर्वमंत्रतंत्रविधानवित् ४४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ कउवाच ॥
एवंसानुदिनंपूज्यतुष्टावतंविनायकम् ॥ एकस्मिन्दिवसेतस्याःसख्योदूर्वार्थमाययुः १ शुक्रमासवशान्नापुःक्वापिदूर्वांकुरान्शुभान् ॥ शमीपत्राणिभूयांसि २३
गृहीत्वातुतदंतिकं २ आययुःपरमश्रांतादूर्वाभावंन्यवेदयन् ॥ शमीपत्रैःपुपूजैनंसर्वोपचारपूर्वकं ३ दूर्वांविनानिराहारातिष्ठत्सानियमेरता ॥ तस्यतुष्टिःपरा
जाताशमीपत्रैःसमर्पितैः ४ अशेततत्पुरःस्वप्नमपश्यत्सामहाद्भुतं ॥ अब्दांतेसैवमूर्तिस्तामिमांवाचमुवाचह ५ वरंददामितेसुभ्रुशमीपत्रैःसु

तोषितः ॥ सानोवाचयदाकिंचित्कीर्तिःसातांपुनर्जगौ ६ ॥ मूर्तिरुवाच ॥ वश्यस्तेभविताकांतोभोगाश्चानेकशःशुभाः ॥ त्वद्भक्तिनिरतःपुत्रोभविष्य
तिमहाबलः ७ क्षिप्रप्रसादनेत्येवंकुरुनामास्यसुंदरम् ॥ तुर्येब्देस्यविषान्मृत्युर्भविष्यतिपुनःक्षणात् ८ गृत्समदोद्विजोभ्येत्यपुनस्तंजीवयिष्यति ॥ रा
ज्यकर्ताचिरायुश्चधर्मशीलोभविष्यति ९ इदंस्तोत्रंपठेद्यस्तुममसंतोषकारणम् ॥ तस्यवश्योभवेद्राजाकिमन्यःप्राकृतोजनः १० पुत्रवान्धनसंपन्नोवेद
वेदांगपारगः ॥ बुद्धिश्चवर्धतेतस्यमेधावृद्धिर्भवेद्दृढा ११ वांछितान्लभतेसोर्थांस्त्रिसंध्यंयःपठेदिदम् ॥ ममभक्तिर्दृढातस्यमोक्षश्चांतेभविष्यति १२ एवं
दत्त्वावरान्स्वप्नेसदेवोपिदधेक्षणात् ॥ जागृतासाश्रुनयनाविस्मितामानसेवदत् १३ दीनानाथेनमहतीकृपामयिनियोजिता ॥ अनुग्रहोमहान्मह्यंयद्दत्तंद
र्शनंस्वयम् १४ विनायकेनदेवेनपाविताप्रमादरात् ॥ अद्याहंतेनदेवेनसर्वभूतानुकंपिना १५ इयमेवपरासिद्धिरिदमेवतपःफलम् ॥ अयमेवपरोलाभोयद
वोचन्मयासह १६ ॥ कउवाच ॥ ततःप्रभातेस्नातासापरमानंदनिर्भरा ॥ पुपूजपरयाभक्त्यागणेशंवरदंशुभम् १७ समाप्यनियमंमूर्तिंपूर्वस्थानेन्य
वेशयत् १८ पुरोहितंसमानीयपूजयामासभक्तितः ॥ गणेशंमनसाध्यात्वावदंतीनाममालिकाम् १९ स्मरंतीतद्वरान्कीर्तिःसमयंचप्रतीक्षती ॥ ततःकालेन
महताप्रभासानिष्प्रभाभवत् २० रक्तपित्तवतीजाताप्रारब्धादीश्वरेच्छया ॥ करौपादौचनासाचतस्याःक्षरतिनित्यशः २१ अतिबीभत्सरूपांतांतदया
जमनसापतिः ॥ नवक्तिनेक्षतेज्ञात्वाप्रयत्नान्निष्फलान्बहून् २२ ततःकीर्तेर्गृहंयातस्तपसासुंदराकृतेः ॥ कृपयागणराजस्यस्वयंवश्योभवन्नृपः २३ सगृही
त्वाकरेतांतुमंचकंसमुपानयत् ॥ चिक्रीडस्वेच्छयाकीर्त्यातन्निष्ठस्तत्परायणः २४ नवियोगंक्षणंतस्याःसहतेनृपसत्तमः ॥ सापिभोगानलंकारानन्तान्बु
भुजेसती २५ सापिगर्भवतीजाताकालेनसुषुवेसुतम् ॥ शुभेमुहूर्तेराजासौददौदानान्यनेकशः २६ पुत्रजन्मप्रहृष्टःसन्ब्राह्मणेभ्योयथार्हतः ॥ दिक्षुस्थाप्य
द्विजान्पंचजातकर्मचकारसः २७ क्षिप्रप्रसादनेत्येवंनामचक्रेततोस्यह ॥ तुतोषपुत्रंदृष्ट्वैवनानालंकारसंयुतम् २८ अतिप्रीतिमतीकीर्तिरभवत्पुत्रदर्शनात् ॥
प्रभाचदुःखितापुत्रंसपत्न्यावीक्ष्यसुंदरम् २९ एषएवभवेद्राजाज्येष्ठापुत्रोयमित्युत ॥ दध्योदनंतुसविषंकीर्तिपुत्रायसाददौ ३० सतुविह्वलतांयातोवि
वृत्तनयनःक्षणात् ॥ प्रभेवचमहाशब्दंकृत्वारोदीद्भृशातुरा ३१ तस्याःशब्दंसमाकर्ण्यकीर्तिस्तमगमत्तदा ॥ तमुदंतंसापतयेन्यवेदयतसादरम् ३२ भिष
जोपिददुस्तस्माऔषधानिनृपाज्ञया ॥ परीक्ष्यविषबाधांतेतस्मैराज्ञेन्यवेदयन् ३३ नगुणायभवंतिस्मनानामंत्रौषधानिच ॥ प्रभातुधिक्कृताभर्त्रानिर
स्तादूरतोगृहात् ३४ कीर्तिस्तंबालकंगृह्यसखीभिःकाननंययौ ॥ नगराद्योजनंयातितावद्बालोममारसः ३५ अंकेकृत्वातुतंबालंरुरोदशोकविह्वला ॥ मूर्छि
तापतिताभूमौलतेववायुनेरिता ३६ च्युतालंकरणाध्वस्तकंकणामस्तकांचला ॥ क्षणेनकिंचिदाश्वस्तासस्माराद्विरदाननम् ३७ उत्पत्तेःस्मरतीबालचेष्टितंनि
घ्नतीस्वहृत् ॥ दैवात्तेनैवमार्गेणप्रययौमुनिसत्तमः ३८ नाम्नागृत्समदःसाधुःसाक्षात्सर्यइवापरः ॥ गणेशभक्तप्रवरस्तपसांपरमोनिधिः ३९ सतस्यौकरुणावि

ष्टःसाकीर्तिःप्रणनामतं ॥ उवाचश्वसतीसातंगणनाथप्रसादजः ४० अयंबालोममसृतोजीवयैनंतपोबलात् ॥ क्षिप्रप्रसादनइतिनामदेवाज्ञयाकृतम् ४१ सप
त्न्यादुष्टभावेनविषमस्मैसमर्पितम् ॥ ततोनेनसमप्रापिसुनेमरणमीदृशम् ४२ नसतांदर्शनंव्यर्थमितियाचेतपोधन ॥ शरणागतसंत्यागंनेहंतेसाधवोजनाः
४३ इतितस्यावचःश्रुत्वामुहूर्तंध्यानतत्परः ॥ अभवन्मुनिशार्दूलस्ततोगृत्समदोब्रवीत् ४४ शृणुदेविप्रवक्ष्येहमुपायंपुत्रजीवने ॥ अज्ञानतःशमीपत्रैस्त्व
यापूजिविनायकः ४५ तत्पुण्यमस्यहस्तेत्वमर्पयस्वममाज्ञया ॥ तत्प्रसादादाशुसुतउत्थास्यतितवाधुना ४६ सातुतद्वचनस्यांतेकीर्तिर्हर्षसमन्विता ॥ ददौ
तस्मैशमीपूजासंभवंपुण्यमुत्कटम् ४७ उत्तस्थौसुकुमारोस्याअमृतेनोक्षितोयथा ॥ सातुहर्षान्मुनेःपादौववंदेशिरसापुनः ४८ उवाचतंमुनिंज्ञातंकथंशम्या
प्रपूजनम् ॥ महिमानंवदमुनेशमीपूजनसंभवम् ४९ येनसंजीवितोबालोमुक्तश्चयमकिंकरैः ॥ ज्ञात्वातंचकरिष्यामिनित्यंशम्याःप्रपूजनम् ५० येनवैबहुधाकू
रायमदूतादुरासदाः ॥ निरस्तागणनाथस्यदूतैर्बहुरणाजिरे ५१ जीवयित्वाशिशुंमेतेगताधामगजाननम् ॥ येनपुण्येनबालोमेविषंत्यक्त्वासुखीपुनः ५२ संजी
वन्तुत्थितःशीघ्रंसुप्तोत्थितइवापरः ॥ अतोहंपरिपृच्छामिमहिमानंशमीभवं५३ ॥ कउवाच ॥ इतितद्वचनंश्रुत्वाप्रोचेगृत्समदस्तुतां ॥ गृत्समदउवाच ॥उच्चा
रितेनाम्निर्यस्याःकोटिपातकनाशनं ५४ महिमानंहिकस्तस्याःसाकल्येनवदेद्भुवि ॥ संक्षेपेणतुवक्ष्यामिमहिमानंयथामति ५५ व्रतदानतपोभिश्चनानातीर्थ
निषेवणैः ॥ पंचाग्निसाधनैरप्सुनिवासैर्हैमकालिकैः ५६ नतत्फलमवाप्नोतियत्स्याच्छम्याप्रपूजने ॥ प्रातःकालेत्रिसंध्यंवाशमींनित्यंस्मरेत्तुयः ५७ वंदयेदर्चये
द्वापिभक्तिभावसमन्वितः ॥ ध्यात्वागजाननंदेवंतस्यतुष्टोविनायकः ५८ ददातिवांछितानर्थानंतेमोक्षंनसंशयः ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ५९
नारदस्यचसंवादंशक्रस्यचमहात्मनः ६० ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालसंजीवनंनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ कीर्तिरुवाच ॥ ब्रूहिब्रह्मन्नशेषेण
संवादंनारदेंद्रजम् ॥ श्रुत्वातंसंशयंत्यक्त्वाव्रताःस्याममृतादिव १ ॥ कउवाच ॥ इतितस्यावचःश्रुत्वावक्तुंसमुपचक्रमे ॥ समुनिरितिहासंतंसंवादंनारदेंद्रजम्
२ ॥ मुनिरुवाच ॥ कदाचित्पर्यटन्सुभ्रुनारदोदिव्यदर्शनः ॥ यदृच्छयागतःशक्रंत्रिलोकीभ्रमणेरतः ३ शक्रस्तंपरिपूज्यैवपप्रच्छौरवचेष्टितं ॥ यदाहना
रदोधीमांस्तच्छृणुष्वमहामुने ४ ॥ नारदउवाच ॥ देशेमालवसंज्ञातऔरवोनामवैद्विजः ॥ वेदवेदांगवित्साक्षाद्ब्रह्मानुरस्त्वंविनायथा ५ शक्तोयोमनसास्त्रष्टुं
पातुंहर्तुंचराचरं ॥ धर्मपत्नीरतोनित्यंसमलोष्टाश्मकांचनः ६ मेधावीतपसाश्रेष्ठोजातवेदाइवापरः ॥ सुमेधानामतस्यासीत्पत्नीपरमधार्मिका ७ लावण्यल
हरीकांतानानालंकारशोभना ॥ रूपेणनिर्जितरतिर्धिक्कृताप्सरसोगणाः ८ पतिशुश्रूषणरतालालितापरमादरात् ॥ तयोःसमभवत्कन्यासापिताभ्यांसु
लालिता ९ नामास्याश्चक्रतुरुभौशमीकेतिनिजेच्छया ॥ यद्यत्प्रार्थयतेसातंतद्ददातिपिताविभुः १० सातुकन्यारूपवतीसंजातासप्तवार्षिकी ॥ तदर्थंचिंत
यामासवरार्थमौरवोगतः ११ धौम्यपुत्रंसशुश्रावदेवशास्त्रागपारगम् ॥ शौनकस्यमुनेःशिष्यंतेजोराशिंपरंमुनिं १२ गुरुवाक्यरतंदांतंगुरुशुश्रूषकंपरं ॥ मं

सीन्महातेजादशबाहुर्विनायकः १ किरीटंकुंडलेमालामंगदेकटिसूत्रकम् ॥ बिभ्रत्सर्पोपवीतंचसिंहारूढोग्निमन्निभः २ पश्यतःस्मपरामूर्तिंकोटिसूर्यसम
प्रभाम् ॥ तुष्टुवतुस्तौदेवंनत्वाबद्धांजलीउभौ ३ ॥ तावूचतुः ॥ विश्वस्यबीजंपरमस्यपातानानाविधानंदकरःस्वकानाम् ॥ निजार्चनेनादृतचेतसांत्वंविघ्नप्रहर्ता
गुरुकार्यकर्ता ४ परात्परस्त्वंपरमार्थभूतोवेदांतवेद्योहृदयातिगोपी ॥ सर्वश्रुतीनांचनगोचरोसिनमावइत्थंनिजदैवतंत्वाम् ५ नपद्मयोनिर्नहरोहरिश्वहरिःषडा
स्योनसहस्रमूर्द्धा ॥ मायाविनस्तेनविदुःस्वरूपंकथंनुशक्यंपरिनिश्चितंतव ६ तवानुकंपामहतीयदास्याद्विभुंजतःकर्मशुभाशुभंस्वम् ॥ कायेनवाचामनसा
नमेत्वांजीवंश्चमुक्तोनरउच्यतेसः ७ त्वंभावतुष्टोविदधासिकामान्नानाविधाकारतयाखिलानाम् ॥ संसृत्यकूपारविमुक्तिहेतुरतोविभुंत्वांशरणंप्रपद्ये ८ ॥ ग
णेशउवाच ॥ तुष्टोहंपरयाभक्त्यातपसापरमेणच ॥ अनयापरयास्तुत्याब्राह्मणौवृणुतंवरान् ९ कुजन्मनाशकमिदंममस्तोत्रंपठेत्तुयः ॥ त्रिसंध्यंचत्रिवारं
चसर्वान्कामानवाप्नुयात् १० षण्मासाज्जायतेविद्यालक्ष्मीर्नित्यजपादपि ॥ पंचवारजपान्मर्त्यआयुरारोग्यमाप्नुयात् ११ ॥ ॥ कउवाच ॥ श्रुत्वागणे
शवाक्यंतावूचतुःपरमादृतौ ॥ और्वस्यसुतादेवशमिकानामतःशुभा १२ मंदारायसुतादत्तावेदशास्त्रार्थदर्शिने ॥ शौनकस्यचशिष्यायधौम्यपुत्रा
यधीमते १३ उभौप्रहसितौमोहाद्दृष्ट्वामार्गेभ्रुशुंडिनम् ॥ सचमत्वानिजावज्ञांशशापपरयारुषा १४ तच्छापाद्वृक्षतांयातौमंदारःशमिकापिसा ॥ तयो
श्चमातापितरौशोचंतौभृशदुःखितौ १५ आवांचक्लेशितौदेवसर्वेषांनःप्रियंकुरु ॥ एतयोःकुजतांदूरीकुरुशीघ्रंगजानन १६ ॥ गजाननउवाच ॥
असंभाविवरंदास्येकथंविप्रोक्तथंन्यथा ॥ करिष्येभक्तवचनंतस्मात्तुष्टोस्तुवेवरम् १७ अद्यप्रभृतिमंदारमूलेस्थास्यामिनिश्चलः ॥ मृत्युलोकेस्वर्गलोके
मान्योयंचभविष्यति १८ मंदारमूलेमेमूर्तिंकृत्वायःपूजयेन्नरः ॥ शमीपत्रैश्चदूर्वाभिस्तितयंदुर्लभंभुवि १९ यतःशमीमधिष्ठायसर्वदाहंस्थिरो
मुनी ॥ अयमेववरोदत्तोवृक्षयोरतिदुर्लभः २० मवद्वाक्यानुरोधेननभ्रुशुंडीवचोन्यथा ॥ दूर्वाभावेथमंदारोद्वयाभावेशमीमता २१ उभयोःसाफलंदद्यान्ना
त्रकार्याविचारणा ॥ नानायज्ञैर्नतत्पुण्यंनानातीर्थव्रतैरपि २२ दानैश्चनियमैश्चैवपुण्यंतत्प्राप्नुयान्नरः ॥ यत्स्यान्ममशमीपत्रैःपूजनेनाद्विजोत्तमौ २३ नाहं
प्रीयेधनकनकचयैर्नान्नदानैर्नवस्त्रैर्नानापुष्पैर्नचमणिगणैर्नैवमुक्ताफलैश्च ॥ यद्वच्छम्यादलनिचयकृतैःपूजनैर्ब्राह्मणानांमंदाराणांकुसुमनिचयैःसर्वकालंमुनी
द्रौ २४ यःशमींप्रातरुत्थायपश्येद्वंदेत्पूजयेत् ॥ ससंकष्टंचरोगंचनविघ्नंनचबंधनं २५ प्राप्नोतिमत्प्रसादेनदारान्पुत्रधनानिच ॥ पशूनन्यांश्चकामांश्चमु
क्तिमंतेमदाश्रयां २६ इदमेवफलंप्रोक्तंमंदारैरपिपूजने ॥ मंदारमूर्तिपूजाभिरहंगृहगतोभवं २७ नालक्ष्मीर्नचविघ्नानिनापमृत्युर्नचज्वरः ॥ नाग्निचोरभयं
तत्रकदाचिदपिजायते २८ वेदवेदांगविद्विप्रःक्षत्रियोविजयीभवेत् ॥ वैश्यस्तुवृद्धिमाप्नोतिशूद्रःसद्गतिमाप्नुयात् २९ ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वास्थितोदे
वोमूलेमंदारकेतदा ॥ शमीमूलेपितस्थौसदेवदेवोविनायकः ३० और्वोपिसपत्नीकस्तपस्तप्तुंस्थिरोभवत् ॥ तस्यमूलेतपस्तप्त्वात्यक्त्वादेहंदिवंगतः ३१

दारनामकंशांतंसमाहूयशुभेदिने १३ तांददौगृह्यविधिनापारिबर्हंददौबहु ॥ जातेविवाहेमंदारोययौस्वस्याश्रमंप्रति १४ यौवनस्थांतुतांज्ञात्वाशमीकोपुन
राययौ ॥ मंदारोमानितःसम्यग्गौरवेणसुपूजितः १५ संभोज्यसुमुहूर्तेनदत्वावस्त्रादिकांचनम् ॥ प्रास्थापयद्उभौविप्रोजामातरमथाब्रवीत् १६ इयंसुताम
मब्रह्मन्दत्तातुभ्यंविधानतः ॥ पालयस्वबहुस्नेहादद्ययावन्मयायथा १७ प्रणिपत्याथश्वशुरंओमित्युक्त्वाजगामसः ॥ स्वमाश्रमपदंप्राप्यचिक्रीडानिजभा
र्यया १८ कदाचिदपिमुख्योसौभृशुंडीतस्यचाश्रमम् ॥ मंदारस्यसमायातोद्विरदाननभक्तिमान् १९ रुष्टोसावनलःसाक्षात्तुष्टश्चेदीश्वरोपमः ॥ तपसानिर्ग
ताशुंडाभ्रूशुंडीतिचसोभवत् २० स्थूलोदरोबृहत्कायोनानालंकारमंडितः ॥ ददर्शतुरुभौतंतौमंदारःशमिकातदा २१ विरूपमिवतंदृष्ट्वाजहसतुर्मुदातदा ॥
सोपमानभयात्रस्तश्शुकोपारुणलोचनः २२ उवाचतंमंदमतेनजानासिमदोद्धतः ॥ अहसीद्विप्रवर्यैतैःपत्न्यासहयतस्तुमाम् २३ अतोयातंवृक्षयोनौसर्वप्रा
णिविवर्जितौ ॥ ॥ कउवाच ॥ ॥ शापंश्रुत्वातिकठिनंसंतप्तौतौबभूवतुः २४ प्रणम्यप्रोचतुर्विप्रमुच्छापंवक्तुमर्हसि ॥ ततऊचेभ्रुशुंडीसजानन्करुणयायुतः
२५ शुंडांदृष्ट्वाकृतंहास्यंयुवाभ्यांमूढभावतः ॥ शुंडावान्देवदेवोसौसुप्रसन्नोभवेद्यदा २६ तदायुवांनिजंरूपंप्राप्स्यथेनात्रसंशयः ॥ एवमुक्त्वागतोयावन्मुनि
राश्रममंडलम् २७ तावत्तौवृक्षतांयातौत्यक्त्वादेहौतुमानुषौ ॥ मंदारतांचमंदारोब्राह्मणःप्रापतत्क्षणात् २८ शमिकाशमितांप्रापासर्वतःकंटकैर्वृता ॥
उभौवृक्षौप्राणिमात्रैर्वर्जितौमुनिवाक्यतः २९ अनागतौतुतौज्ञात्वाशौनकश्चिंतयान्वितः ॥ मासमात्रेगतेनैवयातिकस्मान्महाबलः ३० मंदारोयामितंद्र
ष्टुंशिष्यायांतुमयासह ॥ शीघ्रमौरवमागम्यपप्रच्छशनकैरिदम् ३१ आनेतुंशमिकांप्राप्तोमंदारःक्वास्तितद्वद ॥ औरवउवाच ॥ मयाप्रेषितदैवाशुदत्वा
कन्यांतुतत्समम् ३२ नागतश्चेत्स्वाश्रमंसनजानेक्वगतोह्यसौ ॥ चिंतयामासुरथतेऔरवःशौनकादयः ३३ किंनुभौभक्षितौमार्गेव्याघ्रकव्याद्रतरक्षुभिः ॥ अ
थवानिहतौचोरैर्दष्टावाशीविषेणवा ३४ ततस्तेत्वरिताजग्मुस्तद्दुदंतबुभुत्सया ॥ क्वचित्क्वचिज्जनाऊचुर्मासमात्रमितोगतौ ३५ ततोरण्येपदंदृष्टेस्त्री
पुंसोश्चारुरूपिणी ॥ अनूपेतेतयोर्ज्ञात्वास्वात्वाध्यात्वाविलोकयन् ३६ ज्ञात्वाभ्रुशुंडिनाशप्तावुपहासरुषावशात् ॥ वृक्षतांगमितौसर्वपक्षिकीटविवर्जितौ ॥
३७ मंदारतांतुमंदारःशमिकाशमितामपि ॥ शोचातेतावुभौविप्रौऔरवःशौनकोपिच ३८ धौम्यपुत्रःसाधुरयमध्येतुंसमुपागतः ॥ अधीतविद्यःसकथंगमि
तोद्रुमतांबलात् ३९ पिताश्रुत्वात्यजेत्प्राणान्पृष्टःकिंवावदामितम् ॥ औरवोपिशुशोचैनांशमिकांनिजकन्यकाम् ४० ॥ कउवाच ॥ तावुभौपरिचिंत्यैवं
नभेदोभक्तदेवयोः ॥ गणेशंपरिराध्यैवंमोचयावइमाववात् ४१ जितेंद्रियावूर्ध्वदृष्टीनिराहारौदृढव्रतौ ॥ एकांगुष्ठस्थितावुव्यौतोषयामासतुर्मुदा ४२
ततस्तौकृपयाविष्टौतेपातेपरमंतपः ॥ षडक्षरेणमंत्रेणदेवदेवंविनायकम् ४३ एवंद्वादशवर्षाणिचेरतुस्तपउत्तमम् ॥ औरवःकन्यकार्थंचशिष्यार्थंशौ
नकोपिच ॥ ४४ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेचतुस्त्रिंशोऽध्यायः ३४ ॥ कउवाच ॥ ततस्तुष्टःपाशपाणिर्दृष्ट्वाक्लेशंतथातयोः ॥ आविरा

शमीगर्भगतोदुःखादौरवोद्दढयोगतः ॥ शमीगर्भइतिख्यातोजातोसौहव्यभुक्ततः ३२ अतएवशमीकाष्ठंमथ्नंतीहाग्निहोत्रिणः ॥ शौनकोपिवचःश्रुत्वागजान
नसमीरितम् ३३ कृत्वामंदारमूलस्यमूर्तिंचारुगजाननीं ॥ मंदारैश्चशमीपत्रैर्दूर्वाभिश्चार्चयन्मुदा ३४ ददौवरान्शौनकायपरितुष्टोगजाननः ॥ ततःस्वमा
श्रमंयातःसर्वदापुपूजच्चतम् ३५ ॥ गृत्समदउवाच ॥ तदारभ्यशमीतस्यगणेशस्यप्रियाभवत् ॥ इतितेसर्वमाख्यातंपुनश्चकथयामिते ३६ ॥ इतिश्रीगणे
शपुराणेउत्तरखंडेबालचरितेशमीमंदारप्रशंसानामपंचत्रिंशोऽध्यायः ॥ ३५ ॥ गृत्समदउवाच ॥ सह्याद्रिपर्वतेदेवोन्यवसद्गिरिजायुतः ॥ स्वगणैर्मुनिभिर्युक्तःपु
ण्यक्षेत्रेमहाबले १ दिदृक्षुःप्रययौतत्रब्रह्मालोकपितामहः ॥ पत्नीद्वयसमायुक्तोदेवगंधर्वकिन्नरैः २ दृष्ट्वातुशंकरंपूज्यस्वाभिप्रायंन्यवेदयत् ॥ आकार
यामासतदापरमर्षीन्सदाशिवः ३ जमदग्निंवसिष्ठंचमार्कंडेयंचनारदं ॥ कपिलंपुलहंकण्वंविश्वामित्रंत्रितंद्वितम् ४ तआययुःशिवाहूताअन्येसर्वेदिदृक्षवः ॥
उषःकालेमुहूर्तेतेनिष्काश्यप्रारभन्मखम् ५ त्वरावंतोथविस्मृत्यपूजांवैनायकींशुभां ॥ सावित्रींगृहकार्येषुसक्तांत्यक्त्वामुनीश्वराः ६ गायत्रीमुपवेश्यै
वपुण्याहवाचनंचते ॥ कारयित्वाभ्युदयिकंमातृपूजनपूर्वकं ७ अस्थापयन्नग्निकुंडेयावद्वैश्वानरंचते ॥ सावित्रीतावदायातारंभंदृष्ट्वारुषान्विता ८ उवा
चक्रोधरक्ताक्षीवीक्ष्यसर्वान्सभासदः ॥ ॥ सावित्र्युवाच ॥ ॥ मामनादृत्ययागोयंसमारब्धोनसेत्स्यति ९ ॥ ॥ ऋषिरुवाच ॥ ॥ मुंचंतीमुखतोज्वालादग्धु
कामाचराचरं ॥ शशापसादेवमुनीन्जडायूयंभविष्यथ १० नियुक्त्वानाधिकारांतांगायत्रींसर्वएवयत् ॥ ततोदेवाःप्रणम्योच्चैःप्रार्थयामासुरुत्सुकाः ११
सावित्रींसर्वजननींडलयोरैक्यतःशुभे ॥ जलरूपाभविष्यामोनदीनदस्वरूपिणः १२ तथेत्युक्तेतयादेव्यानदीरूपत्वमागताः ॥ वेण्यानाम्नामहेशो
मूलकृष्णःकृष्णाभवन्नदी १३ तत्तन्नाम्नाबभूवुस्तेसरितःसर्वदेवताः ॥ यत्रपूर्वंविघ्नराजोनार्च्यतेज्ञानदुर्बलैः १४ तत्रविघ्नाभवंत्यवेशंकरस्ययथापुरा ॥
पुरत्रयवधेजाताविघ्नास्तस्याप्रपूजनात् १५ ब्रह्माचिंतांपरांप्रापमखविघ्नउपस्थिते ॥ मन्निमित्तंसुराःसर्वेधुनीरूपमुपागताः १६ विमानंसर्वलोकेषु
गमितःकेनकर्मणा ॥ संकल्पबाधश्चकथमद्यप्राप्तोदुरत्ययः १७ विघ्नहर्ताजगन्नाथोनस्मृतोनचवार्चितः ॥ सर्वेषांचैवदेवानांयतोमोहःसमाविशत् १८ तंप्र
सन्नंकरिष्यामिततोयज्ञोभविष्यति ॥ एवंयावच्चिंतयतेब्रह्मातावत्सुरांगनाः १९ देवान्वैतादृशान्ज्ञात्वासमीयुर्ब्रह्मणोंतिकं ॥ पुलोमजाचागिरिजाछायापि
कमलापिच २० अन्याअपिसमूचुस्तंसर्वास्ताःकमलासनं ॥ कथंयज्ञःसमारंभिमान्यानोमानिताकथं २१ नापूजिचकथंविघ्नहर्तापूर्वंगजाननः ॥ त्वयि
विस्मरणंचैवनवास्मारिसुरैःकथं २२ किमस्माभिरनुष्ठेयंदेवैर्वाजलरूपिभिः ॥ कंयामशरणंदेवत्वद्वतेकमलोद्भव २३ इतितासांवचःश्रुत्वामाभयंकुरुतेति
कः ॥ तांउवाचयजिष्येहंयथासर्वंभवेच्छुभं २४ किमसाध्यंहिभक्तानांसुप्रसन्नेगजानने ॥ सर्वाःकुरुध्वंतद्भक्तिंसवःसर्वप्रियंचरेत् २५ प्रसादयिष्येहमपि
जगदीशंविनायकं ॥ अनादिनिधनंदेवंसर्वकारणकारणं २६ इत्युक्तास्तागतादूरंदेशंकर्णाटकंशुभं ॥ मंदारमूलंविघ्नेशंस्थिरत्वाध्यातुंतदीरिता २७ रामेण

स्थापितंपूर्ववक्रतुंडेतिनामतः ॥ यद्वरैर्विजयीरामोहत्वाराक्षसपुंगवान् २८ दशाननंचविख्यातंययौपत्न्यानिजंपदं ॥ तेपुस्तत्रतपोघोरंसर्वास्ताःसुरयोषि
तः २९ काचिन्नामजपंचक्रेकाचिन्मंत्रजपंतथा ॥ काचित्पद्मासनेतस्थौध्यायंतीपरमेश्वरं ३० काजिद्विरासनगतानि राहारातथापरा ॥ संमार्जयंतीद्वारा
णिचत्वराणिगृहाणिच ३१ प्रदक्षिणानमस्कारैःकुर्वंतीभक्तिमुत्तमां ॥ काचिदेकांगुष्ठगतातस्थौध्यात्वाविनायकं ३२ काचिन्निमील्यनयनेस्तोत्राण्येवापठ
त्तदा ॥ बहुकालेव्यतिक्रांतेनतुतोषविनायकः ३३ तदाचिंतांपरांजग्मुःकिंकुर्मइतिविह्वलाः ॥ ततःसुमनसांभारान्दूर्वाभारांस्तथापराः ३४ समर्प्य
पुपुजुर्देवंधूपदीपान्नकांचनैः ॥ मंदारपुष्पैरन्याश्चशमीपत्रैस्तथापराः ३५ नभोवाणींततःश्रुत्वाशमीपत्रंविनाविभुः ॥ नसंतुष्येदितितदासर्वाएवशमीदलैः ॥
३६ पुपूजुःपरयाभक्त्यादेवदेवंगजाननं ॥ ततःपरमकारुण्यात्सुप्रसन्नःशमीदलैः ३७ आविरासीत्पुरस्तासांलसच्चारुचतुर्भुजः ॥ किरीटकेयूरधरोहारकुंड
लमंडितः ३८ लंबकर्णोलसद्दंडोविषाणद्वयमंडितः ॥ सिद्धिबुद्धियुतश्चाखुवाहनःपीतवस्त्रवान् ३९ सर्वास्तादद्दृशुर्देवंकोटिसूर्यसमप्रभं ॥ निमील्यनयने
नेमुर्दंडवत्पृथिवीतले ४० तुष्टुवुस्ताःकरपुटंकृत्वासौम्यमहाव्रतं ॥ अतिप्रसन्नवदनाःपरमानंदनिर्भराः ॥ ४१ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरकांडे
बालचरितेषट्त्रिंशत्तमोध्यायः ॥ ३६ ॥ ॥ छ ॥ ॥ कीर्तिरुवाच ॥ ॥ कथंस्तुतिःकृताताभिस्तांमेवदमहामुने ॥ ॥ मुनिरुवाच ॥ ॥
श्रूयतांसास्तुतिःकीर्तेशृणुष्वावहिताचतां १ ॥ ॥ ताऊचुः ॥ ॥ नमस्तेसर्वरूपायसर्वांतर्यामिणेनमः ॥ नमःसर्वकृतेतुभ्यंसर्वदात्रेकृपालवे ॥ २ ॥
नमःसर्वविनाशायनमस्तेनंतशक्तये ॥ नमःसर्वप्रबोधायसर्वपात्रेखिलादये ॥ ३ ॥ परब्रह्मस्वरूपायनिर्गुणायनमोनमः ॥ चिदानंदस्वरूपायवेदाना
मप्यगोचर ४ मायाश्रयायामेयायगुणातीतायतेनमः ॥ सत्यायासत्यरूपायगुणविक्षोभकारिणे ५ शरणागतपालायदैत्यदानवभेदिने ॥ नमोनानाव
तारायविश्वरक्षणतत्पर ६ अनेकायुधहस्तायसर्वशत्रुनिबर्हण ॥ अनेकवरदात्रेतेभक्तानांहितकारक ७ ॥ कउवाच ॥ एवंस्तुत्वापुनर्नत्वायाचंतिस्मवरा
न्बहून् ॥ देवानांजलरूपाणांस्वरूपाणिप्रयच्छभोः ८ नास्मृतिःसर्वदातेस्यात्तथाकर्तुमिहार्हसि ॥ गणेशउवाच ॥ददामिवांछितंवोहमनुष्ठानवशीकृतः९
स्तुत्यानयाशुसंतुष्टस्तथास्तुवचनंतुवः ॥ सावित्र्यावचनाज्जाताजलभूताःसुराःशुभाः १० तद्वाक्यमन्यथाकर्तुंनहिशक्तःपितामहः ॥ निजंस्वरूपंयास्यं
तिस्थित्वांशेनतथाविधान् ११ स्वाधिकारान्प्रपत्स्यंतेनान्यथाभाषितंमम ॥ शमीपत्रैःपूजयंतुयूयंदेवास्तुमामिह १२ येनार्पितंशमीपत्रंभुवनंतेनचार्पित
म् ॥ सुवर्णशतभाराणांफलंप्राप्तंनसंशयः १३ ॥ कउवाच ॥ एवंब्रुवतिविघ्नेशेस्वरूपधारिणःसुराः ॥ स्थिताअंशान्नदीरूपाद्गुरुसोविनायकम् १४ तेपिसं
प्रार्थयामासुर्नत्वास्तुत्वागजाननम् ॥ क्षमापराधंनोदेवबुद्धिमोहव्यपाश्रयात् १५ त्यक्त्वाज्येष्ठांभवंतंचपारआमोयर्जितताम् ॥ दृष्टंतुतत्फलंसद्यःप्रसादात्ते

१ ततानान्याभिषेचनं।

पुनर्नवाः १६ जाताःस्मपरमानंदंप्राप्ताःस्मकृपयातव ॥ एवमुक्त्वापुपूजुस्तेशमीपत्रैर्विनायकम् १७ सोपितान्प्रतिनंद्याथापिदधेविघ्ननाशनः ॥ ततस्तेसुंदरां
मूर्तिंकृत्वापाषाणतःशुभाम् १८ चतुर्भुजांकरिकराननांहेरंबनामतः ॥ प्रासादंपरमंकृत्वास्थापयामासुरादरात् १९ ऊचुश्चसर्वलोकानामुपकारायतेसुराः ॥
इमंयःपूजयेद्भक्त्याविद्याधीशंसुपत्तने २० तस्यप्रसन्नोभगवान्सर्वान्कामान्प्रदास्यति ॥ वंदनात्स्मरणाद्वापिनमनान्नात्रसंशयः २१ यातत्रासीन्महामूर्तिर्मं
दारतरुनिर्मिता ॥ तांगृहीत्वाययाविंद्रःस्वपुरंपरमर्द्धिमत् २२ सपत्नीकःपूजयतेभक्त्येदानीमपिप्रभुः ॥ सर्वेदेवाःस्वस्वपदेततोमंदारवृक्षजाम् २३ कृत्वामू
र्तिंगणेशस्यशमीपत्रैरपूजयन् ॥ मुदंप्रापुःस्वयोषिद्भिरापुःकामाननुत्तमान् २४ ब्रह्माद्वादशवर्षाणितपःकृत्वामहत्तरम् ॥ कृत्वाप्रसन्नंविघ्नेशंपुनर्योगमकार
यत् २५ सोपिमंदारजांमूर्तिंपुपूजेपरमादरात् ॥ विघ्नराजस्यवरदांशमीपत्रैरनेकधा २६ स्वर्णपत्रैश्चदूर्वाभिर्मंदारैःकेतकैरपि ॥ श्वेतदूर्वांकुरैश्चापिसर्वकाम
फलप्रदाम् २७ ॥ गृत्समदउवाच ॥ एवंतेवर्णितोमातर्महिमालेशतःशुभे ॥ मंदारस्यचशम्याश्चश्रवणात्पापनाशनः २८ ततःप्रभृतिदेवस्यप्रियात्यंतंशमी
शुभा ॥ अपूजिसत्वयाज्ञानात्तेनासौपुत्रउत्थितः २९ मंदारस्यापिमाहिमामयासम्यङ्निरूपितः ॥ इदानीमनुजानीहिगमिष्येनिजमंदिरम् ३० ॥ कउवाच
॥ श्रुत्वाचमहिमानंसाशमीमंदारसंभवम् ॥ प्रणिपत्यमुनिंपुत्रजीवनंविससर्जह ३१ श्रुत्वेदमाख्यानवरंगणेशप्रीतिवर्द्धनम् ॥ नससंकष्टमाप्नोतिसर्वान्कामाँ
ल्लभेन्नरः ३२ यःस्मरेत्प्रातरुत्थायशमींमंदारमेवच ॥ गणेशंचसदाभक्त्यानिष्पापःससुखीभवेत् ३३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेशमी
मंदारमाहात्म्यंनामसप्तत्रिंशोध्यायः ॥ ३७ ॥ ॥ ७ ॥ ॥ कीर्तिरुवाच ॥ सम्यगुक्तंत्वयाब्रह्मन्शमीमाहात्म्यमादरात् ॥ मंदारस्यापिकथितंतं
नमेतुष्यतेमनः १ जीवितश्चकुमारोयमुपदिष्टःषडक्षरम् ॥ नचोच्चारयितुंशक्यंबालभावान्मुनीश्वर २ सुगमंसुप्रसादंचस्वराज्यप्रापकंमुने ॥ जप्तुंशक्यंबाल
केनमंत्रमस्मैदिशाधुना ३ मुनिरुवाच ॥ सम्यग्दृष्टातवमतिर्गजाननपदांबुजे ॥ अतोहमस्यदास्यामिनिजमंत्रंसुखप्रदम् ४ सर्वस्यजगतोहेतुर्नामयच्चतुरक्षरम्॥
शुभाशुभस्यचद्रष्टुर्दुष्टदैत्यहरस्यच ५ सर्वधर्मपरित्रातुर्दिवोदासोपकारिणः ॥ द्विजरूपधरस्यापिवाराणस्यांस्थितस्यह ६ विश्वेश्वरस्याविमुक्तप्राप्त्यैयत्नंप्रकु
र्वतः ॥ सर्वांतर्यामिणश्चापिविश्वेश्वरनुतस्यह ७ जगतःपालनार्थायजनार्दननुतस्यच ॥ ध्यातस्यपूजितस्यापिब्रह्मणासृष्टिहेतवे ८ अर्चितस्यशिवेनापिसर्वसं
हारहेतवे ॥ पुलोमजाधवेनापिपूजितस्यसुभक्तितः ९ दैत्यानांनिधनार्थायदेवराज्यसुखाप्तये ॥ सूर्येणवरुणेनापिशशिनाचयमेनच १० अग्निनावायुनास्वस्व
गुणोत्कर्षायपूजितः ॥ बृहस्पत्युशनोभ्यांचस्वस्वोत्कर्षायपूजितः ११ शेषेणाराधितोढुंढिर्धराधरणहेतवे ॥ गंधर्वकिन्नरायक्षाःसिद्धचारणराक्षसाः ॥ ऋषयःप
शवःसर्वेस्थावराजंगमाःशुभाः १२ आराधयंतिविश्वेशंस्वस्वकार्यार्थसिद्धये ॥ अपारगुणपारोयंढुंढिराजोखिलेश्वरः १३ गुणांतंनययुर्यस्यब्रह्माविष्णुशिवा
दयः ॥ तस्मिंस्तुपूजितेभक्त्याशमीपत्रेणभावतः १४ पुत्रस्तेभविताराज्यभागीशत्रुनिबर्हणः ॥ कीर्तिरुवाच ॥ श्रुतोमेमहिमाब्रह्मन्ढुंढिराजाश्रयोखिलः

१५ किंकर्माकथमुत्पन्नःकस्यांशःकिंपराक्रमः ॥ केनास्यचकृतंनामकेनासौपूजितःपुरा १६ इमंमेसंशयंब्रह्मन्छेत्तुमर्हस्यशेषतः ॥ मुनिरुवाच ॥ सम्यक्पृ
ष्टंत्वयाभद्रेज्ञानाधिकतयाशुभे १७ भक्त्यानिवेदितश्चायंसंशयस्तंनुदामिते ॥ यथादुरासदोदैत्योहतोनेनतुराक्षसः १८ मायावतारोमोहाययथातोदिवोदा
संनृपम् ॥ अविमुक्तंसमानीतोयथाविश्वेश्वरोहरः १९ ढुंढिराजेतिनामास्ययेनजातंनृपांगने ॥ तत्सर्वंकथयिष्यामियथास्कंदाच्छ्रुतंमया २० अगस्त्यायक
थयताशृणुष्वैकमनाःशुभे ॥ ॥ स्कंदउवाच ॥ शृणुष्वावहितोब्रह्मन्नविमुक्ताश्रयांकथाम् २१ यस्याःश्रवणमात्रेणसर्वपापैःप्रमुच्यते ॥ कश्यपायहरिःप्राह
सृजनानाविधाःप्रजाः २२ प्ररूढतपसासोथससृजेजारजाःप्रजाः ॥ एकविंशतिसाहस्रमंडजास्वेदजास्तदा २३ उद्भिजाश्चैवतावंत्योमानुष्यंतासुदुर्लभं ॥ पुण्ये
नलभतेतच्चब्राह्मण्यंबहुपुण्यतः २४ तच्चेत्संरक्षितंसम्यग्धर्माधर्मव्यवस्थया ॥ ददातिपरमंस्थानंयद्गत्वाननिवर्तते २५ चतुराशीतिलक्षेषुनोचेत्पतितजन्मसु ॥
दुराचारानरायाम्ययातनासुपतंतिवै २६ कर्मक्षयेततोजातेबहुकालेनतेपुनः ॥ मृत्युलोकंसमायांतिकाणाःकुब्जादरिद्रिणः २७ तदेषामनुकंपार्थंब्रह्मेशानादयः
सुराः ॥ ऋषयश्चमहाभागानानातीर्थानिचक्रिरे २८ क्षेत्राणिचमहार्हाणिप्राणिपापहराणिच ॥ विलयंतःस्थितास्तत्रपापंदेवर्षयस्तदा २९ यत्रस्थितानांजंतू
नांपापस्यविलयोभवेत् ॥ जंतून्पापात्परित्रातुंस्थितादेवर्षयःसदा ३० सर्वश्रेष्ठांसर्वगुणांभुक्तिमुक्तिप्रदांशुभां ॥ विश्वेश्वरोनिर्ममेथध्यात्वाज्ञात्वाविमुक्तिदाम्
३१ सर्वतीर्थमयींरम्यांनाम्नावाराणसींपुरीम् ॥ यत्रचक्रेसरःख्यातंविष्णुनाप्रभविष्णुना ३२ तपस्यताकृतंचारुस्नानमात्रेणमुक्तिदं ॥ यद्दृष्ट्वाकंधराकंपा
च्छिवस्यकुंडलान्मणिः ३३ पतितस्तत्रसंजातानाम्नासामणिकर्णिका ॥ ततोभगीरथाहूताजाताभागीरथीनदी ३४ अत्रकीटपतंगानांमुक्तिर्मरणतोभवे
त् ॥ त्रिवारनामस्मरणात्काशीवासफलप्रदा ३५ धन्यास्तावीरुधोवल्यस्तृणवृक्षानचान्यतः ॥ गच्छंतिकमठामत्स्याभूकैलासंविहायतत् ३६ नित्यंयत्र
स्थितोशंभुर्नानारूपोथरूपवान् ॥ रविःशशीहरिर्ब्रह्मासएवगिरिजापतिः ३७ विनायकःशक्तिरूपःकारणंजगतोपिसः ॥ प्रलयेपित्रिशूलाग्रेध्रियतेयेनकाशिका
३८ एकोयंपंचधाजातोलोकानुग्रहकाम्यया ॥ भक्तोयांयांध्यातिमूर्तिंसातेनध्रियतेक्षणात् ३९ अत्रयोमनुतेभेदंसोवीचींलभतेनरः ॥ स्तुतिमेकत्रानिंदांवापर
त्रयःसमाचरेत् ४० सयातिनरकानेकविंशतिंबहुवत्सरम् ॥ अतोभस्मासुरसुतःख्यातोनाम्नादुरासदः ४१ सशुक्रमुपसंगम्यविद्यांपंचाक्षरींमगात् ॥ दिव्यंव
र्षसहस्रंसएकांगुष्ठस्थितोभवत् ४२ निराहारःकाष्ठभूतःसवल्मीकोस्थिशेषवान् ॥ नेत्रमात्रावशिष्टोसौजजापपरमंमनुं ४३ आययौतंवरंदातुंतत्क्लेशपरितोषि
तः ॥ दशबाहुःपंचवक्त्रोरुंडमालाविभूषितः ४४ त्रिशूलंडमरुंबिभ्रज्जटाजूटविभूषितः ॥ गंगाधरस्त्रिनयनाश्रिताभस्मांगलेपनः ४५ वृषध्वजोवृषारूढःश
शिरेखाविभूषितः ॥ अपर्णांकःकृपाविष्टोजगाददैत्यपुंगवं ४६ ॥ शिवउवाच ॥ उत्तिष्ठोत्तिष्ठभद्रंतेतपसाक्लेशितोभृशं ॥ ईप्सितंतंप्रदास्यामिवरयस्वहृदि

१ मायावतामोहयतदिवोदासंनृपंपरमितिपाठः। २ पततिजन्मस्वितिपाठः।

स्थितम् ४७ ॥ कउवाच ॥ ॥ ततउन्मील्यनयनेबद्धांजलिपुटोसुरः ॥ प्रणम्यपरितुष्टाववरदंतंमहेश्वरम् ४८ त्वंजगत्कारणंदेवपरमानंदविग्रहः ॥ क्षरा
क्षरातीततनुर्गुणत्रयविकारकृत् ४९ गुणातीतोज्ञानमयोव्यक्ताव्यक्तविधानवित् ॥ मुनिध्येयतनुःसर्वभक्तानुग्रहकारकः ५० ब्रह्मांडानामनंतानांहेतुःश्रेय
स्करःसताम् ॥ अखंडानंदपूर्णस्त्वममोघफलदायकः ५१ सर्वाधारःसर्वसहःसर्वशक्त्युपबृंहितः ॥ पृथिवीवायुसलिलवह्नितेजःस्वरूपवान् ५२ अद्यध
न्यंतपोनेत्रेपितरौजन्मतेयतः ॥ दृष्टंस्वरूपंसाक्षान्मेगतंपापंलयंपरम् ५३ योगित्वच्छ्रुतिवाचोयोगोचरोनकदाचन ॥ इदानींवरयेदेवतन्मेत्वंदातुमर्हसि ॥
॥ शिवउवाच ॥ ॥ निःशंकंवरयाशुत्वंसर्वंदास्येतिदुर्लभम् ५४ स्तोत्रेणतपसाचैवप्रणयेनसुतोषितः ॥ मुनिरुवाच ॥ ततोवव्रेभयंदेवात्सुप्रसन्नात्सदाशि
वात् ५५ चतुराकरजेभ्योमेमामृत्युःसंभवेदिति ॥ यक्षरक्षःपिशाचेभ्योदेवदानवकिन्नरात् ५६ मुनिमानवगंधर्वसर्पेभ्योहिवनेचरात् ॥ दृष्टारूपंमदीयंतुत्र
सेयूरणमूर्द्धनि ५७ सर्वेदेवामहाभागसुरराज्यंचयच्छमे ॥ संस्मृतिश्चरणेनित्यंभक्तिस्तेव्यभिचारिणी ५८ शिवउवाच ॥ एकांशंकिंचिनासर्वेदेवेभ्योदास्यिते
भयं ॥ शक्तितेजोद्भवःकश्चिज्जित्वासंजीवयिष्यति ५९ शिरसिस्थाप्यचरणंधरिष्यतिनिरंतर ॥ निष्काशितोयदातेनचरणस्तेशिरोगतः ६० तदापुनस्त्रिलो
कीत्वंबलाज्जेष्यसितेजसा ॥ भक्तिश्चमेदृढतरास्मृतिस्तेवैभविष्यति ६१ ॥ गृत्समदउवाच ॥ एवंदत्वावरांस्तस्मैशिवोंतर्द्धानमन्वगात् ॥ दुरासदोपिस्व
गृहमाययौहर्षनिर्भरः ६२ इदंस्तोत्रंपठेद्यस्तुसर्वान्कामानवाप्नुयात् ६३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेअष्टत्रिंशोध्यायः ॥ ३८ ॥ ॥ छ ॥
॥ मुनिरुवाच ॥ ॥ ततस्तुवरगर्वेणशिवलब्धेनदैत्यराट् ॥ नममर्षनिजात्मानंमोहितःकेवलंतुसः १ इयेषपृथिवींजेतुंहयारूढोभवत्पुरा ॥ निबद्धकेशह
स्तस्तुविलसत्कर्णकुंडलः २ असिहस्तोधनुष्पाणिर्निषंगद्वयशोभितः ॥ रत्नमुक्तामणिमयींबिभ्रन्मालांमहाधनाम् ३ कस्तूरीतिलकोदिव्यवस्त्रच्छन्नःसुकं
चुकः॥ तांबूलविलसद्वक्त्रःप्रकृतिद्वयसंयुतः ४ याभ्यांस्वभुजवीर्येणजितावीराअनेकशः ॥ उभयोःपार्श्वयोस्तस्ययौगच्छेतांबलान्वितौ ५ चतुरंगंतुतत्सैन्यं
पृथिवीविजयोद्यतम ॥ रजसाच्छादयव्द्योमविस्तीर्णंजलधेरिव ६ योयोवीरोभवेत्स्फीतस्तंतमेवाजयद्बलः ॥ ततआदायरत्नानिद्रव्याणिचसहस्रशः७ आ
स्थापयत्सतत्स्थानेस्वीयानाप्तान्महाबलान् ॥ नानाधिकारेबलवान्वशेकृत्वाखिलान्नृपः ८ येचाशस्त्राःकरान्स्थाप्यतमेवशरणंययुः ॥ अत्यंतंभीरवोयेतु
त्यक्त्वाराज्यमपीपलन् ९ दूतैरेववशेचक्रेतानपीत्थंदुरासदः ॥ एवंभूमंडलंजित्वाशक्रंजेतुमियेषसः १० ससैन्यःसहसाप्रायान्नगरींशक्रपालिताम् ॥ ज्ञा
त्वावरस्यसामर्थ्यंतस्यदुष्टस्यदेवराट् ११ पलाय्यचगुहांयातःसामरःसकुटुंबकः ॥ तस्मिन्नेवक्षणेविष्णुःस्थानात्क्षीराब्धिमाययौ १२ अंकेलक्ष्म्याःशिरः
स्थाप्यशेतेस्ममधुसूदनः॥ त्यक्त्वाकैलासशिखरंकाशींयातस्तुशूलभृत् १३ तेनैवसाकमगमच्चतुरश्चतुराननः ॥ योयोयातिपदंत्यक्त्वातत्रतत्रसदैत्यराट् १४
स्थापयत्येवबलिनांनिजंदूतंसुहृत्तमम् ॥ एवंनिर्जित्यविबुधान्दर्पेणैवमहाबलः १५ कैवर्तकानांविषयेन्यवसद्भस्मकेपुरे ॥ मुकुंदपुरमित्येवख्यातंलो

वे.षुसर्वतः १६ यस्मिन्भस्मासुरोराजापूर्वमासीद्बलान्वितः ॥ शंकरेणवरोयस्मैदत्तआश्चर्यकारकः १७ समरिष्यतिमूर्ध्निस्वंयस्यहस्तंप्रदास्यसि ॥ एवंदत्त
वरोदैत्योदुष्टभावप्रचोदितः १८ परीक्षार्थंवरस्याथवरदातुस्तुमस्तके ॥ करंदातुंययौदुष्टःपपालगिरिजापतिः १९ सदृष्टश्चक्रहस्तेनविष्णुनाप्रभविष्णुना ॥
सुंदरंमोहिनीरूपंधृत्वायातस्तदंतिकं २० उवाचममवाक्यंचेत्स्थास्यसित्वंनरोत्तम ॥ अंगनाहंतदातेस्यांहर्षादोमितिसोब्रवीत् २१ नृत्यतिस्मतदासातु
तद्वाक्यात्सननर्तह ॥ सायथादर्शयद्भावंसोपिदर्शयतेतथा २२ तयास्थापिस्वशिरसिहस्तस्तेनापितत्क्षणात् ॥ भस्मसादभवद्दैत्योदुष्टचेष्टितमंतकृत् २३
मुकुंदोपिस्थितस्तत्रतन्नाम्नापप्रथेपुरं ॥ अनुष्ठानवतांनृणांसद्यःपरमसिद्धिदं २४ सामोहिनीसर्वकामान्ददातिभक्तितोनृणां ॥ तत्रस्थित्वात्रिभुवनंशास्तिग
र्विष्ठरासदः २५ उवाचमंत्रिणोगर्वात्कथंत्रिभुवनंमया ॥ आक्रांतंस्वप्रतापेनजयताऽसुरवैरिणः २६ ततोमात्याःसमूचुस्तेविमुक्तंनजितंत्वया ॥ दशमंखंडमि
तितत्तुल्यंनास्तिहिकुत्रचित् २७ यत्रास्तेशंकरःसर्वसुरैरपिचसेव्यते ॥ नजितंयत्पुरंयावत्तावत्तेपौरुषंवृथा २८ इतितद्वाक्यमाकर्ण्यमुदंलेभेरणप्रियः ॥
उवाचतान्सद्यएवयामितांवैससैनिकः २९ विमानवरमास्थायक्षणाद्यातःसकाशिकाम् ॥ प्रविष्टमात्रेदैत्येंद्रेहाहाकारःपुरेभवत् ३० तत्रयेविबुधाआसन्सर्वे
चांतर्दधुस्तदा ॥ शिवस्तुनिजभक्तत्वान्नचुकोपाथकिंचन ३१ दत्तंराज्यंकियत्कालमित्युक्त्वापरिवारवान् ॥ केदारक्षेत्रमगमन्मुनयोपिपलायिताः ३२ जै
गीषव्यंविनासर्वेक्षेत्रसंन्यासिनंशुभे ॥ ततोबभंजमूर्तिंसमोहाविष्टोदुरासदः ३३ प्रासादान्महतोभंक्त्वामुमुदेज्ञानदुर्बलः ॥ कोपिचेत्स्मरतेदेवंतंताडयकुरु
तेबहिः ३४ नस्वाहानवषट्कारःस्वधाकारोनचक्वचित् ॥ नवेदाध्ययनंक्वापिनशास्त्राध्ययनंक्वचित् ३५ नपुराणंदेवपूजानव्रतंनप्रदक्षिणाः ॥ दुरासदेदादु
ष्टमतौतत्रराज्यंप्रशासति ३६ कर्ममार्गेविलुप्तेतुधर्मोपिलयमाययौ ॥ नष्टेधर्मेसुराःकीर्तेआसन्सर्वेबुभुक्षिताः ३७ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडे
बालचरितेदुरासदोपाख्यानेएकोनचत्वारिंशोध्यायः ॥३९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ गृत्समदउवाच ॥ ततःकेदारमगमन्सर्वेदेवर्षय
स्तदा ॥ व्यजिज्ञपुःपद्मभवंसाशिवंसर्ववित्तमं १ प्रणम्यशिरसासर्वेवागींद्राग्निपुरःसराः ॥ देवर्षयऊचुः ॥ पदभ्रष्टावयंदेवाःस्वाचारान्मुनयोपिच २ दुरासद
भियादेवस्नानंकर्तुंनचक्षमाः ॥ केनास्मैहिवरोदत्तोयेनासौभुवनेश्वरः ३ जातोदुष्टोवधश्चास्यकस्मादेतद्विचिंत्यताम् ॥ येनैवसौख्यंलोकानांतत्कर्तव्यंदयालु
भिः ४ ॥ कउवाच ॥ इतितद्वचनंश्रुत्वाप्रोवाचचतुराननः ॥ उपायंकथयिष्यामितद्ध्यायसुरर्षयः ५ यदातेनतपस्तप्तंदारुणंबहुवासरम् ॥ ददावस्मैवरा
न्देवोह्यनंतानंबिकापतिः ६ एनंयोघातयेद्देवःसनास्तिभुवनत्रये ॥ कदाचिद्देवदेवोसौगुणत्रयविभागकृत् ७ अहंशिवश्चविष्णुश्चत्रेधाजातायदाज्ञया ॥ गु
णत्रयविभागात्सगुणेशइतिपप्रथे ८ विश्वव्यापीचमायावीविश्वकर्तापहारकः ॥ गुणातीतोगुणेशश्चपरात्परतरःशिवः ९ विभ्रयात्सोवतारंचेत्पार्व
त्याजठरेविभुः ॥ तदैवतस्यनाशःस्यान्नान्यथासुरसत्तमाः ॥ स्तुवंतुसर्वेतस्मात्तंविश्वचिंताकरंप्रभुम् ॥ आदौकुरुततांदेवींप्रसन्नांभववल्लभाम् १० तत्तेजःसंभवो

बालोदुरासदवधेभवेत् ॥ एवमेववरस्तेनशंकरेणकृतोस्यह ११ ॥ मुनिरुवाच ॥ एवंवाक्यंब्रह्ममुखाच्छ्रुत्वादेवाजहर्षिरे ॥ तुष्टुवुर्भवकांतांतांभवानींभक्तवत्स
लाम् १२ देवर्षयऊचुः ॥ नताःस्महेत्वांजगदेकहेतुंपरात्परांविश्वविचित्रशक्तिम् ॥ अचिंत्यरूपांत्रिदशैरशेषैरशेषवंद्यांविगुणांगुणेशाम् १३ धराधरांत्वांधरणीस्वरू
पामाधारभूतांस्थिरजंगमानाम् ॥ त्रैलोक्यसारांत्रिगुणादिभूतांत्रयीतनुंतांत्रिदशस्वरूपाम् १४ नताःस्महेदेविवरप्रदांत्वांविष्णोर्विमोहांपददांसुराणाम् ॥ भ
क्तार्तिहंत्रींसकलार्थदात्रींत्रैलोक्यकर्त्रींनिखिलार्थगोप्त्रीम् १५ एवंस्तुत्वातदादेवींजगादसुरसत्तमान् ॥ वृणुध्वंवांछितंदेवाःस्तोत्रेणानेनतोषिता १६ द
दामिसकलान्कामान्भवतांयेमनोगतान् ॥ ततऊचुःसुराःसर्वेवृत्तांतंब्रह्मणेरितम् १७ ततऊचेचतान्देवीस्तुवंतुगणनायकम् ॥ शुभाशुभस्ययःकर्तासर्वसि
द्धिकरोविभुः १८ अवाप्तसर्वकामार्थःसर्वस्यजगतःपिता ॥ ततस्तेतुष्टुवुर्देवंभक्त्यासर्वेविनायकम् १९ ॥ ॥ देवर्षयऊचुः ॥ ॥ नताःस्मोविघ्नकर्तारंदया
लुंसर्वपालकम् ॥ सर्वस्यजगतोहेतुंसर्वव्यापिनमीश्वरम् २० अनेकशक्तिसंयुक्तंसर्वकामप्रपूरकम् ॥ दीनानुकंपिनंदेवंसर्वज्ञंकरुणानिधिम् २१ स्वेच्छोपा
त्ताकृतिंनानाह्यवताररतंसदा ॥ गुणातीतंगुणक्षोभंचराचरगुरुंविभुम् २२ एकदंतंद्विदंतंचत्रिनेत्रंदशहस्तकम् ॥ शुंडादंडमुखंविघ्ननाशनंपापहारकम् २३
भक्तानांवरदंनित्यंसृष्टिस्थित्यंतकारकम् ॥ अनादिमध्यनिधनंभूतादिंभूतवर्धनम् २४ त्रिलोकेशंसुराधीशंदुष्टदानवमर्दनम् ॥ लंबकर्णंबृहज्जानुंव्यालभूषाध
रंशुभम् २५ एवंस्तुत्वातुतंदेवंगणेशंसर्वसिद्धिदम् ॥ शुश्रुवुस्तेनभोवाणींमाभूद्वोमानसोज्वरः २६ दुरासदंमहावीर्यंहनिष्यामिभयंकरम् ॥ इतिश्रुत्वान
भोवाणींपुनःशंकरमाययुः ॥ ध्याननिष्ठंचतेदृष्ट्वाप्रणम्योचुश्चपार्वतीम् २७ ॥ ॥ देवाऊचुः ॥ ॥ नजानीमोनभोवाणींकेनेमामीरितांशुभे ॥ हरस्यध्यान
निष्ठत्वात्कथंकुर्मोखिलेश्वरि २८ ॥ ॥ देव्युवाच ॥ ॥ ततोदेवानिदानींयोनिश्चयंसमरिष्यति ॥ तस्याःक्रोधेनतप्तायानिश्वसंत्याःपुनःपुनः २९ आस्या
न्नासापुटान्नेत्रान्निःसृतंतेजउत्तमम् ॥ ज्वालामालाकुलंदग्धुंब्रह्मांडमिवचोद्यतम् ३० प्रत्याहतदृशःसर्वेददृशुर्ज्ञानचक्षुषा ॥ वैनायकींमहामूर्तिंदशहस्तांत
मोनुदाम् ३१ बिभ्रतींमुकुटंरत्नकोटिसूर्यसमप्रभाम् ॥ विद्युत्प्रभामहारत्नकुंडलेरदनंशुभम् ३२ दिव्यांबरेचसिंदूरमायुधानिदशैवच ॥ कस्तूरीतिलकंभा
लेमालांहृदिफलान्विताम् ३३ यत्तेजोव्यानशेविश्वंप्रलयानलसन्निभम् ॥ व्यालयज्ञोपवीतंचज्ञात्वानेमुःसुरास्तदा ३४ प्रार्थयामासुरथतेआनंदघनमीश्व
रम् ॥ दृष्टोसियोगगम्यस्त्वमप्रतर्क्योव्ययःस्वराट् ३५ निरामयोनिराभासोनिर्विकल्पोजरोमरः ॥ सर्वस्वरूपःसर्वेशःस्वप्रकाशोजगन्मयः ३६ अव्यक्तो
जगदाधारोब्रह्मरूपोखिलार्थदृक् ॥ पुराणपुरुषोज्ञानमूर्तिर्वाचामगोचरः ३७ वयंधन्यावयंधन्यादृष्ट्वातंननृतुःसुराः ॥ ॥ मुनिरुवाच ॥ ॥ यथादेवैर्वर्णि
तोसौतेजोरूपीविनायकः ३८ एवमेवजगन्मातापशशंसगजाननम् ॥ निर्गुणंयन्निराकारमव्यक्तंसर्वगंपरम् ३९ ध्यानगम्यंचिदाभासंसच्चिदानंदविग्रहम् ॥
सर्वव्यापीजगद्धेतुरव्ययावद्भिचिंतितम् ४० विनायकस्वरूपेणसाकारंदृष्टमद्ययत् ॥ अवतीर्णंममगृहेहंतुंदैत्याननेकशः ४१ जगतामुपकारायपातुंविश्वंचराच

रम् ॥ पुपूजपार्वतीभक्त्यादद्दौसिंहंस्ववाहनम् ४२ वक्रतुंडेतिनामास्यदधेसर्वार्थदंनृणाम् ॥ दुरासदस्यचवधंप्रार्थयामासतंतदा ४३ देवानांचपदप्राप्तिं
निःसपत्नामयाचत ४४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ छ ॥ ॥ कउवाच ॥ ॥ एवंप्र
शंसितोदेव्यादेवैश्चसविनायकः ॥ उवाचपार्वतींप्रीत्याप्रणिपत्यमुदायुतः १ ॥ ॥ गणेशउवाच ॥ ॥ देवानांसर्वलोकानांकर्तुंपालनमुत्तमम् ॥ दु
रासदंनिहंतुंचहर्तुंभूभारमेवच २ मातस्त्वांसेवितुंधर्मंकर्तुंकर्मचवैदिकम् ॥ अवतीर्णोस्मिसर्वज्ञेयद्ब्रवीमिकरोमितत् ३ एवंब्रुवतिविघ्नेशेसुराःसर्वेतमू
चिरे ॥ पुनःस्तुत्वाचनत्वाचजगत्कारणकारणम् ४ रजांसिविमिमेद्भूमेरुद्धूनिमिमिहिकाअपि ॥ जानीयात्सगुणांस्तेयोविममेसागरेजलम् ५ धन्यंचक्षु
र्हिदेवानांयद्दृष्टौचरणौविभो ॥ इदानींनोगतंदुःखंप्राप्तंचस्वस्वकंपदं ६ दुरासदंहरस्वैनंभूभारंचाखिलेश्वर ॥ ॥ कउवाच ॥ ॥ इतिदेववचःश्रुत्वा
जहाससविनायकः ७ ऊचेसर्वंकरिष्यामिदशायुधधरःप्रभुः ॥ एवमुक्त्वासुरान्देवोहर्षगद्गदयागिरा ८ सिंहारूढोययौशीघ्रंपुरींवाराणसींतदा ॥ तमन्वयुर्दे
वगणागिरिजागिरिशोपिच ९ ज्ञात्वादुरासदोदैत्योविनायकमुपागतं ॥ देवसेनायुतंवीरोनिर्ययौनगराद्बहिः १० दृष्ट्वासेनांतुदैत्यस्यसामात्यांसायुधांदृढां ॥
नानाविधायुधवतींगर्जंतींघनवन्मुहुः ११ गुहाविदारयन्सर्वाःसजगर्जविनायकः ॥ उवाचतंमहादैत्यंभ्रांतोस्यद्यापिरेकथं १२ त्वयाबलाद्देवगणानिर्जिताश्च
महीभुजः ॥ मुनयोधिकृताःसर्वेतदाहंनाभवंखल १३ निर्भयेनत्वयादोषाबहवःसंचिताःपुरा ॥ तेषांफलमिदानींत्वंगणेशात्प्राप्तुमर्हसि १४ उपद्रुतास्त्वया
लोकास्त्रैलोक्यवासिनोखिलाः ॥ तदर्थमवतीर्णोहमुद्धर्तुंत्वांभुवोभरं १५शरणंयाहिरेत्यक्त्वामानंलज्जांसुदुस्त्यजां ॥ यासिसंग्रामशिरसिचेदिदानींमरिष्यसि
१६ शिवप्राप्तवरात्सर्वंत्रैलोक्यंपीडितंत्वया ॥ एवमुक्त्वादुष्टबुद्धिंगणेशोरणसंभ्रमः १७ परशुंतोलयामासज्वालामालासुशोभितं ॥ आच्छाद्यभास्करंक्षोभा
त्प्रलयानलसन्निभः १८ जवेनहृदयेतस्यत्यक्त्वाशस्त्रंक्षतांतवत् ॥ परशुनाहतस्तस्यरोमापिनचचालह १९ क्रोधसंरक्तनयनउदतिष्ठद्गृहसन्निव ॥ त्रैलोक्यं
तमुवाचाथदेवदेवंदुरासदः २० नदेवादेवराजोवादिक्पालावानमेपुरः ॥ यातास्त्वंतुकथंयातोबालभावाद्व्रजाधुना २१ नबिभेम्यंतकान्मूढकिमर्थंमर्तुमि
च्छसि ॥ एवमुक्त्वाततःकोशान्निष्काश्यासिंमहोज्वलं २२ क्षुरधारंयदाघातादद्रयश्चूर्णतांययुः ॥ दैत्यस्तेनाहनद्देवमंकुशेनन्यवारयत् २३ सोसिःपरशु
घातेनशतधाखंडितोपतत् ॥ अभ्रासिर्मल्लयुद्धाययौदैत्योमहाबलः २४ त्यक्त्वायुधानिदेवोपिववृधेतादृशोबलात् ॥ ततोयुद्धंतयोरासीत्तुमुलंरोमहर्षणं
२५बाहुभ्यांकूर्पराभ्यांचमुष्टिभ्यांतौप्रजघ्नतुः ॥ पादाभ्यांजानुजंघाभ्यांपृष्ठाभ्यांचानिजघ्नतुः २६उड्डीयपेततुर्देहेपर्यायेणमहास्वनौ ॥ पार्ष्णिघातान्प्रकुर्वंतौघा
तान्कूर्परयोरपि २७ सक्थ्नोश्चजानुघातांस्तौस्कंधाघातान्परस्परं ॥ लुलुंठतुर्धरण्यांतौधूलिधूसरितौभृशं २८ परस्परंजयंतौचलपंतौसाधुसाध्विति ॥ ए
वंबहुदिनंयुद्धंदृष्ट्वादेवाविसिस्मिरे २९ चेतसाबहुलज्जंतौज्ञात्वासामर्थ्यमस्यहृ ॥ ततोविनायकोमुष्टिंललाटेदृढमाहनत् ३० स्फुटितंमुखमस्याशुधरण्यांप

तितस्थह ॥ द्विमुहूर्तंनिपतितोवज्राहतइवाचलः ३१ सकथंचित्प्रबुद्धोभूत्त्यक्त्वामूर्च्छांचिरागतां ॥ तदात्मानमशक्तंसमनुतेस्मभृशातुरः ३२ आययौसै
न्यमध्येसदिनांतेसविनायकः ३३ यइदंशृणुयाद्युद्धंयुद्धकालेउपस्थिते ॥ सजयंप्राप्नुयान्मर्त्योयथादेवोविनायकः ३४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबाल
चरितेएकचत्वारिंशोध्यायः ॥ ४१ ॥ ॥ ७ ॥ ॥ गृत्समदउवाच ॥ ॥ ज्ञात्वापराक्रमंतस्यवक्रतुंडस्यदैत्यराट् ॥ आययौधैर्यमालंब्ययो
द्धुमस्त्रैर्गजाननं १ शिवंस्मृत्वाचमंत्रंचवह्निंदैवतमादरात् ॥ अभिमंत्र्यशरंतेनतत्याजसविनायके ॥ अग्निज्वालाभयाद्देवादेवपृष्ठमथागमन् ॥ ततोवि
नायकोमुंचत्पर्जन्यास्त्रंहिसर्ववित् २ करिशुंडामिताधाराःप्रादुरासंस्ततःक्षणात् ॥ शांतोभूत्तत्क्षणाद्वह्निस्ततोदैत्योरुषान्वितः ३ मारुतास्त्रंशीघ्रजवं
वृष्टिवारणमासृजत् ॥ चकंपेधरणीवृक्षागिरयःपतिताभुवि ४ तदस्त्रेणमहामेघाःक्षयंनीताःक्षणार्द्धतः ॥ पर्वतास्त्रंततोदेवआविश्चक्रेमनोर्बलात् ५
सर्वत्रपर्वताजाताःकुंठतामगमंस्ततत् ॥ विलीनेमारुतास्त्रेतुरौद्रमस्त्रंततोसृजत् ॥ ६ ॥ तस्मिन्विमुच्यमानेतुवक्रतुंडोप्यवासृजत् ॥ ब्रह्मास्त्रंतन्निवृत्त्यर्थमगा
त्सैन्यंहिभस्मसात् ७ परस्परमयुध्येतामस्त्रैतेबहुवासरम् ॥ तयोःसंघट्टनाद्वह्निर्न्यपतद्धरणीतले ८ तेनदग्धान्जनान्ज्ञात्वाकेशाभ्यांवारितेशुभे ॥ अमा
त्यानब्रवीद्दैत्योज्ञात्वोत्कृष्टंविनायकं ९ तेनाभियुध्यतांसर्वैर्भुक्त्वायामिपुनारणम् ॥ ततोमात्याःसर्वसैन्यैर्विनायकमयोधयन् १० विनायकोगतांश्चैतामे
काकित्वात्ततःक्षणात् ॥ षट्पंचाशन्मितामूर्तीश्चकारासौस्वतेजसा ११ नानालंकारसंयुक्तानानामालाविभूषिताः ॥ सर्वेदिव्यांगदांगास्तेसर्वेशशिवि
भूषणाः १२ केचिच्चतुर्भुजाःकेकित्षड्भुजादशहस्तकाः ॥ सिंहारूढाबर्हिगताःकेचिन्मूषकवाहनाः १३ सर्वेचयुयुधुस्तत्रदारयंतोरिसैनिकान् ॥ के
षांचिन्त्रोटिताःपादाःकेषांचिन्मस्तकाअपि १४ केषांचिद्बाहवोभिन्नाजानुजंघोदराणिच ॥ हुंकारेणैवगर्जंतःकेचिच्चशरणंययुः १५ केचित्पलायनप
राययुर्जीवनहेतवे ॥ केचित्प्रहारंकुर्वंतोमम्रुःसंमुखमेवच १६ तेतुस्वर्गंगताभेजुर्भोगानप्सरसोपिच ॥ वाजिनश्चरथानागावाम्यउष्ट्रान्यनेकशः १७ ना
नाशस्त्राहताःपेतुःखंडदेहागतासवः ॥ असृङ्नद्यःप्रादुरासन्केशशैवलशोभिताः १८ आच्छूरिकासिमत्स्येभनक्रैःखेटककच्छपैः ॥ रुंडाब्जेश्ववसाफेनै
र्मेदकर्दमसंचयैः १९ चापशस्त्रैरस्थिबकैश्चर्मपेशीसुदर्दुरैः ॥ भल्लूकाद्यैःशुशुभिरेमनास्विहृदयप्रियाः २० भुक्त्वागत्यददर्शाथसर्वंतद्रणमंडलम् ॥ सर्वास्मि
न्निहतेसैन्येततोदैत्योतिदुःखितः २१ सस्मारमनसावाक्यंयदुक्तंशूलपाणिना ॥ वरदानस्यसमयेजयस्तेशक्तिसंभवात् २२ अयमेवभवेत्किंनुबालकः
शक्तिसंभवः ॥ यदुत्कटंबलंदृष्टमस्मिंस्त्रैलोक्यसारभृत् २३ कालोपिनैवंविजयेत्तत्रचान्यस्यकाकथा ॥ एवंमनसिकृत्वासएकाकित्वात्पपालच २४ वक्रतुं
डोगतांश्चितांनहंतव्योरिपुःपलन् ॥ देवेभ्योनमृतिश्चास्ययथायंशंकरोब्रवीत् २५ तस्माद्योगात्समास्थास्येवैराटंरूपमुत्तमम् ॥ ततोवैराटरूपेणसदधार
करेणतम् २६ एकपादेनतस्थौसकाशींतांरक्षितुंबलात् ॥ एकंपादंतुदैत्यस्यदधारमस्तकेततः २७ उवाचदैत्यंरेदैत्यवराच्छैवान्नतेमृतिः ॥ अतोस्मिन्नगरेतिष्ठ

पर्वतेवसुनिश्चलः २८ द्वारभूतःपुरस्यास्ययतःपूर्वंदिशिस्तव ॥ दुष्टानांपीडकोनित्यंनित्यंमेसान्निधिस्तव २९ दैत्योपिपरयाभक्त्यातमेववरमर्थयत् ॥ दैत्यउवा
च ॥ एवमेवसदातिष्ठस्थाप्यपादंमयिस्थिरम् ३० ॥ मुनिरुवाच ॥ तथेतितमुवाचाथस्थितःकाश्यांविनायकः ॥ एवंदुरासदंजित्वाचकारपृथिवींशिवा
म् ॥ ३१ तस्मिन्नुक्त्वापुष्पवृष्टिंप्रणम्यसंप्रपूज्यच ॥ स्वस्वस्थानंगतादेवा मुनयःस्वाश्रमानपि ३२ अन्येयेयेतमर्चंतिपूर्णकामाभवंतिते ॥ एवंविनायकस्या
थकाश्यांषट्पंचमूर्तयः ३३ तुंडनाख्येपुरेचापिएकपादविनायकः ॥ संहृत्यचविराट्रूपंसर्वकामप्रदःस्थितः ३४ यइदंवरमाख्यानंशृणुयाद्भक्तिमान्नरः ॥ स
र्वान्कामानवाप्नोतिगाणेशंपदमेतिच ३५ सर्वत्रजयमाप्नोतिपुष्टिमारोग्यमेवच ३६ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेदुरासदजयोनामाद्विचत्वारिंशोऽ
ध्यायः ॥ ४२ ॥ गृत्समदउवाच ॥ विजितेतुगणेशेनदैत्येतस्मिन्दुरासदे ॥ दिक्पालामुनयश्चैवशशीसूर्योगुरुःकविः १ प्रशशंसुर्देवदेवंदुरासदरिपुंविभुं ॥
श्रुतिस्मृतिकृतोमार्गःस्थापितोनिहितोसुरः २ स्थापनाचकृतास्माकमशक्तानांदुरासदे ॥ त्वमेवसृजसेविश्वंत्वमेवफलदायकः ३ समःसर्वेषुभूतेषुकर्मभिर्नचालि
प्यसे ॥ त्वदाश्रयाचतुर्वर्णाजंतवश्चत्वदाश्रयाः ४ गवेषयंश्चनानार्थान् तत्तत्कर्मणियोजयन् ॥ गवेषणेढुंढिरयंधातुरुक्तोमनीषिभिः ५ सआस्तेढुंढिरित्येवसंज्ञा
राजोत्तरास्तुच ॥ तवयद्दर्शनंपूजाध्यानंस्मरणमेवच ६ धर्मार्थकाममोक्षाणांसाधनंपुत्रपौत्रदम् ॥ इत्युक्त्वापुपुजुस्तेमुंमंदारैश्चशमीदलैः ७ दूर्वांकुरैर्हरिद्रैश्च
श्वेतैश्चकुसुमैरपि ॥ नानापक्वान्ननैवेद्यैःफलैर्बहुविधैरपि८रत्नानांनिचयैर्विप्रभोजनैस्तमतोषयन् ॥ एवंतेपूजिताःसर्वेसप्तावरणरूपिणः९स्थितावाराणसींत्रातुष
ट्पंचाशद्विनायकाः ॥ एकःपंचमुखस्तत्रविश्वेशद्वारितिष्ठति१०अन्येचभिन्ननामानोप्याप्यवाराणसींस्थिताः ॥ स्थितेविश्वेश्वरेतत्रसर्वेतत्रैवसंस्थिताः ११
आचंद्रंस्वाधिकारेषुब्रह्माद्यामुनयोखिलाः ॥ अकुर्वन्सर्वकर्माणिसर्वेलोकायथापुरा १२ इतितेसर्वमाख्यातंकीर्तेपृष्टंहियत्त्वया ॥ ढुंढिराजस्यावतारोधर्मका
मसुखप्रदः १३ दिवोदासबहिर्भावंकथयिष्येधुनातव १४॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेढुंढिराजाख्यानंनामत्रिचत्वारिंशोध्यायः ॥ ४३ ॥ ॥
॥ कीर्तिरुवाच ॥ ॥ ढुंढिराजावतारोयंख्यातस्तेशक्तिसंभवः ॥ दुरासदवधार्थायत्रिलोकीपालनायच १ एकपादःस्थितस्तुंडनगरेचैकपादतः ॥ स्थितोदै
त्यंसमाक्रांत्यवाराणस्यामितिश्रुतम् २ उभाभ्यामपिपादाभ्यामुभयत्रस्थितिःकथम् ॥ एवंमेसंशयंब्रह्मन्नुदत्वंसर्वविद्यतः ३ ॥ मुनिरुवाच ॥ ॥ किमसा
ध्यंविश्वरूपेविश्वकर्तरिविश्वपे ॥ विश्वव्यापिनिविश्वेशेढुंढिराजेचशासति ४ विश्वांतर्यामिणिपरेविश्वसंहारकारिणि ॥ सप्तपातालचरणेस्वर्गव्यापिशिरोरुहे ५
सर्वतःपाणिचरणेसर्वतःश्रोत्रचक्षुषि ॥ मनसश्चश्रुतीनांचब्रह्मादीनांचयोगिनाम् ६ अगम्येतत्त्वतोवायुपृथिवीजलरूपिणि ॥ यस्यरोमांचरंध्रेषुब्रह्मांडानां ३०
हिकोटयः ७ भ्रमंतिपवनोद्धूताःपतंगाइवव्योमनि ॥ संशयोवावितर्कोवातस्मिन्मातर्नविद्यते ८ अनेकरूपिणिविभौप्रभुःकर्तुंचराचरम् ॥ यदिच्छयाभवे
द्राज्ञिसुधाविषस्वरूपिणी ९ अमृतंविषरूपंचतत्रकिंकिंनसंभवेत् ॥ अवतारस्यदेवस्यविचित्रागतिरुच्यते १० कियंतोह्यवतारावैकदाकुत्रेतिनिश्चितुम् ॥ न

शक्यतेसुरैः सर्वैः सशेषैरपिसर्वदा ११ अतस्त्यक्त्वातुसंदेहंकथांशृणुमयेरिताम् ॥ यांश्रुत्वासर्वधर्मज्ञोमुच्यतेपापसंचयात् १२सूर्यवंशोद्भवोराजादिवोदासोभ
वत्पुरा ॥ वदान्यश्चमहामानीमान्योभूमंडलेखिले १३ वक्ताबृहस्पतिसमःसर्वज्ञःसर्वदाशिवः ॥ वेदशास्त्रपुराणानांज्ञानीविज्ञजनप्रियः १४ कामिनीमोह
नतनुर्जितेंद्रियतयास्थितः ॥ उपकारपरोनित्यंपरद्रोहपराङ्मुखः १५ निस्पृहःपरवित्तेषुस्थूललक्ष्यःपराक्रमी ॥ तपसातस्यतुष्टेनब्रह्मणाराज्यमुत्तमम् १६
काश्यांवृष्टिविहीनायांदत्तंलोकोपकारिणा ॥ सर्वदेवबहिष्कारात्सोपिजग्राहबुद्धिमान् १७ स्वयमेवाभवत्सोथरविरिंद्रोहुताशनः ॥ मरुच्चंद्रश्चधर्मेणपा
लयामासतांपुरीम् १८ तपसातस्यसंजातावृष्टिर्लोकाइतस्ततः ॥ अविमुक्तेसमायाताःप्रशशंसुर्नृपंचतम् १९ तस्यपत्नीसुशीलासानाम्नानामपतिव्र
ता ॥ धर्मशीलादानपरापतिवाक्यपरायणा २० आचारंव्यवहारंवाप्रायश्चित्तमसौनृपः ॥ पंडितैःकारयामासराजदंडंनचाददे २१ शिवेनमरुतःसर्वेमंदारगि
रिमन्वयुः ॥ नापमृत्युर्नशोकोवानैवदुःखंहिकस्यचित् २२ उत्पातास्त्रिविधानासंस्तस्मिन्राज्यंप्रशासति ॥ हाहाकारःशमंयातोनावृष्टिर्विहितोमहा
न् २३ पशुपक्षिमनुष्याणांसस्यानिचबहून्यपि ॥ यदायत्तंप्राणिमात्रंजातानिवृष्टियोगतः २४ स्वाहास्वधावषट्काराःसर्वआसन्यथापुरा ॥ ते
चदेवाःसुखंप्राप्तायेप्रार्थयन्नृपंपुरा २५ यंतुष्टुवुःसुराःसर्वेब्रह्मवाक्यप्रणोदिताः ॥ सोपिनानास्तुतिंचक्रेदेवानांदर्शनाद्भृशम् ॥ २६ ॥ ॥ इतिश्री
गणेशपुराणेउत्तरखंडेबालचरितेचतुश्चत्वारिंशोध्यायः ४४ ॥ कीर्तिरुवाच ॥ कथंमुनेसर्वदेवाःप्रयातामंदरंगिरिं ॥ शिवेनचकथंत्यक्तारम्यावाराणसीपुरी
१ एतन्मेशंसदेवर्षेसंशयोत्रमहान्मुने ॥ ॥ मुनिरुवाच ॥ ॥ द्वादशाब्दमनावृष्टौनष्टेस्थावरजंगमे २ स्वाहास्वधावषट्कारविहीनेचधरातले ॥ ब्रह्मवा
क्यप्रणुन्नैस्तुदेवैःसंप्रार्थितोहरः ३ महादेवजगन्नाथकरुणालयशंकर ॥ अध्यास्यमंदरगिरिंमरीचिस्तुतपस्यति ४ अब्दानामयुतंदेववरंदातुंप्रयाहितम् ॥
॥ ॥ मुनिरुवाच ॥ ॥ एवंसंप्रार्थितोदेवैर्महेशःकरुणालयः ५ सर्वैःसुरगणैःसार्द्धमग्निचंद्रार्यमादिभिः ॥ वरंदातुंससंप्रापमरीचिंतंमहामुनिं ६ अ
स्थिमात्रावशिष्टंचददर्शससदाशिवः ॥ तस्मिन्क्षणेनागतश्चेत्सतुप्राणान्समुत्सृजेत् ७ तदुत्कटेनतपसाप्रीतोसौगिरिजापतिः ॥ निजंस्वरूपंदत्वाचविमा
नेननिजंपदं ८ प्रापयामाससहसागणैर्वादित्रनिस्वनैः ॥ सर्वैर्देवगणैःशंभुस्तस्थौगिरिवरेशुभे ९ दिवोदासस्यनापश्यत्किंचिद्रंध्रंसदाशिवः ॥ देवा
न्संप्रेषयामासद्रष्टुंतद्रंध्रमादृतः ११ योयोदेवोयातिकाशींतस्यरंध्रंनपश्यति ॥ स्वनाम्नापरिसंस्थाप्यलिंगंतत्रैवतस्थिवान् ११ दिवोदासस्यराज्येतुसर्वे
वर्णाःस्वधर्मिणः ॥ आश्रमस्थाद्विजाःसर्वेयथोक्ताचारसंयुताः १२ गुरुशुश्रूषवःशिष्याःस्त्रियआसन्पतिव्रताः ॥ धर्मशीलादानपराव्रतोपवासतत्पराः ॥
१३ यतयश्चत्रिषवणाव्रतिनोहोममौनिनः ॥ स्नानंसंध्यांजपंहोमंस्वाध्यायंदेवतार्चनम् ॥ १४ ॥ आतिथ्यंवैश्वदेवंचस्वयमेवप्रकुर्वते ॥ गृहस्थाः
सर्वएवाष्टौकर्माणिभक्तितोनघाः १५ अतोविवर्धतेधर्मोवृष्टिश्चानुत्तमाभवत् ॥ स्वर्गेदेवामुमुदिरेपितरश्चस्वधाभुजः १६ नवंध्यानचवापुष्पाविधवावा

मृतप्रजा ॥ नावृष्टिर्नातिवृष्टिश्चस्वचक्रंनपरंतथा १७ शुकाश्वशलभानासन्मूषकावाकदाचन ॥ एवंचसर्वसस्यानांनिष्पत्तिःसमपद्यत १८ विश्वेश्वरं
माधवंचढुंढिंभैरवमेवच ॥ दंडपाणिंगुहंगंगामदृष्ट्वावानिमज्यवा १९ मणिकर्णींभवानींवायोभुंक्तेदंड्यएवसः ॥ इतिडिंडीरवंनित्यमकरोन्नृपसत्तमः ॥
२० नपापलेशस्तत्रासीदेवंनृपवरेस्थिते ॥ विनारंध्रंनतद्राज्यंजिघृक्षतिसदाशिवः २१ वाराणसीवियोगेनपरितप्तस्ततोऽभवत् ॥ प्रेषयामासविज्ञायततो
ष्टावपिभैरवान् ॥ २२ ॥ उवाचतान्कारयंतुराज्येस्याणुतुकिल्बिषम् ॥ आदास्येतततएतस्मात्काशीराज्यंनसंशयः ॥ २३ ॥ जग्मुस्तेत्वरयाभद्रेआज्ञां
प्राप्यसदाशिवात् ॥ दृष्ट्वावाराणसींतेतुविश्रांताःस्नानकर्मणा २४ अदृष्ट्वातस्यदुरितंकाशीवासंप्रचक्रिरे ॥ शिवश्चिंतापरश्चासीदनागच्छत्सुतेषुतत्र ॥
॥ २५ ॥ ततोप्रेषयदादित्यान्रंध्रंद्रष्टुंनृपस्यह ॥ तेपितत्पुण्यमालोक्यस्थिताःकाश्यांमुदान्विताः ॥ २६ ॥ नकार्यंचहरस्यापिनत्याज्येयंपुरीतिच ॥ तत
श्चतुःषष्टिमिताःप्रेषयतयोगिनीः ॥ २७ ॥ अणुमात्रमदृष्ट्वैनोदिवोदासस्यताअपि ॥ स्थितावाराणसींप्राप्ययजंत्यःशिवमव्ययम् ॥ २८ ॥ ततःसंप्रेषया
मासदुर्गांदुःखविनाशिनीं ॥ अदृष्ट्वातदघंसापितस्थौग्रामाद्बहिःकिल २९ ध्यानेनातोषयद्देवंसर्वकामैश्चमानवान् ॥ दिक्पालानथशंभुश्चप्रेषयामास
सत्वरम् ॥ ३० ॥ गतावाराणसींतेतुनेक्षेरंस्तदघंलघु ॥ स्वस्वनाम्नाप्रतिष्ठाप्यलिंगानिन्यवसन्मुदा ॥ ३१ ॥ ऋषयःप्रेषिताःपश्चादुत्सुकेनशिवेनह ॥
गतास्तेत्वरयात्दृष्टाःशिवेनापिप्रणोदिताः ॥ ३२ ॥ गत्वातीर्थविधिंकृत्वास्थित्वावाराणसीमनु ॥ आशीर्वादायगच्छंतःपश्यंतस्तस्यचेष्टितम् ॥
३३ भक्त्यातान्पूजयामाससर्वान्सधनवस्त्रकैः ॥ नान्वगृण्हंस्तद्धनंतेनैनोपिददृशुर्लघु ३४ स्वस्वनाम्नापरिस्थाप्यतेपुस्तेपरमंतपः ॥ ततःसर्वेमरास्तेनप्रेषि
ताःकार्यसिद्धये ३५ तेपिनोददृशुस्तस्यदुष्कर्मधर्मचारिणः ॥ नायातिकोपिकाश्यास्तुयोयःसंप्रेष्यतेमया ३६ ततश्चिंतापरोरुद्रोनिश्चयंनाध्यगच्छत ॥ म
नसाचिंतयामासकदाद्रक्ष्येचतांपुरीम् ३७ दिवोदासस्यराज्येचयदापापंभविष्यति ॥ तदैवप्राप्याकाशींचनान्यथाचमयाक्वचित् ३८ विनाढुंढिंमाधवंचसर्वे
देवानिरर्थकाः ॥ नायांतिचस्थितास्तत्रकाश्यांध्यानपरायणाः ३९ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेदिवोदासोपाख्यानेपंचचत्वारिंशो
ध्यायः ॥ ४५ ॥ ॥ छ ॥ ॥ मुनिरुवाच ॥ ॥ अविमुक्तवियोगेनपरितप्तःशिवस्तदा ॥ सर्वार्थवशगंढुंढिंनत्वाप्रार्थयदातुरः १ ॥ शिवउ
वाच ॥ ॥ पंचानामपिभूतानांकारणानांचकारणम् ॥ चिदानंदघनोविश्वध्येयोवेदांतगोचरः २ प्रधानंपुरुषश्चासित्रिगुणत्रयविभागकृत् ॥ विश्वव्यापीविश्वनि
धिर्विश्वरक्षणतत्परः ३ नानावतारकृच्चासिभूभारहरणोद्यतः ॥ देवानांपालनेशक्तोदैत्यानांनिधनेतथा ४ द्विजानांचैवधर्माणामार्तानांशरणैषिणाम् ॥ स्वे
च्छयापत्यतांयातेत्वयिब्रह्मस्वरूपिणि ५ कमन्यंशरणंयामिकाशीविरहदुःखितः ॥ ॥ ढुंढिरुवाच ॥ ॥ अन्यानेवप्रेषयासिसर्वविद्याविशारदान् ६ सर्वद
र्शीकिमर्थंत्वंमोहमेषिसदाशिव ॥ ॥ शिवउवाच ॥ ॥ इदानीमेवगच्छत्वमविमुक्तंगजानन ७ दिवोदासस्यविघ्नार्थंममकार्यार्थसिद्धये ॥ मायायामोहय

जनंपुण्यंयेनास्यहीयते ८ ॥ ॥ ढुंढिरुवाच ॥ ॥ यामिशीघ्रंमहादेवनचिंतांकर्तुमर्हसि ॥ साधयिष्येतवहितंदर्शयिष्येनिजांपुरीं ९ बहिष्कृत्यदिवोदासं
जनपापविभागिनम् ॥ मुनिरुवाच ॥ इत्युक्त्वाशिवमानम्यपार्वतींचषडाननम् १० प्रदक्षिणीकृत्यतथानारदंगुरुमेवच ॥ प्रस्थितोखिलविद्यानांकलानां
चनिधिर्विभुः ११ प्रापवाराणसींपुण्यांपुण्यमेवास्यदृष्टवान् ॥ ज्योतिर्विदभवत्सद्यस्तस्यपापमलक्षयः १२ रुक्मकांतिर्दिव्यदेहोमुक्तामालाविभूषितः ॥
रुक्ममुक्तामयेश्रोत्रद्वयेबिभ्रत्सुकुंडले १३ द्वात्रिंशल्लक्षणयुतोभूतभव्यभविष्यवित् ॥ कटिसूत्रंचनाभौतुमहारत्नविभूषितम् १४ पीतवस्त्रपरीधानोदिव्य
गंधानुलेपनः ॥ कामातिसुंदरतनुःकामिनीजनमोहनः १५ पतिव्रताश्चयानार्यश्चकमुस्ताअपिद्विजम् ॥ मनसाचिंतितंप्रश्नंवदतिस्माखिलंतुसः १६ अतः
पतिव्रतानार्यःप्रश्नंप्रष्टुंतमन्वयुः ॥ विहायबालकान्भर्तॄन्भ्रातॄनन्यान्सुहृज्जनान् ॥ स्वप्नान्वदतिलोकानांस्वमायादर्शितानसौ १७ सेवतांसर्वलोकानां
ददातिसुबहून्वरान् ॥ तद्वरस्यप्रभावेणदुष्टःकुष्ठोविनश्यति १८ पुत्रिण्यःसर्ववंध्याश्चजातास्तद्वरदानतः ॥ हस्तंदृष्ट्वामहाभाग्यंकर्माणिकथयत्यसौ १९
यद्यद्येनचसंभुक्तंभोक्ष्यमाणंचतत्क्षणात् २० विस्मितोनगरेलोकःसर्वआसीन्मुदान्वितः ॥ नेदृशोब्राह्मणोदर्शिसर्ववेत्तागुणाकरः २१ नभूतोनभविष्यो
वाइतिलोकावदंत्यमुम् ॥ पूजयंतिधनैरन्नैर्ज्ञात्वाप्रत्ययमस्यते २२ हस्तेधृतानिवस्तूनिकथयत्येवतत्क्षणात् ॥ दरिद्रस्याप्रयत्नस्यप्रष्टुंयातस्यवेत्त्यसौ
२३ अभिप्रायंस्वयंतस्यब्रूतेत्रिदिनमंतरा ॥ भविष्यसिधनाढ्यस्त्वंतथैवासौभवत्यपि २४ गतंनष्टंकथयतियथायत्तत्तथाभवेत् ॥ एवमाचक्षतस्तस्यढुंढे
र्विप्रस्वरूपिणः २५ द्वित्रिमासैर्गतावार्त्ताराजकर्णेजनेरिता ॥ जनाऊचुः ॥ राजपत्न्योपियाश्चान्याःपातिव्रत्यपरायणाः २६ एतावत्कालपर्यंतंनोभज
न्नन्यदेवताः ॥ विनापतिंगतास्तास्तुविनाज्ञांतंनिरीक्षितुं २७ नोभविष्यतिपुत्रोवाकन्यावेतिविचारितुं ॥ सखीभिस्तुनिषिद्धास्ताढुंढिस्त्रागमिष्यति २८
आकार्यतुततस्तास्तुरहस्येतमुपानयन् ॥ उपवेश्यासनेरम्येराजपत्न्यःप्रपूजिरे २९ प्रक्षाल्यचरणद्वंद्वंतद्दर्शनसुविह्वलाः ॥ कस्तूरीचंदनंतस्यश
रीरेपर्यमर्दयन् ३० निकटेतस्यकाचित्तुभूत्वादादाद्वीटिकाःस्वयं ॥ पप्रच्छुर्बहुप्रश्नांस्तंसर्वाएवाब्रवीद्वसः ३१ प्रत्ययेतुसमुत्पन्नेसर्वास्तास्तुविसिस्मिरे ॥
एवंताःप्रत्यहंतस्यदर्शनंपूजनंस्वयम् ३२ त्यक्त्वातागृह्यकार्याणिचक्रुस्सर्वास्तुतत्पराः ॥ नैतादृशोदृष्टपूर्वोभूतभव्यभविष्यवित् ३३ इत्यब्रुवन्स्तु
वंत्यस्तंसर्वज्ज्योतिर्विदुत्तमम् ॥ उत्थितेराज्ञिताःशीघ्रंविससर्जुःक्षणाद्दमुं ३४ पतिभावंपरित्यज्यतमेवाचिंतयन्सदा ॥ दिवोदासोपितंज्ञात्वासमाकार्यन
नामच ३५ स्वासनेतंपरिस्थाप्यपुपूजेविष्टरादिभिः ॥ गामर्घ्यंचधनंवस्त्रमर्पयामाससादरम् ३६ यद्यत्तंपरिपप्रच्छतत्सर्वंसमुदाब्रवीत् ॥ विस्मृत्य
निजदेवंसंतमेवाचिंतयन्नृपः ३७ रहस्येपरिपप्रच्छप्रश्नान्नानाविधान्बहून् ॥ प्रत्ययेतुसमुत्पन्नेप्रार्थयामाससादरं ३८ ग्रामान्धान्यंधनंदास्येतिष्ठात्रांनि
कटेमम ॥ चमत्काराबहुविधाद्दृष्टायस्मान्मयात्वयि ३९ ततोजगादढुंढिस्तंप्रपंचरहितोन्नृपं ॥ स्त्रीपुत्रकन्यागारादित्यक्त्वावाराणसीमगा ४० नग्रा

मानधनंधान्यंशेचतेमेस्पृहस्यते ॥ एकंवदामितेवाक्यंहृदितत्कर्तुमर्हसि ४१ इतःसप्तदशेराजन्दिनेकोपिपरः पुमान् ॥ आगत्यसवदेद्यत्तत्कर्तव्यमविचारतः
४२ हितंतेपरमंराजन्भविष्यतिनसंशयः ॥ एतावतामयालब्धाग्रामाधान्यंधनानिच ॥ ४३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेबालचरितेषट्चत्वारिंशो
ऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ राजोवाच ॥ अवश्यंमुनिशार्दूलकरिष्येवचनंतव ॥ करवाण्यन्यथाचेन्मेशपथोस्तिहरस्यह १ गृत्समदउवाच ॥ ॥ एवं
तेनसर्वजनाःकाशिस्थाःस्ववशीकृताः ॥ त्यक्त्वासर्वाणिकर्माणितमेवपरिसेविरे २ भूतंभव्यंविप्रकृष्टंभविष्यंचविवृण्वता ॥ ततोविष्णुर्बौद्धरूपीपंचक्रोशा
द्बहिःस्थितः ३ आगत्यमाययामोहंजनयन्सर्वदेहिनां ॥ श्रुतिस्मृतिविरुद्धंसोपाठीद्धर्मंवृषंद्विषन् ४ सोपिस्ववचनात्सर्वान्वशेचक्रेमहाजनान् ॥ साकारभ
जनंसर्वंदूषयामाससादरं ५ किमर्थंपार्थिवीमूर्तिरर्च्यंतेतैजसीरपि ॥ सर्वोजनोमूढमनाःपरात्मनिहृदिस्थिते ६ वृक्षाणांजीवतांछेदःपशूनामपिहिंसनं ॥ कुरु
तेस्वस्यवित्तानिपरस्मैयःप्रयच्छति ७ नष्टेदेहेतुभूतानिलीयंतेपंचपंचसु ॥ स्वयमेवहिभोक्तव्यंपक्वान्नंसघृतंमुदा ८ देहात्मापरिपूज्योसौनानाभोगैर्यथासु
खम् ॥ ततःसर्वेजनाःस्वंस्वंमार्गमुक्त्वातथाभवन् ९ ब्राह्मणानपिसंत्यज्यबुभुजुर्भोगमुत्तमम् ॥ तत्पत्नीकमलानामपूरयंतीमनोरथान् १० स्थितावाराण
सीवासिस्त्रियःसर्वाव्यमोहयत् ॥ बोधयामासयत्नेनदुष्टमार्गंदिनेदिने ११ भिद्यंतेबुद्धयस्तेषांपुरग्रामनिवासिनां ॥ स्वदेहेभर्तृदेहेयोन्यस्यदेहेसएवतु १२
नभिद्यतेपुमान्यद्वन्मुखनासाकरादिभिः ॥ तथात्मानैवभिद्येतदेहैरेतैश्चतुर्विधैः ॥ एवंप्रलोभिताःकांताःपुंसोन्यानपिभेजिरे १३ ब्राह्मणाअग्निहो
त्रेषुयज्ञेषुशिथिलादराः ॥ व्रतेदानेचहोमेचदेवब्राह्मणपूजने १४ पशूनांयज्ञियानांचछेदनेसंशयंदधुः ॥ परस्परंगृहेचैतेबुभुजुर्भोगमुत्तमम् १५
स्वयमेवबुभुजिरेश्राद्धानिचव्रतानिच ॥ एवंचधर्मलोपोभूदेनसोवृद्धिरेवच १६ ततोबौद्धोजगामाशुदिवोदासस्यमंदिरम् ॥ पूजितःपरयाभक्त्यास
तेनस्वासनेशुभे १७ ततऊचेदिवोदासंवाक्यंवाक्यविशारदः ॥ ॥ बौद्धउवाच ॥ ॥ शृणुराजन्हितंवच्मिश्रुत्वातत्कुरुसादरम् १८ इयंवाराणसीशूलभृता
निर्मायितेजसा ॥ प्रलयेपित्रिशूलाग्रेध्रियतेसर्वजंतुभिः १९ पुण्यवद्भिरिहस्थेयंमृतौमोक्षमभीप्सुभिः ॥ पापात्मानोभैरवेनाक्रियंतेबहिरेवच २०
रक्षणंपुण्यकर्तॄणांक्रियतेतेनतेनच ॥ तवपुण्यंस्थितंयावत्तावदत्रस्थितोभवान् २१ काश्यांराज्यंप्रकुर्वाणइदानींनतथाभवान् ॥ पापंचसंप्रवृत्तंतेराज्येनरक
छन्नृप २२ ॥ ॥ नृपउवाच ॥ ॥ सम्यगुक्तंत्वयामह्यंकरिष्येवचनंतव ॥ ज्योतिर्विदाढुंढिनाचप्रोक्तंयत्सत्यमेवतत् २३ वदमेत्वंचकश्चासिमद्धितार्थमिहा
गतः ॥ यदिवेत्तुंमयाशक्यंतत्त्वंतेपुरुषोत्तम २४ ॥ ॥ कउवाच ॥ ॥ ततःसकरुणाविष्टोदर्शयामासतंनृपम् ॥ निजंचतुर्भुजंरूपंशंखचक्रगदाधरम् २५ स
मष्टिव्यष्टिरूपेणाचिद्रूपंचप्रदर्शितम् ॥ ततोनृपोनमस्कृत्यपुपूजपरयामुदा २६ ननर्तपरयाभक्त्यातद्दर्शनमहोत्सवः ॥ धन्योहमितितंप्राहपितृभ्यांसहितोन
घ २७ पूर्वंराज्यंपरित्यज्यतपस्तप्तंमयाबहु ॥ ब्रह्मणेदंबलान्नह्यंदत्तंराज्यमनुत्तमम् २८ त्वद्दर्शनाज्जन्ममृतीगतेमेनात्रसंशयः ॥ इदमेवपरंयाचेत्वामहंशर

णंगतः २९ ॥ ॥ मुनिरुवाच ॥ ॥ इत्युक्तःपरमात्मासौप्रोक्तवान्नृपसत्तमम् ॥ विश्वेश्वरप्रसादाच्चतवापिराजसत्तम ३० भवितापरमामुक्तिस्त्यक्त्वाराज्यं
सुखीभव ॥ भैरवोदंडपाणिश्वबहिःकुर्यादतोन्यथा ३१ एकमाकर्ण्यतद्वाक्यंचिंतांपरामिकांययौ ॥ ध्यात्वाविचार्यतद्धेतुंबुबोधसर्वमेवसः ३२ ज्योति
र्विदंगणेशंचबौद्धंमायाविनंहरिम् ॥ प्रणम्याशिरसाभक्त्याकोसीतितिनिजगादतम् ३३ सोपिबुध्वामहाविष्णुर्निजंरूपंसमास्थितः ॥ चतुर्भुजंशंखचक्रग
दापद्मधरंविभुम् ३४ पीतांबरसमायुक्तंसर्वलोकाश्रयंपरम् ॥ उवाचतंनृपःपूज्यधन्योहंममपूर्वजाः ३५ यन्मोक्षदंपदयुगंदृष्टंपुण्यप्रभावतः ॥ देहि
मेपरमांमुक्तिंमुद्रामेतांगृहाणच ३६ बलाद्दत्तंब्रह्मणामेशास्तुराज्यंशिवोनिजम् ॥ ततोजगादतंविष्णुःशिवोमुक्तिंप्रदास्यति ३७ ॥ कउवाच ॥ एवमुक्त्वा
दिवोदासंमहायोगेश्वरोहरिः ॥ अंतर्हितःपुनर्यायाद्बौद्धरूपीनिजाश्रमम् ३८ प्रेषयामासदूतंसशिवागमनहेतवे ॥ दिवोदासस्यराज्येमेधर्मवृद्धिःकृताबहु ॥
३९ ज्योतिर्विदागणेशेनत्यक्तंराज्यंनृपेणते ॥ शीघ्रमायाहिविश्वेशनिजांवाराणसींपुरीम् ४० ततोराजाराजचिह्नंत्यक्त्वातेपेपरंतपः ॥ प्रासादेपर
मेस्थाप्यशिवलिंगंसुविश्रुतम् ४१ स्वनाम्नामोक्षदंपुंसांसकामानांतुकामदम् ॥ प्रतीक्षन्दर्शनंतस्यशंकरस्यार्थदायिनः ४२ ॥ ॥ इतिश्रीगणेशपुराणे
उत्तरखंडेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ मुनिरुवाच ॥ ॥ त्यक्तराज्यमितिज्ञात्वानिजंरूपंसमाश्रितः ॥ अवसत्सर्वलोकानांढुंढिस्तत्रार्थदायकः १ दूतं
चप्रेषयामासशीघ्रमागम्यतामिति ॥ शंकरायमहाबुद्धिस्ततःसहर्षनिर्भरः २ आरुह्यवृषभंदेवोययौवाराणसींपुरीम् ॥ दिव्यवादित्रनिर्घोषैःस्वगणैःपरि
वारितः ३ जैगीषव्यंनिराहारंवल्मीकमिवसंस्थितम् ॥ अनुगृह्याययौढुंढिंप्रणम्यचउवाचतम् ४ ॥ ॥ शिवउवाच ॥ ॥ त्वमेवविश्वेश्वरविश्वरूपविश्वं
सृजस्यसिहिपासिदेव ॥ शुभाशुभंकर्मनिरीक्ष्यतस्यददासिभोगांविविधंगणेश ५ ब्रह्मापिसृष्टिंकुरुतेंगितात्ततद्रक्षणंचैवहरिस्तथाहम् ॥ संहारकारीह
चराचरस्यविभागकृत्यंहिगुणत्रयस्य ६ तवप्रसादाद्धरिरजोपिशिवश्वशक्तोनिजकर्मसिद्धयै ॥ त्वयाविनावेदविधिर्वृथास्यात्त्वदीयशक्त्यासुरशत्रुना
शः ७ अनंतशक्तिःप्रकृतिःपुरात्वांसमर्च्यदुष्टंमहिषंजघान ॥ यच्छ्वासनिर्धूतनगप्रपातभीतंजगत्कृत्स्नमिदंररक्ष ८ त्वमप्रमेयोखिललोकसाक्षीत्वम
व्ययःकारणकारणंच ॥ वेदाविकुंठास्त्वयिसर्वएवशेषोधराभृत्तवभक्तितोहि ९ त्वामेवनत्वापरिपूजयंतःसंतोयजंतेमनसास्मरंतः ॥ त्वय्येवभक्तिंपरि
कल्पयंतोमुक्तिंभजंतेपरिवृत्तिहीनाः १० अनेकरूपांघ्रिविलोचनत्वमनेकशीर्षश्रुतिबाहुजिह्वः ॥ अनंतविज्ञानवनोह्यनेकब्रह्मांडहेतुःपरमप्रकाशः ११
तवप्रसादादविमुक्तमेतद्दृष्टंचिराद्यत्नवताखिलेश ॥ ॥ मुनिरुवाच ॥ ॥ एवंस्तुत्वापुनःपूज्यप्रार्थयामासशंकरः १२ गतंविरहदुःखंमेप्राप्यवारा
णसींपुरीं ॥ इदानींसर्वदारक्षमद्भक्तांश्चपुरीमिमाम् १३ विनाप्रसादंतेनस्यात्काशीवासःकदाचन ॥ दंडपाणेर्भैरवस्यतेपियस्यकृपाभवेत् १४ ता
रकंब्रह्मतस्यांतेदिशामिचनचान्यथा ॥ माघेमासिचतुर्थ्यांयोभौमवारेविधूदये १५ अपूपैर्मोदकैरन्यैरुपचारैःप्रपूजयेत् ॥ संहृत्यतस्यसंकष्टंस्तोत्रपाठेन

योनुयाव १६ तस्यापिसकलान्कामानयच्छल्लक्ष्मीमनेकधा ॥ यइदंप्रातरुत्थायत्रिसंध्यंवापिमानवः १७ पठेत्स्तोत्रंसकृद्वापिभुक्तिर्मुक्तिश्चतस्यच ॥ अ
न्वेषयित्वासर्वार्थान्विदधासिनृणामिह १८ अतोढुंढिरितिख्यातस्त्रिलोक्यांत्वंभविष्यसि ॥ ढुंढिरित्येवतेनाममुक्तिदंपापनाशनम् १९ स्मरणात्सर्वकार्याणां
सिद्धिदंचभविष्यति ॥ ॥ मुनिरुवाच ॥ ॥ एवमुक्त्वास्थापयत्सगंडकीयशिलाकृताम् २० मूर्तिंढुंढेर्महादेवःप्रासादेचारुनिर्मिते ॥ ततोविवेशभवनं
सर्वेदेवाःस्वमंदिरम् २१ दिवोदासस्यमुक्तिंसददौभक्तस्यशंकरः ॥ ॥ गृत्समदउवाच ॥ ॥ एवंविमोहितस्तेनदिवोदासःस्वमायया २२ विष्णुनाबौद्धरू
पेणतस्यास्यचहितंकृतम् ॥ सर्वंतेकथितंदेवसामर्थ्यंढुंढिनाकृतम् २३ एवंप्रभावोदेवोसौयद्द्वाराद्युत्थितःसुतः ॥ ॥ कउवाच ॥ ॥ एवंगृत्समदःप्रोक्त्वा
तस्यैढुंढिविचेष्टितम् २४ गृहीत्वाज्ञांययौशीघ्रंनिजमाश्रममंडलम् ॥ तदानीमेवसापुत्रमादायप्रस्थिताततः २५ ढुंढेरायतनंयातानानानारीनरैर्युतम् ॥ महो
त्सवंप्रकुर्वद्भिर्दृष्ट्वाकीर्तिर्नमामतम् २६ यथैवाराणसींपुण्यांमरणान्मुक्तिदायिनीं ॥ माघमासेचतुर्थ्यांसाभौमवारेमुदान्विता २७ अनेकस्वर्णपात्रस्थैःपक्वान्नैः
पायसादिभिः ॥ पूजितंभक्तनिवहैर्नृत्यगीतविशारदैः २८ नानालंकारसंयुक्तंदिव्यमाल्यांबरावृतम् ॥ नानामणिगणोपेतंनानामुक्ताविभूषितम् २९ सुव
र्णरत्ननिचयैर्दक्षिणार्थंनिवेदितैः ॥ नदृश्यतेदेवमुखमितिचिंतापराभवत् ३० मयाकिंचनयास्मैकिंनिवेद्यमितिसानत्र ॥ सादूर्वाशमिमंदारकुसुमैर्मार्गसंचितैः
३१ पुपूजपरयाभक्त्यापुत्रोदयमयाचत ॥ शमीमंदारदूर्वाभिर्यथातुष्टोभवत्तयोः ३२ नतथाद्रव्यनिचयैर्ढुंढिराजस्तुतोषह ॥ ततोभक्तागताःसर्वेस्वस्वमंदि
रमादृताः ३३ उभौतौजननीपुत्रौसन्निधौतत्रतस्थतुः ॥ तयोर्निराहारतयाभक्तिभावेनतोषितः ३४ आविरासीन्मूर्तिमध्याद्ढुंढिराजोमहोत्कटः ॥ ऊचतुर्मुनि
नाप्रोक्तंयत्स्वरूपंमहेशितुः ३५ तदेतत्पुण्यनिचयैर्दृष्टंसाक्षात्सुभास्वरं ॥ सर्वालंकारसंयुक्तंमुकुटेनविराजितम् ३६ दशबाहुधरंचारुनेत्रपंकजशोभितम् ॥ अन
र्घ्यरत्नमुक्तानांबिभ्रद्दाममहत्तरम् ३७ पीतांबरयुतंदंतविराजितमनुत्तमम् ॥ दृष्ट्वैवंपरमंरूपंमग्नावानंदसागरे ३८ विस्मृतौपूजनंकर्तुंनमस्कारंचतावुभौ ॥
उवाचभगवान्देवोवरंवरयसुव्रते ३९ सुप्रसन्नःप्रदास्यामियत्तेमनसिवर्तते ॥ मुक्ताफलैर्नरत्नैश्चद्रव्यैर्नानाविधैरहम् ४० प्रीतोयथाशमीपत्रैर्मंदारैरपि
शोभने ॥ कउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंकीर्तिस्तोषमियात्परम् ४१ देहभावंसमासाद्यजगादद्विरदाननम् ॥ किंब्रियावचनंकार्यंसर्वज्ञसर्वरूपिणि
४२ आज्ञयाथतथाप्यूचेसान्निध्याल्लब्धबोधया ॥ ॥ कीर्तिरुवाच ॥ निष्कलोनिरहंकारोनिर्गुणोसिजगत्प्रभुः ४३ पूर्णानंदःपरानंदःपुराणश्चपरात्परः ॥
दिक्पालरूपीसोमार्कसरित्सागररूपवान् ४४ त्वमेवपृथिवीवायुराकाशस्तेजएवच ॥ जलंतथांतरिक्षंचगंधर्वोरगराक्षसाः ४५ चराचरस्वरूपस्त्वंदीननाथकृ
पानिधिः ॥ विनायकादिरूपेणव्याप्तोसिसांप्रतम् ४६ अद्यमेनयनेधन्येजन्मभर्तासुतोप्ययम् ॥ पितरौचकुलंशीलंरूपंज्ञानंतपोपिच ४७ जन्मांत
रीयपुण्येनदृष्टःक्षिप्रप्रसादनः ॥ तवैवचाज्ञयादेवस्थापितास्यतत्राभिया ४८ सपत्न्यास्यविषंदत्तंमृतउत्थापितःपुनः ॥ गृत्समदेनमुनिनातवभक्त्यैवविश्व

राट् ॥ ४९ ॥ शमीपत्रैश्चपूजातेकार्थितातवलब्धये ॥ मुनिप्रभावाद्दृष्टोसितापत्रयनिवारणः ॥ ५० ॥ प्रसन्नश्चेद्देहिनाथमाकिंमनसुतस्यते ॥ त्रैलो
क्येपियशश्चाग्र्यंराज्येनिःसंगवृत्तितां ५१ दीर्घायुःसद्गुणग्रामंबलंकीर्तिंसुखंक्षमां ॥ विजयंसर्वसंग्रामेद्विजदेवेरतिंपरां ५२ ॥ ॥ ढुंढिरुवाच ॥ ॥ ये
येवरास्त्वयाप्रोक्ताःस्तेतेदत्तामयानघे ॥ सहस्रयज्ञकर्तासौजीवन्वर्षसहस्रकम् ५३ शांतोदांतोहिमद्भक्तोराज्यंकर्तासुतस्तव ॥ चतुर्भिरप्युपायैःसवशेस
र्वंकरिष्यति ५४ ममध्यानंनामजपःसर्वदास्यभविष्यति ॥ अंतेममस्मृतिंकृत्वामत्स्वरूपंप्रपत्स्यते ५५ ॥ ॥ कउवाच ॥ एवंतस्यैवरान्दत्वापारितुष्टोवि
नायकः ॥ ददौस्वपरशुंतस्यपर्शुबाहुरितिस्फुटम् ५६ चक्रेनामस्वयंदेवस्ततश्चांतर्हितोभवत् ॥ ५७ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेकीर्तेर्वरप्रदनंनाम
अष्टचत्वारिंशोध्यायः ॥ ४८ ॥ ॥ कउवाच ॥ ॥ एवंलब्धवराकीर्तिःशेषांरात्रींनिनायच ॥ उषःस्नात्वाप्रपूज्याशुमूर्तिंपुत्रयुतायर्यौ १ हर्षितादुःखि
तादेवविरहान्नगरंस्वकम् ॥ नानाध्वजपताकाभिःसेकैर्धूपैरलंकृतम् २ ढुंढिनामजपंतौतौनृपपत्नीसुतावुभौ ॥ ज्ञात्वागतौनृयानेनसेनयावाद्यानिस्वनैः ३
आनिन्येनगरंकर्णपुरंनाम्नासुविश्रुतम् ॥ मूर्ध्न्याघ्रायाशुतनयंसस्वजेपरमादरात् ४ उवाचपरमप्रीतोहर्षगद्गदयागिरा ॥ क्षिप्रप्रसादनसुतश्रांतोसिबहु
वासरम् ५ दृष्ट्वात्वांपरमाह्लादंप्राप्तोलब्ध्वासुधामिव ॥ विससर्जाखिलांल्लोकान्दत्वावस्त्राणिदक्षिणाः ६ कीर्तिश्चसनृप.पश्चात्परस्परमथोचतुः ॥ सापिस
र्वंनृपायास्मैवृत्तांतंसंन्यवेदयत् ७ परस्परालिंगनचुंबनानिहास्यंविनोदंपरिचक्रतुस्तौ ॥ तांबूलविच्छेदमपिप्रहर्षात्कामस्ययुद्धंनिरपत्रपौच ८ ततःकाति
पयाहस्सुज्ञात्वापुत्रंगुणाकरम् ॥ विनीतंसर्वधर्मज्ञंनीतिशास्त्रविशारदम् ९ अभिषेचनीयसंभारान्कृत्वाहूयवरान्द्विजान् ॥ सुहृदःसर्वराजन्यानभिषेकंसु
तेददौ १० शुभेमुहूर्तेसल्लग्नेसप्तेष्टग्रहसंयुते ॥ कृत्वाभ्युदयिकंश्राद्धंस्वस्तिवाचनपूर्वकम् ११ नानाद्रव्ययुतैस्तोयैरभिषेकमकारयत् ॥ नदत्सुसर्वतुर्येषु
ऋग्यजुस्साममंत्रतः १२ संतोष्यब्राह्मणानन्यान्दक्षिणारत्नदानतः ॥ स्वयंचवनवासीयदीक्षांगृह्यचपृच्छ्यच १३ विससर्जाखिलान्राजानिजसाध
नसंस्थितः ॥ ततःपरशुबाहुःसप्रशशासमहीमिमां ॥ १४ ॥ धर्मशास्त्रीयनीत्याचत्यागेनयशआर्जयत् ॥ विख्यातस्त्रिषुलोकेषुपराक्रमबलादभूत् ॥ १५ ॥
मंदारमूर्तिंढुंढेःसकृत्वाकंठेदधारह ॥ शमींदूर्वांविनापूजांनकरोतिकदाचन १६ नानाभोगाननेकाःस्त्रीर्बुभुजेधर्मतस्तुसः ॥ उत्पाद्यपुत्रान्दानानिद
त्वावर्षसहस्रकम् १७ चकारराज्यंपश्चात्तत्पुत्रेन्यस्यदिवंययौ ॥ कल्पाननेकान्स्वर्गेसंस्थितोढुंढिस्वरूपवान् १८ ॥ ॥ मुनिरुवाच ॥ ॥ एवंशम्याःप्र
भावस्तेसंक्षेपेणनिरूपितः ॥ तत्पूजनस्यपुण्यंचमंदारस्यप्रसंगतः १९ तस्मात्त्वयापिपूज्योहंशमीमंदारतोमुने ॥ भक्त्यासमर्पितंपुष्पंपत्रमिष्टंसुधायते २०
निषिद्धपत्रपुष्पादिसमर्प्यनरकंव्रजेत् ॥ यस्ययद्दैवतंमुख्यंतदिष्टमितरेषुवा २१ समर्पयन्नभेदेनभक्तोदोषंनचाप्नुयात् ॥ एवंपंचापिसंपूज्यदेवांस्तत्परतामिया
त् २२ सार्ष्टिकोलीयतेदेवैराजसस्तुसरूपताम् ॥ उभाभ्यांचैवसान्निध्यंतामसस्तुसलोकताम् २३ प्राप्नुयाद्यजमानस्तुत्रेधाभक्तिर्नवैतथा ॥ ॥ व्यासउ

वाच ॥ ॥ विनायकस्यलोकोवैकस्मिँल्लोकेचतिष्ठति २४ एतंमेसंशयंब्रह्मञ्छेत्तुमर्हसिसांप्रतम् ॥ कमन्यंपरिपृच्छामिसर्वज्ञंत्वांविहायभोः २५ ॥ ॥ ब्रह्मोवाच ॥ ॥ मयापिनारदायोक्तोमुद्गलायचतेनच ॥ काशीराजायचाख्यातोलोकोवैनायकःशुभः २६ सकामदायिनीशक्त्यातेनैवनिर्मितःपुरा ॥ निजलोकेतिनामास्यस्वयंचक्रेविनायकः २७ काशीराजोविमानस्थोदृष्टवांश्चर्मचक्षुषा ॥ यंप्राप्यदुःखनंद्वंद्वंप्राप्नुतेस्त्रीपुमानपि २८ ब्राह्मंकल्पंचवसतिज्योतीरूपंसमाप्यच ॥ इक्षुसागरसंभोगंलभतेतत्रयःस्थितः २९ महाप्रलयवेलायांतिष्ठत्येवाविनाशियत् ॥ तत्पीठंतस्यदेवस्यनिद्रास्थानंसनातनम् ३० सेवेतेसिद्धिबुद्धीतंसामवेदस्तुगायति ॥ कल्पवृक्षोयच्छतितत्कल्पितंमनुजेनयत् ३१ अकल्पिताःसंपदोत्रजायंतेतत्प्रभावतः ॥ मयैववर्णिताःसर्वेदेवलोकाअनेकशः ३२ गणेशनिजलोकस्यशक्तिर्नोममवर्णने ॥ संक्षेपेणततोख्यातःकिमन्यच्छ्रोतुमिच्छसि ३३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेशमिमंदारफलवर्णनंनामएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ ६ ॥ ॥ मुनिरुवाच ॥ ॥ कथंचकाशिराजेनप्राप्तंतत्स्थानमुत्तमम् ॥ मुद्गलस्योपदेशेनतन्मेशंसितुमर्हसि १ ॥ ॥ कउवाच ॥ ॥ तीर्थयात्राप्रसंगेनमुद्गलस्तंनृपंययौ ॥ सपूजयित्वापप्रच्छसर्वज्ञंतंमुनिंनृपः २ ॥ नृपउवाच ॥ ॥ विनायकस्यलोकोकःप्राप्यतेसकथंमया ॥ ॥ मुनिरुवाच ॥ ॥ स्वानंदभुवनेत्येवंनिजलोकेतिचद्वयम् ३ वैनायकस्यलोकस्याविख्यातंनामवर्त्तते ॥ उत्पत्स्येतेयदादैत्यौदेवांतकनरांतकौ ४ विनायकोपितौहंतुंमानुषेवतरिष्यति ॥ सतुबालकरूपेणलीलाअद्भुतविक्रमः ५ करिष्यतिनृलोकेस्मिन्स्वेच्छाचारीमहाबलः ॥ शुक्लस्यभक्तियुक्तस्यदरिद्रस्यगृहेयदा ६ भुक्त्वादत्त्वामोघलक्ष्मींशुक्लायेंद्रस्यदुर्लभाम् ॥ विवाहार्थंसमानीतोदर्शयिष्यतिपौरुषम् ७ यदातेगृहमागच्छेत्तदातद्भक्तितोनृप ॥ काशीराजमहाबाहोनिजलोकमवाप्स्यसि ८ ॥ कउवाच ॥ एवमुक्त्वागतेतस्मिन्काशीराजोमहामतिः ॥ गणेशभक्तिंकुर्वाणःकालाकांक्षीबभूवह ९ ततोबहुतिथेकालेऽवतीर्णोसौविनायकः ॥ कश्यपस्यगृहेयोवैलीलाविग्रहवान्विभुः १० हतानानाविधादैत्याःक्रीडानानाविधाःकृताः ॥ दारिद्र्यंहृतवान्सद्यःशुक्लस्यादन्नगृहेतदा ११ काशिराजस्यभवनंपुनरागान्महाबलः ॥ हतौमहाबलौदैत्यौदेवांतकनरांतकौ १२ स्वानंदभवनंयातःक्षीरसागरमध्यगम् ॥ काशीराजस्तुविरहाच्चिंतयन्सर्वदातुतम् १३ आलिंगतिनरंकंचिदयमेवविनायकः ॥ इतिमत्वासभामध्येसर्वंतादात्मकंजगत् १४ पश्यतिस्मदिवारात्रौसोपितन्मयतामियात् ॥ निराहारःकदाचित्सतिष्ठतिस्मनृपस्तदा १५ ग्रासमात्रंकदाचित्सभुनक्तिचयथामति ॥ कदाचिद्धसतेक्वापिनृत्यतिस्मनृपस्तदा १६ निद्रातिबहुकालंतंपश्यन्स्वप्नेविनायकम् ॥ एवंनृपेस्थितेमात्याश्चिंतामापुःसुदारुणां १७ यदिलोकाविजानीयुःपरचक्रंपतेत्तदा ॥ एवंचिंतयतांतेषाममात्यानांनृपालये १८ तदैवमुद्गलोध्यानंविसृज्यनृपतिंययौ ॥ तद्दर्शनप्राप्तबोधःप्रणनामनृपोमुनिं १९ उपवेश्यासनेपश्चात्संपूज्यचयथाविधि ॥ बद्धांजलिरुवाचाथधन्योवंशोजनुर्मम २० पितरौमंदिरंनेत्रेधन्येत्वद्दर्शनान्मुने ॥ यत्प्रसादात्परंस्थानंसंसारतारणंनृणां २१ अवमानान्महद्दुःखंतंत्वापुण्येनदृष्टवान् ॥ तमुवाचततोविप्रोवाचातस्य

सुतोषितः २२ ॥ ॥ मुनिरुवाच ॥ ॥ त्वादृशस्तुविनीतात्मानैवदृष्टोनचश्रुतः ॥ पूजनात्परितुष्टोहंवांछितंतेददाम्यहं २३ ॥ ॥ कउवाच ॥ ॥ तद्वा
क्यपरितुष्टोसौकाशिराजोजगादतम् ॥ अनेनैवचदेहेनस्वानंदभुवनंमुने २४ इच्छेयंचचिरंतत्रस्थातुंनैवचसंपदः ॥ ततऊचेमुद्गलोसौपरितुष्टस्तयागिरा २५
अनेनजडदेहेनस्वानंदभुवनंनृप ॥ प्राप्स्यसेत्वंगणेशस्यपुनरावृत्तिवर्जितः २६ भुक्त्वात्रसंपदःपंचसहस्रपरिवत्सरान् ॥ ब्रह्मकल्पमयंकालंततःस्वानंदमा
प्स्यसि २७ ॥ ॥ नृपउवाच ॥ ॥ कीदृक्सलोकःकिंनामावदसत्यंमुनेमम ॥ केनपुण्येनगम्योसौश्रुतालोकामयाखिलाः २८ ॥ ॥ मुद्गल
उवाच ॥ ॥ शृणुराजन्मयाश्राविमहिमाकपिलान्मुनेः ॥ सामान्यतःसर्वलोकाःप्रसिद्धायेश्रुतास्त्वया २९ गहनागतिरत्यंतमस्यलोकस्यभूपते ॥ दि
व्यलोकेतिनामास्यनिजलोकेतिचापरं ३० सकामदायिनीपीठेसंतिष्ठतिविनायकः ॥ विस्तीर्णंपंचसाहस्रयोजनानिमहामते ३१ रत्नकांचनभूमौस
राजतेभासयन्दिशः ॥ स्वानंदनामादिव्योयमिक्षुसागरमध्यगः ३२ नवेदैर्नचदानैश्चव्रतैर्यज्ञैर्जपैरपि ॥ तपोभिर्विविधैश्चायंप्राप्यतेनैवकर्हिचित् ३३
विनायकस्यकृपयाप्राप्यतेनित्यभक्तितः ॥ समष्टिव्यष्टिरूपोत्रसदातिष्ठतिविघ्नराट् ३४ पादैःसप्तपातालंव्याप्यशेषशिरांसिच ॥ कूर्मचकमठं
चैवश्रोत्राभ्यांचदिशोखिलाः ३५ केशैर्व्योमापिसंरोध्यस्थितआधारपंकजे ॥ भूमध्येप्याज्ञिचक्रेतंद्विपत्रेध्यातिपुण्यकृत् ३६ खेचरीमुद्रयायुक्तो
नान्योध्यातुंनचक्षमः ॥ सहस्रपत्रंब्रह्मांडसरोजंविलसत्प्रभम् ३७ तत्रतेजःस्वरूपोस्तिहृदिद्वादशपत्रकम् ॥ दशपत्रंनाभिचक्रंलिंगेषट्पत्रकंशुभम् ३८
षोडशारंकंठदेशेतत्रसर्वत्रविघ्नराट् ॥ तेजोरूपीदीप्यमानःसत्यलोकेयथाविधिः ३९ द्वादशारंतुवैकुंठंतत्रविष्णुःसदास्थितः ॥ कंठाब्जेपंचवक्रो
सौकैलासेसगणोयथा ४० सोमसूर्याग्निनेत्रोसौभूमंडलमहोदरः ॥ एकविंशतिस्वर्गान्सव्याप्यचौषधिरोमवान् ४१ सरितःसागरायस्यवर्म
बिंदुर्विभात्यसौ ॥ ब्रह्मांडेभातियस्यैवब्रह्मांडानितुरेणुवत् ४२ त्रयस्त्रिंशत्कोटिदेवाजीवायेचसहस्रशः ॥ औदुंबरगताभांतिमशकाइवतद्गताः ४३
रचनांतस्यलोकस्यसंक्षेपेणब्रुवेनृप ॥ तुंगंयन्मेरुशिखरंतत्कैलासशिरस्पृहं ४४ सहस्रयोजनंशून्यमगम्यंमुनिपुंगवैः ॥ तत्रएकाशक्तिरुवैभ्रा
मिकानामनामतः ४५ यत्संमताद्भुवंत्येवभ्रमराःशुभ्रएवच ॥ पद्मासनगताधारशक्तिस्तन्मस्तकेस्थिता ४६ चामीकरनिभायास्तन्मस्तकेका
मदायिनी ॥ कोटिसूर्यनिभातस्यामूर्ध्निपीठंमहत्तरम् ४७ विकरालंजटाभारंबिभ्रतीवदनंतथा ॥ सहस्रसूर्यसंकाशाभासयंतीदिशोदश ४८
विस्तीर्णंदशसाहस्रयोजनंतावदायतम् ॥ असंख्यसूर्यसंकाशंतन्मध्येयोजनायतम् ४९ स्वानंदभवनंभातियत्रकांचनरत्नजाः ॥ असंख्याताग्र
हाभांतिभास्वरागजमौक्तिकाः ५० तस्यैवकृपयाप्राप्योदुःखमोहविवर्जितः ॥ तदुत्तरेभातिपरइक्षुसागरएवतु ५१ सहस्रपत्रसंयुक्तातन्मध्येपद्मिनी
शुभा ॥ सहस्रपत्रंकमलंतस्यांभातियथाशशी ५२ तत्कर्णिकागतस्तल्पोरत्नकांचननिर्मितः ॥ दिव्यांबरयुतःशेतेनृपतत्रविनायकः ५३ सिद्धिबुद्धी

सदातस्यपादसंवाहनंमुदा ॥ कुर्वतिपरयाभक्त्यासामवेदास्त्रिमूर्तिमान् ५४ गानंकरोतिशास्त्राणिमूर्तिमंतिस्तुवंतितम् ॥ पुराणानिचसर्वाणिवर्णयं
त्यस्यसद्गुणान् ५५ बालरूपधरस्तत्रशुंडादंडविराजितः ॥ कोमलांगोरुणनिभोविशालाक्षोविषाणवान् ५६ मुकुटीकुंडलीराजत्कस्तूरीतिलकःस्व
राट् ॥ दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः ५७ मुक्तामणिगणोपेतंसरत्नंदामसंदधत् ५८ अनंतकोटिसूर्यौजाश्चंद्रार्धकृतशेखरः ॥ स्मरणात्पा
पहासद्यःस्मृतागंगायथानृणाम् ५९ तेजोवतीज्वालिनीचशक्तीपर्यंकपार्श्वयोः ॥ सहस्रादित्यसंकाशेतिष्ठतोनृपसर्वदा ६० नशीतंनजरातत्रक्लमःस्वेदो
थतंद्यपि ॥ क्षुधातृषावादुःखंवानकदाचनजायते ६१ आनंदहृदमग्नास्तेतत्रासन्येसुपुण्यतः ॥ विश्वव्यापीबालरूपीयत्रातिष्ठतिविश्ववित् ६२ ॥
मुद्गलउवाच ॥ ॥ एवंतेकथितोलोकोगणेशस्ययथामति ॥ तस्मादनन्यभक्त्यात्वंतमेवाराधयप्रभो ६३ ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वा
गतःस्थानंस्वकीयंमुद्गलोमुनिः ॥ काशीराजोगणेशस्यभजनेतत्परोभवत् ६४ सहस्रपंचवर्षाणिकृत्वाराज्यमनेनह ॥ देहेनयानमारुह्यगतःस्वानंद
धामतत् ६५ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेगणेशलोकवर्णनंनामपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ व्यासउवाच ॥ कथमाराधितस्ते
नकाशीराजेनविघ्नराट् ॥ कथंचचर्मदेहेनगतःस्थानमनुत्तमम् १ एतन्मेशंसभगवन्शृण्वंस्तृप्यामिनक्वचित् ॥ ॥ कउवाच ॥ ॥ सम्यक्शृणुमहाबुद्धेक
थांपापप्रणाशिनीम् २ कथयामिमहाबुद्धइतिहासंपुरातनम् ॥ यथानिर्वासनोभूपःस्वानंदभवनंगतः ३ महिमानंपरिज्ञायमुद्गलाज्ज्ञानसागरात् ॥ का
येनमनसावाचागणेशेभक्तिमानभूत् ४ गोदानानिमहाभक्त्यागजदानान्यनेकशः ॥ रथाश्वगृहधान्यानिदशदानान्यजानपि ५ विनायकप्रीतयेसद
दात्येवदिनेदिने ॥ मिष्टान्नभोजनैर्विप्रांस्तोषयित्वाधनादिभिः ६ गणेशदृढभक्तिंसयाचतेस्मदिनेदिने ॥ माघशुक्लचतुर्थ्यांसभौमवारेशुभेदिने ॥
७ स्नानंचक्रउषःकालेसंध्यांनित्यविधिंतथा ॥ भूषयित्वातथात्माननानालंकरणांशुकैः ८ आकार्यसकलाँल्लोकान्ब्राह्मणान्सुहृदोपरान् ॥ पूजयामास
विविधैरत्नैरंशुकसंचयैः ९ वारंवारंपश्यतिस्मविमानागमनंनृपः ॥ सभातोगंतुकामांस्तान्निषेधतिमुहुर्मुहुः १० ततोविनायकोज्ञात्वाकालंतस्यमहा
त्मनः ॥ प्रेषयामासदूताभ्यांविमानंद्युतिमत्तरम् ११ ॥ ॥ गणेशउवाच ॥ ॥ प्रमोदामोदगत्वातुकाशीराजंधरातले ॥ मद्भक्तमत्रानयतंविमान
वरमास्थितम् १२ ॥ ॥ कउवाच ॥ ॥ तदाज्ञांप्राप्यतंनत्वादिवोलोकादुभौतदा ॥ दिव्यंविमानमादायकाशीराजंसमीयतुः १३ तत्तेजोधर्षितालो
कामेनिरेप्रलयानलम् ॥ केचिन्मेनिरेव्यभ्रेविद्युत्पातमिवागतम् १४ तर्कयामासुरपरेपतंतंरविमंडलम् ॥ घंटानांचैवतूर्याणांगंधर्वाप्सरसांस्वनम् १५
श्रुत्वान्येजज्ञिरेयानंगणेशकृपयागतम् ॥ अंगणेकाशिराजस्यसमुत्तीर्णेश्रियालसत् १६ आगतौराजनिकटेप्रमोदामोदसंज्ञकौ ॥ गणौदिव्यांबरध
रौदिव्यभूषाविराजितौ १७ दिव्यमाल्यानुलेपाद्यैर्दिव्यदीप्त्यास्मराविव ॥ विनायकस्वरूपौतौनत्वाराजानिजासने १८ उपवेश्यप्रपूज्याशुपावत्पृच्छति

तौनृपः ॥ तावत्तावूचतुर्दूतौसर्वलोकेथशृण्वति १९ शृणुराजन्प्रवक्ष्यामिवाक्यंवैनायकंशुभम् ॥ नभक्तास्त्रिषुलोकेषुत्वत्तःप्रीतिकरोनृपः ॥ त्वाध्यायतीदिवा
रात्रंत्वद्गुणान्वदतोनिशम् २० धन्योसिजन्मसाफल्यंकृतंपुण्यवतात्वया ॥ त्वद्दर्शनात्क्षिप्रतरंनष्टंपापंतमोमहत् २१ नजानीवस्तपःकिंतेकृतंजन्मांतरेषुच ॥
परब्रह्मस्वरूपोयेंबालरूपीविनायकः २२ भवतांगृहमागत्यनानालीलाअदर्शयत् ॥ देवस्यदेवभक्तस्यमहिमानैवगोचरः २३ यतोविनायकोदेवस्त्वांचिंत
यतिसर्वदा ॥ त्वदर्थंप्रेषितंयानंदिव्यंवैभवसंयुतम् २४ नयावोदिव्यलोकंत्वांतदाज्ञावशवर्त्तिनौ ॥ शीघ्रमानयतांकाशीराजमित्याहनौविभुः २५ शृण्वत्सु
सर्वलोकेषुशुश्रावसवचस्तयोः ॥ अमृताब्धौनिमग्नोभूदानंदाश्रुस्त्रजन्मुहुः २६ देहावस्थांपुनर्लब्ध्वाप्रणम्यतौउवाचसः ॥ धन्यंजन्मचपितरौनिष्ठाभक्ति
श्चसंपदः २७ यद्दुर्लभौमयादृष्टौचरणौवांशुभावहौ ॥ विनायकस्वरूपेणप्राप्तौनेतुंपरंस्थलम् २८ इक्षुसागरमध्यस्थंदुर्दर्शंचर्मचक्षुषां ॥ यन्निर्गुणंचिदानंदं
परंब्रह्मसनातनम् २९ विश्वोत्पत्तिस्थितिलयहेतुभूतमगोचरम् ॥ यदणुभ्योप्यणुतरंस्थूलात्स्थूलतरंचयत् ३० सर्वत्रगमसक्तंचसाकारंगुणभोक्तृच ॥
नानारूपमरूपंचभूभारहरणोद्यतम् ३१ तेनमेरंकभूतस्यकृपेयंमहतीकृता ॥ इत्युक्त्वासनमस्कृत्यसर्वानालिंग्यप्रेक्ष्यच ३२ दूतावूचेत्वारुहतंप्रणिपातपु
रःसरम् ॥ पश्चादहंसमारोक्ष्येविमानंमर्त्यदुर्लभम् ३३ अमात्याभ्यांनमस्कृत्यपुत्रंदत्वातयोःकरे ॥ प्रजानांपालनंकार्यंधर्मेणचबलेनच ३४ मुद्गलेनच
तत्प्रोक्तमनुभूतमिदंमया ॥ इत्युक्त्वाचर्मदेहेनरुरोहयानमुत्तमम् ३५ अधिष्ठितंतुदूताभ्यांपूजिताभ्यामनेकधा ॥ आरूढस्यचतत्रास्यदेहोभूद्रविसन्निभः
३६ दिव्यैर्गंधैरलंकारैस्ताभ्यांसंपूजितोंशुकैः ॥ गतौतौवायुवेगेनदर्शयंतौचतौनृपम् ३७ भूतप्रेतपिशाचानांलोकंदुष्कृतकर्मणां ॥ यत्रतेविकृताकाराऊर्ध्व
पादाअधोमुखाः ३८ पृष्ठभागमुखाःकेचिन्मस्तकाक्षास्तथापरे ॥ त्र्यद्दिनेत्राःपृष्ठनेत्राःसूक्ष्मकंठामहोदराः ३९ यथारश्मौजालगतेभ्रमंतिपरमाणवः ॥ तथा
भ्रमंतिगगनेनेकरूपाःसुदुःखिनः ४० कोयंलोकोदूतवरौब्रूतंमइतिसोब्रवीत् ४१ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥
॥ ॥ दूतावूचतुः ॥ प्रेतभूतपिशाचानांलोकोयंराजसत्तम ॥ निंदापैशून्यतास्तेयकृतोयांत्यत्रभूपते १ ततोग्रेपश्यतिस्मासौलोकावसुररक्षसां ॥ यत्रते
विविधाकाराऊर्ध्वकेशाभयानकाः २ घोरास्याश्चललज्जिह्वामेघनादाधरोपमाः ॥ अग्निकुंडानिभांस्तान्सदृष्ट्वापप्रच्छतौपुनः ॥ ३ ॥ केषामिदंपुरंदूतौ
गदतंमेनुपृच्छतः ॥ तावुचतुरयंलोकोदुष्टदानवरक्षसां ४ श्रौतस्मार्तक्रियाहीनाअत्रतिष्ठंतिपापिनः ॥ तदग्रेसददर्शाथलोकंगंधर्वसेवितम् ॥ ५ ॥ रौ
प्यस्वर्णगृहायत्ररत्नकांचनभूमयः ॥ नरनार्यःकामरत्योनृत्यगानविशारदाः ॥ ६ ॥ अतिसौख्यकरंतंसदृष्ट्वापप्रच्छतौपुनः ॥ केषामिदंपुरंदूतौगदतं
मेनुपृच्छतः ७ ॥ ॥ तावूचतुः ॥ ॥ गंधर्वनगरंचेदंदेवस्थानेषुगायकाः ॥ प्राप्नुवंतिमहापुण्यादिदंपुरमनुत्तमम् ८ सिद्धचारणयक्षाणांगुह्यकानांपुरंम
हत् ॥ नानाव्रतैस्तथादानैर्गम्यंपुण्यसमुच्चयैः ९ दूतौचतौनृपंपश्चाद्दर्शयेतांगरीयसीं ॥ इंद्रस्यनगरींरम्यांअश्वमेधशतार्जितां १० सुवर्णरत्नगोदानरथा

श्वगजदानतः ॥ गम्यंतीर्थाभिषेकाद्यैःपुण्यैर्नानाविधैरपि ११ यत्रेंद्रभवनंरम्यंदर्शयेतामुभौनृपम् ॥ नृपोनिरीक्ष्यतौप्रोचेयच्छ्रुतंदृष्टमेवतत् १२ अग्नि
लोकंनतोग्रेतौदर्शयेतांनृपंशुभम् ॥ यत्राग्निहोत्रिणोवह्नितेजसोभांत्यनेकशः १३ ततोग्रेदर्शयेतांतौयमलोकंशुभाशुभम् ॥ यत्रपुण्यकृतोयांतितथापा
पकृतोपिच १४ सधर्मःसुकृतांभातिक्रूरोदुष्कृतकर्मणाम् ॥ सुकृतःसर्वभोगांस्तुदुष्कृतोनरकानपि १५ भुंजतेप्राणिनःस्वस्वकर्मभोगाननेकशः ॥ कुं
भीपाकेचपच्यंतेछिद्यंतेचासिपत्रकैः १६ अयोघनेनताड्यंतेकृत्यंतेकंटकैरपि ॥ तामिस्रेचांधतामिस्रेक्रमिकुंडेसपूयके १७ पात्यंतेनरकेघोरेदुष्कृतः
प्राणिनःसतात् ॥ निरीक्ष्यामीलयन्नेत्रेयातंयातमितिब्रुवन् १८ ततोग्रेदर्शयेतांतौकौबेरंलोकमुत्तमम् ॥ अत्याश्चर्यकरंशक्रलोकादतिवरंपरम् १९
रत्नकांचनयुक्तानिगृहाणिदीप्तिमंतिच ॥ रत्नकांचनदानेनतुलादानैश्चकोटिशः २० प्राप्नुवंतिमहाभागाःकौबेरंलोकमुत्तमम् ॥ ततोग्रेदर्शयेतां
तौवारुणंलोकमुत्तमम् २१ तर्थान्नदानतोलभ्यंकुबेरभवनातिगम् ॥ अप्सुसर्वेशुष्कदेहावसंतिसुखभोगिनः २२ वापीकूपतडागानांदस्थंतेजलदायि
नः ॥ ततोग्रेदर्शयेतांतौवायुलोकंसुखावहम् २३ ददतेव्यजनंग्रीष्मेसोशरिकंपुरंजलम् ॥ वसंतिवायुलोकेतेस्वेच्छागतिविहारिणः २४ ततोग्रेदर्शयेतां
तौसूर्यलोकंदुरासदम् ॥ पंचाग्निसाधनरताःसूर्यभक्तिपरायणाः २५ अवाप्तकामामुनयःसर्वेतेसूर्यवर्चसः ॥ निवसंतिनिराबाधाब्रह्मकल्पशतंनराः २६
नाक्षत्रंचंद्रलोकंचदर्शयेतांनृपंततः ॥ मुक्ताफलसुवर्णानांदानेनसोमयागतः २७ प्राप्नुवंतिमहात्मानोलोकमेनंसुपुण्यतः ॥ गोलोकंचततोग्रेतौदर्श
येतांनृपंतदा २८ गोसहस्राणियेदद्युर्ब्राह्मणेभ्योयथाविधि ॥ रोमसंख्यैस्तुकल्पैस्तेगोलोकेनिवसंतिहि २९ सत्यलोकंततोग्रेतौदर्शयेतांचिरंतनम् ॥ स
त्यव्रतावेदविदोवेदाध्ययनतत्पराः ३० सदाचाराःशास्त्रविदःपुराणपाठकाश्चये ॥ अन्नदानरतायज्ञकर्तारस्तीर्थसेविनः ३१ अप्रतिग्राहकाविप्राःपरो
पकृतिकारिणः ॥ तपस्विनोदानपराःसत्यलोकंव्रजंतिते ३२ गव्यूत्यष्टसहस्रेणविस्तीर्णंतावदायतम् ॥ यत्रब्रह्मामुनिगणैर्गणैराजर्षिणांपरैः ३३ देवर्षीणां
दानवानांगंधर्वाप्सरसांतथा ॥ स्तूयमानोदिवारात्रंसेव्यतेभक्तितत्परैः ३४ यत्रेंद्रभवनाभानिगृहाणिपरितोलसन् ॥ तंदृष्ट्वानृपतिर्लोकंविस्मितःप्राहतौत
दा ३५ ॥ ॥ नृपउवाच ॥ ॥ धन्योस्म्यनुगृहीतोस्मिगणेशेनकृपावता ॥ भवद्भ्यांचयतोदृष्टाःस्वर्गलोकाःसुदुर्लभाः ३६ कउवाच ॥ तंपुनर्दर्शयेतांतौ
वैकुंठंविश्रुतंत्रिषु ॥ लोकेषुतत्रगच्छंतिवैष्णवाभक्तितत्पराः ३७ सर्वलोकेषुश्रेष्ठंतंनोपमायस्यविद्यते ॥ शेषोनवर्णनेशक्तोनेकवक्त्रोनचात्मभूः ३८
ऊर्जस्नायीझषस्नायीमेषस्नायीतिलान्नदः ॥ गोदोगीताध्ययनवान्प्राणिनांचोपकृन्नयः ३९ विष्णुलोकंव्रजत्याशुसहस्रंपंचयोजनम् ॥ सूर्यचंद्रप्रकाशानिविश्व
कर्मकृतानिच ४० मंदिराणिप्रभासंतिरत्नकांचनराजतैः ॥ येषुनप्रविशत्येवतमोरत्नमरीचिभिः ४१ परिवारयुतोलक्ष्म्यायत्रतिष्ठतिदैत्यहा ॥ ज
हर्षनृपवर्योसौदृष्ट्वातत्पुण्यसंचयात् ४२ ततोग्रेदर्शयेतांतौकैलासंगिरिशालयम् ॥ मेरोस्तुशिखरेरम्येऽयुतयोजनविस्तृते ४३ रविचंद्रप्रकाशानिहर्म्याणि

णियत्रभांतिच ॥ यत्रपंचाक्षरजपारुद्राध्यायजपाश्वये ४४ अनेकसाधनरताःपुण्यवंतोत्रजंतिह ॥ तंदृष्ट्वाप्राहनृपतिर्विनायकप्रसादतः ४५
दृष्टासर्वेदेवलोकाःपुण्यदादर्शनान्नृणाम् ॥ ततोग्रेनरविश्वेंद्रःसहस्रयोजनावधि ४६ विमानप्रभयायातिनचपश्यंतिकिंचन ॥ मेघनादनिभंशब्दंशुश्रावदुः
सहंनृपः ४७ गिरिवर्यप्रकाशानांभ्रमराणांसमंततः ॥ कस्यशब्दःश्रूयतेयमितिपप्रच्छतौनृपः ४८ कदाद्रक्ष्यामिदेवस्यपादपद्ममितिस्फुटं ॥ ददर्शपुरतो
राजाशक्तिंभ्रामरिकांदृढाम् ४९ अनेकादित्यसंकाशांब्रह्मांडग्राससाहसाम् ॥ प्रसारितमुखांभीमांदृष्ट्वामूर्च्छामियान्नृपः ५०आश्वास्यनिन्यतुस्तंतुदूतावग्रेनृ
पंतदा ॥ ततआधारशक्तिंसततोप्यतिभयंकराम् ५१ दृष्ट्वाचकंपेन्नृपतिर्भ्रामरीमस्तकेस्थिताम् ॥ करालकेशांलंबोष्ठींदीर्घजिह्वांप्रभायुताम् ५२ आश्वासि
तोव्रजन्नग्रेसोपश्यत्कामदायिनीम् ॥ आधारशक्तिसंविष्टांयोजनायुतविस्तृताम् ५३ भ्रमंतिपर्वतायस्याःश्वासवायुविवर्तनात् ॥ वज्रातिनिष्ठुरैर्देहैर्यस्या
स्तिष्ठतिसापुरी ५४ वदतःस्मनृपंदूतौपश्यस्वानंदपत्तनम् ॥ यद्ध्यानपरितृप्तोसिकोटिसूर्यनिभंशुभम् ५५ रत्नकांचनसंभिन्नाभातियत्रगृहाःपरे ॥ मुक्ता
रजतसूर्याश्मनिर्मिताश्वसहस्रशः ५६ नीलाश्मकुट्टिमायत्रपुमांसोयत्रवह्निभाः ॥ यत्रवापीकूपतडागाभांतिचसरांसिच ५७ स्वच्छशीतांबुनीलानिपतिरत्न
तटानिच ।। यदंबुपानान्नजरानक्षुद्रोगोनृणांभवेत् ५८ आक्रीडाविमलानानावृक्षवल्लीविराजिताः ॥ दिव्यौषध्योदिवासूर्यकोटिभाभांतियत्रच ५९ चंद्रदृष्टे
प्रपश्यंतिकलंकरहितेमुखम् ॥ विलासिनीजनायत्रसर्वदाधोगतेनिशि ६० यत्रपुष्पवनामोदःश्रमंहंतिविहारिणाम् ॥ इक्षुसागरतीरंतत्प्राप्योत्तेरुर्मुदायुताः
६१ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेद्विपंचाशत्तमोऽध्यायः ५२ ॥ब्रह्मोवाच ॥ ॥ पपुरिक्षुरसंपुण्यंनिचयैर्लभ्यमंजसा ॥ तन्मध्येपद्मिनीश्वेतासहस्रदल
पद्मयुक् १ सहस्रकिरणप्रख्यंतस्यांयत्पद्ममुत्तमम् ॥तन्मध्येतस्यदेवस्यपर्यंकोतिमनोहरः२दिव्यास्तरणसंपन्नोदिव्यधूपैःसुधूपितः ॥ दिव्यनानाकुसुमवान्स्वप्र
भैरत्नसंचयैः३आसयन्प्रभयासर्वादिशोविदिशएवच ॥ व्यजनैर्वीज्यमानंसतत्रशेतेविनायकः४कोटिचंद्रनिभोनानालंकारोनागभूषणः॥ रंभास्तंभनिभंशुंडा
दंडंरदनसुंदरम् ५ दधद्दिव्यांबरच्छन्नोभालनेत्रःकिरीटवान् ॥ कुंडलेचांगदेमुद्राकटिसूत्रंमहाधनम् ६ सिद्धिबुद्धीसिद्धिहेतूपादौसंवहतोस्यह ॥ अ
णिमागरिमाश्वेतचामरैर्वीजितःस्मह ७ ज्वालिनीतेजिनीदीप्यमानेचोभयतःस्थिते ॥ दिव्यगंधेनलिप्तांगोदिव्यमालाविभूषितः ८ महिमाप्रथिमादायास्थिते
दृष्टिसमीपतः ॥ जलंगंडूषपात्रंचछत्रंकांचनरत्नयुक् ९ ततोदूतौकरेधृत्वातंनृपंपुरतोस्थतु ॥ ईक्षतेवागवसरंततोदेवोन्वबुध्यत १० तौदूतावूच
तुर्देवमानीतोयंतवाज्ञया ॥ प्रणम्यचस्थितौदूरंतदाज्ञापेक्षकावुभौ ११ तस्मिन्प्रबुद्धेराजासप्रणनामकृतांजलिः ॥ उवाचपरमप्रीत्याधन्योवंशोममाद्यह
१२ पितरौजन्मविद्याचतपोदृष्टिःसुतादयः ॥ येनमेदर्शितंब्रह्मध्येयंपदयुगंतव १३ नब्रह्मलोकेकैलासेशक्रलोकेपिवैभवः ॥ एतादृशोदर्शि
मयानान्यलोकेपिकश्चन १४ दूतावूचतुआस्यतांसततस्तौचनिषेदतुः ॥ ततोपश्यद्बालरूपंद्विभुजंसविनायकम् १५ येनतौनिहतौदैत्यौदेवांतकन

रांतकौ ॥ अतिगौरंकोमलांगंहिमकर्पूरसन्निभम् १६ नशशाकतदावक्तुंबाष्परुद्धमहागलः ॥ आनंदाश्रुनदीपूरैरासिंचंस्तत्पदद्वयम् १७ विज्ञायतन्महाभ
क्तिसुत्थाप्यालिंग्यविघ्नराट् ॥ मूर्ध्न्याघ्रातश्चपितृवद्बहुकालगतःसुतः १८ देवोपिबाष्पकंठोभूदुभौरोमांचसंयुतौ ॥ उभौसुखाब्धिसंमग्नौदेहातीतौयथामु
नी १९ उवाचवचनंपश्चाद्बालरूपीविनायकः ॥ त्वद्गृहेनेकधातातक्रीडतायत्कृतंमया २० तत्क्षांतंहित्वयासर्वंशुभंवायदिवाशुभम् ॥ निहताबहवोदैत्याध
राभारश्चसंहृतः २१ पालिताःसाधुलोकाश्चस्थापिताधर्मसेतवः ॥ तदाज्ञयापुनर्यांतःकश्यपंस्रष्टिकारकम् २२ प्रणम्यतंनिजंलोकंप्राप्तोमुंसर्ववैभवम् ॥ त्वामे
वपरिचिंत्याहंविश्रांतिंनलभेक्कचित् २३ तवादिभावंज्ञात्वाहंमुद्गलंमुनिपुंगवम् ॥ अप्रेषयंतवगृहंतदनुग्रहतस्त्वया २४ प्राप्तंस्थानंमुद्गलेनभक्तेनेदंत्व
यापिच ॥ यदगम्यंसदादेवैर्ब्रह्माद्यैर्मुनिपुंगवैः २५ ॥ ॥ कउवाच ॥ ॥ पीत्वावागमृतंतस्यनृपोनत्वापुनःपुनः ॥ उवाचधैर्यमालंब्यतुष्टावचयथामति २६
॥ नृपउवाच ॥ नमामितेनाथपदारविंदंब्रह्मादिभिर्ध्येयतमंशिवाय ॥ यत्पद्मपाशासिपरश्वधादिसुचिह्नितंविघ्नहरंनिजानाम् २७ यदर्च्यतेविष्णुशिवादि
भिःसुरैरनेककार्यार्थकरैर्नरैश्च ॥ अनेकशोविघ्नविनाशदक्षंसंसारतप्तामृतवृष्टिकारि २८ नमामितेनाथमुखारविंदंत्रिलोचनंवह्निरवींदुतारम् ॥ कृपाकटाक्षा
मृतसेचनेनतापत्रयोन्मूलनदृष्टशक्ति २९ नमामितेनाथकरारविंदमनेकहेतिक्षतदैत्यसंघम् ॥ अनेकभक्ताभयदंसुरेशसंसारकूपोत्तरणावलंबम् ३० त्व
मेवसत्वात्मतयाबिभर्षिसृजस्यजोराजसतामवाप्य ॥ तमोगुणाधारतयाचहंसिचराचरंतेवशगंगणेश ३१ यःशुद्धचेताभजतेनिशंत्वामाक्रम्यविघ्नान्परि
धावसित्वम् ॥ सत्वांवशेकृत्यसुखंहिशेतेवत्संयथागौरिवधावसित्वम् ३२ येन्येभजंतःसमवाप्यतापान्संसारचक्रेबहुधाभ्रमंतः ॥ कदापितेनुग्रहमा
प्यतेपिभजंतिमानुष्यमवाप्यतेपि ३३ धरारजःकोपिमिमीतनाकेताराागणंवारिमुचांचधाराः ॥ नालंगुणानांगणनांहिकर्तुंशेषोविधातातववर्षपूगैः ३४
निराकृतेस्तेयदिनाकृतिःस्यादुपासनाकर्मविधिर्वृथास्यात् ॥ गुणप्रपंचःप्रकृतेर्विलासोजनस्यभोगश्चतथाकथंस्यात् ३५ सत्संगतिश्चेत्सदनुग्रहःस्या
त्सत्कर्मनिष्ठासदनुस्मृतिश्च ॥ चित्तस्यशुद्धिर्महतीकृपातेज्ञानंविमुक्तिश्चनदुर्लभास्यात् ३६ ॥ कउवाच ॥ इतिस्तोत्रंसमाकर्ण्यपरितुष्टोविनायकः ॥ उ
वाचकाशिराजंसवरंवृणुहृदिस्थितम् ३७ ॥ नृपउवाच ॥ जातंवरस्यकृत्यंमेयत्राहंहिसमागतः ॥ इतःपुनर्जन्ममृतीनस्यातांतांद्विधीयताम् ३८ ॥ कउवाच ॥
स्तोत्रेणप्रीतरतंप्राहतथेतिदिव्यदेहिनम् ॥ स्थापयामासनिकटेकल्पकोटियुगावधि ३९ मुनेस्तोत्रंमयातस्मात्प्राप्तंतस्यप्रसादतः ॥ नारदायमयाप्रोक्तंना
रदोगौतमायच ४० प्राहसोपिमुनीन्सर्वान्सर्वकामफलप्रदम् ॥ ज्ञानदंमोक्षदंविघ्ननाशनंपावनंपरम् ४१ यःपठेत्सलभेद्भक्तिंगणेशसन्निधौनरः ॥ विद्या
कामोलभेद्विद्यांत्रिसंध्यंयःपठेन्नरः ४२ पुत्रकामोलभेत्पुत्रान्जयकामोलभेज्जयम् ॥ एवंसर्वंसमाख्यातंयद्यत्पृष्टंत्वयामुने ४३ आख्यानंकाशिराजस्यकिं
मन्यच्छ्रोतुमिच्छसि ॥ भृगुरुवाच ॥ इतिश्रुत्वाब्रह्मवाक्यंव्यासोनिःसंशयोगिरः ४४ पुनःपप्रच्छसुमतिर्विस्तरेणकथांतरम् ॥ ॥ व्यासउवाच ॥ ॥ शु

क्षस्यातिदरिद्रस्यहृतंदारिद्र्यमादरात् ४५ भुक्त्वाकदन्नंतद्गेहेकाशिराजंसमेत्यच ॥ किंचकारसदेवोपिकाशिराजश्चतद्वद ४६ कथंतौनिहतौदैत्यौभूआरश्च
कथंहृतः ॥ स्थापितश्चकथंधर्मस्तन्मेशंसयथाविधि ॥ ॥ कउवाच ॥ ॥ कथयामिसमासेनचरितंबालरूपिणः ॥ हृत्वाशुक्लस्यदारिद्र्यंयद्य
त्तेनकृतंमुने ४८ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेराजस्वानंदप्राप्तिवर्णनंनामत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ कउवाच ॥ ॥ भुक्त्वाशुक्लगृहेदेवो
यावत्क्रीडतिचत्वरे ॥ क्षणंसुष्वापमध्येसततोनागरिकाजनाः १ भोजनायसमारंभंकृत्वामुनिसुतस्यह ॥ काशिराजगृहंतावदाकारयितुमागताः २ तान्
चेकाशिराजस्तुक्रीडन्क्रीडन्नितोगतः ॥ पश्यंतिस्मततोलोकागृहेगृहेविनायकम् ३ शुक्लस्यसगृहंयातइतिकेचित्समूचिरे ॥ ततोजनानिनिंदुस्तंदेवंशुक्लमकिं
चनम् ४ ॥ जनाऊचुः ॥ उष्ट्रस्तुकंटकान्भुंक्तेहित्वाकोमलपल्लवान् ॥ अस्मानाढ्यान्विहायासौदरिद्रस्यगृहंगतः ५ वृथैवेश्वरतांनीतोराज्ञाबालोयदीश्व
रः ॥ स्यादयंचेत्तदाकुर्यात्संतुष्टिंसर्वचेतसाम् ६ कदन्नंतदपिस्वल्पंकथंभोक्ष्यातिबालकः ॥ केचित्सत्पुरुषास्तेषुतमानयितुमुत्सुकाः ७ इतस्ततःप्रधावंतिवि
ज्ञातुंतंविनायकम् ॥ पप्रच्छुर्मार्गगान्लोकान्क्वचिद्दृष्टोविनायकः ८ पृष्टाःपृष्टाव्रजंतिस्मजनास्तद्भक्तितत्पराः ॥ केचिदूचुःशुक्लगृहंगतःस्यादितितान्प्र
ति ९ तेशीघ्रंतद्गृहंयाताज्ञात्वासुप्तंविनायकम् ॥ अतिष्ठन्सात्विकास्तूष्णींप्रबुद्धःस्याद्यदाविभुः १० तदैनंप्रार्थयामेतिराजसास्तुतमब्रुवन् ॥ उत्तिष्ठयाहिरे
भोक्तुमन्नंपर्युषितंभवेत् ११ त्वदर्थंनगरेलोकाःकोलाहलंप्रकुर्वते ॥ दरिद्रस्यास्यशुक्लस्यशुक्लभिक्षारतस्यह १२ पर्याप्तिश्चास्यभिक्षायाजायतेनकदाच
न ॥ नजलंकोपिपिबातितस्यगेहेकथंभवान् ॥ भुक्तवान्कुत्सितंचान्नंकश्यपस्यात्मजोपिसन् १३ केचित्तंविविधैर्वाक्यैर्निनिंदुस्तुष्टुवुःपरे ॥ मुनिरुवाच ॥
एवंश्रुत्वासर्ववाक्यमुवाचकश्यपात्मजः १४ ॥ ॥ देवउवाच ॥ ॥ भक्त्योपपादितंचान्नंभुक्तमद्ययथेच्छतः ॥ पदमात्रंहिगंतुंमेशक्तिस्तृप्तस्यनास्तिच १५
ग्रासमात्रंहिभोक्तुंमेवांछानास्त्यधुनाजनाः ॥ ॥ कउवाच ॥ ॥ एवंनिष्ठुरतांज्ञात्वाजनास्तेविरसास्तदा १६ ऊचुःपरस्परंकोचित्कर्तव्यंकिंहिबालके ॥ सो
पिविह्वलतांज्ञात्वापुरवासिजनस्यह १७ एकोनंतत्वमापेदेघटाकाशइवक्षणात् ॥ जलकुंभगतोयद्वत्सवितानेकरूपवान् १८ प्रतिगृहंगतोनानाक्रीडास
क्तोभवद्विभुः ॥ क्वचित्सोपानमार्गेषुक्वचिद्दोलागतोपिच १९ क्वचिद्विपर्यंकगतःक्वचित्सौधगतोपिच ॥ क्रीडतेहसतेक्वापिगृहबालैर्भुनक्तिच २० अध्ये
तिक्वापिशास्त्राणिपाठयत्यपिकुत्रचित् ॥ तंदृष्ट्वास्वगृहंयातंकाशिराजेनसंयुतम् २१ जहर्षेसगृहस्वामीधन्योहमितिचाब्रवीत् ॥ एवंसर्वगृहेराजसहितो
सौविनायकः २२ क्वचिदभ्यज्यतेतैलैःस्नातिक्वापिशुभैर्जलैः ॥ पादप्रक्षालनंक्वापिक्रियतेपरमादरात् २३ उपचारैःषोडशभिःपूज्यतेक्वापिभक्तितः ॥ भु
ज्यतेपरमान्नेनबालभावाद्यथातथा २४ क्वचिन्नानापरिमलैःकस्तूरीचंदनादिभिः ॥ अर्च्यतेसुमनोभिश्चनैवेद्यैर्विविधैरपि ॥ सेव्यतेगृहपत्नीभिःशिशु
भिःसेवकैरपि २५ भुक्त्वायथेष्टंसुष्वापपादसंवाहनादिभिः ॥ वेदपारायणरतःक्वापिगानरतस्तुसः २६ शृणोतिसत्कथांक्वापिहरेरपिकथांक्वचित् ॥ क्व

चिन्नप्रमदानृत्यंपश्यतिस्मनृपेणसः २७ आरार्तिक्यैश्वविविधैःक्वापिनीराज्यतेविभुः ॥ क्वचिच्चपाशहस्तोसौक्रीडतेक्षुद्रबालकैः २८ पुराणंवाच्यते
क्वापिधर्मशास्त्रंस्मृतिस्तथा ॥ एवंसर्वगृहेभुक्त्वासर्वेषांकामपूरकः २९ यस्ययस्ययथावांछातथातांव्यदधाद्विभुः ॥ सुप्रसन्नोमहादेवोयथाकल्पद्रुमो
पिच ३० यथाचिंतामणिःकामधेनुर्वाखिलकामदा ॥ दीननाथेतियन्नामकृतंतत्सार्थकंतदा ३१ देवदुंदुभयोनेदुःपुष्पवृष्टिर्गृहेगृहे ॥ दृष्ट्वैवंकाशि
राजासौभ्रांतऊचेनिजान्प्रति ३२ अयंविनायकोबालःसन्निधौममतिष्ठति ॥ सकथंसर्वगृहगःपूज्यतेसर्वमानवैः ३३ गृहेगृहेतुसकथंतिष्ठत्यत्रापिसं
प्रतम् ॥ योमामाकारयतितंवदामिचपुनःपुनः ३४ विनाविनायकंयामिकथंभोक्तुंभवद्गृहे ॥ गृहमध्यस्थितंचान्नंभुंजेकाश्यपसंयुतः ३५ तंभुक्तवंतंयक्त्वैव
बहिस्थमथदृष्टवान् ॥ इतस्ततोब्रुवन्लोकाद्दृढविस्मितमानसाः ३६ नानागृहगतोभुंक्तेकाशिराजयुतोविभुः ॥ आकर्ण्यवचनंतेषांहसन्नूचेनृपःसतान् ३७
विनामांसकथंयातोभोक्तुंनानागृहाननिति ॥ ततोगृहाणिद्वित्रीणिगत्वाराजाहिदृष्टवान् ३८ स्वंचकश्यपपुत्रंचभुक्तवंतंगृहेगृहे ॥ एतस्मिन्नंतरेप्राप्तौस्नात्वातौ
मुनिसत्तमौ ३९ भुक्त्यर्थंभ्रममाणौतौसनकश्चसनंदनः ॥ पुरींमहोत्सवयुतांविनायकमयींशुभाम् ४० यद्यद्गृहंप्रविशतस्तत्रतत्रविनायकम् ॥ प
श्यतःस्मरतस्तौतुयातःस्मबहिरेवच ४१ भुक्तंचभुक्तवंतंचसुसंक्रीडंतमेवच ॥ जपंतंचपठंतंचपाठयंतंचपश्यतः ४२ एवंसर्वत्रतंदृष्ट्वापरस्परमथोचतुः
॥ नस्थलंभोजनार्थायदृश्यतेथात्रनिर्मलम् ४३ यावःशुद्धगृहेकर्त्तासनावातिथ्यमादरात् ॥ इत्युक्त्वातद्गृहंयातोदृष्टस्तत्रापिकाश्यपः ४४ अधोमु
खौक्षुधार्तौतौयातःस्मनगराद्बहिः ॥ पश्यतःस्मपरांमूर्तिंस्फुटांवैनायकींशुभाम् ४५ अंतर्हृदिचनेत्रेस्वेनिमील्योन्मील्यवापुनः ॥ अधश्चोर्ध्वंचांतराले
दिक्षुचैवविदिक्षुच ४६ तस्थतुस्तौततःपश्चाध्यानस्तिमितवीक्षणौ ॥ क्षणमुद्घाटयनयनेविनायकस्वरूपिणम् ४७ परस्परंपश्यतिस्मसनकस्तंपरोपि
तम् ॥ यंदेवंतौध्यायतःस्मपश्यतस्तंविनायकम् ४८ सर्वव्यापीसर्वरूपआविरासीत्तयोःपुरः ॥ दशबाहुःसिंहगतःसिद्धिबुद्धिविराजितः ४९ सुप्र
काशंकिरीटंचकुंडलेचांगदेदधत् ॥ दिव्यगंधंचमाल्यंचनागंचंद्रार्द्धमेवच ५० कस्तूरीतिलकंदिव्येवसनेदशनप्रभे ॥ सौम्यतेजाःसुमनसांदुष्टानांदु
र्निरीक्षणः ५१ त्यक्त्वाभ्रमंतुतत्वज्ञौप्रणमेतांविनायकम् ॥ बध्वाकरपुटंतौतंतुष्टुवातेमहामती ५२ ॥ ॥ तौऊचतुः ॥ ॥ नित्यमद्वैतमपरंपरंब्र
ह्मसनातनम् ॥ तमेवपरयाभक्त्यापंचभूतात्मकंविभुम् ५३ चराचरगतंसर्वरूपिणंपरमेश्वरम् ॥ भ्रमंतियस्यरोमांचगताब्रह्मांडकोटयः ५४ सकथं
स्तवनीयोसौवेदांतानामगोचरः ॥ आवयोर्वांछितंदेवत्वयाज्ञात्वाप्रपूरितम् ५५ नविद्मोमहिमानंतेबालरूपधरस्यह ॥ भूभारहरणार्थायकाश्यपंरूपमुत्त
मम् ५६ ॥ ॥ कउवाच ॥ ॥ अंतर्दधेतुतद्रूपमुभयोःस्तुवतोःपुरः ॥ नपश्यतोयदारूपंतदातौश्रमवर्जितौ ५७ प्रासादंपरमंकृत्वामूर्त्तिंवैनायकींशुभा
म् ॥ ब्रह्मवादित्रघोषैश्चयथादृष्टंशुभेदिने ५८ स्थापयामासतुर्नामवरदोयंविनायकः ॥ गणेशतीर्थमितिचतत्रयत्सरउत्तमम् ५९ स्थापितंनामतस्या

पितव्रतस्त्यातिमागमत् ॥ अत्रस्नानेनदानेनगणेशपूजनेनच ६० सर्वान्कामानवाप्नोतिहित्वापापंपु रातनम् ॥ तत्रैगुर्मुनयःसर्वेदेवाश्चसदिगीश्वराः ६१ दृ
ष्ट्वासंपूजितंदेवंस्तुत्वानत्वाययुःपुनः ॥ मुनिरुवाच ॥ ॥ एवंतौबालरूपस्यप्रभावंद्रष्टुमागतौ ६२ दृष्टप्रभावौसंतुष्टौस्वस्थानमापतुःपरम् ॥ यइदंशृ
णुयाद्भक्त्याबालस्यचरितंशुभम् ६३ सर्वान्कामानवाप्नोतिप्रेत्यब्रह्ममयोभवेत् ॥ नबालग्रहपीडास्यात्सर्वत्रविजयीभवेत् ६४ इतिश्रीगणेशपुराणेउत्तरखं
डेबालचरितेचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ मुनिरुवाच ॥ ॥ तयोस्तुगतयोःपश्चान्मोहापन्नोमहानृपः ॥ काशिराजोहयारूढोभ्रमतिस्मगृहेगृहे १ वि
नायकमचक्षाणःक्कगतोभोक्तुमित्युत ॥ विहायमांकथंयातोमिष्टान्नंभोक्तुमेकशः २ गृहेगृहेपर्यपृच्छत्क्कगतोसौविनायकः ॥ इदानींबहिरायातोमुक्त्वाक्री
डितुमुत्सुकः ३ काशिराजेनसहितोवृथात्वंपृच्छसेकथम् ॥ एवंनिराकृतःसर्वैःपुरवासिजनैरसौ ४ परमंश्रममापन्नोकुटुंब्यकिंचनोयथा ॥ केचिदूचुःशु
क्लगृहेक्रीडतेसौविनायकः ५ ततोहर्षयुतःशुक्लगृहंयातोनृपस्तदा ॥ ददर्शचांगणेतस्यबालंवृषगतंविभुम् ६ दृष्ट्वातंवृषआरूढंत्रिनेत्रमिवचापरम् ॥ प्रणम्य
परयाभक्त्याबद्धांजलिपुटोब्रवीत् ७ ॥ ॥ नृपउवाच ॥ ॥ नबालेसाधुचरितंनज्ञानंस्नेहएवच ॥ विहायमांकथंभोक्तुंमिष्टान्नंविविधंत्वया ८ ॥ कउवाच ॥
एवमाकर्ण्यतद्वाक्यमुवाचसविनायकः ॥ यत्रयत्रमयाभुक्तंतत्रभुक्तंत्वयापिच ९ मिथ्यात्वंभाषसेमंदबालस्त्वमसिबुद्धितः ॥ वदिष्यंतिजनाःसर्वेपृच्छेति
चससाक्षिकम् १० श्रुत्वावैनायकंवाक्यंजनाऊचुर्नृपंतदा ॥ इदानींहित्वयाभुक्तंविनायकसमीपतः ११ कथंमिथ्याभाषसेत्वंवृद्धःसन्नृपसत्तम ॥ ततःप्रकृ
तिमापन्नोज्ञानवान्सनृपोब्रवीत् १२ अज्ञेयातेपरामायायोगिनामपिमोहिनी ॥ धन्योसिसर्वरूपेणसर्वत्रमानितोयतः १३ ॥ कउवाच ॥ रोमांचांचितगात्रः
सध्यानमेवान्वपद्यत ॥ ततोवैनायकंरूपंस्वयमेवान्वपद्यत १४ यथाजलेजलंक्षिप्तंजलत्वंप्रतिपद्यते ॥ पुनर्मायाबलेनासौभिन्नमूर्तिर्नृपोत्तमः १५
सतुतंशिबिकारूढंनिनायनिजमंदिरम् ॥ नानावादित्रनिर्घोषैर्नृत्यैर्गीतैरनेकशः १६ शुशुभेबालकोतीवदेवेषुमदनोयथा ॥ अनुयातिसपत्नीकोभक्त्याशु
क्लःशनैःशनैः १७ परावर्त्यमुखंदृष्टोबालेनव्रीडताभृशम् ॥ कथंप्रयातोदत्त्वास्मैवरंकंचनतोषकम् १८ इत्येवंमनसातस्मैददौसंपत्तिमुत्तमाम् ॥ कुबेरसंपदः
श्रेष्ठांसर्वाश्चर्यकरींविभुः १९ शुक्लःपरावृत्तोदीनःसपत्नीकोमहामनाः ॥ कदन्नभक्षणाद्देवोरुष्टःकिंत्वितिचिंतयन् २० नापश्यत्तांपर्णकुटींचिंतांपरमिकांय
यौ ॥ ततस्तुसेवकाःशुक्लंसुगंधतैलमर्द्दनैः २१ स्नापयित्वाप्यलंचक्रुर्भूषणैःकांचनांशुकैः ॥ तथैवतस्यपत्नींचबलादिवनियोजिताः २२ अत्याश्चर्ययुतौचो
भौपश्यतःसर्वसंपदः ॥ रत्नकांचनभित्तीश्चमंचान्नानासनानिच २३ मुक्तामणिगणैश्चित्राण्यनेकानिस्थलेस्थले ॥ कांचनानिचभांडानिवस्त्राण्याच्छादना
निच २४ भक्ष्याण्यनेकरूपाणिखाद्यानिविविधानिच ॥ दृष्ट्वेत्थंसकलंचोभौपरस्परमभाषताम् २५ किमिदंभवनंक्षुद्रंजातमिंद्रगृहोपमम् ॥ ततःशुक्लोब्रवी
त्पत्नींविनायकप्रसादतः २६ सर्वंजानीहिसुभगेनसमक्षंमहाविभुः ॥ ददातितुपरोक्षेसौअल्पमात्रेणतोषयन् २७ स्वयंदत्तंबहुतरमल्पमेवहिमन्य

ते ॥ भक्त्योपपादितंस्वल्पंमन्यतेबहुलंविभुः २८ तस्माद्भयेनकामेनस्नेहेनारिपुभावतः ॥ स्मर्तव्योनमनीयश्चस्तव्यःपूज्योहितायच २९ मुनिरुवाच ॥
ततस्तुनगरेगुप्तौनरांतकसमीरितौ ॥ आस्तांदूतौचिरंकालंशूरश्चचपलस्तथा ३० यच्चंडशब्दात्त्रैलोक्यंकंपतेश्वत्थपत्रवत् ॥ यच्छिरःकंपतःकंपंयांतिदे
वाःसवासवाः ३१ पराक्रमेबलेशब्देत्रैलोक्येनसमस्तयोः ॥ अयंतुशिबिकामध्येहंतव्योमुनिदेहजः ३२ यतोनेनहतादैत्याबलिनःपूर्वमागताः ॥ तेषांप्र
तिकृतिःकार्येत्येवमूचुःपरस्परम् ३३ विद्युद्रूपंसमास्थायगर्जतःस्ममहारवौ ॥ तत्तेजसाप्रतिहतचक्षुषावीरसंचयाः॥ किमिदंकिमिदमितिचुक्रुशुर्भृशविह्वलाः॥
३४ एतस्मिन्नंतरेप्राप्तौशिबिकानिकटंतुतौ ॥ वाहाःपलायिताःसर्वेत्यक्त्वातंचविनायकम् ३५ धृतौविनायकेनोभौहस्ताभ्यांबलिनौबलात् ॥ उत्पाटितुंधर
ण्यांसभ्रामयामासतावुभौ ३६ करुणार्द्रमनाःपश्चात्स्थापयामासभूतले ॥ हंतव्यःपुरुषेणासौयःपराक्रमतोधिकः ३७ मशकेनिहतेकःस्यात्पुमर्थःपुरुषस्यह ॥
ततःपप्रच्छतौकस्यदूतौवाकथ्यतामिति ३८ स्वशक्त्यातुकृतेयत्नेनदोषःपुरुषस्यह ॥ एवंतद्वचनंश्रुत्वाप्रोचतुःपुरतःस्थितौ ३९ करुणाब्धिर्भवान्ख्यातोदीन
नाथःपितासिनः ॥ सेकश्चोपनेताचविद्यादोभयदोपरः ४० अन्नदःपंचपितरोविख्याताभुवनत्रये ॥ आवांदूतौगुप्तरूपौनरांतकसमीरितौ ४१ तवविघ्नकरौदे
वरक्षितौकृपयात्वया ॥ भूतंभव्यंभवच्चैवसर्वंजानासिसर्ववित् ४२ येयेवैरेणत्वांयाताहतास्तेक्षणमात्रतः ॥ एतस्मिन्नंतरेपौराविनायकमथाब्रुवन् ४३ किं
मेतौरक्षितौदेवदुष्टौलोकभयंकरौ ॥ अनयोरुपकारस्तुकृतोपकृतयेभवेत् ४४ पन्नगायपयोदत्तंविषमेवहिजायते ॥ ॥ मुनिरुवाच ॥ ॥ तानुवाचततो
देवःपूर्वमेवानयोर्मया ४५ अभयंदत्तमधुनाविपरीतंकथंभवेत् ॥ इत्युक्त्वामोचयत्तौसततोराजाब्रवीत्पुनः ४६ अपराधानसंख्यातानक्षांत्वातौमोचितौरि
पू ॥ मरणेजीवनेजंतोरिच्छातेकारणंमता ४७ इत्युक्त्वामंदिरंप्राप्तौकाशिराजविनायकौ ॥ नत्वातौसर्वलोकाश्चस्वंस्वंभवनमागमन् ४८ प्रशंसंतोनृपं
नानारूपिणंचविनायकं ४९ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेदूतमोचनंनामपंचपंचाशत्तमोऽध्यायः ५५ ॥ मुनिरुवाच ॥ तौतुरौद्रपुरेरम्यांनरांतक
सभांगतौ ॥ सहस्रस्तंभरुचिरांमणिमुक्ताविभूषितां १ अनेकवीरसंबाधांनानाश्चर्यवतींशुभाम् ॥ शतयोजनविस्तीर्णांतावदायामसंयुतां २ नानामणिमये
रम्येआसनेसनरांतकः ॥ उपविष्टस्तत्समयेतस्यामात्यौवरासने ॥ ३ ॥ उभौगगनसंलेहिमूर्द्धानौबलिनांवरौ ॥ नत्वातौवदतःशूरश्चपलश्चगुणान्बहू
न् ४ वक्तव्यंदूतवर्येणयत्स्यात्साध्वितरच्चयत् ॥ अन्यथादूतदोषःस्यात्स्वामिकोपश्चदारुणः ५ श्रुत्वातत्स्वामिनाकार्यंविचार्यस्वहितंशुभम् ॥ आवांवि
नायकेविघ्नान्कर्तुंयातःपुरींतुतां ६ अतिगुप्ततरौतत्रस्थितौबालप्रतीक्षकौ ॥ विघंटोदंतुरश्चाथप्रथमंबालरूपिणौ ७ ताभ्यामालिंगितस्तौसभस्म
चक्रेविनायकः ॥ पतंगश्चविधूलश्चवायुरूपधरौततः ८ यातौबालकमुत्क्षिप्तंशिरआक्रम्यनाशितौ ॥ पाषाणरूपीप्रबलःशतधाखंडितोसुरः ९ कामक्रोधौ
द्वावसुरौरासभरूपमास्थितौ ॥ हंतुंबालंतुमार्गेतौचूर्णितौधरणीतले १० ततःकुंडिन्यास्तुवरःकौंजररूपमास्थितः ॥ मार्गमावृत्यसंतस्थौतेरकुंभस्यावि

दारणात् ११ निहतःक्षणमात्रेणकुमारेणबलेनसः ॥ धर्मदत्तगृहंपश्चाज्जृंभणीहंतुमागता १२ नारिकेलेनशिरसिहताम्रुत्युमवापसा ॥ ज्वालासुरोन्या
प्रतुंडस्तृतीयस्तुविदारणः १३ आगतानाशितुंबालमाद्योजज्वालतांपुरीम् ॥ अंत्यःसाहाय्यमकरोद्वायुरूपतयास्यह १४ विदार्यास्यंन्याप्रतुंडोभ
क्षयन्नाखिलान्जनान् ॥ त्रयोपिनिहतास्तेनबालेनानंतमायया १५ मेघनामामहादैत्योगाणकरूपमास्थितः ॥ निहतोमुद्रिकाघातात्तदद्भुतमिवाभवत् ॥
१६ कूपश्चकंदरश्चोभौनिहतौमायिनौबलात् ॥ अंभासुरोंधकस्तुंगोनाशितुंबालमागताः १७ एकेनाकारितुतमोधाराभिर्ववृषेपरः ॥ अपरस्तुंगशि
खरोन्यपतद्बालकोपरि ॥ १८ ॥ महाविहंगरूपेणदूरंक्षिप्तास्त्रयोपिच ॥ तेषांप्रतिकृतिंकर्तुंभ्रमरानामराक्षसी ॥ १९ ॥ आगताभक्षितुंबालंदुष्टाशयव
तीशुभा ॥ तदुरःस्थलमाक्रम्यप्राणान्जग्राहविघ्नराट् ॥ २० ॥ ततआवांतडिद्रूपमास्थायबालकंगतौ ॥ विहंतुंतेनविधृतौकरयोर्बलशालिना ॥२१॥ कृ
पावताविमुक्तौचपृष्टासर्वंचिकीर्षितम् ॥ कथयित्वोदंतमखिलमागतौस्वामिनंप्रति २२ एकदानगरेतत्रसर्वैरेकःसमाहृतः ॥ भोजनायचशुक्लेनदरिद्रेण
विनायकः २३ विशीर्णमोदनंभुक्त्वासहतैलेनप्राग्विभुः ॥ पश्चाद्गतोनंतकायोभोक्तुंसर्वगृहेषुसः २४ सर्वत्रकाशिराजेनसहितोबुभुजेहिसः ॥ काशि
राजेनमूढेननज्ञातंतद्विचेष्टितम् २५ स्वामिन्नेतादृशीशक्तिःक्वापिदृष्टानचश्रुता ॥ इदानींयद्धितंतेस्यात्तद्विसम्यग्विधीयताम् २६ जानीवहेनजेतास्यत्रैलो
क्येविद्यतेपुमान् ॥ ॥ मुनिरुवाच ॥ ॥ इत्थंश्रुत्वातयोर्वाक्यंप्रजज्वालसुरांतकः ॥ वमतिस्ममुखादग्निंविश्वमत्तुंप्रसारितात् २७ कपिरुड्डानशीलो
पिनसिंहंबाधतेक्वचित् ॥ बध्वातुभ्रुकुटीमुग्रामुवाचसनरांतकः २८ ग्रासशीलश्चाजगरोनमहाग्निंग्रसतेक्वचित् ॥ आश्चर्यंममचित्तेतुभवद्वाक्यादुपागतम्
२९ खद्योतोराजतेतावद्यावच्चंद्रोनदृश्यते ॥ चंद्रोपिराजतेतावद्यावत्सूर्योनदृश्यते ३० नदृश्यतेयदाराहुस्तावत्सूर्योपिराजते ॥ नदृष्टःकालरूपोहंतावद्वा
लोमहानयम् ३१ सकाशिराजंतंबालंजानीयातांदिवंगतम् ॥ यत्रतेनिहतादैत्यागतास्तत्रगमिष्यति ३२ ॥ ॥ मुनिरुवाच ॥ ॥ एवमुक्त्वास
मुत्तस्थौजगर्जगर्जयन्दिशः ॥ चकंपेपृथिवीसर्वातद्गर्जनरवाकुला ३३ ततआज्ञापयत्सर्वान्वीरान्सज्जीभवंत्विति ॥ काशिराजस्यनगरींयामियुद्धायदं
शितः ३४ तस्मिन्वदतिसेनेत्थंसन्नद्धासमुपागता ॥ सर्वशांतिकराघोराचतुरंगध्वजान्विता ३५ सैन्येनरजसासर्वंव्याप्तमासीद्दिगंतरम् ॥ आच्छादितेदि
नकरेनप्राज्ञायतकिंचन ३६ पदातयोप्यसंख्येयाःसिंदूरारुणमस्तकाः ॥ उड्डीयोड्डीयधावंतोमिथ्यायुद्धंप्रचक्रिरे ३७ मुक्तकेशाःखड्गहस्ताभृशुंडीचर्मपाणयः
॥ पाषाणद्रुमखट्वांगशक्तिपाशकराःपरे ३८ ततोयथौगजानीकंघंटानादविभूषितम् ॥ सिंदूरारुणसद्दंडदंतावरणराजितम् ३९ नानाधातुविचित्रोनुपर्वता
नांव्रजोव्रजन् ॥ चीत्कारेणनदद्भस्तैर्भिंदन्निवगिरिव्रजम् ४० आधोरणायदानस्युस्तदासर्वंहतंभवेत् ॥ दानोदकेनतुरजःप्रशांतमभवत्तदा ४१ अश्वारोहास्त
येर्जग्मुर्मुकुटाटोपमस्तकाः ॥ शस्त्रिकाचर्मनिस्त्रिंशधनुर्बाणविभूषिताः ४२ बृंहितैर्हेषितैर्व्योमकुर्वंतःसगुणंभृशम् ॥ कंकालैश्चतनुत्राणैस्त्रिशूलैश्चविराजि

ताः ४३ गदामुद्गरपट्टीशमहापरशुपाणयः ॥ चक्रतोमरभल्लासिपाशशस्त्राणिकराःपरे ४४ अश्वाअलंकृतानानालंकारैश्चामरैरपि ॥ मनोजवावायुवेगाव्योमै
वाक्रांतुमिच्छवः ४५ ततःसुवर्णरजतमुक्तामणिविभूषितम् ॥ सुवर्णाक्षैर्ध्वजैर्युक्तंनानालंकृतवाजिभिः ४६ नानायुद्धसमूहैश्चधनुर्बाणशतैर्युतम् ॥ कार्त
स्वरमहाचक्रंकिंकिणीजालमंडितम् ४७ महारथीमहामात्योरथमास्थायनिर्ययौ ॥ कृष्णदेहोमहाकायोवीरकंकणशोभितः ४८ लसत्कुंडलसुश्रोत्रोमहा
मुकुटमंडितः ॥ मुक्तासुवर्णमालाढ्योमुद्रिकाखड्गमंडितः ४९ केशरागरुकस्तूरीकर्पूरांगविलेपनः ॥ शुचिरस्त्राणिसस्मारनप्रयुक्तानिकुत्रचित् ५० वी
रावेशेनसबभौरोगीशोफांगतोयथा ॥ नानावादित्रनिर्घोषैर्नादयन्विदिशोदिशः ५१ वीराविनायकंजेतुंहृष्टागर्जंत्यनेकशः ॥ बृंहितैर्हेषितैःक्ष्वेडैरथनेमिस्व
नैरपि ॥ निनादंतंसमाकर्ण्यत्रस्तादेवादरीर्ययुः ॥ एवंनरांतकःकाशीराजस्यनगरींययौ ५३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेनरांतकनिर्गमनंनामष
ट्पंचाशत्तमोध्यायः ॥ ५६ ॥ छ ॥ ॥ कउवाच ॥ ॥ तस्मिन्प्रयातेदैत्येंद्रेप्राग्गुल्मेषुगतानराः ॥ धावमानान्नृपंप्रोचुर्मुक्त्वैवंतंनरांतकः १ आग
तोदैत्यराजोसौचतुरंगबलान्वितः ॥ पौरावादित्रनिर्घोषान्श्रुत्वाचक्रुर्महास्वनान् २ कोलाहलोमहानासील्लोकानांनगरेष्टशम् ॥ पलायितादशदिशोलोकाः
प्राणपरीप्सया ३ राजाथभोजनंत्यक्त्वाप्रोत्तस्थौस्पर्शवानिव ॥ कृत्वायुद्धक्षमंवेषंलोकानाज्ञापयत्पुरा ४ सज्जीभवंतुयुद्धायभेरीशब्दमकारयत् ॥ खड्गचर्म
धरोराजानिषंगीचापवान्बली ५ तनुत्राणीचकंकालीपुपूजेतंविनायकम् ॥ जयपूर्वंचतंस्मृत्वानत्वाचाश्वंसमारुहत् ६ तृतीयमानकारावंश्रुत्वासेनाचरराययुः॥
सन्नद्धास्त्वरमाणाश्चपत्त्यश्वस्यंदनैर्गजैः ७ अतिप्रहृष्टास्तेयोधास्त्रैलोक्यग्राससाहसाः ॥ नगर्याःपूर्वभागेसवेदिकायांस्थितोनृपः ८ अमात्यान्सर्ववी
रांश्चददौवस्त्रधनानिसः ॥ उवाचसमयोयंवोदर्शयंतुपराक्रमम् ९ विनायकानुग्रहान्नोनभयंविद्यतेक्वचित् ॥ तथापिबलवान्दैत्योबलाज्जिग्येवसुंध
रां १० जयस्यनियमोनास्तिदैवाधीनाश्चपूरुषाः ॥ नसेनालक्षभागेनविद्यतेतोब्रवीम्यहम् ११ क्वसागरःक्वकुंभोदंक्वखद्योतःक्वचारविः ॥ तेनैवरक्षितास्सास्ना
स्थिताराज्यश्रियावयम् १२ अपराधाःसुबहवोजातानोमस्तकेततः ॥ कियंतोनिहतादैत्याविनायकबलेनच १३ त्यक्त्वासामप्रयातोसौविचारःक्रियतांहि
तः ॥ मुनिरुवाच ॥ तत्राब्रवीन्महामात्योराजानंभयविह्वलम् १४ चतुर्भिर्बुद्धिमद्भिस्त्वंयाहिदैत्यंनरांतकम् ॥ शरणंस्वस्वकार्यार्थेनीचानुशरणंशुभं १५
बृहस्पतिमतंराजन्ब्रवीमितेशृणुष्वतत् ॥ श्रुत्वातत्कुरुराजेंद्रततःक्षेमंभविष्यति १६ ॥ बृहस्पतिरुवाच ॥ कन्याप्रदानसहभोजनवस्त्रदानसामाभिधान
नमनप्रणयप्रमाणैः ॥ तत्कीर्तिकीर्तनतदाप्तजनानुवादसुख्यैरुपायनिचयैरहितानविहंस्यात् १७॥ मुनिरुवाच ॥ सचेद्विनायकंयाचेद्दत्वाराज्यस्यरक्षणं॥
कर्तव्यमितिमेभातिस्वहितंतद्विचिंत्यताम् १८ ततःसर्वजनाःसाधुसाध्वितिप्राब्रुवन्नृपं ॥ सम्यगुक्तममात्येनवैरच्छेदायभोनृप १९ विचारयत्सुतेष्वेवंदैत्या
स्तेबलवत्तराः ॥ रुरुधुस्तांपुरींसैन्यैःसर्वेतेशलभाइव २० मध्येगतान्नरान्दष्ट्वादद्हुस्तांपुरींखलाः ॥ प्रजज्वालमहानग्निश्चतुर्दिक्षुविदिक्षुच २१ धूमेनाच्छा

दद्दर्शकाशिराजःस्वंनगरंभद्रमेवच ॥ कश्यपस्यात्मजंबालंक्रीडतंतंविनायकम् १६ तत्प्रसादादात्मबुद्धिर्नुनावपरयामुदा ॥ ज्ञातातेपरमामायामयाकु
क्षिगतेनच १७ त्वमेवकर्तादेवानांमनुष्याणांदिशामपि ॥ सर्गाणांसागराणांचसरितांबलिसद्मनाम् १८ यतस्तेरोमकूपेषुब्रह्मांडानांहिकोटयः ॥ दृष्टाश्चां
तेनचमयाप्रसादात्तवनाथभो १९ आश्चर्यंबहुधादृष्टंमयातवचविश्ववित् ॥ अहंयुद्धायसंप्राप्तोध्वजिनीपुनरागता २० नरांतकस्यसैन्येनसाजितात
त्क्षणादनु ॥ अमात्यपुत्रसहितोनरांतकमुपाद्रवम् २१ विधूतस्तेनसहसासैन्यंजित्वाममक्षणात् ॥ दग्धाचनगरीसर्वादृष्टःसकालपूरुषः २२ तेनापिभक्षि
तास्त्यसेनानानाविधाक्षणात् ॥ धृत्वानरांतकंयातःपुरुषःसतवांतिकम् २३ सर्वेत्वदुदरंयातास्तत्रदृष्टोसिमेप्रभो ॥ सर्वंदृष्टंचतत्रापिजंबूद्वीपंसविस्तरम् ॥
२४ एवंकोष्ठांतरंदृष्टंभूतलंचसविस्तरम् ॥ ततोहिंस्त्रिन्नास्त्वांयाताःशरणंजगदीश्वर २५ त्वदाज्ञयातुरोमांचद्वारेणानिर्गताबहिः ॥ पुनर्दृष्टोसिबालस्त्वंनिजं
चभवनंमहत् २६ किमिदंकौतुकंदेवमायाजालमिदंविभो ॥ कश्चासौपुरुषोदेवयेनाभक्षिमहाचमूः २७ केनासौविधृतोदैत्योरक्षितश्चापिकेनच ॥
केनादर्शिचरोमांचद्वारंनिर्गमनायच २८ इतिमेसंशयंदेवनुदभक्तस्ययत्नतः ॥ ॥ कउवाच ॥ एवंतेनकृतःप्रश्नोमस्तकेतस्यधीमतः २९ विना
यकःकरतलंकंपयानिदधारह ॥ दिव्यज्ञानोभवद्राजाकाशीराजस्तुतत्क्षणात् ३० तुष्टावपरयाभक्त्यादेवदेवंविनायकम् ॥ ॥ राजोवाच ॥ त्वमेवब्रह्मा
विष्णुश्चमहेशोभानुरेवच ३१ त्वमेवपृथिवीवायुरंतरिक्षंदिशोद्रुमाः ॥ पर्वतैःसहिताःसिद्धागंधर्वायक्षराक्षसाः ३२ मुनयोमानवाश्चापिस्थावरंजं
गमंजगत् ॥ त्वमेवसर्वदेवेशसचेतनमचेतनम् ३३ जन्मांतरीयपुण्येनदृष्टोसिकश्यपात्मज ॥ ॥ कउवाच ॥ एवंब्रुवतिराजेंद्रेमोहयामासतत्क्षणात् ॥
३४ ततोराजापुपूजैनंविनायकमनामयं ॥ ततःपौराहर्षयुताराजानंद्रष्टुमाययुः ३५ नत्वानत्वाददुस्तस्मैवस्त्राण्याभरणानिच ॥ राजापिदापयामासतेभ्यो
वस्त्राण्यनेकशः ३६ विसृज्यलोकांस्तान्सर्वान्जननीमभ्यगात्ततः ॥ तवप्रसादान्मातस्तेदृष्टंपादयुगंमया ३७ गृहीतोदैत्यराजेनदेवदेवेनरक्षितः ॥ ततो
हर्षयुतामातालिलिंगतंचिरागतं ३८ अमात्यौराजपत्नीतांनत्वाहतुरुभौतदा ॥ तवपुण्यप्रभावेनदृष्टंतेचरणांबुजं ३९ विनायकस्यमायाभिर्मोहिता
मोचिताश्चह ॥ ततस्तत्रयपौराजाभार्यामंबांजगादच ४० निवृत्तेषुचलोकेषुहर्षगद्गदयागिरा ॥ ॥ राजोवाच ॥ ॥ परमंकष्टमापन्नोधृतोदैत्येनतत्क्षणात्
४१ मोचितोमाययानेनप्रापितोनगरंनिजं ॥ ॥ कउवाच ॥ शुशुभेनगरंतत्त्वनानावादित्रनिस्वनैः ४२ पताकाभिरनेकाभिर्विविधैश्चमहोत्सवैः ॥ प्रत्या
नीतैःसर्वलोकैर्विनायकबलेनच ४३ कुमाराःकन्यकाश्चापियोषितःपतयोपिच ॥ जनकाश्चजनन्यश्चपुत्राश्चभ्रातरस्तथा ४४ लिलिंगुश्चजहर्षुश्चददुर्दा
नान्यनेकशः ॥ बुभुजुर्भोजयामासुर्लुलोकुश्चपपुर्जगुः ॥ ४५ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेराजमोक्षणंनामएकोनषष्टितमोध्यायः ५९ ॥ कउवाच ॥
ततोनरांतकोदृष्ट्वाविनायकविचेष्टितम् ॥ मेधयातर्कयामासदृष्टमस्याद्भुतंमहत् १ काशीराजेधृतेतेनानिर्मितःकालपूरुषः ॥ अखिलावाहिनीतेनभक्षिताभम

ताः ४३ गदामुद्गरपट्टीशमहापरशुपाणयः ॥ चक्रतोमरभल्लासिपाशास्त्राणिकराःपरे ४४ अश्वाअलंकृतानानालंकारैश्चामरैरपि ॥ मनोजवावायुवेगाव्योमै
वाक्रांतुमिच्छवः ४५ ततःसुवर्णरजतमुक्तामणिविभूषितम् ॥ सुवर्णाक्षैर्ध्वजैर्युक्तंनानालंकृतवाजिभिः ४६ नानायुद्धसमूहैश्चधनुर्बाणशतैर्युतम् ॥ कार्त
स्वरमहाचक्रंकिंकिणीजालमंडितम् ४७ महारथीमहामात्योरथमास्थायनिर्ययौ ॥ कृष्णदेहोमहाकायोवीरकंकणशोभितः ४८ लसत्कुंडलसुश्रोत्रोमहा
मुकुटमंडितः ॥ मुक्तासुवर्णमालाढ्योमुद्रिकाखड्गमंडितः ४९ केशरागरुकस्तूरीकर्पूरांगविलेपनः ॥ शुचिरस्त्राणिसस्मारनप्रयुक्तानिकुत्रचित् ५० वी
रावेशेनसबभौरोगीशोफांगतोयथा ॥ नानावादित्रनिर्घोषैर्नादयन्विदिशोदिशः ५१ वीराविनायकंजेतुंहृष्टागर्जंत्यनेकशः ॥ बृंहितैर्हेषितैःक्ष्वेडैरथनेमिस्व
नैरपि ॥ निनादंतंसमाकर्ण्यत्रस्तादेवादरीर्ययुः ॥ एवंनरांतकःकाशीराजस्यनगरींययौ ५३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेनरांतकनिर्गमनंनामष
ट्पंचाशत्तमोध्यायः ॥ ५६ ॥ ७ ॥ ॥ कउवाच ॥ ॥ तस्मिन्प्रयातेदैत्येंद्रेप्राग्गुल्मेषुगतानराः ॥ धावमानान्नृपंप्रोचुर्भुंक्तवंतंनरांतकः १ आग
तोदैत्यराजोसौचतुरंगबलान्वितः ॥ पौरावादित्रनिर्घोषान्श्रुत्वाचकुर्महास्वनान् २ कोलाहलोमहानासील्लोकानांनगरेभृशम् ॥ पलायितादशदिशोलोकाः
प्राणपरीप्सया ३ राजाथभोजनंत्यक्त्वाप्रोत्तस्थौस्पर्शवानिव ॥ कृत्वायुद्धक्षमंवेषंलोकानाज्ञापयत्पुरा ४ सज्जीभवंतुयुद्धायभेरीशब्दमकारयत् ॥ खड्गचर्म
धरोराजानिषंगीचापवान्बली ५ तनुत्राणीचकंकालीपुपूजेतंविनायकम् ॥ जयपूर्वंचतंस्मृत्वानत्वाचाश्वंसमारुहत् ६ तृतीयमानकारावंश्रुत्वासेनाचरा ययुः॥
सन्नद्धास्त्वरमाणाश्वपत्त्यश्वस्यंदनैर्गजैः ७ अतिप्रहृष्टास्तेयोधास्त्रैलोक्यग्राससाहसाः ॥ नगर्याःपूर्वभागेसवेदिकायांस्थितोनृपः ८ अमात्यान्सर्ववी
रांश्चददौवस्त्रधनानिसः ॥ उवाचसमयोयंवोदर्शयंतुपराक्रमम् ९ विनायकानुग्रहान्नोनभयंविद्यतेक्वचित् ॥ तथापिबलवान्दैत्योबलाज्जेयंवसुंध
रां १० जयस्यनियमोनास्तिदैवाधीनाश्चपूरुषाः ॥ नसेनालक्षभागेनविद्यतेतोब्रवीम्यहम् ११ क्वसागरःक्वकुंभोदंक्वखद्योतःक्वचारविः ॥ तेनैवरक्षितास्माभि
स्थिताराज्यश्रियावयम् १२ अपराधाःसुबहवोजातानोमस्तकेततः ॥ कियंतोनिहतादैत्याविनायकबलेनच १३ त्यक्त्वासामप्रयातोसौविचारःक्रियतांहि
तः ॥ मुनिरुवाच ॥ तत्राब्रवीन्महामात्योराजानंभयविह्वलम् १४ चतुर्भिर्बुद्धिमद्भिस्त्वंयाहिदैत्यंनरांतकम् ॥ शरणंस्वस्वकार्यार्थेनीचानुशरणंशुभं १५
बृहस्पतिमतंराजन्ब्रवीमितेशृणुष्वतत् ॥ श्रुत्वातत्कुरुराजेंद्रततःक्षेमंभविष्यति १६ ॥ बृहस्पतिरुवाच ॥ कन्याप्रदानसहभोजनवस्त्रदानसामाभिधान
नमनप्रणयप्रमाणैः ॥ तत्कीर्तिकीर्तनतदात्मजनानुवादमुख्यैरुपायनिचयैरहितान्विहंस्यात् १७॥ मुनिरुवाच ॥ सचेद्विनायकंयाचेद्दत्वाराज्यस्यरक्षणं॥
कर्तव्यमितिमेभातिस्वहितंतद्विचिंत्यताम् १८ ततःसर्वजनाःसाधुसाध्वितिप्राब्रुवन्नृपं ॥ सम्यगुक्तममात्येनवैरच्छेदायभोनृप १९ विचारयत्सुतेष्वेवंदैत्या
स्तेबलवत्तराः ॥ रुरुधुस्तांपुरींसैन्यैःसर्वेतेशलभाइव २० मध्येगतान्नरान्दृष्ट्वाददहुस्तांपुरींखलाः ॥ प्रजज्वालमहानग्निश्चतुर्दिक्षुविदिक्षुच २१ धूमेनाच्छा

दितपनोनप्राज्ञायतकिंचन ॥ कल्पांतइवतत्रासील्लोकानामतिदारुणः २२ ध्रीयंतेतेपरैर्येग्निभयाद्यांतिबहिर्नराः ॥ सबालायोषितश्चापिलिलिंगुश्चचुचुं
बिरे २३ पतिव्रतास्तत्यजुःप्राणान्लज्जयातिपरिप्लुताः ॥ आरुह्यगोपुरंकाश्चिद्देहत्यागंप्रचक्रिरे २४ अपरास्तत्यजुःप्राणान्शस्त्रैःपाशैर्विषैरपि ॥ अति
रम्याधृताद्दूतैर्नीतास्तास्स्वामिनंप्रति २५ नरांतकेनभुक्त्वाताःप्रेषितानगरंस्वयम् ॥ एवंतंप्रलयंदृष्ट्वामात्यानूचेनृपःपुनः २६ अस्मत्समक्षंयोषाश्चे
न्नीतादुष्टैर्दुरात्मभिः ॥ तदाऽयशोमहन्नःस्यात्तस्माद्युध्यामहेऽसुरैः २७ एवमुक्त्वास्वमश्वंसप्रेरयन्युद्धदुर्मदः ॥ सज्जंकृत्वाधनुःसद्योबाणवृष्टिमथा
करोत् २८ आच्छादितोरश्मिमालीदैत्यामोहमुपागमन् ॥ धाराधरायथाधाराविमुंचंतितथाधनुः २९ मुंचंतिस्मशरैस्तेतेनिहतादैत्यसंचयाः ॥ केचि
न्मृताश्चभग्नाश्चकेचिन्निश्चरणाःकृताः ३० केषांचिदुदरंभग्नंपरेषांबाहवोहताः ॥ केषांचित्स्फोटितानेत्राःकेषांचिदुरवोपिच ३१ अमात्याःसेनयासा
र्द्धंकाशीराजंसमन्वयुः ॥ खड्गैःपरश्वधैस्तेतान्परवीरान्निजघ्निरे ३२ तदाघातैर्हताःकेचित्पतिताभूतलेपरे ॥ तेपिदैत्यामहाशस्त्रैर्निजघ्नुस्तान्रणाजिरे
३३ अंधकारेमहारौद्रेसेनाधूलिकृतेपरे ॥ निजघ्नुरेवशस्त्रैस्तेवीरास्स्वांश्चपरानपि ३४ मल्लयुद्धंचचक्रुस्तेपरस्परजिगीषया ॥ अश्वारूढैर्गजारूढैर
थारूढैःपदातिभिः ३५ पदाताश्वरथारूढैर्युयुधुःशस्त्रसायकैः ॥ एवंसंभ्रांतमभवत्तद्युद्धंतुमुलंपरैः ३६ प्रभग्नादैत्यसेनासातदाथातापराङ्मुखी ॥
सिंहनादंचकारोच्चैःकाशिराजोजयान्वितः ३७ हर्षात्सेनांतरंयातोनिघ्नन्युद्धेवरान्वरान् ॥ भिंदन्सेनांमहाघोरांयुद्धावेशीगजोयथा ३८ शतंसहस्रंवी
राणांसेनामध्येजवानसः ॥ निघ्नंतंतंतथादृष्ट्वारुरुधुःपरसैनिकाः ३९ राजायमितिबुध्वातेसर्वएवसमाययुः ॥ तच्छराणांमहावृष्टिंसोढ्वादधुर्बलादमु
म् ४० अमात्ययोस्तुपुत्राभ्यांसहतेदैत्यपुंगवाः ॥ सेनाचरामहाशब्दंधृतोराजेतिचक्रिरे ४१ ततःसेनाचराराज्ञोधृताःकेचित्पलायिताः ॥ मृताः
केचिरक्षताःकेचिच्छरणंकेपिताग्ययुः ४२ महावनेमहोक्षेवबलवद्भिर्वृकैरिव ॥ अमात्यपुत्रसहितंनिन्युर्दूतानरांतकम् ४३ दग्धाचनगरीसर्वानिवार्यैः
सैनिकैस्तुसा ॥ ततोनरांतकःस्वीयान्जगादवीरसत्तमान् ४४ यदर्थमागतावीरास्तत्कार्यंसिद्धमेवनः ॥ नमेस्तिगणनातस्यमुनिपुत्रस्यसांप्रतम् ४५
जितेप्रभौजितासेनाजितेदुर्गेजितंपुरम् ॥ काशिराजेजितेबालोजितएवनसंशयः ४६ अथानेष्यतिराजायंबालंनिग्रहतोधुना ॥ एवमुक्त्वाययौवाद्यानि
र्घोषैःसतथापुरीं ४७ काशिराजंपुरस्कृत्यस्तूयमानोथबंदिभिः ॥ यच्छन्वस्तूनिबंदिभ्योददौविप्रेभ्यएवच ॥ ४८ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेरा
जनिग्रह०सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ कउवाच ॥ ॥ अर्धमार्गंगतोयावद्धर्षेणासौनरांतकः ॥ तावदेवश्रुतंकाशीराजपत्न्याधृतोनृपः १ अ
त्यंतंसाशुशोचाथपौरायेचावशेषिताः ॥ आक्रंदःसुमहानासीन्मत्स्यानांनिर्जलेयथा २ अंबासापतिताभूमौधृतेभर्तरिवैरिभिः ॥ मूर्छिताचविवर्णाभूद्रंभावात
हतायथा ३ सखीभिःसहितारोदीद्रुदतीप्राब्रवीत्तदा ॥ ॥ अंबोवाच ॥ ॥ सिंहस्सेलोगजानीकहंतायोरिपुमर्दनः ४ सृगालतुल्यदैत्येनसकथंविधृ

तोबलात् ॥ कगतंमत्तमातंगसहस्रंबलशालिनः ५ बलंभर्तुर्मदीयस्यदैत्यकोटिहरस्यह ॥ कथंरुष्टोमहेशोमेकदाद्रक्ष्येनिजंपतिम् ६ कंदेवंशरणं
यामियस्तंशीघ्रंविमोचयेत् ॥ कश्यपस्यास्यबालस्यवराद्युद्धंकृतंवरम् ७ तद्दिसंवैतथाजातंशांर्ङ्गिमूढत्वमागतम् ॥ योबालवचनाच्छ्रेष्ठैर्विरोधंकृतवान्वृथा ८
कोजयेत्तंमहादैत्यंभर्तृग्राहंनरांतकम् ॥ विनासर्वैःकथंकल्पकालःप्राप्तोहताशया ९ अहंचधरणीचापिकथंवैधव्यमागता ॥ नतादृशःक्कापिजातोकरुणाब्धिः
शरण्यदः १० ॥ ॥ मुनिरुवाच ॥ ॥ एवंतच्छोकमाकर्ण्यकश्यपस्यात्मजोबली ॥ शब्देनमहतागर्जन्ब्रह्मांडस्फोटकारिणा ११ प्रतिशब्देन
गगनंजगर्जंचदिशोपिच ॥ चकंपेधरणीसर्वासपर्वतवनाकरा १२ पक्षिणःपतितास्तेनमृताभ्रांताजनास्तदा ॥ ततःसिद्धिंसमालोक्यक्रोधव्याकुल
लोचनः १३ कगतासिमहायुद्धप्रसंगेप्राहतामिति ॥ सातदाशयमालक्ष्यचक्रेनानाविधांचमूम् १४ विकरालमुखावीराःप्रादुरासन्सहस्रशः ॥
हॅलदंताःसर्पजिह्वानराःपर्वतमस्तकाः १५ दारितास्यास्तुभूगोलमकस्माद्ग्रसयिष्णवः ॥ आस्यानलंविमुंचंतःशतनेत्रामहाबलाः १६ येषांनासारं
ध्रगतानदृश्यंतेमहागजाः ॥ सूर्याचंद्रमसौयेषांश्वासान्निपतितौभुवि १७ जटाभिःपृथिवीयेषांसर्वासंमार्ज्यतेभृशम् ॥ सहस्रयोजनहस्ताद्विगुणाश्च
तदंघ्रयः १८ तेषांतुनायकःक्रूरोविनायकसमीपतः ॥ आगतःपरिपप्रच्छकिंकार्यंवदमेप्रभो १९ देहिमेक्षुधितस्यादौभक्ष्यंतृप्तिकरंप्रभो ॥ इत्यु
क्तवंतंपुरुषमुवाचसविनायकः २० भक्षयस्वमहासेनांनरांतकसुपालिताम् ॥ हत्वातुतच्छिरोमह्यमानयस्वत्वरान्वितः २१ तत्सैन्येननतृप्तिश्चेद्धास्येभ
क्ष्यांतरंतव ॥ एवमाज्ञामनुप्राप्यनत्वातंकश्यपात्मजम् २२ महाक्ष्वेडितशब्दंतुकृत्वायातोनरांतकम् ॥ तस्यक्ष्वेडितशब्दस्यतादृग्रूपेणसैनिकाः २३ नरां
तकोपिभीतास्तेदुद्रुवुस्तेदिशोदश ॥ हस्तेधृत्वातुतान्सर्वान्मुखमध्येसमाक्षिपत् २४ उद्धूलरजोभौमंनप्राज्ञायतकिंचन ॥ अंधकारेमहाघोरेदीपिकाभिर्व्य
लोकयन् २५ तंदृष्ट्वापुरुषंघोरंकेचित्प्राणान्प्रजह्निरे ॥ तांश्चापिजीवतःसर्वांस्त्वरयाभक्षयत्यसौ २६ नरांतकस्तुदृष्ट्वैवंसर्वसैन्यविनाशनम् ॥ अतर्क
यत्स्वमनसाक्रुतांतस्यांतकोपरः २७ आगतःकिंमयाकार्यंदृश्यतेबलवानयम् ॥ एवंवदन्ददर्शाथसेनामर्द्धांतुभक्षिताम् २८ प्रलयानलवच्चायंपृतनां
हरतेबलात् ॥ निःशेषामेवकर्तामुमगस्त्यइववारिधिम् २९ दैत्यसेनाचराःसर्वेमहाशब्दान्प्रचक्रिरे ॥ केचिच्चभक्षितास्तेनचूर्णिताःपादघाततः ३०
श्वासानिलाहताःकेचित्केचिद्भीत्यैवमम्रिरे ॥ परस्परोपरितदावीरानिपतितापरे ३१ याहियाहीतिवक्त्रातुंचुक्रुशुस्तंनरांतकम् ॥ करावातेननिहतान्
भक्षयत्येषतत्क्षणात् ३२ असंख्यभक्षणादस्यनशांतोजठरानलः ॥ अश्वारोहागजारोहाःपदातारथसादिनः ३३ भक्षितानिहतावाहागजाश्चानेक
शोमुने ॥ एवंकोलाहलंश्रुत्वासज्जंकृत्वाधनुर्बलात् ३४ धरण्यांजानुनीस्थाप्यशरानुभयतस्तथा ॥ आदायधनुराकृष्यशरवृष्टिंतदाकरोत् ॥
३५ ततोंधकारमभवच्छरवृष्टिकृतंपुनः ॥ पक्षिणःपतिताभूमौराज्ञोभृत्याअनेकशः ३६ सगीलयतिपुरुषोबाणान्दैत्यसमीरितान् ॥ असंख्या

ताःशरास्तस्यरोमकूपेषुनिर्गताः ३७ स्रवंतोरुधिरंसर्वेनजानात्यणुवेदनाम् ॥ प्रादुश्चक्रेततोस्त्राणिपौरुषेणनरांतकः ३८ तान्यस्त्राण्यगिलत्सर्वाण्यंडा
न्याजगरीयथा ॥ कुंठितास्त्रःक्षीणशस्त्रोनष्टसायकसंचयः ३९ क्षीणशक्तिःपपालासौदैत्यराजोनरांतकः ॥ सकालपुरुषस्तस्यपृष्ठएवालगत्त
दा ४० बभ्रामभूतलेदैत्योपश्यत्पृष्ठेतुतंयदा ॥ तदास्वर्गेजगामाशुभयात्तस्यनरांतकः ४१ पुनःपृष्ठेचतंदृष्ट्वापपातधरणीतले ॥ तत्रापितंददर्शा
थप्राविशद्धरणीतलम् ४२ सकालपुरुषःकेशेततोदध्रेनरांतकम् ॥ बिलंविशंतमुरगंगरुडोतिबलंयथा ४३ ततोनरांतकंप्राहपुरुषःसबलान्वितः ॥
क्वगमिष्यसिदुष्टःसन्ममाग्रेत्वंनरांतक ४४ ईश्वरस्यवरान्मत्तोवृथादेवर्षिपीडनम् ॥ मनुष्याणांचसंहारमनंतानांमहाखल ४५ तवसंहरणेदुष्टावतीर्णो
स्तिविनायकः ॥ अहंकारंचमकलंत्यक्त्वातंशरणंव्रज ४६ अघानितेविनश्यंतिदृष्ट्वातत्पादपंकजम् ॥ इत्युक्त्वातंबलाद्दैत्यमानिनायनरांतकम् ४७
विनायकस्यनिकटेदैत्यराजंपरंततः ॥ उवाचाथप्रणम्यासौस्वामिनंतंविनायकम् ४८ अक्षितंसर्वसैन्यंतेआज्ञांप्राप्यमहत्तरम् ॥ अत्यंतंक्लेशितोनेनधू
र्तेनेनंत्वांसमानयम् ४९ ममनिद्रास्थलंयच्छश्रमापनुत्तयेविभो ॥ सर्वेषांचसुखायास्यमुक्तिंयच्छविनायक ५० एवंतद्वाक्यमाकर्ण्यतंविभुःप्रत्यभा
षत ॥ ममवक्त्रांतर्गतस्त्वंनिद्रांप्राप्नुहिस्वेच्छया ५१ इत्याकर्ण्यमहावाक्यंविनायकमुखोद्गतम् ॥ तन्मुखंप्रविवेशाथतद्रूपंसमपद्यत ५२ यथागंधोध
राजातस्तत्रैवपरिलीयते ॥ तथाविनायकाज्जातस्तत्रैवलयमाप्तवान् ५३ यइदंशृणुयाद्भक्त्यामहदाख्यानमुत्तमम् ॥ सर्वान्कामानवाप्याथमुक्तिंचलभ
तेध्रुवं ५४ इतिश्रीगणेशपुराणेउत्तरखंडेनरांतकनिग्रहोनामअष्टपंचाशत्तमोध्यायः ॥५८॥ ॥ मुनिरुवाच ॥ ॥ विनायकेनबालेनकुतःसपुरुषःकृतः ॥ ये
नतद्भक्षितंसैन्यमानीतःसनरांतकः १ एतन्मेप्रकटंब्रूहिसंशयोत्रमहान्मम ॥ ॥ कउवाच ॥ ॥ यन्निर्गुणंपरंब्रह्मतदेतत्सगुणंबभौ २ विनायकस्वरूपेणब्र
ह्मविष्णुशिवात्मकम् ॥ भूभारहरणार्थायदुष्टानांनिधनायच ३ पालनायस्वधर्मस्यबिभ्रतेनंतरूपताम् ॥ सएवसृजतेविश्वंपातिहंतिस्वतेजसा ४ अपे
क्षतेसलोकानांनिमित्तंनियतिंपराम् ॥ नचात्रसंशयःकार्योनिकमायामयेविभौ ५ तदिच्छयासर्वमिदंजगद्धिपरिवर्तते ॥ इदानींतस्यमायांतेकथयिष्यामिवि
स्तरात् ६ अमात्यपुत्रसहितोनरांतकधृतोनृपः ॥ यावन्नपत्तनंप्रापतावत्कालंपुमानसौ ७ भक्षयामासतांसेनांदैत्येनपरिपालिताम् ॥ विनायकेनपुरुषोमु
खेसौनिहितस्तदा ८ राजामात्यकुमारौचसोपितेसर्वएवतु ॥ जठरेतस्यदेवस्यददृशुःसकलंजगत् ९ सप्तद्वीपवतींपृथ्वींपर्वतद्रुमसंयुताम् ॥ सरित्सागरवापी
भिस्तडागैर्मानवैःश्रिताम् १० देवगंधर्वमुनिभिःसिद्धयक्षनिशाचरैः ॥ पन्नगैरप्सरोभिश्चशोभितंस्वर्गमंडलम् ११ पातालानिचसप्तानिभ्रमंतोददृशुस्तदा ॥
एवंतेजठरेतस्यकोष्ठेकोष्ठेपृथक्पृथक् १२ ददृशुर्भ्रांतमनसोब्रह्मांडानिचयान्बहून् ॥ खिन्नास्तेशरणंजग्मुर्देवदेवंविनायकम् १३ मनसाप्रार्थयामासुस्तदा
देवंविनायकम् ॥ भ्रांतानांखिन्नचित्तानांकृपांकुरुकृपानिधे १४ ततस्तान्बालरूपेणमार्गमादर्शयद्विभुः ॥ ततोरोमांचमार्गेणबहिर्यातायथापुरा १५

दर्दर्शकाशिराजःस्वंनगरंअद्भमेवच ॥ कश्यपस्यात्मजंबालंक्रीडतंतंविनायकम् १६ तत्प्रसादादाप्तबुद्धिर्नुनावपरयामुदा ॥ ज्ञातातेपरमामायामयाकु
क्षिगतेनच १७ त्वमेवकर्तादेवानांमनुष्याणांदिशामपि ॥ सर्गाणांसागराणांचसरितांबलिसद्मनाम् १८ यतस्तेरोमकूपेषुब्रह्मांडानांहिकोटयः ॥ दृष्टाभ्रां
तेनचमयाप्रसादात्तवनाथभो १९ आश्चर्यंबहुधादृष्टंमयातवचविश्ववित् ॥ अहंयुद्धायसंप्राप्तोध्वजिनीपुनरागता २० नरांतकस्यसैन्येनसाजितात
त्क्षणादनु ॥ अमात्यपुत्रसहितोनरांतकमुपाद्रवम् २१ विधृतस्तेनसहसासैन्यंजित्वाममक्षणात् ॥ दग्धाचनगरीसर्वादृष्टःसकालपुरुषः २२ तेनापिभक्षि
तातस्यसेनानानाविधाक्षणात् ॥ धृत्वानरांतकंयातःपुरुषःसतवांतिकम् २३ सर्वेत्वदुदरंयातास्तत्रदृष्टोसिमेप्रभो ॥ सर्वंदृष्टंचतत्रापिजंबूद्वीपंसविस्तरम् ॥
२४ एवंकोष्ठांतरेदृष्टंभूतलंचसविस्तरम् ॥ ततोहिखिन्नास्त्वांयाताःशरणंजगदीश्वर २५ त्वदाज्ञयातुरोमांचद्वारेणानिर्गताबहिः ॥ पुनर्दृष्टोसिबालस्त्वंनिजं
चभवनंमहत् २६ किमिदंकौतुकंदेवमायाजालमिदंविभो ॥ कश्चासौपुरुषोदेवयेनाभक्षिमहाचमूः २७ केनासौविधृतोदैत्योरक्षितश्चापिकेनच ॥
केनादर्शिचरोमांचद्वारंनिर्गमनायच २८ इतिमेसंशयंदेवनुदभक्तस्ययत्नतः ॥ ॥ कउवाच ॥ एवंतेनकृतःप्रश्नोमस्तकेतस्यधीमतः २९ विना
यकःकरतलंकृपयानिदधारह ॥ दिव्यज्ञानोभवद्राजाकाशीराजस्तुतत्क्षणात् ३० तुष्टावपरयाभक्त्यादेवदेवंविनायकम् ॥ ॥ राजोवाच ॥ त्वमेवब्रह्मा
विष्णुश्चमहेशोभानुरेवच ३१ त्वमेवपृथिवीवायुरंतरिक्षंदिशोद्रुमाः ॥ पर्वतैःसहिताःसिद्धागंधर्वायक्षराक्षसाः ३२ मुनयोमानवाश्चापिस्थावरंजं
गमंजगत् ॥ त्वमेवसर्वदेवेशसचेतनमचेतनम् ३३ जन्मांतरीयपुण्येनदृष्टोसिकश्यपात्मज ॥ ॥ कउवाच ॥ एवंब्रुवतिराजेंद्रेमोहयामासतत्क्षणात् ॥
३४ ततोराजापुपूजैनंविनायकमनामयं ॥ ततःपौराहर्षयुताराजानंद्रष्टुमाययुः ३५ नत्वानत्वाददुस्तस्मैवस्त्राण्याभरणानिच ॥ राजापिदापयामासतेभ्यो
वस्त्राण्यनेकशः ३६ विसृज्यलोकांस्तान्सर्वान्जननीमभ्यगात्ततः ॥ तवप्रसादान्मातस्तेदृष्टंपादयुगंमया ३७ गृहीतोदैत्यराजेनदेवदेवेनरक्षितः ॥ ततो
हर्षयुतामाताल्लिलिंगतंचिरागतं ३८ अमात्यौराजपत्नींतांनत्वाहतुरुभौतदा ॥ तवपुण्यप्रभावेनदृष्टंतेचरणांबुजं ३९ विनायकस्यमायाभिर्मोहिता
मोचिताश्चह ॥ ततस्तत्रत्रयौराजाभार्याभेवांजगादच ४० निवृत्तेषुचलोकेषुहर्षगद्गदयागिरा ॥ ॥ राजोवाच ॥ ॥ परमंकष्टमापन्नोधृतोदैत्येनतत्क्षणात्
४१ मोचितोमाययानेनप्रापितोनगरंनिजं ॥ ॥ कउवाच ॥ शुशुभेनगरंतच्चनानावादित्रनिस्वनैः ४२ पताकाभिरनेकाभिर्विविधैश्चमहोत्सवैः ॥ प्रत्या
नीतैःसर्वलोकैर्विनायकबलेनच ४३ कुमाराःकन्यकाश्चापियोषितःपतयोपिच ॥ जनकाश्चजनन्यश्चपुत्राश्चभ्रातरस्तथा ४४ लिलिंगुश्चजहर्षुश्चददुर्दा
नान्यनेकशः ॥ बुभुजुर्भोजयामासुर्लोकुश्चपपुर्जगुः ॥ ४५ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेराजमोक्षणंनामएकोनषष्टितमोध्यायः ५९ ॥ कउवाच ॥
ततोनरांतकोदृष्ट्वाविनायकविचेष्टितम् ॥ मेधयातर्कयामासदृष्टमस्याद्भुतंमहत् १ काशीराजेधृतेतेननिर्मितःकालपुरुषः ॥ अखिलावाहिनीतेनभक्षितामम

वेशः २ अमात्यपुत्रसहितोराजासावुदरंगतः ॥ अव्यंगोबाहिरानीतोदर्शीविश्वंनृपस्यहि ३ अस्मात्भुक्तिश्चमुक्तिश्चभवितामेनसंशयः ॥ तस्मादेनंहनि
ष्यामिमामयंवाहनिष्यति ४ इत्येवंनिश्चयंकृत्वाप्रोवाचसविनायकम् ॥ दैत्यउवाच ॥ ऐंद्रजालिकविद्येयंदर्शिताबहुधात्वया ५ नाहंबिभेमितस्या
स्तुमायावीचनरांतकः ॥ यस्यनिश्वसितेनापिनिपतंतिमहाद्रयः ६ भ्रूक्षेपमात्रेणचमेब्रह्मांडंकंपतेभृशम् ॥ यस्यहस्ततलाघाताद्भूगोलोपिद्विधाभवेत् ७
तेनत्वंबालरूपःसन्कथंयुद्धंकरिष्यसि ॥ योव्याघ्रसंमुखंगच्छेत्सकथंसुखमेष्यति ८ ॥ कउवाच ॥ इतिवाग्झींसमाकर्ण्यनरांतकसमीरितां ॥ अब्रवीत्प
रमात्मासौबालरूपीविनायकः ९ ॥ विनायकउवाच ॥ किमर्थंवल्गसेमूढयदातेप्रतनाखिला ॥ भक्षिताकगताशक्तिर्यदर्थंकथ्यतेमुहुः १० शूराःशौर्यंद
र्शयंतिनगांपरबलारुजां ॥ वृश्चिकेनाल्पकायेनमृगेंद्रोहन्यतेक्षणात् ११ अल्पेनहिप्रदीपेननश्यतेप्रबलंतमः ॥ यस्यसंनिहितोमृत्युःसन्निपातात्सलीय
ते १२ अल्पेनसृणिनामत्तमातंगोहिनियम्यते ॥ कउवाच ॥ इतिश्रुत्वातुवाक्यानिदेवप्रोक्तानिदैत्यराट् १३ चकंपेपरयाभीत्याजगर्जघनवद्दृढम् १४ भीष
यन्रोदयन्रावैःकंपयन्भूमिमंडलं ॥ अधावत्परमावेशोहंतुकामोविनायकम् १५ यथापतंगोदीपार्चिर्हंतुंशातित्वरान्वितः ॥ त्रिवक्रांभ्रुकुटींबध्वावम
न्नास्येनपावकम् १६ तंतथायांतमालोक्यकाशिराजोनिजंधनुः ॥ सज्जीचकारसहसाकर्णमाकृष्यसायकम् १७ उवाचसाम्नादैत्यंतंनिर्लज्जंबद्धमोचितम् ॥
मार्जीवंत्यजदैत्येंद्रजीवन्भद्राणिपश्यसि १८ परावृत्यप्रयाहित्वंनोचेन्मृत्युंप्रयास्यसि ॥ कउवाच ॥ इतितद्वाक्यमाकर्ण्यप्राहदैत्योरुषाज्वलन् ॥ १९ ॥
नरांतकेतिमेनामत्वादृशानांहिभक्षणात् ॥ इदानींशरणंयाहियदिजीवितुमिच्छसि २० पुनर्नृपोब्रवीद्वाक्यंमुमूर्षुंतंनरांतकम् ॥ विनाशसमयेमूढविपरीता
मतिर्भवेत् २१ मित्राणिशत्रुतांयांतिविपरीतेप्यनेहसि ॥ त्वयाप्याचरितंपापंवरगर्वादनेकशः २२ वरस्यैवप्रभावेणनवज्ञंगणितंत्वया ॥ इदानीमवतीर्णोयं
त्वादृशानांवधायच ॥ कश्यपस्यात्मजोभारंहर्तुंभूमिगतंदृढम् ॥ वरःपुण्यंचशिथिलंजातंतेपापसंचयात् २४ आरतीमेवमाश्रुत्यचकंपेहार्दिदैत्यराट् ॥ धावति
त्वान्नृपकराज्जगृहेसशरंधनुः २५ बलाच्चिक्षेपभूमौतच्छतधाचव्यशीर्यत ॥ अहनन्मुष्टिघातेनतंनृपंसनरांतकः २६ पतितःसधरापृष्ठेवज्राहतइवाचलः ॥
दृष्ट्वाविनायकोधावत्सृणिहस्तोमहाबलः २७ गर्जयन्गगनंसर्वंदिशश्चविदिशःस्वनैः ॥ चकंपेपृथिवीसर्वादिशःप्रज्वालिताइव २८ तेजसापरशोस्तस्य
सर्वदृष्टिहरेणच ॥ तेनाहनद्दैत्यशिरोयथेंद्रोगिरिमुत्कटम् २९ तथाहतोदैत्यराजोनिपपातमहीतले ॥ मूर्छनामहतींप्राप्तोमर्मभिन्नोयथाश्मना ३० उद
तिष्ठत्क्षणाद्दैत्योहस्ताभ्यांपर्वतावुभौ ॥ प्रगृह्यचप्रचिक्षेपविनायकजिघांसया ३१ शतधाचूर्णितौतेनमुदापरशुघातिना ॥ माययादैत्यराजोथनानारूपध
रोभवत् ३२ यद्यद्रूपंचकाराशुतत्तद्रूपंविनायकः ॥ भग्नदर्पंचकाराशुतेनतेनमहासुरम् ३३ शस्त्रैःशस्त्राणिसंवार्यतथास्त्रैरस्त्रसंचयम् ॥ ततस्तुमल्लयुद्धे
नयुयुधातेपरस्परम् ३४ चरणंचरणेनैवहस्तंहस्तेनजघ्नतुः ॥ जानुभ्यांजानुनीचोभौपुष्पिताविवकिंशुकौ ३५ वक्षसाचैववक्षश्चपेततुर्धरणीतले ॥ पुनरु

त्थायबलिनौकूर्पराभ्यांनिजघ्नतुः ३६ पुनर्दैत्योमहादेवंस्मृत्वावृक्षानवासृजत् ॥ पृष्ठेनपुष्ठंधावंतौललाटेनललाटकम् ३७ संवंतौरुधिरंचोभौगुल्फाभ्यांगुल्फ
मेवच ३८ पर्वतांश्चसवृक्षांश्चविनायकजिघांसया ॥ अप्राप्तानेवतान्सर्वांश्चिच्छेदसविनायकः ३९ पद्मपाशांकुशाघातैःपरशोर्दृढकर्मणा ॥ तस्यांनिवारिता
यांतुदैत्योमुंचत्तथापराम् ४० वृष्टिमन्यांतथाचान्यांनिरस्तांवीक्ष्यचापराम् ॥ काशिराजोययौदूरंस्मृतंज्ञात्वाविनायकम् ४० विनायकोपिसंक्लेशाद्वृदिचिं
तामथाकरोत् ॥ असंख्यातबलोदैत्योजयोपायोनदृश्यते ४२ कदादेवाःस्वनिलयंप्राप्स्यंतिनिहतारयः ॥ नरांतकोपिसंजातोदेवानामप्यथांतकः ४३ एवं
चिंतेचिंतयतिवारंवारंविनायके ॥ तूणेषुपतिताबाणाःकालदंडोपमादृढाः ४४ पिनाकोप्यापदमथःपुरस्तस्यपपातह ॥ शोभयंस्तेजसांस्वेनदिशश्चविदिशो
पिच ४५ कार्मुकंतुस्फुरत्कांतिदृष्ट्वासर्वेजहर्षसः ॥ मेनेजितंतंचदैत्यंसिद्धंचदेवकांक्षितं ४६ जग्राहबाणान्कोदंडंकृत्वाक्ष्वेडितमुच्चकैः ॥ पिनाकंतोल
यामाससज्जंचक्रेधनुस्तदा ४७ पृथिव्यांजानुनीस्थाप्यतूणौचोभयतस्तथा ॥ तद्धनुःशब्दमाकर्ण्यचकंपेभुवनत्रयम् ४८ सव्यदक्षिणहस्ताभ्यामाकृ
ष्यसायकद्वयम् ॥ मुमोचैदैत्यमालक्ष्यमुंचन्नग्निकणान्मुहुः ४९ पपातदैत्यभुजयोरकस्मात्सायकद्वयं ॥ गर्जन्प्रकाशयन्व्योमसंहरन्जीवसंचयान् ५० उत्कै
वपातयामासभुजौवृक्षाविवास्यतत् ॥ यथेंद्रोवज्रघातेनपर्वतस्येवसानुनी ५१ नरांतकद्वारदेशेमहानेकोपतत्करः ॥ अपरस्तात्पितुर्द्वारिचूर्णयन्प्राणि
संचयान् ५२ अन्यावास्तांकरौतस्यददर्शचविनायकः ॥ अभ्यधावत्पुनर्दैत्योव्यादितास्यइवांतकः ५३ हस्ताभ्यांतत्रपादाभ्यांचिक्षेपपादपान्बहून् ॥ द्रुमा
णांचमहावृष्टिंप्राक्षिपत्सविनायके ५४ अंधकारंमहच्चासीन्नप्राज्ञायतकिंचन ॥ ततोब्रवीद्दैत्यराजंदृष्ट्वावीर्यंविनायकः ५५ ॥ ॥ इतिश्रीगणेशपुराणेउत्तर
खंडेषष्टितमोऽध्यायः ॥ ॥ ६० ॥ ॥ विनायकउवाच ॥ ॥ नेदृशोदृष्टपूर्वोमेबलीचवीर्यवत्तरः ॥ इदानींपौरुषंपश्यममबालस्यचेष्टितम् १ इत्युक्त्वापु
नरेवासौबाणंतूणादकर्षयत् ॥ आकर्णधनुराकृष्यप्राक्षिपत्तंनरांतकम् २ प्रकाशयन्व्योमतलंपातयन्वृक्षसंचयम् ॥ आंदोलयन्निवययौपुष्पवत्तंनरांतकं ३
सबाणोछेदयत्तस्यचरणौसपपातह ॥ अर्धकायेनिपतितेदैत्येगर्जद्विनायकः ४ चरणौव्योममार्गेणभ्रमंतौपतितौगृहे ॥ देवांतकस्यमहतिचूर्णयंतौबहू
न्जनान् ५ अर्द्धकायःसदैत्येंद्रोमुखंकृत्वाभयानकं ॥ अभ्यधावद्बलेनासौत्रासन्निवजगत्रयम् ६ तथैवचरणावस्यमायायासंबभूवतुः ॥ विनायकस्यनिक
टेबभाषेभ्येत्यदैत्यराट् ७ त्वयायदर्शितंमह्यंपौरुषंकायभेदनात् ॥ छेदस्येतवापिचांगानिपश्यमेपौरुषंतथा ८ श्रुत्वावाक्यंपुनस्तस्यजगर्जासौविनायकः ॥
शरवृष्टिंपुनारौद्रांअसृजदैत्यपुंगवे ९ सोपितांभक्षयामाससंख्यातीतांमहाबलः ॥ ततएकंमहाबाणंअभिमंत्र्यविनायकः १० अग्नितुंडरुक्मपुंखंगर्ज
मानंभयानकम् ॥ आकर्णज्यामपाकृष्यतत्याजदैत्यमस्तके ११ सययौवायुवेगेनदारयन्निवपर्वतान् ॥ संहरन्पक्षिसंघातान्पातयन्वृक्षसंचयान् १२
श्रुत्वातदीयनिनदंययुःसेनादिशोदश ॥ पपातदैत्यकंठेसगिरिसानौयथापविः १३ तदाघाताच्छिरोप्यस्यपक्षीवगगनंययौ ॥ न्यपतत्पारिकूजत्तत्पितुर्गे

हेमयानकम् १४ पुनरन्यच्छिरोस्याभूद्दैच्छिन्नमिवपूर्ववत् ॥ ततःकोपेनदैत्योपिचक्रेक्ष्वेडितमुच्चकैः १५ बिभ्युःसुराःपक्षिसंघाःसर्वेचजनसंचयाः ॥
धरवृष्टिंपुनारौद्रांचक्रेतस्मिन्विनायके १६ ससर्वांबाणवृष्ट्यैवमध्येचिच्छेदलाघवात् ॥ अहोरात्रमभूद्युद्धंगिरिबाणमयंनवम् १७ परिश्रामदेवो
पिसोपिदैत्योमहाबलः ॥ चिंतामवापमहतींप्रजज्वालचतेजसा १८ ततोजग्राहपरशुंज्वालामालासमाकुलम् ॥ तोलयामासबलवांश्चकंपेधरणीतदा १९
विमानगाःसुराःसर्वेयुद्धंद्रष्टुमुपागताः ॥ चकंपिरेतदाशेषोबिभायचरसातले २० अवासृजद्दैत्यपतौसतस्याशुशिरोहरत् ॥ पुनरन्यदभूत्तारुशिरोमुकुट
कुंडलम् २१ पुनस्तत्पातयामासशिरःक्रुद्धोविनायकः ॥ पुनरन्यदभूत्तस्यछिन्नेतस्मिन्पुनःपुनः २२ एवंशतसहस्राणिशिरांसिसोच्छिनद्विभुः ॥ पु
नश्चिंतयामासमृतौदैत्यस्यकारणम् २३ मोहयामाससहसामाययातंनरांतकम् ॥ शिवस्यवरदानेनगर्वितंबलवत्तरम् २४ नाज्ञासीच्चतदादैत्योपरंचा
त्मानमेवच ॥ क्षणाच्चभासतेरात्रिःक्षणाच्चदिनमेवच २५ क्षणाच्चभासतेस्वर्गःपृथ्वीपातालमेवच ॥ जागरश्चसुषुप्तिश्चतुरीयास्वप्नएवच २६ विनायको
पिदेवोवानारीवापुरुषोपिवा ॥ गुह्यकोवास्थसिद्धोवायक्षोराक्षसएवच २७ स्वकीयोवापरोवापिपितावाजननीतुवा ॥ निर्जीवोवासजीवोवाभ्रमादेवम
मन्यत २८ चिंतांचपरमामापतर्कयामासचेतसि ॥ एवंमेतुवरादत्ताःशिवेनशूलधारिणा २९ अयंचसमयःप्राप्तःप्रायोमृत्युर्भविष्यति ॥ ॥ कउवाच ॥ ॥
एवंयावच्चिंतयतेपुरस्तावद्ददर्शसः ३० विनायकंविराड्रूपंगगनोर्ध्वगमस्तकम् ॥ पातालव्याप्तचरणंदिक्श्रोत्रंवृक्षरोमकम् ३१ भ्रमद्ब्रह्मांडरोमांचंपयो
धिश्रमबिंदुकम् ॥ नखाग्रेयस्यदेवानांभांतित्रिंशत्रिकोटयः ३२ उदरेभांत्येकदेशेभुवनानिचतुर्दश ॥ ततोविनायकोदैत्यंमर्दयामासतत्क्षणात् ३३ पा
दांगुष्ठनखाग्रेणमत्कुणंबालकोयथा ॥ ततोदेवाश्चमुनयोजयशब्दैर्मुहुर्मुहुः ३४ तुष्टुवुर्मुमुचुःपुष्पवृष्टिंभक्त्याप्रहर्षिताः ॥ अंतर्हितेतुवैराटेरूपेगाद्धरणींविभु
म् ३५ नत्वाप्रोवाचदेवेशअर्थआरोद्धतोमम ॥ पूर्णेत्वत्तेपराप्रीतिर्मेस्यात्तस्मात्सदाकुरु ३६ तस्यामंताहतायांतुकाशीराजःपुपूजतम् ॥ उवाचचप्रसन्नात्मा
विनयावनतोनृपः ३७अत्याश्चर्यंविभोदृष्टंमनोवाण्योरगोचरम् ॥ अवतीर्णोसिभूभारंहर्तुंतत्त्वकृतंत्वया ३८त्रयस्त्रिंशत्कोटिदेवैरवध्योयंहतोयतः॥ अतिपुण्येनद्द
ष्टंतेविराड्रूपंसुरेश्वर ३९ ॥ कउवाच ॥ एवंब्रुवतिराजेंद्रेपौराःसर्वेब्रुवंस्तदा ॥ धन्योसिबालभावेनसर्वान्नोभ्रामयस्यहो ४० यशःप्रथयितुंसर्वंकृतमेतद्विभो
त्वया ॥ पुपूजुश्चमहाभक्त्याप्रार्थयन्नितितंविभुम् ४१ भक्तिंतेदेहिनोदेवस्ववियोगंचमाकुरु ॥ ततोराजाचतेलोकाददुर्दानान्यनेकशः ४२ ब्राह्मणान्प्रा
र्थयामासुरेवमेवजयोस्तुनः ॥ उपायनानिचतदाददूराज्ञेपरस्परम् ४३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेदैत्यदमनंविराड्दर्शनंनामएकषष्टितमोध्या
यः ॥ ६१ ॥ ॥ ६१ ॥ ॥ कउवाच ॥ ॥ रौद्रकेतोस्तुयाभार्याशारदाख्याद्विजस्यसा ॥ विदर्भ्यामुपविष्टासासखीभिःकौतुकान्विता १ नरां
तकस्यचशिरोकस्मात्ताभिर्ददर्शह ॥ पतितंप्रांगणेकर्णकुंडलाभ्यांविराजितम् २ नादयत्पत्तनंसर्वंशिखरंपार्वतंयथा ॥ श्यामलंहिमसंस्पृष्टंविशाभंकमलंय

था ३ विभ्यतोरौद्रकेतुश्वशारदाघातविह्वला ॥ सावधानौददशतूरुद्रतःस्मभृशंतदा ४ लुंठतःस्मधरण्यांतौताडयंतौचवक्षसि ॥ मूर्च्छामवापतुरुभौमुहु
र्तांदिवचेतनाम् ५ माताशुशोचचतदाहृदिस्थाप्यचतच्छिरः ॥ चक्रंदेविह्वलासागौर्मृतवत्सायथाभृशम् ६ ॥ शारदोवाच ॥ वीरश्रियाव्याप्ततनूरणायैवस
मुत्सुकः ७ प्रोक्तवान्नाहिकिंचिन्मामिदानींगिरमाहर ८ क्कगतःपूर्वकायस्तेशिरसैवसमागतः ॥ एकाकीकथमायातःक्कतेसैन्यंमहत्तरं ९ क्कतेजलधरायाताश्छत्रचा
मरधारिणः ॥ यंदृष्ट्वावरकामिन्योम्लायंतेविरहाग्निना १० सकथंम्लानतांयातोरविरस्तानुगोयथा ॥ किंमयाह्यपराद्धंतेपित्रावावत्सलेनच ११ किमर्थंवदसे
नैवरुददश्रुप्रमार्ज्यनः ॥ पराघ्य्यास्तरणोपेतेमंचकेस्वापतत्परः १२ क्कदानींपरिसुप्तोसिखिद्यतेममनोभृशम् ॥ विनाभूतौत्वयानेशावास्यंसंदर्शितुंसुत ॥
१३ ॥ ॥ कउवाच ॥ ॥ शारदायाःशुचंश्रुत्वारौद्रकेतुःशुशोचह ॥ विनावृत्तांतकथनात्क्कगतोसिप्रियात्मज १४ प्रत्यहंसर्ववृत्तांतंजातंभाविनमेवच ॥ सं
श्रावयसिस्वस्थानमिदानींकिन्नभाषसे १५ यदित्वंसंमुखेयुध्यन्धारापूतोदिवंगतः ॥ मामपृच्छयचमांत्यक्त्वाकथंत्वंपरिजग्मिवान् १६ कथंत्वया
कृतापित्रोःपुत्रताशत्रुतापिच ॥ यदात्वंसेवककरात्खड्गंगृण्हासिस्वंकरे १७ तदासपर्वतवनासस्वर्गाकंपतेचभूः ॥ सकेनपातितोमह्यांनजानेकालपर्ययम्
१८ दैवंहिबलवल्लोकेपौरुषंतुनिरर्थकम् ॥ भूषणंममवंशस्यलोकस्यचगतंक्कनु १९ लोकस्यापिचयःकालःपंचास्योरिगजस्ययः ॥ सकथंत्वंद्विधाभूतो
वाताहतइवद्रुमः २० प्रतापसविताराजन्तूलदाहहुताशनः ॥ ॥ कउवाच ॥ ॥ एवंनानाविधंशोकंरौद्रकेतुश्वशारदा २१ कृत्वामूर्धानमादायदेवांत
कमगच्छताम् ॥ भद्रासनात्समुत्थायत्वरयातौतथाविधौ २२ दृष्ट्वाकंठंसमालिंग्यरुरोदावरजंतदा ॥ तत्परीवारभूतायेदैत्याःकालयमोपमाः २३ रुरुदुः
सुस्वरंतत्रदृष्ट्वानारांतकंशिरः ॥ मातुर्हस्ताच्छिरोगृह्यतत्स्वेहृदिनिधायच २४ चक्रंदकुररीवासौभ्रातृस्नेहेनदुःखितः ॥ ॥ देवांतकउवाच ॥ ॥ समंभु
क्तंसमंपीतंक्रीडितंसुप्तमुत्थितम् २५ समंतत्संसमंजसंक्कगतोसिविहायमाम् ॥ यस्यतेदर्शनान्मर्त्याःसुरायांतिदिशोदश २६ सकथंनिहतःकेनदुष्टेनच
बलीयसा ॥ रसारसातलंचैवतवैवचानिवेदितम् २७ विहायमांकथंस्वर्गंगतोसिभ्रातृवत्सल ॥ यस्यज्याघोषमाकर्ण्यकंपतेस्मचराचरम् २८ असंख्या
तान्नृपायस्यसान्नेद्वारगताबभुः ॥ सकथंपितरौहित्वागतश्चसुंदरांस्त्रियम् २९ एवंतक्रंदनंश्रुत्वावीरलोकाःसमाययुः ॥ हेतुभिर्वारयामासुर्बलाद्धृत्वा
तुतत्करैः ३० ॥ ॥ जनाऊचुः ॥ ॥ नवीराःपरिशोचंतिवीरेयुद्धहतेनृप ॥ विश्रांतितंबलाद्धत्वायेनासौनिहतोभवेत् ३१ मृत्युस्तुसर्वजंतूनांसहदेहेनजाय
ते ॥ सोद्यवर्षशतेनापिभविष्यतिनसंशयः ३२ स्वस्यवान्यस्यवाराजंस्तत्रकापरिदेवना ॥ श्रुत्वावाक्यंतुलोकानांतदादेवांतकोऽसुरः ३३ सावधानमना
भूत्वापितरौप्राहधर्मवित् ॥ माशोचतमहंयामिग्रासितुंतंनिजारिपुम् ३४ वदतंक्कनिवासोस्ययेनबंधुर्हतोमम ॥ तंहत्वासुखमेष्यामिबंधुंयास्यामिवामृतः ॥
३५ ममभ्रूभंगमात्रेणकंपतेभुवनत्रयम् ॥ मयिक्षुब्धेतुकस्त्राता लोकानांपितरौयतः ३६ ॥ ॥ कउवाच ॥ श्रुत्वादेवांतकवचआश्वस्तौतावुभौतदा ॥ शो

कसागरमग्नौतावुद्धृतौतेनवाक्यतः ३७ ऊचतुःपरमंवाक्यंज्येष्ठपृष्टौसविस्तरम् ॥ काशिराजेतिविख्यातोराजापरमधार्मिकः ३८ वैवाहिकोमहोत्साहस्त
द्गृहेसमपद्यत ॥ आकारिताःसर्वजनाःकश्यपस्यात्मजोपिच ३९ सबालएवबलवान्विनायकइतिस्मृतः ॥ तेनमार्गेहतोभ्राताधूम्राक्षोममपुत्रक ४०
तस्यप्रत्याम्नायकृतेप्रेषितावीरसंमताः ॥ धावमानाययुस्तेचसहस्रांद्विनिशाचराः ४१ सप्तवर्षेणतेसर्वेनाशितामुनिसूनुना ॥ तेषांप्रत्याम्नायकृतेस्वयं
यातोनरांतकः ४२ अनेकशस्त्रसंपन्नश्चतुरंगबलान्वितः ॥ एकोपिनागतस्तस्मादकस्माद्दृष्टशोशिरः ४३ शोकंकृत्वातवपुरआनीतंतच्छिरोमुना ॥ ॥ कउ
वाच ॥ ॥ इतितद्वाक्यमाकर्ण्यचकंपेरक्तलोचनः ४४ देवांतकश्चोदतिष्ठद्भस्मीवजगत्रयम् ॥ उवाचगर्वमोहेनपितरंवगवत्तरम् ४५ कालंहानिष्येखिल
घ्नंन्युब्जांपृथ्वींविधायच ॥ करिष्येक्रोधदृष्ट्यैवब्रह्मांडंभस्मसात्क्षणात् ४६ इत्युक्त्वाक्ष्वेडितंकृत्वाजगर्तीकंपयन्निव ॥ देवाधिकारेयेदैत्यास्तान्सर्वाना
जुहावच ४७ नत्वातौपितरौवाक्यंप्रोचेदेवांतकस्तदा ॥ इदानींमुनिपुत्रंतमानयिष्यामिसत्वरम् ४८ सहैवतेनदास्यामिमूर्ध्न्यस्यचधनंजयम् ॥ एवमुक्त्वा
बलात्सर्वेउड्डीयसहसाचते ४९ देवांतकोप्यसंख्याताविहंगाइवशीघ्रगाः ॥ काशिराजपुरींप्राप्यवेष्टयेयुःसमंततः ५० कोलाहलोमहानासीद्रजसाच्छादि
तादिशः ॥ नप्रकाशोरवेरासीत्पौराश्चचुक्रुशुर्भृशम् ५१ नरांतकेहतेद्वित्रिदिवसानैवयद्गताः ॥ तत्कथंपुनरायातःप्रलयोत्रजनापहः ५२ कोयंप्रचंडदेहेनदु
ष्प्रेक्ष्योवैसमागतः ॥ क्षमःकालंकलयितुंआक्षितुंवाजगत्रयम् ५३ दैत्यानांपरिखाजाताःप्रेषितादैत्यपुंगवाः ॥ हतास्तेनाथतेसर्वेगंतुंमार्गोनविद्यते ५४ एवं
वदत्सुपौरेषुतावद्दूताःसमागताः ॥ काशिराजंकथयितुंदेवांतकसमागमम् ५५ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेनगरीनिरोधोनामद्विषष्टितमोऽध्यायः ॥
६२ ॥ दूताऊचुः ॥ ॥ देवांतकोमहारौद्रोरौद्रैर्दैत्यैःसमावृतः ॥ असंख्यैर्विविधैःकालभीतिदैर्व्योममस्तकैः १ वयंतद्दर्शनभ्रांताःपलाय्यत्वामुपागताः ॥ न
गरींवेष्टिताराजन्यत्करिष्यसितत्कुरु २ ॥ ॥ कउवाच ॥ ॥ श्रुत्वादूतमुखाद्राजावृत्तांतंसमकंपत ॥ अतिम्लानतयायातोबालकंसविनायकम् ३ क्रीडंतं
शिशुमध्येतंवृत्तांतंसर्वमब्रवीत् ॥ राजोवाच ॥ परब्रह्मन्नमस्तेस्तुलीलामानुपविग्रह ४ चराचरगुरोनानालीलाकरनमोस्तुते ॥ अनेकशोवयंत्रातास्त्वयाबा
लस्वरूपिणा ५ इदानीमपिरक्षास्मानस्माद्देवांतकात्प्रभो ॥ ॥ कउवाच ॥ ॥ एवंसंप्रार्थितस्तेनकाशिराजेनबालकः ६ देहंकृत्वाविशालंससिंहारूढोधनु
ष्करः ॥ सिद्धिबुद्धियुतोगर्जन्नादयन्गिरिकंदराः ७ तेजसालोपयन्सूर्यंवमन्नग्निकणान्मुखात् ॥ बाणंखड्गंचपरशुंधनुर्हस्तेविधारयत् ८ नभोमार्गेणनगराद्ब
हिर्यातोविनायकः ॥ क्ष्वेडितेनसदैत्यानांमनांसिपरिकंपयन् ९ ददर्शदुष्टसैन्यंतंदेवांतकममर्षणं ॥ असंख्यातास्तदादैत्याबभ्रमुःशलभाइव १० दृष्ट्वानानाविधं
सैन्यंसिद्धिंप्रोवाचविघ्नराट् ॥ एकाकिनानसाध्येयंसेनानानाविधायतां ११ स्वकीयासाधितुंदैत्यंकुरुशीघ्रमिदंवचः ॥ कउवाच ॥ ततःसिद्धिर्नमस्कृत्वापरमात्मां
घ्रिपंकजं १२ देवांतकंयोधयितुंययौचाथजगर्जच ॥ निनादैःसर्वजंतूनांदैत्यानांभयदायिनी १३ चचालशेषोद्यौश्चापिपर्वतावृक्षसंचयाः ॥ तद्गर्जितमहारावैः

प्रतिशब्दैरनेकशः १४ सस्माराचाष्टसिद्धीःसाताश्चयातामुदान्विताः ॥ अणिमाप्रथमंप्राप्तागरिमातदनंतरं १५ महिमालघिमाचापिसंप्राप्तेतदनंतरं ॥
प्राप्तिश्चैवतुप्राकाम्यंवशित्वंचसमाययौ १६ ईशित्वंतदनुप्राप्तंतासांसैन्यमभूदनु ॥ गजाश्वरथपादातंनानायुधविराजितं १७ वर्षाकालेयथानद्यः
सागरंयांतिसर्वतः ॥ तथासैन्यंदशदिशोयातिस्मयुद्धलालसं १८ असंख्यवाद्यनिर्घोषंवीरशब्दैर्नदद्भृशं ॥ कृतांतसदृशान्वीरान्भूगोलप्राशनोत्सुकान्
१९ दृष्ट्वादेवांतकःस्वांतांचिंतयामासचेतसि ॥ बालंक्षणेनजेष्यामीत्येवंयुद्धायचागतः २० अकस्मादीदृशंसैन्यंकुतएतद्विनिर्गतम् ॥ दृष्टंविचित्रसामर्थ्यं
बालस्यमाययाकृतम् २१ मरिष्येमारयिष्येवाजीवस्त्याज्योयशोनहि ॥ एवंवदतिदैत्येंद्रेसेनान्यःप्राब्रुवन्वचः २२ वयंयोत्स्यामहेसैन्यैरक्षपृष्ठंजयोभवेत् ॥
पीत्वावाक्यामृतंतेषांहृष्टोदेवांतकोब्रवीत् २३ सम्यगुक्तंमहावीरायांतुयुद्धाययामिच ॥ जयोस्तुममवाक्येनभवतांपुण्यकर्मणां २४ आशिषंपरिगृह्यै
वनमस्कृत्वासुरांतकम् ॥ कर्दमोनागदैत्योथययौव्यूहंरथाकृतिं २५ दीर्घदंतोययौचक्रव्यूहंपरमदुर्जयम् ॥ गरिम्णावीरमुख्यैस्तुरचितंवीरमोहनम् २६ प्र
थिम्णापालितंव्यूहंतालजंघोययौमुदा ॥ महिम्नारचितंव्यूहंयक्ष्मनामासमाययौ २७ प्राप्त्याविरचितंव्यूहंययौघंटासुरोमहान् ॥ प्राकाम्यरचितंव्यूहं
रक्तकेशोबलान्वितम् २८ कालांतकोययौव्यूहंवशितारचितंपरम् ॥ ईशितारचितंव्यूहंदुर्जयोभिययौबली २९ एतेषांवचसाऽशक्यंवक्तुंसामर्थ्यमंजसा ॥
अष्टौव्यूहानयुध्यंतदैत्याअष्टौमहाबलाः ३० परस्परंविनिघ्नंतःपरान्परमदुर्जयान् ॥ शरधाराविमुंचंतोजलधारायथाघनाः ३१ चिच्छिदुरुत्तमांगानिशस्त्रै
र्नानाविधैर्भटाः ॥ निहतैश्चतदावीरैर्गजैरश्वैर्वसुंधरा ३२ ऊरुभिर्जानुभिर्हस्तैश्छिन्नैरासीत्सुदुर्गमा ॥ खेटानिपुरतःकृत्वाजघ्नुःपादांश्चकेचन ३३
उड्डीयगिरिवत्केचित्पेतुर्वीरेषुचूर्णितुम् ॥ रजोंधकारेनाज्ञासीत्स्वीयःस्वीयंपरस्परम् ३४ ततोनिपेतुःसहसादैत्यादेवहताभुवि ॥ देवाहताश्चदैत्याश्चकुर्व
तेभैरवान्रवान् ॥ ३५ ॥ कबंधायुयुधुस्तत्रमुमुदुश्चाप्सरोगणाः ॥ शुशुभुःशस्त्रसंघातैःपुष्पिताःकिंशुकायथा ॥ ३६ ॥ शुक्रस्तत्रमृतान्दैत्यानुज्जीवय
तिविद्यया ॥ अष्टौव्यूहाययुश्चितांमृतशेषाबलान्विताः ३७ इशितायैततःप्रोचुःसर्वेतेशुक्रचेष्टितम् ॥ तस्याःक्रोधवशादेकाकृत्यास्यान्निर्गतापुरः ३८
कटाक्षेणतयाज्ञप्ताभार्गवंतुनिजेभगे ॥ कृत्वातदांतर्दधेसापश्चात्तत्याजबर्बरे ३९ तेनबर्बरदेशीयंतंवदंतिमनीषिणः ॥ ततोमुमुदिरेदेवायुयुधुश्चबला
न्विताः ४० निहन्यमानादैतेयाःपलायनपरायणः ॥ केचित्त्वशरणंप्राप्तारक्षरक्षेतिचापरे ४१ प्रत्यूचुर्देवगंधर्वानणिमादिकृतांस्तदा ॥ कदाविजयिनोदै
त्याःकदाचिद्देवतागणाः ४२ अभवन्युद्धनिरताःपरस्परजयैषिणः ॥ द्वंद्वयुद्धमभूद्घोरंतस्मिन्नुपरतेयुधि ४३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेशुक्र
त्यागोनामत्रिषष्टितमोध्यायः ॥ ६३ ॥ ॥ कउवाच ॥ ॥ कालांतकेनदैत्येनप्राकाम्येनपरस्परम् ॥ कालांतकोविजयतेप्राकाम्यंयावदेवहि १ ताव
त्सहाय्यमकरोद्वशित्वंवेगवत्तरम् ॥ तयाजाग्रीरिशृंगंतन्मस्तकेहस्तलाघवात् २ तेनकालांतकोभूमौसहसानिपपातह ॥ रुधिराक्तंद्विधाभूतंदृष्ट्वाकालांतकंत

दा ३ हाहाकारोमहानासीद्दैत्यसेनाचरेष्वथ ॥ मुसलोनामदैत्येशोमल्लश्चैवापरोसुरः ४ महिमाचैवचत्वारोययुर्युद्धायसादराः ॥ प्राकाम्येनयुयुधिरेनेकश
स्त्रप्रहारिणः ५ असंख्याताहतादेवाःपतिताभग्नवृक्षवत् ॥ असृग्जलप्रवाहिन्यआसन्नद्यःसहस्रशः ६ ईशिताचवशित्वंचविभूतिश्चययुस्ततः ॥ साहाय्यं
चक्रिरेतस्यप्राकाम्यस्यतदायुधि ७ चत्वारःपर्वतास्ताभिश्चतुर्ष्वपिनिपातिताः ॥ तैश्चतेचूर्णिताःसर्वेगताःस्वर्गंसुदुर्लभम् ८ अणिमातुशिखांधृत्वाकर्दमस्य
रणेबलात् ॥ अपाटिसहसाभूमौशतधासव्यशीर्यत ९ अस्रवद्रुधिरंवक्त्राच्छुठन्प्राणान्जहौतदा ॥ महिमालघिमाचैवगरिमावृक्षसंचयान् १० यक्ष्मासु
रेतालजंघेदीर्घदंतेन्यपातयन् ॥ ततोघंटासुरोरक्तकेशोदैत्योथदुर्जयः ११ आययुःसर्वसैन्यानिनिश्वसंतोमहाबलाः ॥ तैराहतंबलंदृष्ट्वावशितासिद्धिरुद्ययः ॥
१२ मुष्टिघातैर्निजघ्नुस्ताभालदेशेदृढंतदा ॥ तेपिभूमौनिपतिताःशतधाचूर्णितास्तदा १३ ततोजगर्जुःसर्वास्ताजयंलब्ध्वास्वशक्तितः ॥ विनायकोविज
यतेसर्वास्ताएवमूचिरे १४ अन्येक्षुद्रतरादैत्यास्तेपिताभिर्विनाशिताः ॥ पुनःसर्वेदैत्यसिंहाःसिद्धिसेनांव्यनाशयन् १५ कोलाहलोमहानासीत्सेनयो
रुभयोरपि ॥ हंतुनिघ्नंतुबध्नंतुसावधानाभवंत्विति १६ प्रादुरासीत्ततश्चाग्निःशस्त्रसंघट्टसंभवः ॥ अन्नेशस्त्रेमल्लयुद्धंचक्रुर्वीरारुषान्विताः १७ पुन
श्चानियतंयुद्धंपरस्परविनाशनं ॥ अभवत्तुमुलंसूर्यस्ततश्चास्तमयंगतः १८ अंधकारेणमहतादिशोव्याप्ताःसमंततः ॥ ततोदिव्यौषधीर्गृह्यनिजघ्नुस्तेपरस्परम्
१९ अहोरात्रत्रयंघोरंयुद्धमासीन्निरंतरम् ॥ असृङ्नद्योदशदिशोयातावीरवहास्तदा २० खेटकूर्माःखड्गझषाःशिरःकमलशोभिताः ॥ गजग्राहाःप्रेतकाष्ठाः
केशशैवलराजिताः २१ भीरुभीतिकरावीरमहाहर्षविवर्द्धनाः ॥ ततोजयत्सुदेवेषुसर्वदाबलशालिषु २२ देवांतकोययौचिंतांतर्कयामासचेतसि ॥
येनसर्वेदेवगणाजितास्तेस्वप्रभावतः २३ क्वेयंतत्रबालमायासामान्याजनमोहिनी ॥ अष्टसिद्धीःसर्वसैन्यमिदानींनाशयाम्यहम् २४ धृत्वाविनायकं
बालंगमिष्यामिस्वमालयम् ॥ एवमुक्त्वाखड्गपाणिःस्वनेनापूरयन्दिशः २५ आययौपरसैन्यानिनिघ्नन्खड्गेनसर्वशः ॥ भयेनमूर्छितादेवानिपेतु
र्धरणीतले २६ स्मृत्वाविनायकंदेवंजहुःप्राणांस्तुकेचन ॥ असृङ्नदीवहाःकेचित्केचित्स्वर्गंगताःसुराः २७ केचिद्दैत्यंविलोक्यैवजहुर्जीवितमात्मनः ॥
ततोभग्नादेवसेनापपालचादिशोदश २८ सोपिदैत्यःखड्गपाणिर्निघ्नन्पृष्ठेजवानताम् ॥ गरिमातन्निरीक्ष्याथपर्वतंवृक्षसंकुलम् २९ तत्याजदैत्यदेहेस
खड्गेनशतधाच्छिनत् ॥ ततोष्टसिद्धयःक्षुब्धास्तत्यजुःपर्वतान्बहून् ३० चिच्छेदत्वरयातान्सखड्गाघातेनलाघवात् ॥ उड्डीयमहिमातस्यस्कंधेस्थि
त्वातमाददे ३१ खड्गंदैत्यकराच्छीघ्रमंतर्द्धानंययौतदा ॥ बलाच्चिक्षेपतंखड्गंतस्यदैत्यस्यमस्तके ३२ सएवशतधाजातोनतुमूर्द्धातदद्भुतम् ॥ शरवृष्टिंतदा
दैत्योभग्नपृष्ठश्चकारह ३३ एकैकस्यांदशदशपंचसप्तशरानसौ ॥ क्षिप्त्वाव्याकुलयांचक्रेततस्ताभुविपेतिरे ३४ ततोदेवायुयुधिरेपतितास्वष्टसिद्धिषु ॥ मु
हूर्तात्सावधानास्तायुयुर्देवंविनायकम् ३५ तमुदंतंपरिज्ञायबुद्धिःप्रोचेविनायकम् ॥ कथंविचारस्तस्यस्याद्यत्रबुद्धिर्नदृश्यते ३६ पराजिताःसिद्धयस्ते

देह्यनुज्ञांव्रजाम्यहम् ॥ योद्धुंदैत्येनतेनाथपौरुषंचास्यलक्षये ३७ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ७ ॥
कउवाच ॥ ॥ श्रुत्वाबुद्धिवचोदेवोहर्षंप्राप्यजगादताम् ॥ ॥ देवउवाच ॥ ॥ गच्छयुध्यस्वदैत्येनजहितंयशआप्नुहि १ एवमुक्त्वासुवासांसिददौत
स्यैविनायकः ॥ साचनत्वातदादेवंययौदैत्यरणंप्रति २ तस्याःक्ष्वेडितशब्देनकंपितंभुवनत्रयम् ॥ वदनान्निर्ययौतस्याएकाशक्तिर्गरीयसी ३ जटिलाविकृता
स्याचजगद्भक्षणलालसा ॥ विशालाभ्यांतुनेत्राभ्यांत्यजंतीज्वालसंचयान् ४ दहंतीदैत्यसेनांसाययौसाचपपालह ॥ दर्शनेपतितादैत्यास्तस्याःकेचिद्ग
तासवः ५ अन्येत्वतर्कयन्नक्वाद्यगंतव्यंक्वसुखंभवेत् ॥ केचिदाहुर्धावधावदेवांतकमृतावयम् ६ एवंकोलाहलंश्रुत्वाययौदेवांतकःपुरः ॥ सज्जंकृत्वाधनुःशीघ्रं
शरानाशीविषोपमान् ७ ससर्जतस्यागात्रेषुदर्शयन्पाणिलाघवम् ॥ आच्छाद्यभानुंतन्मूर्ध्नाबाणजालैस्तथाविधैः ८ साप्रसार्यमहद्वक्त्रंबिसवद्गिलतेशरा
न् ॥ तूणीरास्तस्यदैत्यस्यसर्वेरिक्तास्तदाभवन् ९ नतस्यास्त्वभिरभवद्राक्षसस्येवमानुषैः ॥ देवांतकंक्षीणशक्तिंदृष्ट्वासासैन्यमाययौ १० भक्षयामासता
न्दैत्यान्कांश्चिद्धस्तादपातयत् ॥ कांश्चिद्दलेविनिक्षिप्यचूर्णयामासचापरान् ११ असंख्यकोटीदैत्यानांभक्षिताश्चूर्णिताहताः ॥ चूर्णयंतीपदाघातैःकांश्चिद्दे
वांतकंययौ १२ तमुवाचतदासातुविशमेभगगह्वरम् ॥ यत्रतेशेरतेदैत्यामातुर्गर्भगताइव १३ येभक्षितामृतास्तेमेजठरेजीर्णतांगताः ॥ तद्वीक्ष्यासपपा
लाशुमूत्रविड्बंधविह्वलः १४ यत्रयत्रप्रलीनोभूत्तत्रतत्रापिसाययौ ॥ बभ्रामस्वर्गलोकान्सपातालानिदिशोदश १५ ततःशिखांसमाक्रम्यधृत्वातंप्राक्षि
पद्भगे ॥ तयासहततोबुद्धिर्विनायकमुपाययौ १६ ननामतंपुरस्कृत्यमदघूर्णितलोचनाम् ॥ पातयंतीमुभयतःस्तनाघातान्वनस्पतीन् १७ शरधाराश्चवन
वत्स्रवंतीमंदगामिनी ॥ निराकरोत्करालांतांदृष्ट्वादेवोविनायकः १८ निराकृतायांतस्यांतद्भगाद्दैत्योपतद्भुवि ॥ सोपिदुर्गंधिरित्येवदूतैःसंत्याजितोबहिः
१९ सतुसंज्ञांसमासाद्यस्नात्वातूष्णींगृहंययौ ॥ व्रीडितोधोमुखश्चिंतांयातोम्लानोतिदुःखितः २० बुध्यानिवेदितासातुननामतंविनायकम् ॥ तांदृष्ट्वाजहसु
र्बिभ्युर्मम्लुःपेतुश्चकेचन २१ ततःसैनंजगादाशुभक्षितादैत्यवाहिनी ॥ सोपिदेवांतकःपायौनिक्षिप्यस्थापितोमया २२ इदानींवसतिस्थानंदेहिदेव
दयानिधे ॥ ॥ देवउवाच ॥ ॥ वंचयित्वागतोदैत्योगृहंस्वंदैत्यनाशिनि २३ तवापिपौरुषंज्ञातंशक्रादिभ्योधिकंमया ॥ विशवक्त्रंममैवत्वंविश्रांतिंतत्र
गच्छच २४ अहंतंसाधयिष्यामिमाचिंतांकर्तुमर्हसि ॥ ॥ कउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंदृष्ट्वावक्त्रंविवेशसा २५ सुष्वापपरमप्रीतामातुरंकेयथार्भ
कः ॥ उदरेदेवदेवस्यसर्वलोकनिवासिनि २६ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेबुद्धिविजयोनामपंचषष्टितमोऽध्यायः ६५ ॥ कउवाच ॥ ॥ शार
दारौद्रकेतुश्चरात्रौदेवांतकंसुतम् ॥ एकाकिनंनिरीक्ष्यैनमालिंग्यचसमूचतुः १ आच्छादयंतंवदनंव्रीडितंभ्रष्टशविह्वलम् ॥ अभाषमाणंकंपंतंवातयुक्तमिवद्रु
मम् २ पितोवाच ॥ किमर्थंवदसेनैवस्वामवस्थांतुमूकवत् ॥ ईप्सितंसाधयिष्यामियत्नात्त्रैलोक्यदुर्लभम् ३ कउवाच ॥ पीत्वावागमृतंतस्यसावधानमनाः

सुतः ॥ उवाचपितरंमातुर्निकटेनिर्विशंकया ४ ॥ पुत्रउवाच ॥ भवदाज्ञांगृहीत्वैवयोद्धुंयातोविनायकम् ॥ शरैराशीविषाकारैरसंख्यैर्नाशितासुराः ५
प्रवर्तिताअसृङ्नद्योभग्नासेनातुकाश्यपी ॥ ततएकामहाकृत्यादरीवक्त्रानभःस्पृशी ६ करालकेशीपातालच[रणा]पर्वतस्तना ॥ आगतादेवसेनायारक्ष
णार्थंममांतिकम् ७ खड्गेननिहतासातुविव्यथेनैवकिंचन ॥ निक्षिप्तासर्वसेनामेतयातातदरीमगे ८ अक्षयंत्येवसर्वाणिशस्त्राणिशरसंचयान् ॥ सा[...]
गेविनिक्षिप्ययातादेवंविनायकम् ९ स्निग्धत्वात्तद्भगस्याहंचलितःपतितोभुवि ॥ महांधकारेनज्ञातःपलाय्यगृहमागतः १० स्नात्वानदीजले[...]
तोधोमुखस्ततः ॥ ॥ कउवाच ॥ ॥ एवंपुत्रवचःश्रुत्वारौद्रकेतुर्जगादतम् ११ उपायंतेवदाम्येकंनचिंतांकर्तुमर्हसि ॥ ततोमुहूर्तमालोक्यददौतस्मै
महामनुं १२ अघोरस्यसबीजंतमुवाचजनकःपुनः ॥ शिवंध्यात्वाचसंपूज्यकुर्वंनुष्ठानमुत्तमम् १३ होमंचतर्पणंविप्रभोजनंचदशांशतः ॥ शिवेप्रसन्नेकुंडाद्धि
तुरंगोनिःसरिष्यति १४ तमारुह्यव्रजरणंजयंप्राप्स्यसिनिश्चितम् ॥ कउवाच ॥ एवंपितुर्वचःश्रुत्वाप्राहपुत्रोमुदाचतम् १५ उपदेशःकृतःसम्यग्वि
धिमस्यब्रवीतुमे ॥ ततोलोकंनिवार्यैवजग्मतुर्गृहमध्यतः १६ उभावारक्तवसनौरक्तचंदनचर्चितौ ॥ रक्तपुष्पाणिसंनीयशिवंपुपूजतुस्तदा १७ अनुष्ठानंबहु
दिनंचक्रतुःपरमादरात् ॥ अनुष्ठानेसमाप्तेतुकुंडंचक्रतुरादरात् १८ षट्कोणंलक्षणैर्युक्तंमेखलायोनिसंयुतम् ॥ तत्राग्निंविधिवत्स्थाप्यपात्राणिचयथाविधि
१९ पंचप्रेतासनगतौजुहुवुस्तौहविस्तदा ॥ सजानुभागमांसानिछित्त्वाछित्त्वाचभक्तितः २० असृग्घृतेनमांसेनतृप्तोभूत्पावकस्तदा ॥ दशांशहोमेजातेतु
पुपूजेवह्निदेवताम् २१ बलिदानंचकाराशुछित्त्वापुत्राशिरस्तदा ॥ तेनपूर्णाहुतिंचक्रेविससर्जाथपावकम् २२ ईश्वरस्यप्रसादेनपुत्रोस्यपूर्ववद्बभौ ॥ ब्राह्म
णान्भोजयामासतर्पणांतेयथाविधि २३ ततोरात्र्यांव्यतीतायांउदितेचदिवाकरे ॥ ददर्शतुरगंकृष्णंस्निग्धांगंबलवत्तरम् २४ मनोजवंहेषितेनकंपयंतंजग
त्त्रयम् ॥ पुपूजपरयाभक्त्यानीराज्यैनंयथाविधि २५ अलंकृत्यालंकरणैर्मणिमुक्तामयैःशुभैः ॥ नमस्कृत्यद्विजान्सम्यक्पितरंपरिगृह्यच २६ आशिषोथ
समारुह्यतमश्वंससुरांतकः ॥ शेषसेनांसमादायययौशेषंप्रकंपयन् २७ शस्त्रास्त्रैःकवचैःशूलैर्भातिसेनाधनुःशरैः ॥ आससादरणस्तंभंतयासहसुरांत
कः २८ क्रंदत्सुसर्वसैन्येषुसंत्रस्तादेववाहिनी ॥ व्याप्तेतुरजसाव्योम्निनप्राज्ञायतकिंचन २९ पुनरप्यागतोदैत्यःसद्यःसेनाविघातकः ॥ सिद्धिसेनाचरा
श्चैवप्राद्रवन्दुःखिताभृशम् ३० दृष्ट्वारणागतंतंतुसिद्धिसेनासमुत्थिता ॥ हेषाभिःसिंहनादैश्चनादयंतीदिगंतरम् ३१ ततःशस्त्रप्रहारैश्चविजघ्नुरितरेत
रम् ॥ सहस्वप्रहरामीतिप्रबोध्यजघ्नुरोजसा ३२ भुविजानुंविनिक्षिप्यशरानाशीविषोपमान् ॥ आकर्णंधनुराकृष्ययुयुधुस्तेपरस्परम् ३३ खेटानिचां
तेरकृत्वायुयुधुश्चापरेतदा ॥ स्मृत्वापूर्वप्रहारंचपरिजघ्नुश्चकेचन ३४ पूर्ववैरमनुस्मृत्यरिपूंश्चक्रेविरूपिणः ॥ कोपिवीरश्रियायुक्तोरिपुंकेशेषुचाग्रहीत्
३५ पार्ष्णिघातैर्मुष्टिघातैःपातयामासभूतले ॥ कौचिन्मत्तौशिरोघातंजघ्नतुरितरेतरम् ३६ ततोभग्नांदैत्यसेनांदृष्ट्वासतुसुरांतकः ॥ अश्वंसंप्रेष[...]

ससेनांसिद्धिविनिर्मिताम् ३७ अश्वहेषांसमाकर्ण्यकेचिन्मूर्छांगताभुवि ॥ पतिताअश्वचरणैश्चूर्णिताश्चापरेसुराः ३८ त्रिशूलेनहताश्चान्येखड्गेनचतथापरे ॥ बा
णजालैरनेकैश्चपातयामाससैसुरान् ३९ सर्वस्मिन्हन्यमानेतुस्वसैन्येसिद्धयस्तदा ॥ पलायनंसमालंब्ययुःसर्वाविनायकम् ४० इतिश्रीग० उ० सिद्धिपराजयो
नामसप्तषष्टितमोध्यायः ६६ ॥ कउवाच ॥ सतज्ज्ञात्वामहाश्चर्यंचकारनिजचेतसि ॥ ततोविनायकःक्रोधात्सिंहारूढोरणोत्सुकः १ स्वगर्जितेनचतदागर्जयन्गग
नंदिशः ॥ कंपयन्सर्वलोकानांमनांसिपर्वतानपि २ ययौवेगेनमहतादेवान्तकसमीपतः ॥ प्रहस्यतमुवाचाथदैत्योदेवान्तकस्तदा ॥ दैत्यउवाच ॥ कथंयातःशु
ष्कतालुर्नवनीतादनक्षमः ॥ युद्धायबालनस्थेयंगच्छमातुःस्तनंपिब ३ अदित्यांकश्यपाज्जातःकथंमूढत्वमागतः ॥ यतोदेवांतकेनाद्ययोद्धुमिच्छसिबालक ४ का
लोबिभेतिमांदृष्ट्वावृथात्वंमर्तुमिच्छसि ॥ अतिकोमलगात्रत्वाद्ग्रासमात्रंभविष्यसि ५ ॥ कउवाच ॥ इतिदैत्यवचःश्रुत्वाक्रोधसंरक्तलोचनः ॥ विनायकः
प्रहस्याहवमन्वङ्गाद्धुताशनम् ६ ॥ ॥ देवउवाच ॥ क्षीबोसिमद्यपानेनप्रायोवासन्निपातवान् ॥ असंबद्धंयुक्तिहीनंवल्गसेमूढभावतः ७ वह्निर्दहतिसर्वंहि
लघुर्वायुसमीरितः ॥ त्वद्वाक्यतुन्नस्त्वांहन्यांदैत्याधमनबुध्यसे ८ इदानींत्यजबुद्धिंतांनांतकोविद्यतेमम ॥ त्वदर्थमवतीर्णोहंब्रह्मभूतःसनातनः ९ स्थाणो
र्वैरस्यगर्वेणकृतंतेसर्वपीडनम् ॥ अवधिंतस्यसंप्राप्तंबुद्धिहीननबुध्यसे १० त्रैलोक्यपीडयापापंयज्जातंतवदुर्मते ॥ अलंतेकत्थनेनाद्यदर्शयस्व
स्वपौरुषं ११ शक्तिपायोर्विनिर्गत्यकोवावक्त्रंप्रदर्शयेत् ॥ सहस्वप्रहरस्वाद्ययदियुद्धंत्वमिच्छसि १२ श्वोभाविनंमृत्युमद्यमूढभावात्त्वमिच्छसि ॥ कउवा
च ॥ ॥ एवमाभाष्यतंदैत्यंसज्जंचक्रेधनुःप्रभुः १३ नरांतकर्गतिंतस्यदातुमिच्छन्विनायकः ॥ टणत्कारेणधनुषश्चकंपेभुवनत्रयम् १४ आकर्णज्या
मथाकृष्यबाणंदैत्येससर्जह ॥ दैत्येनशतधाभिन्नःसबाणःपतितोभुवि ॥ १५ ॥ ततोदैत्योधनुःसज्यंकृत्वाचिक्षेपसायकान् ॥ धनुषस्तस्यशब्देनविनेदुःपर्व
तादिशः १६ हुंकारेणचतान्बाणान्पातयामासविघ्नराट् ॥ पुनर्विनायकोबाणान्बहूंश्चिक्षेपदैत्यपे १७ एकेनमुकुटंतस्यशरेणकर्णकुंडले ॥ भूमौन्य
पातयद्देवोबाहूबाभ्यांबिभेदच १८ ललाटंसायकेनैवततोदैत्योरुषान्वितः ॥ चचर्वदंतान्नेत्रेचविस्फार्यान्यान्शरान्बहून् ॥ १९ ॥ छादयन्गगनंकाष्ठा
विससर्जविनायकम् ॥ निरास्यैकेनबाणेनखमध्येतान्विनायकः २० स्वयंचक्रेमंडपंसक्षणाद्बाणमयंविभुः ॥ अंधकारेघोरतरेयुयुधातेपरस्परम् ॥ २१ ॥
शरवृष्ट्याबाणवृष्टिंनिजघ्नतूरुषान्वितौ ॥ शतशस्तौनिराकृत्यबाणवृष्टीउभावपि २२ ॥ ततोदैत्योमहामंत्रंजप्त्वाष्टशतसंख्यया ॥ मंत्रयामासतेनाशुवारणा
स्त्रेणसायकम् २३ तस्याजाथप्रादुरासन्वारणाःकोटिशस्ततः ॥ चतुर्दंतागिरिनिभामेरुमंदरचूर्णिनः २४ येषांमदवहानद्यःप्रादुरासन्समंततः ॥ येषां
बृंहितमात्रेणनादितंभुवनत्रयम् ॥ २५ ॥ यथाघनानांवर्षासुगर्जितेनमहामुने ॥ नाशयामासुरनिशंदेवसैन्यानितेगजाः २६ धावतांपृष्ठलग्नास्तेगजायां
तिदिशोदश ॥ पादाघातैश्चहस्तैश्चदंताग्रैर्वीरघातिनः ॥ २७ ॥ सेनायाःकदनंदृष्ट्वासिंहास्त्रंप्राक्षिपद्विभुः ॥ ततःसिंहाःप्रादुरासन्शतशोथसहस्रशः ॥

२८ तेषांगर्जितशब्देनगजानिपतिताभुवि ॥ सिंहाविदारयामासुर्गजगंडस्थलानिते २९ सिंहनादैर्बृंहितैश्चदैत्यशब्दैरनेकशः ॥ त्रैलोक्यंकंपितमभूद्देवाः सर्वेविसिस्मिरे ॥ ३० ॥ उड्डीयोड्डीयसिंहास्तेगजकुंभेषुपेतिरे ॥ एवंतेनिहताःसर्वेकरिणःसिंहसंचयैः ॥ ३१ ॥ विरेजुरिंद्रनिहतावज्रेणेवमहीधराः ॥ ततःसिंहाययुर्दैत्यान्भक्षयंतोदिशोदश ३२ निहतेसर्वसैन्येतुचिंतामापसुरांतकः ॥ अयंबालोपिबलवान्दृश्यतेकश्यपात्मजः ३३ इदानींदर्शयिष्येस्ययमस्यसदनंध्रुवम् ॥ एवमुक्त्वापुनर्बाणंमंत्रयामासदैत्यराट् ३४ योजयामासधनुषिशार्दूलप्रसवंतदा ॥ आकर्णधनुराकृष्यमुमोचदेववाहिनीं ३५ बाणःसचययौशीघ्रंनादयन्गगनंदिशः ॥ यत्पुंखवायुनाअस्त्राणिपेतुर्वृक्षसंचयाः ३६ प्रादुरासन्ननेकाश्चततःशार्दूलसंचयाः ॥ सिंहांस्तेभक्षयामासुःसिंहास्तेंतर्हितास्ततः ३७ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेअस्त्रयुद्धंनामसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ कउवाच ॥ ॥ ततोदैत्योबाणयुगंमंत्रयामाससादरम् ॥ निद्रास्त्रेणतदाचैकंगंधर्वास्त्रेणचापरम् १ वामजानुंपुरःस्थाप्यज्यामाकृष्यससर्जतौ ॥ तयोःशब्देनसहसाचकंपेभुवनत्रयम् ॥ २ एकःसैन्येनिपतितोपरोदेवसमीपतः ॥ ततस्तालामृदंगाश्चगंधर्वाप्सरसस्तथा ३ गानन्नृत्यानिचित्राणिपुरोपश्यद्विनायकः ॥ पतितानिचशस्त्राणिनबुबोधकरात्तदा ४ मोहितोमंजुलरवैःकर्तव्यंनाभ्यपद्यत ॥ सैनिकाःसुषुपुःसर्वेनिद्रास्त्रेणविमोहिताः ५ निशामुखेयथाबालाअव्यवस्थंहिशेरते ॥ स्त्रियोपिचाथताःसर्वाःसुषुपुर्विगतत्रपाः ६ देवांतकोपश्यदेवंजहर्षचजगर्जच ॥ ततःसंस्थापयामासगुल्मानिपरितोबहु ७ देवसैन्यस्यमहतोबलीवीरयुतानिच ॥ चक्रेकुंडंत्रिकोणंचभूमिसाधनपूर्वकम् ८ अस्त्रकुंभान्समानीयशतसंख्यान्प्रयत्नतः ॥ स्नात्वापद्मासनंचक्रेनानाप्रेतेषुसादरम् ९ दैत्यान्निहत्यशतशोमांसराशिंमहत्तरम् ॥ चकाराभिचरंदैत्योवह्निंस्थाप्ययथाविधि १० दिगंबरोजुहावाथमांसानिमंत्रपूर्वकम् ॥ सहस्रेतुहुतेपश्चाद्बलिंपूर्णाहुतिंचयः ११ चकारकुंडमध्येसोपश्यच्छाकिंक्षुधातुराम् ॥ नरमांसानितस्यैसददौपातुंचतान्वशान् १२ अतृप्तांतांपरिज्ञायप्रेतानन्यानथार्पयत् ॥ ततःसाबहिरायाताव्योमकेशीभयंकरा १३ विशालगर्तनेत्रातिकरालवदनारुणा ॥ उवाचपरमप्रीतानादयंतीदिशोदश १४ तृप्तास्मिरक्तमांसैस्तेनभयंविद्यतेक्वचित् ॥ तामुवाचाथदैत्योपिपुपूजेभक्तिभावतः १५ उपचारैःषोडशभिःप्रणिपातपुरःसरम् ॥ ततोदिव्यांबरधरोनानालंकारभूषितः १६ देव्याअंकंसमासाद्यजगर्जबलवत्तरं ॥ सोड्डीयतेनसहितानभस्येवास्थिताभवत् १७ नानाशस्त्रधरासोपिधनुर्बाणधरोबभौ ॥ तामुवाचरौद्रकेतुपुत्रःपरमहर्षितः १८ कश्यपस्यात्मजोबालश्चंचलोबहुलंपुरा ॥ इदानीमत्रकिंतेनकर्तव्यंकुचरेणमे १९ इदानींसर्वसैन्यानिनाशयिष्येतवाग्रतः ॥ एवंब्रुवतिदैत्येंद्रेकाशिराजोशृणोद्वचः २० ततोविनायकंराजाबोधयामाससादरम् ॥ ॥ काशिराजोवाच ॥ ॥ भूतभव्यभविष्यज्ञकथंमायांनबुध्यसे २१ गांधर्वींदैत्यरचितांकथंसक्तोसितत्रवै ॥ देवांतकेनाभिचरान्निर्मितांराक्षसीमिव २२ सासैन्यंनाशयिष्यतितेसावधानमनाभव ॥ ॥ कउवाच ॥ ॥ एवंनृपवचःश्रुत्वा

सावधानमनाविभुः २३ बुध्वातज्ज्ञानदृष्ट्यैवसर्वंमायामयंतदा ॥ शरद्वयंविनिष्कृष्यमंत्राभ्यांपरिमंत्र्यच २४ घंटास्त्रेणखगास्त्रेणश्रोत्राकर्षणसंभ्रमात्
विनायकोमुमोचाथतौबाणौवेगवत्तरौ २५ गर्जंतौघनवद्रुक्मपुंखौमारुतवेगिनौ ॥ सहसाच्छादयंतौचसहस्रकरमंडलम् २६ घंटानादःसमभवन्म
हान्सर्वविमोहनः ॥ ततोघंटास्वनान्श्रुत्वाप्रोत्तस्थुःसर्वसैनिकाः २७ सिद्धयःसर्ववीराश्चयुयुधुःशस्त्रपाणयः ॥ अपरस्तस्यसैन्येषुमुक्तोबाणःखगास्त्र
तः २८ ततःखगाःप्रादुरासन्नानारूपामहौजसः ॥ पक्षवातेनतेषांतद्ध्वांतंविलयमागतम् २९ अंधकारंयथासूर्यसारथेरुदयान्मुने ॥ ततस्तेपक्षिणः
सर्वेबभक्षुर्दैत्यसैनिकान् ३० पक्षाघातहताःकेचित्केचिच्चंच्वग्रविक्षताः ॥ केचिद्भीत्यैवपतितादैत्याःप्राणान्विहायच ३१ हाहाकारोमहानासीद्दैत्यसै
न्येषुसर्वशः ॥ ततोदेवांतकोरोषात्खड्गास्त्रंप्राहिणोत्तदा ३२ तस्यध्वनिंसमाकर्ण्यचक्षुभेसैन्यसागरः ॥ दिग्गजाश्चततःखड्गाअसंख्याताविनिःसृताः ३३
वह्निमंतश्चसंघट्टात्सेनयोरुभयोरपि ॥ अग्निदग्धास्तदादैत्यानिपेतुर्धरणीतले ३४ खगाश्चनिहताःकेचित्केचिद्दग्धास्तथाग्निना ॥ अपरेययुरंतर्द्दिदिश
श्चाथचकाशिरे ३५ असंख्यखड्गप्रभयासेनाचक्षुर्महोमुषा ॥ खड्गवृष्ट्याविनिहतादेवाःपेतुर्धरातले ३६ केषांचिद्बाहवश्छिन्नाःकेषांचिन्मस्तकाःक
राः ॥ जठरेजानुभागेचपृष्ठभागेपराहताः ३७ निपेतुर्देवपुंजेषुमृतेषुचगतासवः ॥ अष्टसिद्धिकृताःसर्वाःसेनाएवंविनाशिताः ३८ असृङ्नद्योदशदि
शोयाताःप्रेतवहास्तदा ॥ विनायकस्ततोदृष्ट्वादैत्यस्याद्भुतविक्रमम् ३९ बाणंनिष्काश्यसुदृढंवज्रास्त्रेणाभिमंत्र्यच ॥ आक्रंदनेनमहतादैत्यसैन्येमुमो
चतम् ४० पर्वताश्चद्रुमास्तस्यशब्देनपतिताभुवि ॥ तदस्त्रानलसंयोगाद्दिग्दाहःसमजायत ४१ देदीप्यमानंसहसाच्छादयन्रविमंडलम् ॥ पक्षि
णोनिहतादग्धास्तेजसातस्यकेचन ४२ खंडितंतेनसहसाखड्गास्त्रंतत्सहस्रशः ॥ निर्दहाहतदादैत्यसेनांवज्रैरनेकशः ४३ सहस्रशोनिहन्यंतेएकया
वज्रधारया ॥ यतोयतोगमद्दैत्यस्तत्रतत्रापतच्चतत् ४४ चुचूर्णमस्तकान्पादान्हस्तान्स्कंधानुरूनपि ॥ धरांभित्त्वागतादैत्यास्तानप्यथजघानतत् ४५ एवं
सर्वेहतादैत्यावज्रैस्तीक्ष्णैःसहस्रशः ॥ ततोदेवांतकंजग्मुस्तानिवज्राणिसर्वशः ४६ सोपिबाणंसमादायमंत्रयामासयत्नतः ॥ रौद्रास्त्रेणाथसंयोज्यधनुषःकर्षणे
नतम् ४७ ससर्जपरसैन्येषुशिवनामांकितंशुभम् ॥ नादयन्गगनंसोथदिशश्चविदिशोपिच ४८ वमन्नग्निकणान्दिक्षुप्रलयानलसन्निभः ॥ भूलोकाद्देवलो
काच्चभयाद्याताद्दिशोदश ४९ विनायकस्यसैन्येषुमहाकोलाहलोह्यभूत् ॥ तस्मिन्निपतितेबाणेपुरुषोघोरदर्शनः ५० निःसृतोभीषणमुखस्त्रैलोक्यंग्रासय
न्निव ॥ जटिलोदीर्घहस्तश्चदीर्घपादोमहोदरः ५१ धराधरोव्योमगोष्ठोगिरिजिह्वोभयानकः ॥ वज्रास्त्रंभक्षयामासक्षणात्सपुरुषोमहान् ५२ विनायकं
हंतुकामोययौतस्यांतिकंक्षणात् ॥ ततोविनायकःशीघ्रंब्रह्मास्त्रंसमयोजयत् ५३ मंत्रेणशतसंख्येनसायकेवेगवत्तरे ॥ आकर्णकर्षणाद्देवोमुमोचसहसाचतम्
५४ चकंपेतस्यशब्देनतारेणभुवनत्रयम् ॥ विस्फुलिंगैर्दिशोदग्धानप्राज्ञायतकिंचन ५५ ततोपिपुरुषोजज्ञेतादृशोतिभयानकः ॥ तावुभौयुध्यतोव्योम्नि

परस्परजयैषिणौ ५६ नानाविधंमल्लयुद्धंचक्रतुस्तौमहाबलौ ॥ क्षणेनांतर्हितौचोभौनदृश्येतेथकुत्रचित् ५७ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेअस्त्रयुद्धंनाम
अष्टषष्टितमोध्यायः ॥ ६८ ॥ कउवाच ॥ ततोदेवांतकोतीवविस्मितोतर्कयत्तदा ॥ यथायथामयामायाक्रियतेस्यनिवृत्तये १ तथातथाप्ययंबालोदर्शय
त्येवपौरुषम् ॥ कदायंनिधनंयायात्कदास्वप्स्येगतश्रमः २ इत्येवंचिंतयाविष्टोधनुःसज्यमथाकरोत् ॥ अभिमंत्र्यशरंघोरंविससर्जविनायके ३ ससायको
बाणवर्षमनंतंकृतवान्विभौ ॥ शक्तिंचनिर्ममेघोरांत्रैलोक्यग्राससाहसाम् ४ ददर्शविघ्नराजस्तांतदंकेदैत्यपुंगवम् ॥ वर्षतंशरजालानितीक्ष्णानिसुबहून्यपि
५ ततोष्टसिद्धयःशीघ्रंउड्डीयबलवत्तरम् ॥ दध्रुस्तांसहसाशक्तिमानिन्युस्तांविनायकम् ६ आनीयमानासाहस्तान्निःसृत्याथपलायिता ॥ रोषात्ताभिर्दैत्यप
तिरानायिसकचग्रहात् ७ अणिमानंततोदैत्योजघानमुष्टिनादृढम् ॥ मुष्टिघातंसमासाद्यमूर्च्छितानिपपातह ८ लघिमागरिमाचाथवशिमातंमहासुरम् ॥
यावल्लत्ताप्रहारैस्तुनिजघ्नुस्तावदेवहि ९ दैत्येनविधृतावेगाच्चरणेषुपृथक्पृथक् ॥ यावदास्फालयेत्पृथ्व्यांनिःसृतास्तावदेवताः १० प्राकाम्यंचैवभूतिश्चजघ्न
तुस्तंततोबलात् ॥ पपातभूतलेदैत्योवमन्नग्निंमुखात्ततः ११ क्षणाल्लभ्यततःसंज्ञामारुरोहहयंदृढम् ॥ शस्त्रपाणिर्वायुवेगोनिजघानविनायकम् १२ दृ
ढासिघाताद्देवोथकिंचिन्मूर्च्छामवाप्तवान् ॥ निमेषात्सावधानोभूद्दधावदैत्यनायकं १३ हिरण्यकशिपुंविष्णुर्यथावृत्रंशचीपतिः ॥ शरंचकमलंपाशमंकुशं
चचतुःकरैः १४ बिभ्राणःशुशुभेवीरश्रियापरमयाज्वलन् ॥ गर्जित्वाघनवद्देवोजघानदैत्यपुंगवम् १५ चतुर्भिरायुधैर्वेगान्नचचालतथापिसः ॥ आश्च
र्यंपरमंप्रापदृष्ट्वाशस्त्रंवृथार्थताम् १६ वज्रात्सारतरंमेनेदैत्यदेहंविनायकः ॥ ततोदेवोराक्षसस्यधूम्राक्षस्यमहायुधम् १७ वज्रंसंचूर्णयन्सूर्यमंडलादागतंतुयत् ॥
तदादायाहनत्तेनदैत्यंतच्छतधाभवत् १८ नरोमापिचचालास्यतदप्याश्चर्यमुत्तमम् ॥ ततोनानाशस्त्रघातैर्जघ्नतुस्तौपरस्परम् १९ मस्तकेपृष्ठभागेचहृ
दयेबाहुमंडले ॥ तयोःशस्त्रविघातेनजातोवह्निर्वसुंधराम् २० ददाहनचतौभीतौयुद्धमेवान्वपद्यतम् ॥ निशीथेतमसाप्याप्तोविरामंनसमीयतुः २१ त
तःकृत्रिमदीप्त्यातौपरस्परमयुध्यताम् ॥ ततोमायांरौद्रकेतुश्चक्रेसुरविमोहिनीम् २२ अदितिंसुंदरांकृत्वादैत्यहस्तेन्यवेशयत् ॥ पद्मनेत्रांपीनकुचांकुंकुमारक्त
भालिकाम् २३ मुक्ताहारांसुवलयांदिव्यांशुकविराजिताम् ॥ लावण्यलहरींरुक्मविलसद्दिव्यकंचुकाम् २४ विनायकंनिरीक्ष्यैवरुरोददैत्यहस्तगा ॥ धावधावे
तितंप्राहत्रासिताहंकिमीक्ष्यसे २५ एवंब्रुवत्यादैत्योस्याश्चिच्छेदकंचुकींबलात् ॥ अंशुकंचचकर्षास्यामदेनाविष्टचेतसा २६ उच्चैरुवाचदेवंसाक्वगतापुरु
षार्थता ॥ लोकलज्जाभयान्मांत्वंनिःस्नेहाशुविमोचय २७ विनायकोनिरीक्ष्यैतांबाष्पकंठोरुषान्वितः ॥ नसस्मारविचारंसशस्त्राणिजगलुःकरात् २८
शुशोचममतेयंकथमस्यकरेगता ॥ धिग्जन्मयस्यजननीगतावस्थांदुरत्ययाम् २९ देवानांजननीचैवसंप्राप्तादुष्टसंगतिं ॥ काशिराजोपितंदृष्ट्वाशोचंतं
गणनायकम् ३० स्वयंशुशोचबहुधालोकोपिनगरेस्थितः ॥ ततोदेवांतकोदेवंजगर्हेबहुधातदा ३१ धिग्जन्मपौरुषंतेद्यनप्राणांस्त्यजसेकथम् ॥ निर्लज्जो

सिमुखंलोकेदर्शयस्वेवयोधुना ३२ त्वत्समीपंहनिष्येस्याःशिरःकायात्खलाधुना ॥ कउवाच ॥ इतितंनिष्ठुरंवाक्यंश्रुत्वादेवोविनायकः ३३ त
र्कयामासमनसिसत्यमेववदत्ययम् ॥ प्राणत्यागायकिंकार्यंविषंवापाशबंधनम् ३४ उदरेशस्त्रसंघातःकार्योवामृत्युहेतवे ॥ इत्थंयावच्चिंतयतेदुःखशोक
समन्वितः ३५ तावदाकाशवाणींसशुश्रावचविनायकः ॥ सोवाच ॥ मायेयंरचितादेवदैत्येनदुष्टबुद्धिना ३६ अवधेहिरणंयत्तोभूत्वाजहिनिजंरिपुम् ॥
ततःससावधानोभूज्ज्ञात्वामायामयींतुताम् ३७ जहर्षचमहाबुद्धिर्दैत्यंहंतुंप्रचक्रमे ॥ स्मृत्वाचतद्वरंशंभुदत्तंतस्मैदुरात्मने ३८ उपःकालंविनास
र्वशस्त्रास्त्राणिवृथात्वयि ॥ एवंतस्यवरंज्ञात्वाप्रातर्युद्धायनिर्ययौ ३९ दैत्योपिपुरतोपश्यद्युद्धांतेतंविनायकम् ॥ आरक्तनयनंभ्राजन्मुकुटंकुंडलोज्ज्वलं
४० दंतप्रकाशरुचिरंमुक्तादामविभूषितम् ॥ दिव्यांबरंसुधामानंव्योमस्पृक्पुष्करंविभुम् ४१ दृष्ट्वादेवांतकोरूपंबिभायचविसस्मरे ॥ अर्द्धंनरशरीरंकिंअर्द्धं
गजसमंपरम् ४२ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेएकोनसप्ततितमोऽध्यायः ६९ ॥ ॥ कउवाच ॥ ॥ एवंवदतियावत्सभयभ्रांतःसुरांतकः ॥ ताव
द्देवोदधारैनंउत्संगेलघुबालवत् १ कृत्वापद्मासनंचारुगणेशःस्वप्रभावतः ॥ उवाचचैनंदैत्येंद्रंवरंस्मरनिजंशुभम् २ सदैत्योरदनंचास्यधृत्वाहस्तद्वयेनह ॥
दोलयामासदेहंस्वंअंतरिक्षेमुहुर्मुहुः ३ यावत्पपातभूपृष्ठेभंक्त्वादंतंसुरांतकः ॥ तावद्दधारतंदेवःस्वदंतंलाघवाद्विभुः ४ अहनत्तेनदंतेनमस्तकेतंसुरांतकम् ॥
जगर्जचमहारावैर्गर्जयन्विदिशोदिशः ५ चालयन्पृथिवींसर्वांपातालान्यखिलानिच ॥ द्विजाघातेनशतधाकारिदेहोस्यतत्क्षणात् ६ असृग्वृष्टिःप
पाताशुगगनान्मेघवृष्टिवत् ॥ उत्पातंमेनिरेलोकाःसर्वेभूतलवासिनः ७ दैत्यदेहगतंज्योतिस्तंविवेशविनायकम् ॥ पश्यतांसर्वदेवानांप्रधनालोकितंपु
नः ८ देहस्तुनिपपातास्यधराप्रष्ठेत्रियोजनम् ॥ चूर्णयन्वृक्षसंघातान्पर्वतान्पादपैर्युतान् ९ एवंदृष्ट्वागतिंतस्यमैनिकाश्चदिशोदश ॥ याताश्चकातिंवि
नाशंप्राप्तास्तद्देहपाततः १० मुमुचुःपुष्पवर्षंतेदेवाःस्वस्थानमागताः ॥ देवदुंदुभयोनेदुर्नृपडुंडुभिनिस्वनैः ११ दिशश्चविमलाआसन्ववुर्वा
ताःसुखावहाः ॥ तेजांसिवह्नेर्लोकानांप्रसन्नानितदाभवन् १२ प्रतिकूलवहानद्यआसन्सन्मार्गगास्तथा ॥ ततःशक्रादयोदेवामुनयस्तंपुपूजिरे १३
तुष्टुवुःपरयाभक्त्यादेवदेवंविनायकम् ॥ विमोचितावयंबंधाद्देवांतककृताद्विभो १४ उपेंद्रइवदेवेंद्रकार्यंयस्मात्कृतंत्वया ॥ उपेंद्रइतिनाम्नात्वंख्यातिं
लोकेगमिष्यसि १५ वयंस्वस्वाधिकारेषुनिरातंकावसामहे ॥ स्वाहास्वधावषट्काराभविष्यंतिगृहेगृहे १६ एवमुक्त्वानमस्कृत्यदेवंतेचप्रदक्षिणम् ॥ अनु
ज्ञाताययुःसर्वेस्वंस्वंस्थानंमुदान्विताः १७ मुनयश्चतदादेवैर्हृषीकेशेतिनामच ॥ कृत्वानत्वाययुःस्वंस्वमाश्रमंहर्षनिर्भराः १८ ततःसर्वेधराधीशाःसंपूज्यचप्रण
म्यच ॥ ऊचुर्विनायकंदेवमुद्धृताधरणीत्वया १९ दैत्यभारभराक्रांतातस्मात्त्वंधरणीधरः ॥ इत्युक्त्वातेगताःस्वस्वपत्तनानितदाज्ञया २० ततःपश्चात्पश्य
तिस्मकाशिराजोविनायकम् ॥ सिंहारूढंबालरूपंक्रीडंतंबालकैःसह २१ बालोपितंनृपंदृष्ट्वालिलिंगपरमादरात् ॥ उभावानंदभरितौमुंचंतोश्रूणिनेत्रतः २२

ततऊचेनृपोदेवंमहद्भाग्यंममोदितम् ॥ ब्रह्मादीनामगम्यंयत्परंब्रह्मसनातनम् २३ तन्मेदृग्गोचरंनित्यंपूर्वपुण्यफलोदयात् ॥ विश्वस्यकारणानाचकारणंत
द्विवर्जितम् २४ वेदांतवेद्यंसत्ज्योतिर्ज्योतिषामपिभास्वरम् ॥ नानारूपमरूपंयद्बालरूपेणमेगृहे २५ क्रीडतेस्वेच्छयापृथ्वीभारहारिमनोहरं ॥ कउवाच ॥
एवंश्रुत्वास्तुतिंतस्यप्रमृज्याश्रूणिविघ्नराट् २६ उवाचनक्षणंत्वत्तोयामिदूरंकदाचन ॥ ततोराजापुपूजैनमुपचारैरनेकशः २७ ततोवादित्रनिर्घोषैर्बंदिशब्दैर्वि
मिश्रितैः ॥ सुरांतकवधाद्धर्षयुक्तैःसेनाचरैःसह २८ विनायकंबालरूपंस्तुवद्भिःस्वपुरंययौ ॥ विसृज्यसर्वलोकांश्चदत्वावासांसिचैकशः २९ तांबूलानिच
केषांचित्पुरस्कृत्यविनायकम् ॥ विवेशस्वगृहंरम्यंहर्षनिर्भरमानसः ३० इतिश्रीगणेशपुराणेउत्तरखंडेबालचरितेपुरप्रवेशोनामसप्ततितमोऽध्यायः ७० ॥
कउवाच ॥ अपरस्मिन्दिनेब्रह्मन्राजाभद्रासनंगतः ॥ अमात्यान्वीरमुख्यांश्चवृद्धांश्चसुहृदोद्विजा १ आकार्यचनमस्कृत्यजगादत्द्धदिसंस्थितम् ॥ राजो
वाच ॥ विवाहायतुपुत्रस्यसमाहूतोविनायकः २ उत्पाताबहवोजातास्तेचतेननिराकृताः ॥ आदित्यैचमयाप्रोक्तंशीघ्रंतेतनयंशुभम् ३ आनयिष्येतत्रबहुदिव
साजग्मुरंजसा ॥ स्वस्थेषुत्रिषुलोकेषुविवाहोस्याविचिंत्यताम् ४ ॥ अमात्याऊचुः ॥ सम्यगुक्तंमहाराजविलंबोविघ्नकारितः ॥ जातोविवाहकार्येस्मिन्ग
तेस्मिन्सविधीयताम् ५ विनायकप्रसादेनसर्वमव्याकुलंजगत् ॥ दूरस्थानांचसुहृदांप्रेष्यंतांलग्नपत्रिकाः ६ दूतांश्चसर्वसंभारान्कर्तुंग्रामेषुयुज्यताम् ॥ कउ
वाच ॥ इतिप्रकृतिवाक्यानिश्रुत्वालोकाःसभासदः ७ साधूक्तमितितत्रोचुस्ततोराजाजहर्षच ॥ ज्योतिर्विद्भिर्लग्नदिनंनिश्चिकायतदैवसः ८ प्रेषयामाससु
हृदोदूतानाकारितुंशुभान् ॥ सामग्रींकारयामासदूतैरामैर्यथाविधि ९ ततोमगधराजोपिसुतामादायतांपुरीं ॥ आययुःसर्वसुहृदोनानादिग्भ्यःसमागताः १०
उपायनानिभूरीणिददुस्तेन्योन्यमादरात् ॥ देवतास्थापनंतौचचक्रतुःसुमहोत्सवान् ११ सांगोपांगंविवाहंतौसम्यक्संपादयन्ततः ॥ तोषयामासतुर्वि
प्रान्सर्वलोकान्धनादिभिः १२ विसृज्यसुहृदःसर्वांस्ततोराजाविनायकम् ॥ भूषयामासविविधैर्भूषणैरंशुकैर्वरैः १३ अभ्यज्यभोजयामासस्वाद्वन्नंसहबं
धुभिः ॥ ततोरथंसमारुह्यसहतेननृसत्तमः १४ ययौवादित्रनिर्घोषैःकश्यपाश्रममुत्तमम् ॥ ततोनागरिकाःसर्वेहित्वाकृत्यानिनिर्ययुः १५ भोजनंपठनं
निद्राव्यासंगंतत्यजुस्तदा ॥ अकृत्वास्वस्ववेषंतेत्वरयानिर्ययुःपुरात् १६ ततोबालसहस्राणिरुरुधुस्तंविनायकम् ॥ अस्मांस्त्यक्त्वाकथंयासिकथंनिष्ठुर
तांगतः १७ गमिष्यइतिपूर्वंनःकथंनोक्तंप्रसंगतः ॥ अभुक्त्वास्मद्गृहेयासिकथंतंनिजमाश्रमम् १८ कश्चिद्बालोदधारास्यपादपद्मंरुदन्मुहुः ॥ कश्चित्स्नेहा
त्समालिंग्यदधारकरपंकजम् १९ पौरांगनास्तथैवेनंबालामुग्धाःसयौवनाः ॥ विपर्यस्यनिजाभूषाआययुस्तंविलोकितुम् २० यथापाथोनिधिंसर्वावर्षाका
लेसमुद्रगाः ॥ यांतिहंसायथामुक्तासमूहंमरुतोहरिं २१ अतिप्रीतियुताःप्रोचुःकथंयासिविनायक ॥ अकस्मात्स्नेहमुत्सृज्यकथंनिष्ठुरतांगतः २२ ॥ कउ
वाच ॥ ॥ रथादवततारासौदृष्ट्वातान्नृपसंयुतः ॥ परिश्रांतान्धावमानान्स्खलतःपततोपिच २३ तानुवाचततःसर्वान्मुहूर्तंत्वरयाजनाः ॥ नृपेणसहितः

शीघ्रमागतोनगराद्बहिः २४ इदानींप्रार्थयेसर्वांन्त्वयाज्याकरुणामयि ॥ अपराधास्तुक्षंतव्यामययावःसदनेकृताः २५ नवत्याज्यःपरिचयोयदिवोद
र्शनंभवेत् ॥ एवंतद्वाक्यमाकर्ण्यपौराःसर्वेशुचान्विताः २६ रोमांचांचितगात्रास्तेप्रोचुर्गद्गदयागिरा ॥ जनाऊचुः ॥ नमायामायिनस्तेस्तिसर्वस्यजगतःपि
तुः २७ नपितात्यजतेबालान्सापराधानपिध्रुवं ॥ नचंद्रउष्णतांयातिसुवर्णंनीलतामपि २८ कथंनिष्ठुरतांयातःकथंगंतुंसमुत्सुकः ॥ पूर्वमेवनचागाश्चेत्त
दाशोकोनसंभवेत् २९ चोरयित्वाकथंयासिसर्वेषांनोमनांसिच ॥ कथंकार्यंकरिष्यामोनीतेषुनोमनस्सुच ३० जलेनष्टेजलचराःकथंजीवंतितद्वद ॥ प्राणे
गतेशरीरेणकिंप्रयोजनमस्तिनः ३१ कस्तत्रप्रतिकारःस्यादिक्षुश्चेत्क्षवतेविषं ॥ तस्मान्नोनययत्रत्वंयासितत्रस्वकिंकरान् ३२ तद्वचःपरिकर्ण्यासौप्रोचेगद्गद
यागिरा ॥ मुंचन्नेत्राश्रुबहुलंसर्वांस्त्रीवृद्धबालकान् ३३ ॥ देवउवाच ॥ नखेदःसर्वदाकार्योनवियोगोममक्वचित् ॥ सर्वांतर्यामिणोपायहीनस्यानंदरूपिणः
३४ नचित्तस्यसमाधानंभवेद्वैचिंतनेनमे ॥ ममूर्तिंमृदाकृत्वापूजयंतुगृहेगृहे ३५ संकटेवोयदातुस्यात्स्मर्तव्योहंतदाजनाः ॥ साक्षात्कारंप्रदास्यामिनाश
यिष्यामिसंकटं ३६ कउवाच ॥ वचनंतत्समाकर्ण्यननंदुःसर्वनागराः ॥ नेमुःप्रदक्षिणीकृत्यजयशब्दैःप्रतुष्टुवुः ३७ गृहीत्वाज्ञांययुःसर्वेपौराःस्वंस्वंनिवेशनं ॥ वि
नायकोपिशीघ्रंसरथारूढोययौपुरः ३८ काशिराजेनसहितोमातृदर्शनलालसः ॥ सददर्शपरावृत्यमुखंपौरकुमारकान् ३९ आक्रंदतस्तानुवाचपुनर्यास्ये
व्रजंतुहि ॥ चिंतानकार्यासत्यंवोब्रवीमिनानृतंक्वचित् ४० एवंतान्सपरावृत्यक्षणात्स्वाश्रममासवान् ४१ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेविनायकाश्र
मप्रतिगमनंनामैकसप्ततितमोध्यायः ७१ ॥ कउवाच ॥ पूर्वमेवचदूतेनकथितोसौविनायकः ॥ अदित्यैकाशिराजेनरथस्थेनसहागतः १ ततःसातद्वियोगेन
धावमानाययौपुरः ॥ औत्सुक्यत्वरितावेदनांचलंपतितंस्वकम् २ दृष्ट्वातांमुनिपुत्रोपिरथात्प्रस्कंद्यसत्वरः ॥ आययौमातुरभ्याशमालिलिंगचतांमुदा ३
आनंदाश्रुमुमोचासौसोपिबाष्पंचिरागतः ॥ मुहूर्तमेकआवंतौगच्छेतांपयसीइव ४ ददौस्नेहात्स्वस्थचित्तास्तनपानंमुदादितिः ॥ प्रमृज्यनेत्रेप्रोवाचश्रांतो
सिबहुवासरं ५ ततोननामतांराजाजगौगद्गदभाषया ॥ राजोवाच ॥ नीत्वाविनायकंदेवंयातास्तुबहुवासराः ६ अतोनमातःकोपंत्वंमयिकर्तुमिहार्हसि ॥
वियोगंनास्यसोढुंचनशक्तोहंमुनिप्रिये ७ नतृप्तिरस्तिपीयूषेनौदासीन्यंनिधावपि ॥ दिनेदिनेनवप्रेमवर्धयत्येषनोगृहे ८ उत्पाताबहवोनेनपुरेनोविनिवारि
ताः ॥ असंख्याताहतादैत्यादेवाश्चमुदमापिताः ९ बहुलाचकृताकीर्तिःस्थापिताधर्मसेतवः ॥ पौरुषंचतथानेनकृतंनेंद्रादिभिःकृतम् १० कउवाच ॥ एवंस
सर्ववृत्तांतंकथयामाससादरं ॥ ततोदितिस्तुदध्यन्नंभ्रामयित्वात्यजद्बहिः ११ दुष्टदृष्टिनिपातस्यशांतयेबालकोपरि ॥ ततोबालंसनृपतिंनिनायाश्रममंडलम्
१२ कश्यपोहिबहिर्यातोदृष्ट्वापुत्रंसभूपतिं ॥ तौतंचनेमतुर्भक्त्याबद्धांजलिपुटावुभौ १३ आलिलिंगमुनिस्तौचमूर्ध्न्याघ्रायमुदातदा ॥ उवाचरुद्धकंठोसावंके
कृत्वाविनायकम् १४ काशिराजनोचितंतेबालंनीत्वाविलंबनम् ॥ शीघ्रमेवानयिष्येहमित्युक्त्वानीतवान्कथम् १५ वियोगेनास्यतप्तानामंगानांमेघुनानृप॥

जाताशीतलतापुण्याद्दर्शनादस्यसांप्रतम् १६ ॥ कउवाच ॥ ततऊचेकाशिराजोनिपीयमुनिभाषितम् ॥ उपविश्यासनेरम्येप्राप्यानुज्ञांमुनेर्नृपः १७॥ नृपउ
वाच ॥ अस्यैवमाययाजातासत्यतामेमुनीश्वर ॥ मन्नहंदेवदेवेनस्वकीयमितिनिश्चितम् १८ अवाप्तकामोदेवोयंस्वकामवशगोमुने ॥ संपाद्यममपुत्रस्यविवा
हंसमुपागतः १९ ॥ कउवाच ॥ तस्यदैत्यवधादीनिकर्माण्यस्मैन्यवेदयत् ॥ ततोजहर्षतुरुभौमुनिपत्नीमुनिश्चसः ॥ ज्ञात्वापराक्रमंतस्यस्वपुत्रस्यगुणान्बहून्
२० ततस्तेभोजनंचक्रुःषड्रसान्नेनसादरम् ॥ दत्वाशीर्वचनंतस्मैविससर्जनृपंमुनिः २१ सोपितान्प्रणनामाथप्रादक्षिण्येननिर्ययौ ॥ प्राप्यानुज्ञांनेत्रयुग्मान्मुं
चन्नश्रुसुदुःखितः २२ स्मरन्गुणगणंतस्यस्नेहनिर्भरमानसः ॥ शीघ्रंप्रयातोनगरंवाद्यघोषसमन्वितः २३ सर्वेनागरिकाबालाविनायकदिदृक्षया ॥ आग
तादद्दृशुस्तत्रततोदुःखितमानसाः २४ निरीक्ष्यतंकाशिराजंययुःस्वंस्वंनिकेतनम् ॥ अपरेद्युःसर्वपौराःपप्रच्छुस्तंनृपंमुदा २५ यास्यइत्युक्तवान्देवोनागतः
सकथंनृप ॥ त्वंतुनिष्ठुरभावेनत्यक्त्वातंकथमागतः २६ ॥ राजोवाच ॥ अत्यंतंप्रार्थितोदेवउक्तवान्मांमुनिप्रियः ॥ मन्मूर्तिंस्थापनंकृत्वासेवध्वंसर्वएवमां २७
वियोगोनचसर्वांतर्यामिणावःकथंचन ॥ ततस्तेकारयामासुर्मूर्तिंधातुमयींशुभां २८ चतुर्भुजांत्रिनयनांसर्वभूषणभूषितां ॥ शूर्पकर्णांगजमुखींसर्वाव
यवसुंदराम् २९ ढुंढिराजेतिनाम्नातांस्थापयामासुरादरात् ॥ ऋत्विग्भिर्ब्राह्मणैरन्यैर्वेदशास्त्रविशारदैः ३० प्रासादंपरमंकृत्वापुपूजुस्तेदिनेदिने ॥ येन
येनैवकामेनपूजयेद्योविनायकम् ३१ तंतंददातितस्मैसभक्त्यासंपूजितोविभुः ॥ एवंनानामूर्तिधरोभ्राजतेस्मविनायकः ३२ विश्वेश्वरेस्वनगरंयातेसर्वसुरैः
सह ॥ दिवोदासेचाविमुक्तेकाशिराजेसुखंस्थिते ३३ विनायकोमुनिंप्राहकश्यपंमातरंचताम् ॥ अहंतेपुत्रतांयातस्तपसाराधितःपुरा ३४ भूभारश्च
हृतःसम्यक्हतौदैत्यौमहाबलौ ॥ त्रैलोक्यपीडकौदुष्टौदेवांतकनरांतकौ ३५ देवाश्चसाधवश्चैवरक्षिताःस्थापिताःपरे ॥ इदानींतुगमिष्यामिनिजलोकांचि
रंतनम् ३६ ॥ ॥ कउवाच ॥ ॥ श्रुत्वावाक्यमुभौखिन्नौबाष्पकंठौतमूचतुः ॥ कदातेदर्शनंदेवपुनरावांभविष्यति ३७ ततःसमातरंप्राहदर्शनंमेभविष्य
ति ॥ भवान्यामंदिरेमातःसत्यंमेप्रियभाषितम् ३८ एवंश्रुत्वादेववाक्यंपुनर्यावद्वदत्यसौ ॥ तावदंतर्हितोदेवस्ततस्तौखिन्नमानसौ ३९ कारयामासतुर्मूर्तिं
प्रासादंचातिशोभनम् ॥ विनायकेतिनामास्यचक्रतुर्भक्तितत्परौ ४० तस्यांमूर्तौध्यातमात्रोनित्यंदर्शयतेविभुः ॥ स्वात्मानंसर्वगंनानारूपिणंसविनायकः
४१ ॥ गृत्समदउवाच ॥ एवंकीर्तिंसमाख्यातंचरितंतेमयाशुभम् ॥ विनायकस्यदेवस्यश्रवणात्सर्वसिद्धिदम् ४२ धन्यंयशस्यमायुष्यंसर्वोपद्रवनाशनम्
॥ सर्वकामप्रदंसर्वपापसंचयनाशनम् ४३ पुनस्तेकथयिष्यामिसिंधुदैत्यवधायसः ॥ अवतीर्णःशिवगृहेमयूरेश्वरसंज्ञितः ४४ बाल्यात्प्रभृत्यद्भुतानिनानाक
र्माणियोकरोत् ४५ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेविनायकचरित्रकथनंनामाद्विसप्ततितमोध्यायः ७२ ॥ ॥ व्यासउवाच ॥ ॥ कथंब्रह्मन्शिवगृहेमयू
रेश्वरसंज्ञितः ॥ अवतीर्णःकिमर्थंवाकिंचतच्चरितंपितः १ मयूरेश्वरसंज्ञाचकथंजाताविनायके ॥ एतन्मेसर्वमाचक्ष्वशृण्वंस्तृप्यामिनक्वचित् २ ॥ कउवाच

त्रेतायुगेमहादैत्यःसिंधुनामाऽभवत्पुरा ॥ सहतस्तेनबलिनाऽवतीर्णे नाशिवालये ३ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ शौनकस्यचसंवादंराज्ञाचचक्र
पाणिना ४ मैथिलेविषयेराजागंडकीनगरेशुभे ॥ चक्रपाणिरितिख्यातःसाक्षाद्विष्णुरिवापरः ५ नगुणावर्णितुंशक्याःशेषेणास्यकदाचन ६ तेजसालोप
यन्भानुंलावण्येनचमन्मथं ॥ मत्याबृहस्पतिंस्कंदंविक्रमेणबलेनच ७ येनेयंसकलापृथ्वीक्षणेनवशवर्तिनी ॥ कृतासर्वेचराजानःसेवायांविनियोजिताः ८
तुरंगाणांगजानांचपदातीनांजयैषिणाम् ॥ रथानांचनयस्यास्तिसंख्यानंजगतीतले ९ साक्षाल्लक्ष्मीस्थिरायस्यगृहेदर्शनगोचरा ॥ रत्नकांचनमुक्ताभिरानि
शंभासयदिशः १० भद्रंभद्रकरंयस्यलोकानामलकोपमम् ॥ यस्यामात्यौमहाबुद्धीसांबश्चैवसुबोधनः ११ सेवंतौस्वामिकार्यार्थेतृणीकृत्यस्वजीवितम् ॥
यस्यासीत्प्रमदारम्यानाम्नोग्राचारुहासिनी १२ कुमुदानिविकासंतेदिवायन्मुखचंद्रतः ॥ अनेकभूषादीप्त्यायानाशयित्वाखिलंतमः १३ पातिव्रत्यगुणा
न्द्रष्टुंयांतिसर्वाःपतिव्रताः ॥ एवंराजाबुधोमान्यःसदाविष्णुपरायणः १४ पुराणश्रवणेसक्तोधर्मशास्त्रपरायणः ॥ संतत्यारहितःसोथदुःखमापदिवानिशम् ॥
१५ अपत्यंजायतेयद्यत्तत्तन्नश्यतितत्क्षणात् ॥ अनेकव्रतदानानियज्ञांश्चकृतवान्बहून् १६ ततःसराजाकस्मिंश्चित्समयेनिजभार्यया ॥ आकार्यप्रकृतीःपौरा
न्विरक्तोराज्यसंपदि १७ उवाचसर्वान्दंडंचकोशंराज्यंत्यजेधुना ॥ किमपुत्रस्यराज्येनस्वर्गहीनस्यमेधुना १८ यानिकर्माणिचमयापुत्रार्थेचरितानिच ॥
ईश्वरार्पणबुध्याचेत्कृतानिस्युर्यदातदा १९ मुक्तिःस्यादुभयोःपूर्वजन्मकर्मक्षयोपिच ॥ गतमायुर्वृथालोकावनंयास्येमुदाधुना २० सर्वेप्रकृतिसात्कृत्वायू
यंतद्वाक्यकारिणः ॥ गमिष्येहंवनंलोकास्तपस्तप्तुंहितायवै २१ कदाचिदिष्टसिद्धिश्चेत्पुनर्यास्येनिजांपुरीम् ॥ ध्रुवमाज्ञांममपुनःप्रयच्छताधुनाजनाः ॥ ए
वंश्रुत्वानृपवचःसर्वेदुःखितमानसाः २२ अश्रुधाराःप्रमुंचंतःप्रोचुस्तंनृपसत्तमम् ॥ पौराऊचुः ॥ जननीजनकस्त्वंनःकथंनिष्ठुरतांगतः ॥ किमर्थंत्यजसे
नस्त्वमपराधंविनाप्रभो २३ विनाभवंतंनोजन्मवृथैवमातरंशिशोः ॥ वयमप्यनुयास्यामोयत्रयातिभवान्प्रभो २४ कउवाच ॥ ॥ एवंवदत्सुलोकेषुनृपे
णाथागतोमुनिः ॥ शौनकोमुनिशार्दूलोजातवेदाइवापरः २५ वेदवेदांगशास्त्राणांवक्तात्रैलोक्यविश्रुतः ॥ शक्रादिसुरवंद्योयोभूतभव्यभविष्यवित् २६
तंदृष्ट्वापुरतोराजाननामोत्थायचासनात् ॥ स्वासनेतमुपावेश्यपुपूजपरयामुदा २७ भुक्तवंतंचविश्रांतंपादसंवाहनादिभिः ॥ चक्रपाणिरथोवाचपुण्यंकिंफ
लितंमम २८ यज्जातंदर्शनंतेद्यसर्वपापहरंशुभम् ॥ सर्वकामप्रदंनॄणांदुर्लभंपापकर्मणाम् २९ ततःप्रोचेमुनिश्चक्रपाणिंनृपतिसत्तमम् ॥ संतुष्टःपरयाभ
क्त्याप्रश्रयेणदमेनच ३० ॥ ॥ मुनिरुवाच ॥ ॥ माचिंतांकुरुराजेंद्रमाचराज्यंपरित्यज ॥ पुत्रस्तेभवितासम्यक्मद्वाक्यान्नात्रसंशयः ३१ मयावाणीनो
क्तपूर्वानृताहासेपिकर्हिचित् ॥ ॥ कउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंजहर्षेराजसत्तमः ३२ अलंकारान्ददौतस्मैरत्नकांचननिर्मितान् ॥ वस्त्राणिचमहार्हा

१ भवंतआज्ञामितिपाठः।

णिनचजग्राहवैमुनिः ३३ पुनःप्रोवाचनृपतिंवयंवल्कलधारिणः ॥ निःस्पृहाःसर्वभोगेषुसर्वभूतहितेरताः ३४ सृष्टिसंहारकरणेसमर्थाःकरुणाश्रयः ॥ साधूनांदर्शनरताःसमलोष्टाश्मकांचनाः३५विद्वत्सुनैवकमलास्थानंधत्तेकदाचन ॥ तस्मान्नेदंग्रहीष्यामिकांचनंवसनंशुभम् ३६तीर्थयात्राप्रसंगेनत्वामहंसमुपागतः ॥ दिनानिचव्यतीतानिबहूनितवदर्शने ३७ कउवाच ॥ पुनस्तौनेमतुःसम्यग्दंपतीशौनकंमुनिम् ॥ पप्रच्छतुरुपायंतंसंतानोत्पादनेक्षमम् ३८ सर्वत्रतपोयज्ञान्मत्वादानानिवैवृथा ॥ ततोब्रवीन्मुनिःसौरंव्रतंसर्वार्थदंनृणाम् ३९ अनेकजन्मपापानांशमनंपुत्रपौत्रदम् ॥ मुनिरुवाच ॥ मासमात्रंव्रतंकार्यमारभ्यभानुसप्तमी ४० कृत्वाभ्युदयिकंश्राद्धंमातृपूजनपूर्वकम् ॥ अभ्यर्च्यगणनाथंचस्वस्तिवाच्यद्विजर्षभान् ४१ सुवर्णकलशेस्थाप्यसौवर्णंरविमंडलं ॥ उपचारैःषोडशभिर्भक्तिभावसमन्वितः ४२ रक्तचंदनमिश्रैश्चतंडुलैःकुसुमैरपि ॥ रक्तैर्नानाविधैर्रत्नैःफलैश्चविविधैरपि ४३ अर्घ्यैर्द्वादशसंख्यैश्चनमस्कारैःपरिक्रमैः ॥ स्तुतिभिःप्रार्थनाभिश्चप्रार्थयेत्परमेश्वरम् ४४ ततोलक्षनमस्कारान्कुर्वीतकारयीतवा ॥ प्रत्यहंलक्षविप्रांस्तुभोजयेत्परयामुदा ४५ गामेकांप्रत्यहंदद्याद्वेदज्ञायकुटुंबिने ॥ ब्रह्मचर्यणतिष्ठेच्चसपत्नीकोनृपोत्तम ४६ दीनांधकृपणेभ्यश्चदद्यादन्नंदयान्वितः ॥ मासांतेसर्वसंभारान्ब्राह्मणायसमर्पयेत् ४७ एवंव्रतेकृतेराजन्पुत्रस्तेमत्प्रसादतः ॥ भविष्यतिमहाख्यातःसूर्यभक्तियुतःशुचिः ४८ कउवाच ॥ ॥ एवंव्रतंसमादिश्यशौनकोंतर्हितस्तदा ॥ ततश्चकारनृपतिर्यथादिष्टंव्रतंतुतत् ४९ पत्न्यासहविनीतात्मासूर्यभक्तिपरायणः ॥ ब्राह्मणान्भोजयामासयथेच्छंलक्षसंख्यया ५० उपवासयुतःपत्न्यामासमात्रंबभूवसः ॥ गोदानंचनमस्कारांश्चक्रेचाकारयद्द्विजैः ५१ सूर्यमंत्रंजपन्नित्यंतन्नामस्मरणंसदा ॥ ततःकदाचित्तत्पत्नीरात्रौस्वप्नेददर्शतम् ५२ निजभर्तृद्विजरूपंसवितारंमनोरमम् ॥ चकमेकामरूपंतंमदनाग्निप्रपीडिता ५३ उवाचपरितप्तांगीकामोमेबाधतेभृशम् ॥ ऋतुंमेदेहिभर्तस्त्वंनोचेन्मृत्युर्भवेन्मम ॥ ५४ सोपिवंध्यंविनिश्चित्यतत्पतिंकामुकांचताम् ॥ स्वप्नएवभर्तृरूपीसवितातामृतुंददौ ५५ साप्रबुद्धाततःप्राहसमुत्थाप्यनिजंपतिम् ॥ नियमस्थेनकिंब्रह्मंस्त्वयामेऋतुरर्पितः ५६ सउवाचततःस्तांतुनाहंव्रतमनाःशुभे ॥ उपवासरतःक्षीणोरराम रविभक्तिमान् ५७ ततःपुनःप्राहसतीनान्यंजानेकथंचन ॥ त्वद्रूपेणैववध्यायामिसवितारंव्रतेस्थिता ५८ ऋतुजेनचदग्धाहंवह्निनांतर्गतेनह ॥ ततःपुनश्चक्रपाणिरूचेतांप्रियभाषिणीम् ५९ ॥ ॥ नृपउवाच ॥ ॥ तुष्टोसौसविताकांतेनमस्कारैश्चभोजनैः ॥ ब्राह्मणानांगवांदानैरुपवासैर्जपैरपि ६० आवांसिद्धिंददौसम्यक्पुत्रस्तवभविष्यति ॥ ॥ कउवाच ॥ ॥ दिनेदिनेगर्भवृद्धौतस्यास्तापोभिवर्द्धते ६१ सामुमूर्षुश्चंदनानिसोशीराणिनिषेवते ॥ लिलेपांगेचकर्पूरंतापोनास्याशशामच ६२ नचार्द्रवस्त्रपवनैस्ततःसासखिभिःसह ॥ तत्याजसिंधुतीरेतंगर्भंगत्वामहत्तरम् ६३ आययौसाथविश्रांतासखिभिर्निजमंदिरम् ॥ निवेद्यभर्त्रेत्यक्तंतंगृहकार्यरताभवत् ६४ ॥ इति श्रीगणेशपुराणेउत्तरखंडेसिंधूत्पत्तिवर्णनंनामत्रिसप्ततितमोध्यायः ॥ ७३ ॥ ॥ कउवाच ॥ ॥ त्यक्तेगर्भेतयासिंधौबालोजनिमहाबलः ॥ तेजस्वीवि

करालास्योदीर्घआलम्बिलोचनः १ रक्तकेशजटाभारश्चक्रपाणिस्त्रिशूलभृत् ॥ बालशब्देनतस्याथचकंपेभुवनत्रयम् २ आजानुबाहुराक्रांतुमियेषविष्टपत्रयम् ॥
चुक्षुभेसागरस्तेनयादोभिर्मुनिसत्तम ३ तत्रस्थितस्तुबालोसौसमुद्रमुपशोषयत् ॥ ॥ समुद्रउवाच ॥ ॥ जीवनायममसुतंनेष्यएनंनृपालयम् ४ इत्यानि
नायतंबालंसमुद्रोनृपमंदिरम् ॥ तवपत्न्यात्याजिगर्भोदुःसहत्वान्ममोदरे ५ ॥ कउवाच ॥ दंपत्योःपुरतःस्थाप्यप्रोचएवंद्विजस्तदा ॥ उग्रोबालस्ततोजा
तोखिललोकभयंकरः ६ यस्यप्रथमशब्देनकंपितंभुवनत्रयम् ॥ नेत्राभ्यांनेक्षितुंशक्योतएनंमुपानयम् ७ इत्युक्त्वाबालकंमुक्त्वांतर्दधेसागरस्तदा ॥ तत
एनंकराभ्यांसाकटौदध्रेनृपांगना ८ स्थापयित्वाददौप्रेम्णास्तनपानंमुदान्विता ॥ उभावानंदयुक्तौतौदंपतीपुत्रदर्शनात् ९ यथाचिरंयोगनिष्ठोलब्ध्वाब्रह्मा
मृतंपरम् ॥ ततआकारयामासब्राह्मणान्सुहृदोपिच १० ज्योतिर्विद्भिर्विचार्यास्यसिंधुरित्यभिधांशुभाम् ॥ राज्ञीचक्रेनृपश्चास्यजातकर्मयथाविधि ११ कृत्वा
ददौततोदानमनेकंहर्षनिर्भरः ॥ अनेकेभ्योद्विजातिभ्योवस्त्राणिविविधानिच १२ दापयामासनगरेपताकाभिरलंकृते ॥ वाद्यस्तुसर्ववाद्येषुशर्करांचगृहेगृहे
१३ गतेषुसर्वलोकेषुरक्तांगइतिनामच ॥ चक्रतुर्दंपतीस्नेहादथामात्यौसमूचतुः १४ उग्रायास्तनयश्चायमुग्रमुद्राधरोपिच ॥ अयमुग्रेक्षणइतिनाम्नाख्या
तोभविष्यति १५ विप्रप्रसादनइतिपौराःनामप्रचक्रिरे ॥ ततःसर्वेपौरजनाउपदाविविधास्तदा १६ ददुर्नृपायसोप्येतान्दापयामासतत्क्षणात् ॥ व
वृधेबालकःसोथशुक्लपक्षेयथाशशी १७ यथाग्निर्वायुवेगेनवर्धतेक्षणमात्रतः ॥ तथास्वतेजसाबालःप्रवृद्धोगगनंस्पृशत् १८ क्रीडन्नेवसदाबा
लोवृक्षान्गृहगतान्बहून् ॥ उत्पाट्यपातयामासदामहस्ततलेनह १९ अरण्येक्रीडतातेनपर्वताश्चूर्णितादृमाः ॥ उड्डीयचंद्रहरिणंक्षणंजग्राहकाहाचित् ॥
२० जलावतारमार्गेतुरुद्धकापिकरेणुना ॥ मुष्टिघातेनबिभिदेतंडमस्याःपपातसः २१ एवंतस्याद्भुतंकर्मदृष्ट्वालोकाविसिस्मिरे ॥ जहर्षजननीचास्य
पिताज्ञात्वातिमानुषम् २२ एवंप्रवृद्धोबालोसौसिंधुनामामहाबलः ॥ उवाचपितरंयास्येतपस्तप्तुमहंनृप २३ अनुष्ठित्यास्वर्गलोकंभूलोकंचरसातलम् ॥
आक्रमिष्येवृथायुर्मेगच्छतीतिमतिर्मम २४ एवमाकर्ण्यतद्वाक्यंमूर्छ्तुःपितरौचतम् ॥ उक्त्वैवंस्वस्यपुत्रस्यनित्यंप्रार्थयतेपिता २५ जननीसर्वदेवेभ्यो
व्रतदानादिनापिच ॥ एवमाज्ञामवाप्यैवनत्वातौसययौवनम् २६ तत्रसददर्शाथकासारंजलजैर्युतं ॥ तत्रस्थातुंमनश्चक्रेविविक्तभीतिहर्षितः २७ एकां
गुष्ठेनभूमिष्ठऊर्ध्वबाहूरविंस्मरन् ॥ शुक्रोपदिष्टंमंत्रंजपन्पर्वतनिश्चलः २८ दक्षिणेजानुनिसदावामपादंनिधायच ॥ अंजलिंहृदिविन्यस्यध्यायन्दिनमणिंत
दा २९ शीतवातातपजलवृष्टीनांसहनोदृढः ॥ वायुमात्राशनस्तस्थौवल्मीकाक्रांतविग्रहः ३० अस्थिमात्रावशिष्टोपिजपत्येवमहामनुम् ॥ एवंतस्यव्यती
याशरदांद्विसहस्रकम् ३१ तस्यसिंधोःशरीरोत्थास्तेपुर्भासोरविंतदा ॥ एवंतुश्रुत्वाततोदृष्ट्वाप्रत्यक्षोभूद्दिवाकरः ३२ उवाचपरमप्रीतोनुष्ठानेनतवाधुना ॥ वरंव
रयचित्तस्थंदास्यामिजीवितावधि ३३ सिंधुस्तदाकर्ण्यवचोभाषितंभानुनास्वयम् ॥ देहभावंगतोपश्यत्पुरतोभास्करंप्रभुम् ३४ नत्वातत्पादकमलंबद्धा

जलिपुटोब्रवीत् ॥ नमस्तेदीननाथायनमस्तेसर्वसाक्षिणे ३५ नमस्तेत्रिदशेशायब्रह्मविष्णुशिवात्मने ॥ नमस्तेविश्ववंद्यायनमस्तेविश्वहेतवे ३६ नमस्ते
वृष्टिबीजायसस्योत्पादनहेतवे ॥ परब्रह्मस्वरूपायसृष्टिस्थित्यंतहेतवे ३७ गुणातीतायगुरवेगुणक्षोभविधायिने ॥ सर्वज्ञायज्ञानदात्रेसर्वस्यपतयेनमः
३८ धन्यंमेजन्मदेवेशवंशोमेजनकोपिच ॥ जननीचतपश्चापियज्जातंतवदर्शनम् ३९ वरदश्चेद्दिनेशत्वंदेहिमेसर्वतोऽमृतिं ॥ तवप्रसादात्संग्रामेजयेयं
सर्वदेवताः ४० वर्तमानादेवगणान्नमेमृत्युर्भवेदिति ॥ एवंतस्यवचःश्रुत्वापरितुष्टोविभावसुः ॥ उवाचनिजभक्तंतमनुष्ठानकृशंकृशम् ४१ ॥ ॥ सूर्यउवा
च ॥ ॥ नभयंविद्यतेदेवयोनिभ्योनृभ्यएवच ॥ नतिर्यग्भ्योननागेभ्योनदिवानानिशिक्वचित् ४२ नोषःकालेनसंध्यायांममवाक्याद्भविष्यति ॥ मरणंतेनृ
पसुतगृहाणामृतभाजनम् ४३ इदंयावत्कंठगतंतावन्मृत्युर्नतेभवेत् ॥ निष्काशयेदिदंयस्तेतस्मान्मृत्युर्भविष्यति ४४ देवोयोवतरेत्कोपिधुन्वन्केशाग्रतो
दिवम् ॥ यस्यांगुष्ठनखाग्रेस्युर्ब्रह्मांडानांहिकोटयः ४५ सत्वांहनिष्यतिविभुरन्यस्मादभयंतव ॥ मद्वरस्यप्रसादेनसर्वेतृणमयंतव ४६ त्रैलोक्यराज्यंते
दत्तंनात्रकार्याविचारणा ॥ ॥ कउवाच ॥ ॥ एवंनानावरान्दत्वांतर्दधेसवितातदा ४७ सोप्यानंदसमायुक्तोजगामनिजमंदिरम् ॥ जननीचपितातस्यमूर्च्छया
प्रापापतुर्मुदम् ४८ ऊचतुस्तंतदापुत्रंविरहात्तेनवर्जितौ ॥ चिंतयाकृशतांयातौपश्यपुत्रदशामिमाम् ४९ तयोःपादौप्रणम्याहसपुत्रोहर्षनिर्भरः ॥ प्रस
न्नःसवितामह्यंत्रैलोक्यस्वामितामदात् ५० साधयिष्येतद्वरात्तांनचिंतांकर्तुमर्हथः ५१ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेवरप्रदानंनामचतुःसप्तति
मोऽध्यायः ॥ ७४ ॥ कउवाच ॥ ॥ बुद्धिमंतंसुतंज्ञात्वासवितुर्वरदर्पितम् ॥ राज्यंतस्मैददौसर्वंदेशकोशबलान्वितम् १ पितावनंययौतस्यस्वात्मसाधन
लालसः ॥ सतुपित्राभिषिक्तःसन्राज्यंकर्तुंमनोदधे २ श्रेणीमुख्यान्समाहूयप्रकृतीरधिकारिणः ॥ आस्थापयत्स्वाधिकारेमान्यित्वांशुकादिभिः ॥ डिं
डीरवेणस्वाज्ञायाभंगेदोषमघोषयत् ३ दिग्जयार्थंततोवीरानाज्ञापयतसत्वरम् ॥ तेजसाहेपयत्सूर्यमतिभीषणविग्रहः ४ वीराअग्रेप्रयांतिस्मविक
रालारुणाननाः ॥ नग्ननानाशस्त्रधरारजश्छादितभास्कराः ५ ततोगजाश्चतुर्दंतानानावर्णविभूषिताः ॥ ययुर्महाशृंखलिनःकंपयंतोवसुंधरां ६ महामा
त्रसमारूढाश्चचलाःपर्वताइव ॥ नानावर्णध्वजयुतादिग्गजान्भेत्तुमिच्छवः ७ घंटाघोषेणमहतानादयंतोदिगंतरं ॥ अश्वारोहाययुःपश्चान्नानालंक
रणान्विताः ८ असंख्यतूणधनुषांशस्त्राणांमंडलान्विताः ॥ सिंधुदैत्यश्चमूमध्येराजहयपृष्ठगः ९ मुक्तामालालसत्कंठोधनुर्बाणलसत्करः ॥ ख
ड्गखेटधरोगच्छंश्चूर्णयन्द्रुमपर्वतान् १० ययौनगरमुद्दिश्ययातिदैत्योमहाबलः ॥ तस्यतस्याधिपंवीराधृत्वानिन्युर्निजाधिपम् ११ स्वकीयंनायकंचिह्नं
मुद्रांतत्रन्यवेशयन् ॥ ततोन्येशरणंयातादासभावमुपागताः १२ करदांस्तान्सकृत्वैवररक्षस्वपदेबलात् ॥ एवंसर्वान्वशंचक्रेदैत्यकोव्यस्ततोऽन्वयुः १३
शुंभोनिशुंभोवृत्रश्चप्रचंडःकालएवच ॥ कर्दमासुरनामाचशंबरःकमलासुरः ॥ १४ ॥ कोलासुरोभवीत्तत्रयथात्रिपुरदैत्यराट् ॥ विजित्यलोकत्रि

तयमधिकारान्नहिनोददौ १५ तथायच्छाधिकारान्नोजित्वात्रैलोक्यमोजसा ॥ तेस्मिन्हतेशिवेनाद्यदृष्टोसिप्रबलोसुरः १६ नतेपराक्रमतुलांकृतांतोपिलभे
त्कचित् ॥ तवाज्ञांकर्तुमिच्छामस्तवसेवांमहाबल १७ एवमाकर्ण्यतद्वाक्यंसंतुष्टःसिंधुदैत्यराट् ॥ ददावश्वान्गजांस्तेभ्योवस्त्राणिभूषणानिच ॥ १८ ॥
॥ ॥ सिंधुरुवाच ॥ ॥ प्रबलस्तुतदाहंस्यांयदाजेष्येमरावतीं ॥ हरविष्णुसत्यलोकान्पातालानिचसप्तच ॥ १९ ॥ ॥ कउवाच ॥ ॥ साधु
साध्वितिसर्वेपुब्रुवस्तुसर्वदैत्यपाः ॥ जगर्जुश्चजहर्षुश्चब्रह्मांडंपर्यकंपयन् २० नभूपयुद्धात्कंडूर्नोद्यशमेद्देवयुद्धतः ॥ शमंयास्यत्यतोजग्मुःशीघ्रमेवात्र
जन्दिवम् २१ रुरुधुस्तेशक्रपुरींब्राह्मणाइववित्तदम् ॥ मध्यंविविशुरपरेलुंठंतोरत्नसंचयान् २२ कोलाहलोमहानासीद्देवानांतत्रगर्जतां ॥ ततःसभामध्य
गतोहरिर्दूतमुखात्ततः २३ शुश्रावदैत्याभिगमंवेष्टितांचनिजांपुरीं ॥ शीघ्रमैरावतारूढोवज्रहस्तोमरान्वितः २४ आययौतेनदैत्येनयोद्धुकामःसुराधि
पः ॥ केचिदूचुःसुरास्तत्रनायंयुद्धक्षमोहरे २५ विनारमापतिंचास्यनसमोदृश्यतेक्कचित् ॥ यावद्वदंतुतेष्वेवंतावद्दैत्योमहाबलः २६ शक्रंसुरगणैर्युक्त
मविध्यच्छरवृष्टिभिः ॥ तावद्देवगणाःकेचित्पलायनपरायगुः ॥ २७ ॥ ततोधावन्महेंद्रोसौगर्जमानोरुषान्वितः ॥ ग्रसन्दैत्यगणान्सर्वान्वज्रोद्यतकरोऽ
रिहा २८ अहनद्दैत्यराजंतंमस्तकेवज्रतोदृढम् ॥ समूर्छांमहतींप्रायान्मुहूर्तात्पुनरुत्थितः २९ उवाचचहरिंगच्छस्वक्षयंनक्षयंव्रज ॥ ममसुष्टिप्रहारेणकालो
मृत्युंगमिष्यति ३० तत्रकागणनातेस्तिनाशृणोत्तद्धरिर्वचः ॥ रोषाविष्टोमहादैत्यस्ततोमुष्टिप्रहारतः ३१ बिभेदैरावतकटंरुधिरौघप्रवर्षितम् ॥ ततउद्धी
यदैत्यस्तच्चतुर्दंतानधारयत् ३२ अपातयद्गजपतिमाश्चर्यंहरिरापयौ ॥ दधारचहरिंपादेपोथयद्यावदेवतम् ३३ तावत्सूक्ष्मेणवपुषानिर्गतोहस्तमध्यतः ॥
जगामदूरदेशंसमनसाप्रशशंसतम् ३४ नैतादृशंबलंदृष्टमतिष्ठंचेन्मृतोभवं ॥ ततोमरगणैःसार्द्धंशरणंतंहरिंहरिः ३५ जगामवपुषान्येनविसृज्यैरावतंगजं ॥
सिंधुदैत्यस्तुसेंद्रेषुदेवेषुविद्रुतेषुच ३६ इंद्रासनसमारूढोदैत्यवृंदेनवेष्टितः ॥ ददौपदानिदेवानांदैत्येभ्यःसकलानिसः ३७ ततःशुंभादयोदैत्याःस्थितास्तेषुनिरा
कुलाः ॥ नमस्यंतोसुरपतिंप्रशंसंतोबलाधिकं ३८ नानावादित्रनिर्घोषैर्नादयंतस्त्रिविष्टपं ३९ इतिश्रीगणेशपुराणेउत्तरखंडेसुरपराजयोनामपंचसप्ततितमोध्यायः
७५ ॥ ॥ कउवाच ॥ ॥ वैकुंठेसुखमासीनमागतोमरसंयुतः ॥ हरिर्हरिंनमस्कृत्यनिजगादप्रयोजनम् १ ॥ इंद्रउवाच ॥ किंनजानासिगोविंदसिंधुदैत्यकृ
तामिमाम् ॥ आपदंनोमरावत्यांदुष्टैराक्रमणंकृतम् २ तेनसार्द्धंकृतंयुद्धंयथाशक्तिसुरैःसह ॥ नसजेतुंक्षमोदैत्योतस्त्वांशरणमन्वियाम् ३ नत्वांविनागतिर्नो
स्तिसर्वदात्वंगतिर्हिनः ॥ निर्दालयैनंनोदेहिस्थानानिजगदीश्वर ४ ॥ कउवाच ॥ श्रुत्वाहरिवचोविष्णुश्चिताश्चर्यसमन्वितः ॥ उवाचतंनभीःकार्याप्रविजे
ष्येऽसुरंक्षणात् ५ एवमुक्त्वा हृषीकेशोरुरोहनिजवाहनम् ॥ तदुड्डानेनचतदाचकंपेभुवनत्रयम् ६ पतिताअवनौवृक्षाःपक्षिवृंदसमन्विताः ॥ किरीटकुंडलधरो
वनमालाविभूषितः ७ कौस्तुभार्चिर्लसद्वक्षाःकस्तूरीतिलकोज्ज्वलः ॥ शंखचक्रगदापद्महस्तोयातामरावतीं ८ ज्ञात्वादेवगणान्प्राप्तान्गरुडासनसंयुतान् ॥ युद्धा

याजग्मुरसुरानानाशस्त्रधरास्तदा ९धनुश्चक्रधरोदैत्यःसतूणोहयसंगतः॥ सिंधुरप्यागतोरोषाद्योद्धुकामोमहाबलः १० ततःकुबेरोवरुणोवायुरग्निःपुरंदरः॥सो
मोमित्रश्चभौमश्चनासत्यौमदनोपिच११ततोभवद्द्वंद्वयुद्धंसिंधुदैत्येपुरःस्थिते॥ प्रचंडोवरुणेनाजौकमलेनचयक्षराट् १२ वृत्रेणशतयज्वाचनिशुंभःपवनेनच॥शुं
भोपियुयुधेतत्रविष्णुनाप्रभविष्णुना १३ वह्निश्चंडेनमुंडेनसोमश्चयुयुधेभृशं॥ कदंबेनचभौमश्चमदनेनचशंबरः १४ नासत्यौकालदैत्येनसर्वएवचसैनिकाः॥ श
स्त्रैरस्त्रैःप्रजघ्नुस्तेमर्मस्थानानिचासकृत् १५ केचिद्युयुधिरेमल्ललीलयायुद्धदुर्मदाः॥ परस्परंशस्त्रघातैःकेचित्तत्रप्रपेदिरे१६ मृतामुमूर्षवःकेचिद्व्यंगाश्चैववल्गिरे॥
जयंपराजयंतेनप्रापुःक्वाचित्कमेवच१७ ततोवृत्रासुरःशक्रमहनन्मुष्टिघाततः॥ मस्तकंमस्तकेनैवनिजघ्नतुरथौजसा१८ एवंहस्तेनहस्तंचपादंपादेनजघ्नतुः॥ व
क्षस्थलेनवक्षश्चततोवज्रेणसोहनत् १९ जघानवृत्रःशक्रंतंसोपतन्मूर्छितोभुवि॥ यावत्पलायतिपुरोवमन्रक्तंमुखाद्बहु २० ततःपपातभूपृष्ठेहतोमूर्छांगतोभृशम्
पुनःसंज्ञामवाप्यैववज्रकल्पेनमुष्टिना २१ जघानवृत्रःशक्रंतंसोपतन्मूर्छितोभुवि॥ यावत्पलायतिसुरोवमन्रक्तंमुखाद्बहु॥तावद्दैत्यायोद्धुकामाःसमीयुःसर्वतोदि
शं॥दृष्ट्वापराक्रमंतेषांमघवांतर्दधेतदा२२एवंयेयेद्वंद्वयुद्धंकुर्वंतोदेवतागणाः॥तेसर्वेभग्नदर्पास्तुपलायनमकुर्वत२३एवंदेवेषुभग्नेषुगरुडंप्राहिणोद्धरिः॥ चक्रदीप्त्या
स्वदीप्त्याचभासयन्विदिशोदिशः २४ अहनच्चक्रधाराभिर्दैत्यश्रेणीरनेकशः॥ केचिद्भग्नाननादैत्याःकेचिद्भग्नशिरोधराः २५ केचिच्चशतधाजाताःशीर्णजानूरुबा
हवः॥ केचिच्चशरणंयातानममारजनार्दनः २६ सर्वेमहाबलादैत्यामुक्तिंहरिहतागताः॥ मेदोमांसवहानद्यःसद्यस्तत्रप्रवर्त्तिताः २७ ततःशंखनिनादेनहरिःसर्वं
व्यनादयत्॥ एवंजयतिगोविंदेसर्वेशुंभादयोसुराः२८तमेवयोद्धुमायाताद्वंद्वयुद्धंविहायतत्॥ विराड्रूपेणभगवान्धृत्वातांश्चतुरोसुरान्२९अंध्रिपालेनपाषाणं
यथाक्षिपतिमानवः॥ तथाचंडंचमुंडंचनिशुंभंशुंभमेवच ३० भ्रामयित्वाक्षिपद्दूरेमध्येकृत्वासरिद्वराम्॥ तेमूर्छांपरिभूयैवपुनश्चबहिर्निर्गताः ३१ हृदिप्रचंडंपृ
ष्ठेतुवृत्रंमुष्टिप्रहारतः॥ जघानहरिरव्यग्रःकालंकमलमेवच ३२ भौमासुरंचशिरसिकदंबंचक्रघाततः॥ कोलासुरंचगदयाविव्याधहृदिमाधवः ३३ ततःसिंधुर
गात्तूर्णंकृतकोलाहलारवः ॥ दिग्गतान्नादयन्प्रोचेबलंतेदर्शितंहरे ३४ ममापिपौरुषंपश्यनचगंतुंत्वमर्हसि॥ नमेदृष्टिगतोजीवन्रिपुर्यातिकदाचन ३५ भू
तभव्यभविष्यज्ञकिंपूर्वंनविचारितम्॥ यस्यशब्देनचभृशंकंपतेभुवनत्रयम्३६तत्पुरःकथमायातःखद्योतइवपूषणम्॥ ततोमरगणाःप्रोचुर्वल्गंतंसिंधुदैत्यपं॥
३७ शूरानहिप्रजल्पंतिदर्शयंत्येवपौरुषम्॥ अस्माकंनहरेराज्ञानोचेत्त्वंशतधाभवेः ३८॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेषट्सप्ततितमोऽध्यायः॥ ७६॥
कउवाच॥ ॥ इतितद्वचनंश्रुत्वाक्रोधाद्वह्निकणान्वमन्॥ यथासिंहोगजानीकंयातितद्वद्ययौसुरान् १ सिंधुर्मुष्टिप्रहारेणजघानबलसूदनम्॥ पपातसधरा
पृष्ठेवाताहतइवद्रुमः २ भालदेशेकुबेरंचहनौचवरुणंयमं॥ पृष्ठदेशेजघानासौचक्राघातेनदैत्यराट् ३ तालुदेशेपावकंचमन्मथंलत्तयाहनत्॥ अनिलंपादघाते
नशनैश्चरमपोथयत् ४ सोमंभौमंभ्रामयित्वातत्याजभूतलेबलात्॥ पृष्ठभागेहनच्चैवसनकंचसनंदनम् ५ नासत्यौनारदश्चापिकुत्रापिचपलायिताः॥

ततःपलायिताःसर्वेदृष्ट्वावीर्यंसुरास्तदा ६ पतितामूर्छिताःकेचिद्दैत्यश्चक्रेणमाधवम् ॥ मुष्टिदेशेजघानासौचक्रंतस्यापतद्भुवि ७ माधवोगदयामूर्ध्निदैत्ये
शंतमताडयत् ॥ वंचयित्वाचशतधागदांस्वांचव्यचिक्षिपत् ८ ज्ञात्वापराक्रमंतस्यप्रोचेतंमधुसूदनः ॥ वरयस्ववरंदैत्ययत्तेमनसिवर्तते ९ नैतादृ
शोमयादर्शिपुरुषार्थोसुरेक्वचित् ॥ ततोब्रवीद्दैत्यपतिःपरमाह्लादसंयुतः १० यदितुष्टोसिदेवेशयदिदेयोवरोमम ॥ गंडकीनगरेमेत्वंपरिवारयुतोहरे ११
सार्वकालंवसाविभोनान्यंयाचेवरंपरम् ॥ ततऊचेमहाविष्णुस्थास्यामिनगरेतव १२ दत्तोवरोयतोनूनंततोस्मिवशगस्तव ॥ ततःससत्यलोकंचकैलासे
वैष्णवेपदे १३ आस्थापदद्दैत्यपतीन्स्वयंशाक्रेपदेवसत् ॥ तत्राप्यन्यंस्थापयित्वारमापतियुतःस्वयं १४ वाद्यदुंदुभिनिर्घोषैःस्वपुरींगंडकींययौ ॥ नुवंति
बंदिनस्तंतुनेदृशोभूत्पुमान्क्वचित् १५ येनविष्णुर्गृहंस्वीयंजित्वानायिसुरान्बहून् ॥ ददृशुर्नागरास्तस्यसमीपेवरुणंहरिम् १६ कुबेरंदेवमुख्यांश्चततःस्वभ
वनंययुः ॥ ततःप्रोचेहरिंदैत्योगंडकीनगरेसुखम् १७ विहरस्वामरैःसार्द्धंततःसोपितथाकरोत् ॥ परितोदूरतोदैत्योदैत्यानन्यान्यवेशयत् १८ ततोदेवाहरिं
प्रोचुःकिंकृतंगरुडध्वज ॥ त्यक्त्वास्वविक्रमंकिंत्वंस्थितोत्यानंदनिर्भरः १९ कथंकारागृहेप्राप्तास्त्रयुलोकंगताःकथम् ॥ कथमंतोभवेदस्यभोगस्यजगदीश्व
र २० ततऊचेहरिःसर्वान्कालोहिदुरतिक्रमः ॥ कालेनजायतेसर्वंह्रसतेवर्धतेपिवा २१ तस्मात्कालंप्रतीक्षध्वंकालएनंग्रसिष्यति ॥ एवंजित्वात्रिलोकींस
महाबलपराक्रमः २२ ततोदैत्योजगौसर्वंहृत्तांतंपितरौमुदा ॥ आशिषंददतुस्तौचज्ञात्वापौरुषमस्यह २३ ततोदैत्योदुष्टमतिर्भूतलेसमघोषयत् ॥ देवाद्वि
जगवामर्चाक्रियतेयेनकेनाचित् २४ सहंतव्योथवासाधुरानेयोममसन्निधौ ॥ प्रतिमायत्रयत्रस्यात्तांभंक्त्वानिक्षिपेज्जले २५ मय्येवप्रतिमांकृत्वापूजयंतुगृ
हेगृहे ॥ प्राबोधयन्सिंधुवचोदूताएवंस्थलेस्थले २६ भंक्त्वाप्रासादमूर्तीश्चतोयेगाधेचचिक्षिपुः ॥ सिंधोश्चप्रतिमांकृत्वास्थापयन्परमादरात् २७ पूजार्थं
राक्षसाश्चापिततोयातानिजंपतिम् ॥ ऊचुर्वैनायकहरहरिभानुस्मादिकाः २८ प्रतिमाःप्रविभज्याशुक्षिप्ताःसर्वामहाजले ॥ तवैवप्रतिमास्तत्रस्थापिताराक्ष
साअपि २९ पूजार्थंस्थापिताःस्वामिन्आगताश्चतवांतिकम् ॥ एवंधर्मस्यसर्वस्यविच्छित्तिःसमजायत ३० यज्ञदानस्वधास्वाहावषट्कारान्नचाकरोत् ॥
देवद्विजगुरूणांचपूजनंकचनाभवत् ३१ मेरुंयाताऋषिगणाःकेचित्भ्रंशमुपागताः ॥ एवंत्रैलोक्यप्रबलादैत्याजाताश्चराक्षसाः ३२ विलीनानिधनंप्राप्ताः
साधवोदेवतागणाः ॥ यथादेवगणामोक्षंसिंधोःप्राप्ताःशृणुष्वतत् ३३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेसप्तसप्ततितमोऽध्यायः ॥ ॥ ७७ ॥ ॥ कउ
वाच ॥ ॥ सर्वेनिगृहितादेवाःसिंधुनाप्रभविष्णुना ॥ तस्यैवचवधोपायंचिंतयामासुरुत्सुकाः १ हरिरुवाच ॥ सर्वेषांसंमतंज्ञायकर्तव्यःकार्यनिश्चयः ॥ 
तस्मात्सर्वेब्रुवंत्वद्यमतंयस्ययथाभवेत् २ ॥ ॥ कउवाच ॥ ॥ इतिशक्रवचःश्रुत्वाब्रुवन्ब्रह्मादयःसुराः ॥ ईश्वरःसर्वकर्तास्तिसकल्याणंकरिष्यति ३
सयेनतुष्यतेदेवःसउपायोविधीयताम् ॥ सएनंपरिभूत्वैवनःपदानिप्रदास्यति ४ ततोवक्तृप्रधानोसौबृहस्पतिरभाषत ॥ स्वल्पयापूजयासद्यःप्रसन्नोजातये

विभुः ५ चराचरगुरुःसद्यःसर्वैःप्रार्थ्योऽसुरांतकः ॥ ॥ देवाऊचुः ॥ ॥ कोदेवःप्रार्थनीयस्तेमतोवाचस्पतेवद ६ तस्यतुष्टिंकरिष्यामःस्वपदप्राप्तयेखि
लाः ॥ ॥ गुरुरुवाच ॥ ॥ सृजतेपातियोविश्वंहंतिरूपत्रयात्मकः ७ अबीजोबीजभूतश्चाशेषवाचामगोचरः ॥ नित्योब्रह्ममयोज्योतिःस्वरूपःशास्त्रगोच
रः ८ अनादिमध्यनिधनोनिर्गुणोयोनिरामयः ॥ बहुरूपैकरूपश्चयस्यनामाखिलाजनाः ९ गृहीत्वासर्वकार्येषुसिद्धिंयांतिनिजेप्सिताम् ॥ संकष्टहरतेभ
क्त्यापूजितःसविनायकः १० आराधयंतुसर्वेतंसवःसिद्धिंविधास्यति ॥ माघस्यकृष्णपक्षोयंसंप्रहृष्टोधुनासुराः ११ चतुर्थीभौमयुक्तास्यप्रियाविघ्नहरस्यह
॥ सएवप्रकटीभूयदास्यतेस्वपदानिवः १२ सिंधुंमसंनिहत्यैवनात्रकार्याविचारणा ॥ यद्यत्कामयतेयोयस्तत्तत्सर्वंप्रदास्यति १३ ॥ देवाऊचुः ॥ सम्यगुक्तं
गुरोवाक्यंयेनत्वस्रावयंमुने ॥ महास्रोतोवहान्नस्त्वंकर्णधारोसिसांप्रतम् १४ ॥ कउवाच ॥ ततस्तेशक्रवरुणकुबेरमधुसूदनाः ॥ गुरुभौमशशीनाश्चयमाग्न्यनि
लकादयः १५ पंचामृतंगंधमाल्यंशमीदूर्वाश्चपल्लवान् ॥ फलान्यरण्यजातानिविविधानिचमृत्तिकाः १६ अशर्कराःसमादायगंडकीतांनदींययुः ॥ मंडपंविपु
लंकृत्वाभंक्त्वावृक्षाननेकशः १७ लताभिःकदलीस्तंभैःसुच्छायंचसुशीतलम् ॥ स्नात्वानित्यक्रियाःकृत्वामूर्तींश्चक्रुःसुशोभनाः १८ सिंहारूढादशभुजादशा
युधविराजिताः ॥ वैनायकीःकरिकरानानाभूषाविराजिताः १९ सिद्धिबुद्धियुताःपार्श्वेकिरीटकुंडलोज्ज्वलाः ॥ पीतवस्त्रपरीधानाःसर्वभूषाविराजिताः ॥ तस्मि
न्मंडपमध्येताःस्थापयित्वायथाविधि ॥ पुपूजुःपरयाभक्त्याषोडशैरुपचारकैः २० पंचामृतैःशुद्धजलैर्वस्त्रगंधादिदीपकैः ॥ नैवेद्यैर्विविधैश्चैवफलैरारार्तिकैःशु
भैः २१ एवंसंपूज्यतेमंत्रंजेपुःसवितृतुष्टये ॥ अस्तंयातेसवितरिसंध्यांकृत्वास्तुवन्विभुम् २२ ॥ सर्वेऊचुः ॥ दीननाथदयासिंधोयोगिहृत्पद्मसंस्थित ॥ अनादि
मध्यरहितस्वरूपायनमोनमः २३ जगद्धात्रसच्चिदाभासज्ञानगम्यनमोनमः ॥ मुनिमानसविष्टायनमोदैत्यविघातिने २४ त्रिलोकेशगुणातीतगुणक्षोभनमोनमः
त्रैलोक्यपालनविभोविश्वव्यापिन्नमोनमः २५ मुनिमानसनिष्ठायनमोदैत्यविघातिने ॥ मायातीतायभक्तानांकामपूरयतेनमः ॥ सोमसूर्याग्निनेत्रायनमोवि
श्वंभरायते २६ अमेयशक्तयेतुभ्यंनमस्तेचंद्रमौलये ॥ चंद्रगौरायशुद्धायशुद्धज्ञानकृतेनमः २७ ॥ ॥ कउवाच ॥ ॥ एवंस्तुवत्सुदेवेषुतेजो
राशिरभूत्पुरः ॥ सर्वेहतद्दृशोदेवाविस्मिताअभवंस्तदा २८ ततस्तत्कृपयादेवःसौम्यतेजाअजायत ॥ ततस्तेददृशुर्देवंसिंहारूढंविनायकम् २९ दशायु
धधरंतावद्भुजंदिव्यकिरीटिनम् ॥ नानाभूषाभिरामंचमुक्तादामविभूषितम् ३० दिव्यगंधानुलेपाढ्यंव्यालबद्धोदरंविभुम् ॥ क्षुद्रघंटाक्वणत्पादंकस्तु
रीतिलकोज्ज्वलम् ३१ एवंदृष्ट्वासुरादेवंनमस्कृत्योचिरेतदा ॥ यश्चिंतितोगुरोर्वाक्यात्सएवायंविनायकः ३२ सएवदृष्टःसाक्षात्तुवाङ्मनोगोचरोविभुः ॥ ज
न्मधन्यंदृशिर्धन्यातपोदानंचनःसुराः ३३ततऊचेसुरान्देवस्तुष्टोहंभवतांस्तवैः ॥ पूजयाचैवभक्त्याचसंकष्टीव्रततोपिच ३४ संकष्टहरमेतच्चस्तोत्रंख्यातंभवि
ष्यति ॥ यःपठेत्प्रयतोनित्यंसमेमान्योभवेत्सुराः ३५ तस्यदर्शनतःसर्वेनश्येयुर्यक्षराक्षसाः ॥ भोगान्भुक्त्वाविविधानंतेमोक्षपदंलभेत् ३६ शृण्वंतुमेपु

नर्वाक्यंसिंधुदैत्येनपीडिताः ॥ शरणंमेप्रपन्नाश्चयज्ञवेदविवर्जिताः ३७ निरुद्धागंडकींदेशेस्वधास्वाहाविवर्जिताः ॥ ततोह्यस्यवधंकर्तुमवतारांतरंमम ३८
गिरिजायागृहेदेवाभविष्यामिचसांप्रतम् ॥ मयूरेश्वरनाम्नाहंख्यातिंयास्येतदाचवः ३९ पदानामाश्रमाणांचप्राप्तिःसिंधौहतेमया ॥ भविष्यतिनसंदेहोथ
तःकृतयुगेसुराः ४० सिंहारूढोदशभुजस्तेजोरूपीविनायकः ॥ षड्भुजःशशिवर्णश्चत्रेतायांबर्हिवाहनः ४१ मयूरेश्वरनामाचद्वापरेरक्तवर्णवान् ॥ चतुर्बा
हुराखुवाहोभूत्वाचाहंगजाननः ४२ ततःकलियुगेप्राप्तेश्यामवर्णोद्दषन्मयः ॥ धूमकेतुरितिख्यातोभविष्यामिसुराअहम् ४३ शीघ्रमेवकरिष्यामिभवतांवां
छितंसुराः ॥ ॥ कउवाच ॥ ॥ एवंनिवेद्यतान्देवस्तत्रैवांतर्दधेविभुः ४४ आनंदंचसुराःप्रापुःस्वकार्यकृतनिश्चयाः ॥ यइदंपरमाख्यानंशृणुयाच्छ्रावयेन्न
यः ४५ पठेच्चपरयाभक्त्याध्यात्वादेवंविनायकम् ॥ सर्वान्कामानवाप्नोतिप्रेत्यब्रह्ममयोभवेत् ४६ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेसुरर्षिवरप्रदानंनामअ
ष्टसप्ततितमोध्यायः ॥ ७८ ॥ कउवाच ॥ निर्जितान्सिंधुनादेवान्ज्ञात्वाशंभुर्निजस्थलात् ॥ सप्तकोटिगणाकीर्णास्त्रिसंध्याक्षेत्रमभ्यगात् १ स्वाहास्वधा
वषट्कारवेदाध्ययनवर्जिताः ॥ निवसंतिभयात्सिंधोर्गौतमाद्यामहर्षयः २ दृष्ट्वातेत्र्यंबकंदेवंपरिवव्रुःसमंततः ॥ यथातीर्थंविप्रवराबालकाजननींय
था ३ प्रणम्यतंप्रपूज्यैवप्रोचुर्धन्यतमावयम् ॥ अनुष्ठानंदर्शिजन्मधन्यंज्ञानंयतोहरः ४ अगोचरोदृष्टिगतोदंडकारण्यमागतः ॥ दुरितंविलयंयातंपुण्यंचफ
लितंमहत् ५ इदानींनचदुःखंनोदृष्टेदेवेभविष्यति ॥ यथोदितेदिवानाथेनध्वांतंदृश्यतेक्वचित् ६ ततोब्रवीन्महादेवःसर्वांस्तान्मुनिपुंगवान् ॥ शिवउवा
च ॥ सिंधुनाक्रामित्रैलोक्यंकृतोदेवविनिग्रहः ७ मुनीनामपिकेषांचित्तेनाखिन्नंमनोमम ॥ विश्रांतिंनलभेस्थानेततोहमिहचागतः ८ भवतांदर्शनेनाहंप
रितुष्टोमुदान्वितः ॥ इदानीमवकाशंसपरिवारस्यदीयताम् ९ अतिपुण्येनवःप्राप्तंदर्शनंपापनाशनम् ॥ यत्रस्थित्वापरंध्यानंकरिष्येजगदीशितुः १० ॥ क
उवाच ॥ इतिशूलिवचःश्रुत्वाप्रोचुःसर्वेमहर्षयः ॥ सर्वेश्वरस्यतेदेवदातास्थानस्यकोभवेत् ११ कल्पद्रुमस्यकःकामःकेनासौपरिपूर्यते ॥ क्षीरार्णवतृषार्कि
वापल्वलेनगमिष्यति १२ तवैवरूपंपृथिवीतववश्यात्रसर्वदा ॥ त्वमीशःसर्वलोकस्ययथेच्छसितथाकुरु १३ दर्शयामःसुरपतेसुंदरंतवचाश्रमम् ॥ नाना
वृक्षलताकीर्णंरम्यवापीसरोजलम् १४ यादोभिःपक्षिभिर्युक्तंघनच्छायंसुविस्तृतम् ॥ स्वादुकंदफलोपेतंमृदुघाससमान्वितम् १५ यदीच्छात्रवसत्र्यक्षपरिपा
लयनोखिलान् ॥ कउवाच ॥ तत्रावसन्महादेवोगंगागौरीगणैर्युतः १६ कैलासादधिकंमेनेमुनेराश्रममंडलम् ॥ तदाश्रयेणतेसर्वेगौतमाद्यामहर्षयः १७
चेरुस्तपांसिविविधान्यासंस्तेविगतज्वराः ॥ शिवोपितपआरेभेगंगागौरिसहायवान् १८ ततोगणाश्वसामग्रींतस्यचक्रुर्महात्मनः ॥ कस्मिंश्चित्समयेगौरीपृ
च्छतिस्मसदाशिवम् १९ त्वमेवकर्ताहर्तात्वंपाताविश्वस्यशंकर ॥ अष्टमूर्तिरमूर्तिस्त्वंसर्वेशःसर्वभावनः २० सर्वश्रेष्ठतमस्त्वंचसर्वेषांसर्वकामदः ॥ अ
ष्टानांकर्मणांदेवफलदाताखिलार्थवित् २१ त्वत्तःश्रेष्ठतमःकोस्तियंत्वंध्यायसितंवद ॥ देवाश्चमुनयोनागायक्षमानुषराक्षसाः २२ यत्सत्तयाखिलंविश्वं

स्वत्तःश्रेष्ठतमस्तुकः ॥ त्रयस्त्रिंशत्कोटिदेवैःपूज्यसेसिद्धसाधकैः २३ ॥ कउवाच ॥ इतितद्वचनंश्रुत्वाशिवोवचनमब्रवीत् ॥ शिवउवाच ॥ सम्यक्पृष्टंत्वयादे
वितुष्टोवाक्येनतेनवै २४ शृणुष्वावहितादेविविस्तरेणब्रवीमिते ॥ अद्यापिनकथंज्ञातोयंध्यायामिसुरेश्वरि २५ तत्स्वरूपंनिरूपयिष्येतवप्रीतिचिकीर्षया ॥
लोकानामुपकारायसंसारोत्तारणायच २६ योदेवःसर्वभूतेषुगूढश्चरतिविश्वकृत् ॥ योनंतशीर्षोनंतश्रीरनंतचरणःस्वराट् २७ अनंतश्रुतिनेत्रश्चानंत
नामागुणातिगः ॥ अनंतरूपीयोदेवोवेदकर्ताखिलार्थदः २८ योनंतशक्तिर्विश्वात्मानुपमेयःपुरातन ॥ नोपमाशेषचंद्राब्धिव्योम्नांनारायणस्यच २९
भारतस्यचवेदस्यव्यासस्यचमुनेरपि ॥ यतोजीवाअनंताश्चजायंतेंबुबुदायथा ३० जलधारायथाग्नेर्वाविस्फुलिंगाभवंतिहि ॥ ब्रह्माविष्णुशिवादीनांगु
णत्रयप्रदःप्रभुः ३१ सृष्टिपालनसंहारानाज्ञापयततैरिह ॥ ततोगुणविभागेनगुणेशइतिपप्रथे ३२ तमिमंपरमात्मानंपरात्परतरंविभुं ॥ गुणेशम
निशंध्यायेपरब्रह्मस्वरूपिणम् ३३ ॥ गौर्युवाच ॥ तुष्टाहंतववाक्येनप्रत्ययोमेकथंभवेत् ॥ तंगुणेशंकथंसाक्षात्करोमिचभजामिच ३४ तमुपायंवद
विभोयदितुष्टोसिशंकर ॥ कउवाच ॥ इतितस्यावचःश्रुत्वापुनरूचेमहेश्वरः ३५ शिवउवाच ॥ ॥ एकनिष्ठतयायावत्तपसाराधितोनते ॥ तावत्प्रत्यक्ष
तांदेविकथंयास्यतिसप्रभुः ३६ ॥ देव्युवाच ॥ कथंमयातपःकार्यंकेनोपायेनवाविभो ॥ यदितुष्टोसिदेवेशवदसत्यंममानघ ६७ ॥ कउवाच ॥ ॥ एवं
तदादरंबुध्वाप्रोवाचगिरिजांहरः ॥ येनतस्याभवेत्प्रीतोगुणेशोगुणवल्लभः ३८ एकाक्षरमनुंतस्यैददौसम्यग्घरस्तदा ॥ द्वादशाब्दंकुरुतपस्ततस्तुष्टोभवे
द्विभुः ३९ साक्षात्कारंगुणेशस्तेप्रदास्यतिनसंशयः ॥ तदैवसानमस्कृत्यगिरीशंहृष्टमानसा ४० जगामतपसेगौरीमंत्रध्यानपरायणा ॥ जीर्णापुरादुत्त
रेतुलेखनाद्रिंमनोहरं ४१ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेगौरीमंत्रप्रदानंनामनवसप्ततितमोध्यायः ७९ ॥ कउवाच ॥ तत्रसाकाननंदृष्ट्वारम्यंपुष्पजलान्वि
तम् ॥ तस्थौपद्मासनगतानासाग्रन्यस्तलोचना १ गणेशध्याननिरताप्राङ्मुखीजपतत्परा ॥ एकाक्षरस्यमंत्रस्यशुष्कद्रुमइवस्थिता २ नफलंनजलंमू
लंपर्णंकंदंनमारुतं ॥ अत्तिसानिश्चलातत्रनिर्वाणपरमाश्रिता ३ एवंसाद्वादशाब्दानिव्यतीतानिततोविभुः ॥ कृपयाविरभूत्प्रीतोगुणेशोगुणवल्लभः ४
किरीटकुंडलधरोदशबाहुस्त्रिशूलभृत् ॥ भालचंद्रःशंखचक्रमुक्तामालाविभूषितः ५ अक्षमालांचकमलंकस्तूरीतिलकंदधत् ॥ मध्येनारायणमुखोद
क्षिणेचाशिवाननः ६ वामेब्रह्ममुखःशेषेपद्मासनगतोविभुः ॥ तत्फणामंडलच्छायःकुंदकर्पूरसन्निभः ७ उवाचजगदंबांतांयंध्यायसिदिवानिशं ॥ गुणे
शोगुणेशइतिसोहंतेदर्शनंगतः ८ तवनिष्ठांचभक्तिंचतपउग्रमवेक्ष्यच ॥ ममस्वरूपंवक्ष्यामिप्रीतस्तेतववरानने ९ त्रयस्त्रिंशत्कोटिदेवेष्वधिकोनचमत्प
रः ॥ गुणत्रयविभागाच्चगुणेशइतिमांविदुः १० त्रिदेहोगुणतश्चाहंसंतुष्टस्तपसाचते ॥ वरंवरयमत्तस्त्वंयत्तेमनसिवर्त्तते ११ असाध्यमपिदास्यामित्रैलो
क्येस्मिन्महेश्वरि ॥ इतितद्वचनंश्रुत्वाहर्षगद्गदनिःस्वना ॥ १२ ॥ उन्मील्यनयनेगौरीपश्यतिस्मपुरोविभुं ॥ गुणेशंत्रिगुणेशंचत्रितनुंप्रणनामसा ॥ १३ ॥

उवाचजन्मनिष्ठाचतपोमंत्रोहरोपिच ॥ अद्यधन्यतमोजातोदृष्ट्वातेपदपंकजम् १४ अद्यसिद्धिःपराप्राप्तासाक्षादृष्टोयतोभवान् ॥ नकांक्षेऽन्यवरंकंचित्त्वद्भ
क्त्यंनचलंघये १५ अतस्त्वंपुत्रतांयाहिममप्रीतिकरोभव ॥ निरंतरंदर्शनंतेसेवनंपूजनंभवेत् १६ इतितस्यावचःश्रुत्वागुणेशोहर्षनिर्भरः ॥ उवाचगिरिजां
तांसभविष्यामिसुतस्तव १७ वांछितंपूरयिष्यामिलोकानांचतवापिच ॥ एवमुक्त्वागुणेशस्तामंतर्धानमगात्क्षणात् १८ नददर्शयदादेवीगुणेशंतंक्षणा
त्तदा ॥ अमन्यतमयादृष्टःस्वप्नःकिंसुखदःक्षणम् १९ ईश्वरस्योपदेशेनदृष्टोदेवोखिलार्थदः ॥ नसोढुंविरहंतस्यशक्तास्मीतिव्यधाच्छिवा २० गुणेशप्रति
मांकृत्वास्थापयामाससादरम् ॥ प्रासादंकारयामासचतुर्द्वारंसुशोभनम् २१ गिरिजात्मजेतितन्नामस्थापयामाससुंदरम् ॥ सिद्धिक्षेत्रमितिख्यातंभविष्यति
नृणामिह २२ अनुष्ठानवतांसिद्धिर्भविष्यतिनसंशयः ॥ इतिदत्त्वावरंतत्रसंपूज्यचयथाविधि २३ प्रदक्षिणानमस्कारान्कृत्वाचद्विजपूजनम् ॥ दत्त्वादानानि
तेभ्यश्चगृहीत्वाशीर्वचोद्विजात् ॥ त्रिसंध्याक्षेत्रमगमद्योगस्थंददृशेहरम् २४ तत्पादपंकजेस्वीयंशिरःपद्मंन्यधाच्छिवा ॥ उवाचनिजवृत्तांतमाज्ञांप्राप्यवि
भोतव २५ उपदेशंमनोश्चापिद्वादशाब्दंकृतंतपः ॥ अवाप्तुमक्षयास्वामिंस्ततस्तुष्टोगुणेश्वरः २६ उवाचपरमप्रीतोभावंज्ञात्वापरंमम ॥ तवोदरेवतारंतु
करिष्याम्यचलात्मजे २७ वांछितंचकरिष्यामिदेवानांचतवापिच ॥ एवमुक्त्वाक्षणेनासौतत्रैवांतर्दधेविभुः २८ ततोहंपरमप्रीतामूर्तिंप्रासादमेवच ॥ वि
धायस्थापयित्वातांतवांतिकमुपागता २९ ॥ ॥ कउवाच ॥ ॥ एवंश्रुत्वाप्रियावाक्यंप्रहृष्टमानसोहरः ॥ प्रोत्फुल्लनयनःप्राहधन्यासिगिरिजात्मजे ३०
साक्षाद्दृष्टोगुणेशस्तेगृहेसोवतरिष्यति ३१ हनिष्यतिमहादैत्यंभूभारंचहरिष्यति ॥ इंद्रादिलोकपालानांस्वपदानिप्रदास्यति ३२ एतन्ममवचोदेविनचावि
स्मर्तुमर्हसि ॥ कउवाच ॥ एवमुक्त्वाशिवोदेवआलिलिंगशिवांतदा ३३ आनंदाश्रूणिमुंचंतौरोमांचिततनूउभौ ॥ तिष्ठंतौपरमाह्लादयुतावंबामहेश्वरौ
३४ इतिश्रीगणेशपुराणेउत्तरखंडेअशीतितमोऽध्यायः ॥ ८० ॥ कउवाच ॥ ततःसापार्वतीहृष्टासखीजनमगान्निजम् ॥ वृत्तांतंसर्वमाचख्यौहृष्टरूपापिसा
भवत् १ ततःप्रभृतिसादेवीगुणेशमानसाभवत् ॥ पश्यतिस्मान्यबालंसागुणेशोयंभवेदिति २ गृहीतुंधावतितदातन्मात्रासानिषिध्यते ॥ नक्वापिविश्रमंयाति
गुणेशध्यानतत्परा ३ तन्नामजपतेनित्यंतन्मयंलोकतेजगत् ॥ पप्रच्छचसखीःसर्वागुणेशोयास्यतेकदा ४ पित्रामेकथितंपूर्वंव्रतमीशाप्तयेशुभम् ॥ पार्थिवस्यग
णेशस्यपूजनंचयथाविधि ५ तेनव्रतप्रभावेनप्राप्तास्मिशंकरंप्रियम् ॥ पुनस्तदाचरिष्यामिगुणेशप्राप्तयेधुना ६ ततोभाद्रचतुर्थ्यांसाकृत्वामूर्तिंमुदान्विता ॥
उपचारैःषोडशभिःपुपूजचगजाननीम् ७ षाड्विर्ध्यानादिकैःपंचामृतैर्वस्त्रैरनेकशः ॥ यज्ञोपवीतगंधैश्चधूपदीपैर्यथाविधि ८ नानापुष्पैश्चनैवेद्यैर्नानाविधफलै
रपि ॥ तांबूलैरार्द्रपूगैश्चलवंगादिसमन्वितैः ९ दूर्वाभिश्चशमीपत्रैर्दक्षिणाभिरनेकशः ॥ आरार्तिक्यैर्विचित्रैश्चमंत्रपुष्पैःस्तवैरपि १० प्रदक्षिणाप्रार्थनाभि
र्ब्राह्मणानांचपूजनैः ॥ परितुष्टामूर्तिरसौपार्थिवीचेतनामगात् ११ तदैवप्रभयातस्याःकोटिसूर्यप्रभाजिता ॥ कल्पानलार्चिर्विजितानंतचंद्रप्रभाहृता १२

हतनेत्रप्रभागौरीमूर्छितापतिताभुवि ॥ मुहूर्तात्सावधानासाप्रोवाचजगदीश्वरम् १३ किंमयाविकृतंदेवपूजनेनचतर्कये ॥ अभिचारोथवाकेनप्रयुक्तोयंनवे
द्मितं १४ कथंमेविफलोयत्नोजातोदेवकृपानिधे ॥ कउवाच ॥ श्रुत्वेत्थंवचनंतस्याःसौम्यतेजाअभूत्प्रभुः १५ सातदैवाअवद्दृष्टाबालंवक्षियपुरोगतम् ॥
असंख्यवक्त्रनयनंअसंख्यांघ्रिशिरोधरम् १६ असंख्यमुकुटंसूर्यचंद्राग्निलोचनंविभुम् ॥ मुक्तामणिमयींमालांबिभ्रंतंदीप्तिमत्परम् १७ अनेकायुधहस्तंच
सर्वावयवसुंदरम् ॥ दृष्ट्वातुपार्वतीरूपंपवित्रंपरमाद्भुतम् १८ अतर्कयच्चेतसासानिमील्यनयनेशुभे ॥ कंपमानांगयष्टिःसाकर्तव्यंनाभ्यपद्यत १९ ॥ पार्व
त्युवाच ॥ चिंतितंकिंमयादृष्टमरिष्टमद्भुतंनुकिम् ॥ उन्मील्यनयनेपश्यद्दिव्यदृष्टिर्धरात्मजा २० तावच्छिवोपदिष्टंतदवेदीन्नजगादच ॥ अस्यैवमाययाभ्रां
तानजानामिविभुंप्रभुम् २१ पप्रच्छतंततःकस्त्वंकुतआगमनंतव ॥ किमर्थंत्वंगुणेशश्चद्भविताासिवदस्वमाम् २२ ॥ कउवाच ॥ इतितद्वचनंश्रुत्वावदत्सपुरु
षोमहान् ॥ स्वनेननादयन्सर्वादिशोविदिशएवच २३ ॥ देवउवाच ॥ यंध्यायसिदिवारात्रावनुष्ठानवतीशुभे ॥ सोहंगुणेशस्तेगेहेऽवतीर्णःपरमःपुमान् ॥
२४ परात्परतरोयस्मादवदंत्वावरार्थिनीम् ॥ यास्येतेपुत्रतांदेवियत्कृत्यंमेशृणुष्वतत् २५ उभयोःसेवनंकार्यंसिंधुदैत्यविनाशनम् ॥ अमराणांपदप्राप्तिंकृत्वायास्ये
स्येनिजंपदम् २६ ॥ कउवाच ॥ पीत्वावाक्यामृतंतस्यप्रीतासागिरिजात्मजा ॥ उवाचेहपरंभाग्यंपरमंमेतपःफलम् २७ नायकोनंतकोटीनांब्रह्मांडानांवि
भुर्मया ॥ दृष्टश्चिदानंदघनोयस्मात्सृष्टमनेकशः २८ पंचभूतानिब्रह्मेशहरिश्चंद्रेंद्रभास्कराः ॥ नक्षत्राणिचगंधर्वायक्षामुनिगणाद्रुमाः २९ शैलाःपक्षिगणाः
सर्वेभुवनानिचतुर्दश ॥ स्थावरंजंगमंयस्मात्सचेतनमचेतनम् ३० सत्वंममकुमारत्वंप्राप्तोसीतिविडंबनम् ॥ अथत्वांप्रार्थयेदेवप्राकृतोभवसांप्रतम् ३१
येनतेलालनंकुर्यांसेवनंपरमादरात् ॥ ॥ कउवाच ॥ यावद्वदतिसैवंतुददर्शपुरतस्तुतम् ३२ षड्भुजंचंद्रसुभगंलोचनत्रयभूषितम् ॥ सुनासंसुभ्रुवदनंस्थू
लवक्षसमीश्वरम् ३३ ध्वजांकुशोर्ध्वरेखाब्जचिह्नितंपादपंकजम् ॥ कोटिस्फाटिकसंकाशंकोटिचंद्रप्रभंविभुम् ३४ हेमतारानिभान्केशान्दधंतंबालरूपिणम् ॥
कुर्वंतंप्रथमंशब्दंकंपयंतंवसुंधराम् ३५ जनास्थानानिमर्यादांतत्यजुस्तस्यशब्दतः ॥ नीरसावृक्षनिचयाःसपल्लवचयास्तदा ३६ जातागावोबहुक्षीरास्त्रैलो
क्यंजहृषेपुनः ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिरथापतत् ३७ दृष्ट्वाबालंतुगिरिजाहस्ताभ्यांजगृहेमुदा ॥ स्नापयामासपयसातप्तेनस्नेहभावतः ३८ प्रस्नु
तौपाययामासस्तनौपरमहर्षिता ॥ शिवोपिजहृषेतेनाशिशुनापरमेणह ॥ ३९ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेगणेशाविर्भावोनामैकाशीतितमो
ध्यायः ॥ ८१ ॥ ॥ ७ ॥ ॥ कउवाच ॥ ततःशिवगणाःशंभुंवृत्तांतंतंन्यवेदयन् ॥ आश्चर्यंपरमंदेवंशिवापुत्रसमन्विता १ जातापुत्रावलोका
र्थंततोयाहिनिजंस्थलम् ॥ एवंगणवचःश्रुत्वातुतोषगिरिजापतिः २ आगत्यवीक्ष्यतंबालमद्भुतंशशिमन्निभम् ॥ स्फटिकाद्रिनिभंकुंदधवलंकंजलोचनम् ॥
३ आश्चर्यंपरमंलेभेप्रोवाचचवचस्तदा ॥ शिवउवाच ॥ नायंबालोनादिसिद्धोजराजन्मविवर्जितः ४ लीलाविग्रहवानेषस्वप्रकाशोगुणातिगः ॥

शुद्धसत्त्वमयःसर्वजीवेशोभुवनेश्वरः ५ मुनिध्येयोखिलाधारोब्रह्मभूतोखिलप्रदः ॥ कउवाच ॥ एवमुक्त्वाकराभ्यांसबालमादत्तशंकरः ६ लालयित्वाहृ
दिस्थाप्यसर्वहृत्स्थोपियःसदा ॥ पुनरूचेचगिरिजांशिवोऽशिवहरोविभुः ७ परमात्मागुणातीतःपुत्रत्वंतेसमागतः ॥ परानुष्ठानतोदेविसाक्षाद्दृष्टोविभु
स्त्वया ८ ॥ कउवाच ॥ ततोविप्रान्समाहूयपूजयित्वागणाधिपम् ॥ पुण्याहंवाचयित्वाचमातृपूजनपूर्वकम् ९ कृत्वाभ्युदयिकंश्राद्धंप्राशयित्वाघृतंमधु
॥ अभिमंत्र्यशिशुंमूर्ध्निगिरिजातंस्तनंददौ १० गौतमादीन्पूजयित्वाददौदानान्यनेकशः ॥ ततस्तेतदनुज्ञातानामप्रोचुर्महर्षयः ११ अयंतेबालतांयातो
नादिसिद्धोखिलेश्वरः ॥ निर्मातासर्वलोकानांचराचरगुरोर्गुरुः १२ मायावीवेदवेदांतागोचरोमध्यगेरवौ ॥ अवतीर्णःसुमुहूर्तेकीर्तिमाविष्करिष्यति १३
भाद्रशुक्लचतुर्थ्यांतुशशिवारेचवाशुभे ॥ सिंहलग्नेपंचशुभग्रहयुक्तेअवस्सुतः १४ श्रीमान्पराक्रमयुतोद्भुतकर्मामहाबलः ॥ भविष्यतिचलोकानांभक्तानामति
सौख्यदः १५ एकादशदिनेशंभोकुरुनामास्यसुंदरम् ॥ कउवाच ॥ एवमुक्त्वागताःसर्वेमुनयोनिजमंदिरम् १६ हरोबालंविनिक्षिप्यगिरिजाशयनेशुभे
॥ विसृज्यलोकानखिलान्बहिरायान्मुदान्वितः १७ ततःशेषोययौतत्रफणाच्छायामथाकरोत् ॥ नीरजस्कांधरांचक्रुर्मेघास्तत्रसुखोववौ १८ मारुतोमाल
तीगंधोननृतुश्चाप्सरोगणाः ॥ जगुर्गंधर्वसंघाश्चतुष्टुवुश्चारणाविभुम् १९ ततोमुनिगणाःसर्वेमृन्मूर्तिंचक्रुरुत्तमाम् ॥ मंडपंशोभनंकृत्वाकदलीपुष्पमंडितम्
२० पुपूजुःपरयाभक्त्यापद्मासनगतामुदा ॥ गुणेशेतिगुणेशेतिजेपुःसर्वेनिरंतरम् २१ अहोरात्रोषिताःसर्वेरात्रौचजागरान्विताः ॥ यथाशक्तिद्विजान्भोज्य
चक्रुस्तेपारणंद्विजाः २२ एवंदशदिनेविप्रानभोजयामासुरादरात् ॥ गृहेगृहेमहोत्साहांश्चक्रुर्देवस्यतुष्टये २३ एकादशेतुदिवसेसर्वेमुनिगणाःशिवम् ॥ आ
हूताआययुर्नामकर्तुंशिवसुतस्यह २४ मानितास्तेनतेसम्यक्कारयामासुरुत्तमम् ॥ सर्वेशत्वाद्गुणेशेतिसर्वविघ्नहरंशुभम् २५ शिवोपितान्मुनीन्प्राहसम्य
ङ्नामसमीरितम् ॥ सर्वारंभेषुपूज्योयमितितस्मैवरंददौ २६ पूजितामुनयःसर्वेदत्वादानानिसर्वशः ॥ आज्ञांगृहीत्वाशंभोस्तेस्वस्वाश्रमपदंययुः २७ अं
तर्गृहगतादेवीपुपूजेदेवताःस्वयम् ॥ तदादिसातिथिःस्यातागुणेशस्यवरप्रदा २८ तस्यांमहोत्सवःकार्यश्चतुर्थ्यांस्वशुभाप्तये ॥ मृन्मयींप्रतिमांकृत्वापूजयेच्च
यथाविधि २९ कृत्वामंडपिकांचारुमुपोष्यजागृयान्निशि ॥ मोदकापूपलड्डूकैःपायसैःपूजयेद्विभुम् ३० अपरस्मिन्दिनेविप्रान्भोजयेच्चयथाविधि ॥ एकविं
शतिसंख्याकान्यथाशक्तिचदक्षिणाम् ३१ दत्वातेभ्योनमस्कृत्यपश्चाद्भोजनमाचरेत् ॥ योनपूजयतेचास्यांगणेशंमृन्मयंनरः ३२ सविघ्नैरभिभूतःसन्नानारो
गैःप्रपीड्यते ॥ नतस्यदर्शनंकुर्यात्पतितस्यैवकर्हिचित् ३३ जातेतुदर्शनेतस्यगणेशंनामसंस्मरेत् ॥ चतुर्थ्यामहिमानंनोनशक्यंसुनिरूपितुं ३४ कर्माणि ८७
तुगुणेशस्ययथामातिनिरूपये ॥ गुप्तरूपाःसिंधुदूताःशंकरालयसंस्थिताः ३५ तमुदंतंतुतेगत्वाप्रावदन्सिंधवेतदा ॥ समासीनाययेधैश्चबहुभिर्वेष्टितायच ३६
स्थापयित्वाप्सरोनृत्यंगानंगंधर्वसंभवम् ॥ दूताऊचुः ॥ दक्षिणेदंडकारण्येत्रिसंध्याक्षेत्रसंज्ञिते ३७ गत्वातत्रदृष्टवंतोभगवंतंशिवाभिधं ॥ अष्टाशीतिसहस्रा

णांमुनीनामाश्रमान्बहून् ३८ एकस्मिन्दिवसेबालंशिवाप्रासूतपङ्कजम् ॥ लावण्यकोशंत्रैलोक्येनुपमंमहसोज्ज्वलं ३९ दशाहस्तुमहोत्साहैर्गतेषुमुनिपुंग
वाः॥ चक्रुर्नामगुणेशेतितस्यबालस्यशंकरः ४० वयंवादिन्निर्घोषैर्बाधिराइवतास्थिम ॥ यदिहंतुंगमिष्यामःसप्तकोटिगणास्तदा ४१ एकैकस्यबलंघोरंपर्वतो
न्मूलनक्षमम् ॥ निहन्युःसहसाभ्येत्यवृत्तांतंकोनिवेदयेत् ४२ ॥ कउवाच ॥ एवंवदत्सुदूतेषुशुश्रुवेव्योमवाक्तदा ॥ उत्पन्नःक्वापितेहंतासिंधोसावधतांव्रज४३
सिंधुरुवाच ॥ ॥ वध्यतांवध्यतांकोयंब्रूतेदुष्टवचोत्रह ॥ ॥ कउवाच ॥ ॥ केचिदुड्डीयपतिताधावयित्वापरेययुः ४४ तावद्दैत्योमहामूर्छांसंप्राप्तःपतितो
भुवि ॥ चिंतामग्नोम्लानमुखोनिरुत्साहोहतप्रभः ॥ ४५ उवाचविस्खलद्वाचोमुहूर्तात्प्राप्यचेतनाम् ॥ त्रैलोक्यकंटकस्यापिकंटकःकउपस्थितः ४६ क
थंहन्याद्गजःसिंहंमशकोवाथवारणम् ॥ त्रयस्त्रिंशत्कोटिदेवानिर्जिताक्षणमात्रतः ४७ तस्यमेमरणंकस्माज्जायेतव्योमवाङ्मृषा ॥ ऋतास्तुवागमिष्यामिभक्षि
तुंतमहंरिपुम् ४८ एवमुक्त्वाक्षणाद्दैत्यस्त्रासनगतोभवत् ॥ सर्वेवीरास्ततोयाताःश्रुत्वावार्तांतथाविधाम् ४९ त्वमेवमृत्योर्मृत्युश्चतवमृत्युःकथंभवेत् ॥
इत्यूचुस्तेभवेद्यापितंवयंघातयामहे ५० स्वर्गेभूमौतलेवापिगगनेवावसेद्यदि ॥ देह्याज्ञांनोगमिष्यामोदैत्यस्तानब्रवीदथ ५१ सखीनांसेवकानांचपीत्वावा
क्यामृतंपरम् ॥ प्रीतोहंयांतुशीघ्रंतुयत्रमेसरिपुर्भवेत् ५२ अनेकमाययाहत्वारिपुंमर्मनिवेद्यताम् ॥ कउवाच ॥ एवमाज्ञांगृहीत्वातेसंख्यातीताययुस्ततः
५३ त्रिसंध्याक्षेत्रमासाद्यगुप्तरूपेणचावसन् ॥ गौरीसुतंतत्रकुत्रमाययाहन्मइत्युत ५४ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेद्व्यशीतितमोऽध्यायः ८२ ॥ ॥
कउवाच ॥ शुक्लचंद्रइवब्रह्मन्ववृधेसदिनेदिने ॥ ततोहिमालयःप्रायात्श्रुत्वागौरीसुतंशुभम् १ अलंकारान्समादायानूल्यरत्नसमन्वितान् ॥ अजिरेतंनिरीक्ष्यै
वधावयित्वाययौसुता २ आलिलिंगमुदागौरीबहुकालागतंचतम् ॥ आनंदाश्रूणिसामुंचत्सोपिसातंततोवदत् ३ गौर्युवाच ॥ कथंनिष्ठुरतांयातोवृत्तांतंम
मकर्हिचित् ॥ नगृण्हासिनवास्वीयंप्रेषयस्यापिनिर्दय ४ हिमवानुवाच ॥ सत्यंवदसिगौरित्वंकंठप्राणाममस्थिताः ॥ अतस्त्वद्दर्शनाकांक्षीप्राप्तोहंहरवल्ल
भे ५ वत्सेधेनुमनोयद्वत्तद्वत्त्वयिमनोमम ॥ कउवाच ॥ एवमाकर्ण्यतद्वाक्यंसाददावासनंशुभम् ६ उपविष्टोब्रवीद्वाक्यंपुनर्गिरिवरःसुताम् ॥ श्रुतोनारदवा
क्येनपुत्रस्तेपरमाद्भुतः ७ ततस्तंद्रष्टुमायातःसर्वविघ्नहरंशुभम् ॥ कउवाच ॥ पार्वतीबालमादायपितुरंकेन्यवेशयत् ८ सोलंकारैरलंकृत्यमहिमानंततोब्र
वीत् ॥ सउवाच ॥ अयंबालोमहामायःकरिष्यतिमहीमिमाम् ९ निष्कंटकांयथाचंद्रःशीतलांस्वकरैरिमाम् ॥ अयंदेवगणान्सर्वान्स्वस्थानेस्थापयिष्यति
१० करिष्यत्यंघ्रिसेवांतेशिशोरस्यमुनीश्वराः ॥ एतस्यसर्वरूपाणिस्थावराणिचराणिच ११ अयमेवसदाध्येयोब्रह्मादीनांसहस्रदृक् ॥ सहस्रांघ्रिःसर्वजगत्कार
णानांचकारणम् १२ सहस्रास्योनंतमूर्तिःसमष्टिव्यष्टिरूपवान् ॥ त्रैलोक्येनेदृशोबालोदृष्टःक्वापिशुभाशयवान् १३ अहंतन्मयतांयातोदृष्ट्वातत्पादपंकजम् ॥
यथांभसिपयःक्षिप्तंयातितन्मयतांक्षणात् १४ अस्ययत्नंकुरुशुभेनिधिरेषपुरातनः ॥ कउवाच ॥ मस्तकेमुकुटंचास्यस्वांगदेभुजयोरपि १५ पंकजंहृदिशु

स्योश्चकुंडलेरत्नभूषिते ॥ कटिसूत्रंकटौचांघ्र्योर्महार्हाःक्षुद्रघंटिकाः १६ एवंदत्त्वाभूषणानिनामचक्रेशुभंगिरिः ॥ हेरंबेतिमहाविघ्नहरंभक्ताभयप्रदम् १७ त
तोभुक्त्वागृहीत्वाज्ञांययौस्वस्थानमद्रिराट् ॥ एकस्मिन्दिवसेबालश्चिक्रीडनिजमंदिरे १८ गृध्रासुरोगृध्ररूपीमहाबलपराक्रमः ॥ पक्षवातेनयस्याद्रिचयश्चूर्ण
त्वमीयिवान् १९ गंडशैलाश्ववृक्षाश्चपादाघातेनतस्यच ॥ सपक्षच्छाययाबालमाच्छाद्यखेभ्रमत्तदा २० नयनानिचसर्वेषांपक्षाघातरजःकणैः ॥ आच्छादय
न्महाशब्दैःश्रोत्रेबधिरतामितेव २१ ततश्चंच्वातुतंबालंगृहीत्वागृध्रपुंगवः ॥ व्योममार्गंगतोदूरंगरुडोभुजगंयथा २२ बभ्रामगगनेदुष्टोजानन्बालपराक्रमम् ॥
ततोपश्यद्गिरिसुताबालःकुत्रकुतोगतः २३ नापश्यच्चत्वरेतंतुततःशोकाकुलाभवत् ॥ केननीतोममसुतोदुष्टेनचदुरात्मना २४ उपविष्टाततोपश्यद्व्योम्निगृध्रमु
खेसुतम् ॥ मूर्छितापतिताभूमौधावधावेतिचाब्रवीत् २५ ममप्राणागमिष्यंतिविनापुत्रंसुरेश्वर ॥ कथंममोपरिव्योमपतितंशंकरःकथम् २६ नैष्ठुर्यंपरमं
प्राप्तोमय्येवजगदीश्वरः ॥ द्वादशाब्दंतपस्तप्तंनिराहारतयामया २७ करुणाब्धिःस्वप्रकाशोवतीर्णोभून्ममालयम् ॥ सगतोनिधिरूपोमेभाग्यायाःपापसंच
यात् २८ गतेबालेगतंसर्वंसुखमात्यंतिकंमम ॥ कउवाच ॥ एवंतस्यांतुशोचंत्यांशुशुचुस्तत्सखीजनाः २९ ततस्तेतत्समाधानंचक्रुर्ज्ञानेनयुक्तिभिः ॥ अना
दिनिधनेबालेनशोकंकर्तुमर्हसि ३० स्वप्रकाशेवतीर्णेतेबह्वनुष्ठानयोगतः ॥ कुत्रवामृन्मयीमूर्तिश्चेतनामगमद्दद ३१ स्थिराभवक्षणेनत्वंद्रक्ष्यसेस्वसुतंशुभे ॥
अंतकस्यांतकोबालःपुनरेष्यतितिनिष्ठया ३२ सखीजनेवदत्येवंतावद्बालःस्वमुष्टिना ॥ दधारचंचुंबलवान्यथाश्वासोननिर्ययौ ३३ श्वासरोधाद्गताऽसुः
सगृध्रस्तेनसमन्वितः ॥ निपपातमहीपृष्ठेवज्राहतइवाचलः ३४ पतमानोगृध्रदेहोदशयोजनविस्तृतः ॥ चूर्णयामासगेहानितच्चित्रमभवद्भृशम् ३५ चैत्य
वृक्षेषुभग्नेषुययुःपक्षिगणादिशः ॥ ततोदृष्ट्वातुतंबालमवदत्ससखीगणः ३६ अयमक्षतदेहस्तुपतितोगिरिजासुतः ॥ ॥ कउवाच ॥ श्रुत्वेत्थंवचनंतस्य
त्वरिताबालमाददे ३७ गौरीनिधायत्द्दृदयेपरमानंदमापच ॥ आश्चर्यंपरमंप्राप्यददौदानान्यनेकशः ३८ गतमस्यमहारिष्टमग्रेनस्यादितिद्विजाः ॥ नमस्कृ
त्याद्विजान्प्रायान्मंदिराभ्यंतरंशिवा ३९ दशयोजनविस्तारःक्वासुरोबलवत्तरः ॥ क्वबालःकोमलतनुर्लघुरूपोजवानतम् ४० एतावतोबलमिदमग्रेकिंवाकरि
ष्यति ॥ इत्युवाचसखीगौरीस्तनपानंददौमुदा ४१ अयंलघुर्नमंतव्योयथावह्निकणोदहेत् ॥ महांतंकाष्ठनिचयंतथानेनहतोसुरः ४२ ततस्तद्देहखंडानिग
णादूरेनिचिक्षिपुः ॥ शृणुयादिदमाख्यानंसोसुरैर्नाभिभूयते ४३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेत्र्यशीतितमोध्यायः ८३ ॥ कउवाच ॥ मासेद्वितीयेगौरी
तंसायमभ्यज्यबालकम् ॥ स्थापयामासदोलायांगायतिस्मसुदाबहु १ तावदाखूसमायातौमायारूपधरौसुतम् ॥ तौक्षेमकुशलौदैत्यौतद्वधाकांक्षिणावुभौ
२ नखदंष्ट्रायुधौघोरौमंदिराभ्यंतरंगतौ ॥ युध्यंतौपालनाभ्याशेस्फुरदंगरुहौखलौ ३ ययोश्चीत्कारशब्देनश्रुतयोबधिरीकृताः ॥ पादाघातेनभूःसर्वाकृष्टक्षे
त्रसमाकृता ४ ततोयष्टिंगृहीत्वासाभीषयामासतावुभौ ॥ पलायनपरौचोभावुपरिष्टाद्गतौतदा ५ युध्यंतौपतितौघोरौबालकोपरितावुभौ ॥ उरस्थला

भिघातात्सबुबुधेबालकोत्तमः ६ कृत्वाकर्कशशब्दंतुसाबिभायतदाशिवा ॥ बालभावेनहस्तौसचालयामासभीतितः ७ तदाघातादुभौनष्टजीवितौपतिता
वधः ॥ वमंतौरुधिरंवक्त्राद्दृष्ट्वाभ्रांताशिवाभवत् ८ किंचिज्जीवितशेषौतौबहिर्नीतौगणैस्तदा ॥ मोक्षंजग्मतुराघाताद्रणेशंकरसंभवात् ९ तद्देहौपति
तौघोरौदशयोजनविस्तृतौ ॥ कोलाहलोमहानासीद्दृष्ट्वादेहौतथागतौ १० गणानांचसखीनांचपार्वत्यासुमहांस्तदा ॥ विध्वस्ताआश्रमावृक्षाःपर्वताभुव
नानिच ११ पतद्भ्यांतच्छरीराभ्यांनिर्जीवाभ्यांमहांत्यपि ॥ छित्त्वाछित्त्वातुतद्देहौगणानिन्युर्बहिस्तदा १२ पार्वतीभयविस्रस्ताबालमादायसत्वरम् ॥ पाय
यामासस्नेहेनस्तन्यंबालकवत्सला १३ ऋषिपत्न्यःसमायातापार्वतींमूचिरेनघाः ॥ पुण्यंमहत्तुतेगौरियेनविघ्नंविनश्यति १४ द्विमासिकेनबालेनहतौदुष्टौ
महासुरौ ॥ अग्रेत्रिभुवनेनेनसदृशोनभविष्यति १५ माताराक्षसभूस्त्रयत्नःकार्यःशिशाविह ॥ नेष्यंतिराक्षसागुप्ताअसुरामायिनःपरे ॥ १६ ॥ कउवाच ॥
एवमुक्त्वागतादेव्योगणास्तांतुसमूचिरे ॥ अयंतुतेशिवेबालोहनिष्यतिदिनेदिने १७ अस्माभिस्तुकियत्कालंबहिःकार्याहतासुराः ॥ ततस्तुमुनयोजग्मू
रक्षांचक्रुरथाऽंके १८ ददौदानानितेभ्यःसाविससर्जप्रणम्यतान् ॥ ततस्तृतीयेमासेतुस्वस्वकार्यरतेजने ॥ मध्याह्नेपार्वतीबालंगृहीत्वामंचकेस्वपत् ॥
१९ तत्परीचारिकाःसुप्ताःकाश्चित्कार्यांतरेस्थिताः ॥ चक्रुःकाश्चिद्बहिर्वार्तामेतस्मिन्नंतरेसुरः २० क्रूरास्यश्चोतुवेषेणविवेशगिरिजालयम् ॥ वंचयित्वालोक
दृष्टिंश्चैवदुष्टोमहाबलः २१ सनिरीक्ष्यशिवांसुप्तांजहृषेमनसातदा ॥ यावन्निद्रातिगिरिजातावन्नेष्येशिशुंत्वहम् २२ लाघवान्मंचकारूढोबालमादाय
मस्तके ॥ मंचकाधःपपाताशुचुक्रोशबालकस्तदा २३ ततःप्रबुद्धागिरिजाबिडालास्यगतंशिशुम् ॥ निरीक्ष्यधावधावेतिप्राक्रोशद्भयविह्वला २४ निमीलयन
यनेमूर्च्छामगाद्दुःखेनभीतितः ॥ कंठेदशतियावत्सतावद्बालोदधारतम् २५ कर्णयोरुभयोर्दोर्भ्यांस्वभावात्पादताडनात् ॥ न्यपातयच्छिरोदेशेमंचकाधोम
हासुरम् २६ सभिन्नहृदयोयावद्बहिर्गत्वापपातह ॥ महावातेनवृक्षात्तुपक्वंकिंचित्फलंयथा २७ दुर्गंधंरुधिरंतस्यपतितंधरणीतले ॥ आच्छादयन्नासिकांसा
गिरिजाशोकविह्वला २८ आदायतस्मैप्रादात्सास्तनपानंशिशोस्तदा ॥ आगताबालशब्देनसर्वास्ताःपरिचारिकाः २९ स्पृशंतिस्मतदंगानिप्रत्येकंकौतुकान्वि
ताः ॥ अजरामरतामस्यनिश्चित्यमनसातुताः ३० सतुदीर्घोबिडालोभूत्तदाद्वादशयोजनम् ॥ कियत्यश्चूर्णितास्सख्यःकियत्यःपरिचारिकाः ३१ गणाश्चैवसमा
याताओतुंदृष्ट्वातथाविधम् ॥ आश्चर्यंपरमंचक्रुर्बालकस्यपराक्रमे ३२ क्वदैत्योमायिकोदुष्टःक्वबालचरणाहतिः ॥ इंद्रादीनामवध्यायेहन्यंतेनेनलीलया ३३
इत्युक्त्वाज्ञांगृहीत्वातेगणायातानिजंपदम् ॥ केचिच्चबलिनोदैत्यनाकृष्यतत्यजुर्बहिः ३४ कटिदेशेगृहीत्वैनंसाविशन्निजमंदिरम् ॥ ततश्चतुर्थेमासेतुमु
निपत्न्यःसमागताः ३५ नानासौभाग्यद्रव्याणिगृहीत्वोत्तरगेरवौ ॥ अबालाश्चसबालाश्चपार्वत्यामंदिरंशुभं ३६ तासामासनसत्कारान्ददौदाक्षायणी
तदा ॥ नमस्करोतितानारीःकृत्वाबालंप्रगृह्यच ३७ परस्परंसमर्चयंत्योहरिद्राकुंकुमादिभिः ॥ भूमौसंस्थाप्यबालानिगतिमंत्यगतीनिच ३८ पार्वतीयस्त

तस्तेपुक्रीडतेस्मापिबालकः ॥ तेनसर्वैशुशुभिरेशशिनोडुगणोयथा ३९ दृष्ट्वातामुनिपत्न्यस्तमूचुर्गिरिसुतामिति ॥ धन्यासिगौरिपुत्रेणशिवदत्तेनभा
स्वता ४० तवबालस्यसान्निध्याद्भासंतेनोपिबालकाः ॥ निधिसंगेनहेमत्वंलोहेनापिसमाप्यते ४१ एवंकौतुकयुक्तास्ताआनर्चुश्चपरस्परं ॥ हरिद्राभिः
कुंकुमेक्षुखंडचंदनगृंजकैः ४२ तिलैर्गुडैस्तालपत्रैर्नानापरिमलैरपि ॥ काश्चिदंगेहरिद्रांचमुखेषुचालिलिंपिरे ४३ एतस्मिन्नंतरेदैत्योनाम्नाबालासुरो
महान् ॥ बालरूपीसमवयास्तन्मध्येक्रीडितुंययौ ४४ चिक्रीडपार्वतीयेनयुद्ध्यन्निवविनोदतः ॥ यथासिंहेनक्रोष्टातुमाहिषोवागजेनच ४५ कंठेनकंठसंघृ
ष्यपेततुर्भुविदारुणौ ॥ मस्तकेचरणाभ्यांसोहनद्दुष्टोगजाननं ४६ कचानादायहस्ताभ्यांविचकर्षबलादमुं ॥ स्वयंचगर्जतेदुष्टोवृद्धःक्रोष्टायथानिशि
४७ दृष्ट्वातथाविधौतौसागिरिजाप्राहताःस्त्रियः ॥ कस्यपैदृढबालोयंताडयित्वाशिशुंमम ४८ क्रंदतेसौखरइवप्रहरेप्रहरेखलः ॥ अर्भकाणांस्वभा
वोयमित्युपेक्षितवत्यसौ ४९ तौतुभूमिगतौबालौलुंठतःस्मातुवत्सलौ ॥ धृत्वापरस्परंकेशानाकर्षंतौचसर्वशः ५० हसंतौहासयंतौचबालकांश्चमुनिस्त्रि
यः ॥ जानन्नपिमहादैत्यंखेलतिस्मविनायकः ५१ ततोबालासुरोदुष्टोहस्ताभ्यांबलवत्तरम् ॥ जीवग्राहंकंठदेशेदधारगणनायकम् ५२ तथातंसोपिजग्रा
हरुद्धश्वासोसुरोभवत् ॥ विह्वलंदैत्यपुत्रंतंदृष्ट्वादुश्चित्तताःस्त्रियः ५३ ययुश्चचुक्रुशुर्बालोनिहतोनेननिश्चितम् ॥ धावमानाययुःकाश्चिन्नाशकन्मोचितुंहितौ ५४
स्त्रियश्चपुरुषाःसर्वेततस्तामंबिकांशुभाम् ॥ ऊचुर्विमोचयैनंत्वंमुनिपुत्रोमरिष्यति ५५ ततःसापार्वतीबालंमुंचमुंचेतिसाब्रवीत् ॥ अस्मिन्मृतेशपिष्यंति
मुनयोनस्तपोन्विताः ५६ जीवदानात्परंपुण्यंनास्तिब्रह्मांडगोलके ॥ गमिष्यतिमहाशक्तिस्तवतेषांतुशापतः ५७ ॥ कउवाच ॥ ॥ एवंयावत्प्रार्थयतेगि
रिजातावदेवाहि ॥ नेत्रद्वारेणतत्प्राणागताबुद्बुदवत्क्षणात् ५८ ददृशुस्तंततःसर्वेदशयोजनमायतम् ॥ करालवक्त्रंपतितंचूर्णयित्वामहाद्रुमान् ५९ ततस्त्रि
योययुर्भीताबालमादायसत्वराः ॥ वृकवृंदंहिदृष्ट्वैवयथेनवोजायथाभयात् ६० गिरिजापिस्वकंगृह्यभ्रामयित्वासुतंमुदम् ॥ दत्वास्तनंकारयित्वाशांतिकंद्विज
पुंगवैः ६१ ददौदानानितेभ्यःसाजगृहेआशिषोबहु ॥ नजानेआसुरींमायांकियंतोयांतिनाशितुम् ६२ ततस्तेविलयंयांतिममबालान्महाखलाः ॥ ईश्व
रेसानुकूलेकःपीडितुंक्षमतेजनम् ६३ ॥ ॥ कउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंमुनिपत्न्योययुश्चते ॥ गणास्तंदूरतःक्षिप्त्वास्नात्वास्वंधामलेभिरे ६४ ॥ इ
तिश्रीगणेशपुराणेउत्तरखंडेबालासुरवधोनामचतुरशीतितमोऽध्यायः ॥ ८४ ॥ कउवाच ॥ श्रुत्वामुनिमुखात्पुत्रंगिरिजायामहाबलम् ॥ पंचमेमासिसंप्रा
प्तेमरीचिर्वीक्षितुंययौ १ भूतभव्यभविष्यज्ञःसमलोष्टाश्मकांचनः ॥ वेदशास्त्रार्थतत्वज्ञोन्यस्तस्वपरविभ्रमः २ संहाररक्षणेसृष्टौमनसाजगतःक्षमः ॥ तंदृष्ट्वा
पादयोस्तस्यपतितासाखिभिःसह ३ उपवेश्यासनेपादौक्षालयामासभक्तितः ॥ तज्जलंपावनंपीत्वासिषेचांतर्गृहंमुदा ४ उपचारैःषोडशभिःपुपूजेश्वरभावना ॥
उवाचपार्वतीतुष्टालभ्यंदृष्टंपदंहिते ५ ॥ मुनिरुवाच ॥ अहमात्ममनादेविनव्रजामिहिकुत्रचित् ॥ अकस्माद्ध्यानविषयस्तवपुत्रोबभूवमे ६ तस्यतेदर्शना

कांक्षीशिवस्याप्यहमागतः ॥ कउवाच ॥ एवमाकर्ण्यमावाक्यंतस्यर्षेस्तनयंस्वकत् ७ अतिप्रीतिमनागौरीतस्यांकेसंन्यवेशयत् ॥ऊचेसातंमहाभाग्यंकाले
तंदर्शनात्तव ८ पुण्यंचपरमंप्राप्तंशुभमग्रेभविष्यति ॥ मुनिरुवाच ॥ गौरितेयंसुतोब्रह्मस्वरूपोभासतेमम ९ षट्चक्रभेदनरतायोगनिष्ठामहर्षयः ॥ वायुभक्ष्याउ
पासंतेयंतेसोयंतवात्मजः १० गुणत्रयविभेदेनत्रितनुस्त्रिक्रियाकरः ॥ यत्सत्तयाधशेषोपिवहतेमस्तकेभुवम् ११ अणुरूपःस्थूलरूपःसप्तविंशतितत्वकृत् ॥ चे
तनाचेतनंविश्वंयद्रूपंसर्वकर्मकृत् १२ युगेदशभुजःपूर्वेसिंहारूढोविनायकः ॥ द्वितीयेषड्भुजोबर्हिवाहनःशशिसन्निभः १३ मयूरेशइतिख्यातोनानादैत्य
निबर्हणः ॥ तृतीयेतुयुगेदेवोरक्तवर्णश्चतुर्भुजः १४ गजाननइतिख्यातोधूम्रवर्णःकलौयुगे ॥ धूमकेतुरितिख्यातोद्विभुजःसर्वदैत्यहा १५ एतस्यरक्षणंगौरि
दैत्येभ्यःकुरुसर्वदा ॥ गौर्युवाच ॥ एषोतिचपलोबालोदैत्याहंतिबहूनपि १६ अग्रेकिंकर्मकर्तेतिनजानेमुनिसत्तम ॥ दैत्यानानाविधादुष्टाःसाधुदेवद्रुहःख
लाः ॥ अतोस्यकंठेकिंचित्त्वंरक्षार्थंबद्धुमर्हसि १७ ॥ मुनिरुवाच ॥ ध्यायेत्सिंहगतंविनायकममुंदिग्बाहुमाद्येयुगेत्रेतायांतुमयूरवाहनममुंषड्बाहुकंसिद्धिदं ॥
द्वापारेतुगजाननंयुगभुजंरक्तांगरागंविभुंतिष्येतुद्विभुजंसितांगरुचिरंसर्वार्थदंसर्वदा १८ विनायकःशिखांपातुपरमात्मापरात्परः ॥ अतिसुंदरकायस्तुमस्तकंसु
महोत्कटः १९ ललाटंकाश्यपःपातुभ्रूयुगंतुमहोदरः ॥ नयनेभालचंद्रस्तुगजास्यश्चोष्ठपल्लवौ २० जिह्वांपातुगणक्रीडश्चुबुकंगिरिजासुतः ॥ वाचंविनाय
कःपातुदंतान्रक्षतुदुर्मुखः २१ श्रवणौपाशपाणिस्तुनासिकांचिंतितार्थदः ॥ गणेशस्तुमुखंकंठंपातुदेवोगणंजयः २२ स्कंधौपातुगजस्कंधःस्तनौविघ्नविना
शनः ॥ हृदयंगणनाथस्तुहेरंबोजठरंमहान् २३ धराधरःपातुपार्श्वौपृष्ठंविघ्नहरःशुभः ॥ लिंगंगुह्यंसदापातुवक्रतुंडोमहाबलः २४ गणक्रीडोजानुजंघाऊरूमंगल
मूर्तिमान् ॥ एकदंतोमहाबुद्धिःपादौगुल्फौसदावतु २५ क्षिप्रप्रसादनोबाहूपाणीआशाप्रपूरकः ॥ अंगुलीश्चनखान्पातुपद्महस्तोरिनाशनः २६ सर्वांगानि
मयूरेशोविश्वव्यापीसदावतु ॥ अनुक्तमपियत्स्थानंधूमकेतुःसदावतु २७ आमोदस्त्वग्रतःपातुप्रमोदःपृष्ठतोवतु ॥ प्राच्यांरक्षतुबुद्धीशआग्नेय्यांसिद्धिदाय
कः २८ दक्षिणस्यामुमापुत्रोनैर्ऋत्यांतुगणेश्वरः ॥ प्रतीच्यांविघ्नहर्ताव्याद्वायव्यांगजकर्णकः २९ कौबेर्यांनिधिपःपायादीशान्यामीशनंदनः ॥ दिवाव्या
देकदंतस्तुरात्रौसंध्यासुविघ्नहृत् ३० राक्षसासुरवेतालग्रहभूतपिशाचतः ॥ पाशांकुशधरःपातुरजःसत्वंतमःस्मृतिं ३१ ज्ञानंधर्मंचलक्ष्मींचलज्जांकीर्तिंदयां
कुलं ॥ वपुर्धनंचधान्यंचगृहंदारान्सुतान्सखीन् ३२ सर्वायुधधरःपौत्रान्मयूरेशोवतात्सदा ॥ कपिलोजाविकंपातुगवाश्वंविकटोवतु ३३ भूर्जपत्रेलिखित्वे
दंयःकंठेधारयेत्सुधीः ॥ नभयंजायतेतस्ययक्षरक्षःपिशाचतः ३४ त्रिसंध्यंजपतेयस्तुवज्रसारतनुर्भवेत् ॥ यात्राकालेपठेद्यस्तुनिर्विघ्नेनफलंलभेत् ३५ युद्धका
लेपठेद्यस्तुविजयंप्राप्नुयाद्ध्रुवम् ॥ मारणोच्चाटनाकर्षस्तंभमोहनकर्मणि ३६ सप्तवारंपठेद्यस्तुदिनानामेकविंशतिम् ॥ तत्तत्फलमवाप्नोतिसाधकोनात्रसंशयः ३७
एकविंशतिवारंचपठेत्तावद्दिनानियः ॥ कारागृहगतंसद्योराज्ञावध्यंचमोचयेत् ३८ राजदर्शनवेलायांपठेद्यस्त्रिवारतः ॥ सराजानंवशंनीत्वाप्रकृतींचसभांज

येत् ३९ इदंगणेशकवचंकश्यपेनसमीरितं ॥ सर्वरक्षाकरंसर्वकामप्रपूरकं ॥ मुद्गलायचतेनाथमांडव्यायमहर्षये ४० मह्यंसप्राहकृपयाकवचंसर्वसिद्धिदं ॥ नदेयं
भक्तिहीनायदेयंश्रद्धावतेशुभे ४१ अनेनास्यकृतारक्षानबाधास्यभवेत्क्वचित् ॥ राक्षसासुरवेतालदैत्यदानवसंभवा ४२ ॥ इतिश्रीगणे०उत्त०गणेशकवचंना
मपंचाशीतितमोध्यायः ॥ ८५ ॥ कउवाच ॥ ततोस्यांकात्सुतंगौरीनमस्कृत्यसमाददे ॥ आज्ञांगृहीत्वाप्रायात्स्वंमंदिरंहृष्टशहर्षिता १ सोप्यनुज्ञांततो
गृह्यशिवंनत्वाश्रमंययौ ॥ ततोगौरीचकारास्यसुमुहूर्तेशुभेदिने २ गौतमादीन्समाहूयब्राह्मणानुपवेश्यच ॥ द्विजेभ्योनमयांचक्रेसाप्रणम्यस्वयंचतान् ३ सर्वे
देवगणास्तत्रनानोपायनपाणयः ॥ आययुस्तंगणाश्चापिगंधर्वाप्सरसस्तथा ४ उवाचगौरीतान्विप्रानुपवेशनमस्यह ॥ विचार्यसर्वमुनिभिःकुर्वंतुद्वि
जपुंगवाः ५ तऊचुर्मुनयःसर्वेगुरुवारस्त्रयोदशी ॥ पौष्णंनक्षत्रमद्यास्तितस्मात्कार्योमहोत्सवः ६ ततोगृत्समदःशीघ्रंनानारत्नचयंभुवि ॥ निधायचच
काराशुचतुष्कंरत्ननिर्मितम् ७ गणेशपूजनंकृत्वापुण्याहवाचनंतथा ॥ दिव्यवस्त्रावृतेतस्मिन्नुपवेश्यशिवासुतम् ८ नीराजयामासचतंपतिव्रतस्त्रीभिरा
दरात् ॥ रत्नप्रभाजालगतंनानालंकारदीपितम् ९ उपायनानितेसर्वेशिवाभ्यांतत्सुतायच ॥ वाद्यस्सुदिव्यवाद्येषुप्रददुर्भक्तितत्पराः १० सापूजयत्ततोवि
प्रान्रत्नवस्त्रादिकांचनैः ॥ आशीर्वादाक्षतांस्तस्मिंश्चिक्षेपसकलार्पितान् ११ भवानीपूजयामासमुनिपत्नीःसकन्यकाः ॥ ताऊचुर्गिरिजेधन्यात्वदन्याना
स्तिकुत्रचित् १२ एतादृशःसुतोवापिसर्वलक्षणमंडितः ॥ ॥ कउवाच ॥ ॥ एवंवदत्सुसर्वेषुस्त्रीजनेषुमहाखलः १३ व्योमासुरोव्योमकर्णोनानामायावि
शारदः ॥ नबलेसदृशस्तस्यकोपित्रिभुवनेभवत् १४ सतुद्वारिस्थितंचूतंनानाशाखासमन्वितम् ॥ अभेद्यंवारणशतैःकल्पांतमारुतैरपि १५ प्रविवेशतदा
व्योमोमाययासतदंतरम् ॥ यथादृष्टिवशाच्चूतंविशतेदुष्टचेष्टिते १६ दोलयामासतंवृक्षंकल्पांतेमारुतोयथा ॥ द्रुमपातभयात्सर्वेमुनयश्चसमागताः १७
भीताःप्रोचुर्विनावायुंकंपतेकिंमहाद्रुमः ॥ तावत्कटकटाशब्दंशुश्रुवुर्वृक्षसंभवम् १८ स्त्रियोगणाश्चसर्वेतेचक्रिरेतुपलायनम् ॥ विस्मृत्यबालकंभ्रांतागिरिजा
पिपलायिता १९ एतस्मिन्नंतरेवृक्षोनिपपातार्भकेतदा ॥ हस्ताभ्यांनिहतस्तेनशतचूर्णोपतद्भुवि २० यथावननिपातेनक्रमुकंदृषदिस्थितम् ॥ भ्रमंतिस्मत
दाव्योम्नितच्छाखाःपल्लवान्विताः २१ ऋषीणामाश्रमाःकेचिद्भग्नाःशाखानिपाततः ॥ पलायितेजनेपेतुःकाश्चिच्छाखाःसपल्लवाः २२ ततोव्योमासुरोदु
ष्टोगतासुर्निपपातह ॥ व्यादायास्यंवमन्रक्तंशतधातेनसोभवत् २३ आययुस्तेततःसर्वेस्त्रियश्चबालकंतदा ॥ ददृशुस्तेयथापूर्वमुपविष्टंनिराकुलम् २४ सु
मेरुनिश्चलंस्वस्थंततःसर्वेविसिस्मिरे ॥ पंचमासेनबालेनमहाबलपराक्रमः २५ लीलयाहस्ततोदैत्यःसवृक्षःशतधाकृतः ॥ हाहाकाररवागौरीधावतिस्मनिजंसु
तम् २६ मुनयस्तामथोचुस्तेहतदैत्यःसुतस्तव ॥ साददर्शततोबालंहिमवत्पर्वतोपमम् २७ उत्थायकटिदेशेतंधृत्वास्तन्यंददौमुदा ॥ मरीचिवाक्यंसस्मा
रप्रशशंसमहेश्वरम् २८ यमीश्वरोवतिसदातंहंतुंयःसमीहते ॥ सएवविलयंयातिपतंगइवदीपगः २९ मुनयोयोषितःसर्वाययुःस्वंस्वंनिवेशनम् ॥ ततोगणाय

युःकेचिद्दक्षतंवीक्ष्यतत्सुतम् ३० ऊचुर्धन्यतरामातारक्षितस्तेसुतोऽसुरात् ॥ दुष्टाएवलयंयांतिसाधुर्नक्कापिसीदति ३१ ततःसाशर्करांतेभ्योदत्वाज्ञांप्रददौशि
वा ॥ सर्वाभ्यश्चततोयाताहृष्टातेननिजंगृहम् ३२ यइदंशृणुयात्पुण्यमाख्यानंभक्तिमान्नरः ॥ नसबाधांलभेत्क्कापिसर्वत्रनिर्भयोभवेत् ३३ इतिश्रीगणेश
पुराणेउत्तरखंडेभूम्युपवेशवर्णनंनामषडशीतितमोऽध्यायः ॥८६ ॥ कउवाच ॥ व्योमासुरस्यभगिनीतस्यदुःखेनदुःखिता ॥ निशामुखेदर्शदिनेसमुत्पन्ना
क्षुधातुरा १ भक्षयामाससमहिषान्शतसंख्यान्महाबलान् ॥ करालकेशीलंबोष्ठीतालनासादरीमुखा २ हलदंताकूपनेत्राश्रोत्रावरणसंयुता ॥ दीर्घस्तनीमहा
घोराभूमिस्पृक्ककचकाखला ३ दीर्घबाहुर्निम्ननाभिर्गोधेवकर्कशात्वचि ॥ नामचक्रुस्तदालोकाःशतमाहिषभक्षणात् ४ अन्वर्थंभावदुष्टायाःस्फुटंतुशत
माहिषा ॥ साययौबंधुहंतारंहंतुंबंधुप्रियंकरी ५ कमनीयतराभूत्वासर्वावयवसुंदरा ॥ नानालंकारसंयुक्तागौराषोडशवार्षिकी ६ कृत्वाषोडशशृंगारान्मो
हयंतीकटाक्षतः ॥ साययौदुष्टभावेनगिरिजालयमुत्तमम् ७ प्रणनामशिवांचादौप्रोवाचपरमादरात् ॥ धन्याहंकृतकृत्याहंप्राप्ताहमीप्सितंफलम् ८ यतस्त्वंसर्व
जननीसर्वदेवमयीशुभा ॥ सर्वध्येयासर्वसिद्धिःसर्वकारणकारणम् ९ जगन्मोहनदक्षात्वंपुण्येनदृष्टिमागता ॥ ॥ कउवाच ॥ ॥ श्रुत्वावाचंतदीयांसाप्रो
वाचगिरिजातुताम् १० उत्तिष्ठोत्तिष्ठभद्रंतेसंतुष्टाहंतवेक्षणात् ॥ कस्यासिकुतआयासिकिमर्थंचवरांगने ११ कामंतेपूरयिष्यामिवदसत्यंममाग्रतः ॥ सो
वाच ॥ ॥ अहंचिरंवियोगार्ताशरणंत्वामुपागता १२ श्रुतंस्यादमरावत्यानायकोसुरनिर्जितः ॥ सलीनःक्कापिगिरिजेसर्वेदेवगणाअपि १३ त्वंतुभाग्यव
तीदेविनवियोगोहरस्यते ॥ सत्वंभवेत्सर्वदुःखमसत्वंतुवियोगजं १४ पार्वत्युवाच ॥ ॥ बालोयंममसुभगेहनिष्यतिखलान्बलात् ॥ मोचयिष्यतिदेवान्स
कालःकश्चित्प्रतीक्ष्यतां १५ एतदर्थंगुणेशेनधृतोदेहोममालये ॥ भूभारोत्तारणार्थायमुनीनांपालनायच १६ कउवाच ॥ ॥ इत्युक्त्वापूजयामासपादक्षालन
पूर्वकं ॥ सखीभिःकुंकुमाद्यैश्चभोजयामाससादरं १७ सापिभुक्त्वाशिवातल्पेसुष्वापोवाचतत्सखीः ॥ गिरिजाबालकंसख्यआनयंतुममांतिकं १८ विश्व
स्ताःसर्वसख्यस्तादुदुर्बालंतुतत्करे ॥ लालयामाससास्नेहान्मुखचुंबनवल्गनैः १९ तज्जिघांसांसविज्ञायसर्वज्ञःसशिवात्मजः ॥ राक्षसीमितिनिश्चित्यहस्ता
भ्यांश्रोत्रयोरधात् २० नासिकांचततोभारंमहापर्वतसन्निभं ॥ तदंगेपातयामाससाचश्वासनिरोधतः २१ विह्वलापरिविक्षेपपादाघातान्शिशौभृशम् ॥
मुचमुंचेतिभाषंतीकौतुकंद्रष्टुमागतां २२ कथंहंसिस्त्रियंदुष्टत्वनागस्कांशिवासमाम् ॥ ॥ कउवाच ॥ तदाक्रंदनमाकर्ण्यसखीभिःसहपार्वती २३ आगतामो
चितुंपुत्रंनाशकत्तमुवाचसा ॥ नमारयाशुमुंचैनांशक्रस्यमहिषींप्रियां २४ श्रुत्वामातृवचोबालोदूरेचिक्षेपतांतदा ॥ पपातोपरिस्थ्याजेनक्षणात्सोभ्युदतिष्ठत
२५ तत्कर्णनासिकाहस्तोदष्टःसास्रक्स्रवोपिच ॥ तदंघ्रिघातात्साप्राणांस्तत्याजक्षणमात्रतः २६ गतासुंतांशुशोचाथपार्वतीस्नेहनिर्भरा ॥ उवाचचप
लोबालोदुर्यशोर्जितवानहं २७ श्रुत्वाशचींहतामिंद्रःकिंवागत्यकरिष्यति ॥ ददर्शपुरतोगत्वाराक्षसींतांशिवाशिवां २८ दशयोजनविस्तीर्णांक्षितभू

भूरुहांतदा ॥ तत्याजशोकंजत्द्वेषप्रशशंसानिजंसुतं २९ आदायसुतमव्यंगंपार्वतीमंदिरंययौ ॥ विस्मापयत्यसौबालाशंकिताबालपौरुषं ३० विस्मयं
पौरुषेतस्यसमपद्यतपार्वती ॥ ततसख्यश्छिन्नकर्णांतांछिन्ननासांव्यलोकयन् ३१ कथमस्यालाघवंचकथमस्यबलंशिशोः ॥ अहसन्प्रावदन्नित्थंदत्वातालंप
रस्परं ३२ ततस्तांराक्षसींदूराच्चिक्षिपुःप्रमथास्तदा ॥ अरिष्टेविहतेगौरीददौदानानिभक्तितः ३३ ततस्तुसप्तमेमासेप्रवृत्तेनिद्रितेजने ॥ तमसासर्वतोव्याप्तेदश
दिङ्मंडलेखिले ३४ निशीथेरण्यपशुषुरुत्स्वसुदर्दुरेषुच ॥ पर्यंकेपरिसुप्तायांपार्वत्यांदिव्यसंस्तरे ३५ सखीजनेनिद्रितेचसेवकानांगणेतथा ॥ एतस्मिन्नंतरेदुष्टोना
म्नायःकमठासुरः ३६ आच्छादयत्स्वदेहेनशिवाप्रांगणमद्भुतं ॥ यस्यस्पर्शेनसहसाशीर्यंतेवज्रसंहतिः ३७ अतिशीतलगात्रःसपार्वणश्चंद्रमाइव ॥ उदिते
तुदिवानाथेतत्पृष्ठेविचरन्जनाः ३८ केचित्स्नात्वास्थिताजप्तुंकेचिन्निद्रांप्रचक्रिरे ॥ स्खलित्वापतिताःकेचिदतिकोमलदेहतः ३९ सिषिचुर्बालिकावारिगो
मयैरंगमालिकाः ॥ चक्रुस्ततोबहिर्यातासबालागिरिजातदा ४० आस्वापयत्सुतंगौरीमहार्हास्तरणेत्रसा ॥ सखीस्तत्रचसंस्थाप्यययौसासेवितुंशिवं ४१ एवं
ज्ञात्वासौकमठःस्वस्यपृष्ठमचालयत् ॥ भूमिकंपःकथमिहकिंवारिष्टंभविष्यति ४२ इत्यब्रुवंस्थितास्तत्रगणाश्चकितमानसाः ॥ निद्रिताःप्रतिबुद्धास्तेकिंजातमि
तिचाब्रुवन् ४३ तदैवतेनबालेनसर्वज्ञेनविवर्तिता ॥ उदरंतस्यपृष्ठेतुन्यधायिधर्षताश्चर्श ४४ चतुर्दशभुवनजंभारंनिदधताऽत्रच ॥ निरुद्धश्वासवायुःसोंगानिस्वा
निव्यचालयत् ४५ अस्रवद्रक्तमतुलमस्यदेहात्तथाविधात् ॥ उड्डानंकर्तुमारंभेनाशकत्कमठस्ततः ४६ ततोगणाययुःसर्वेयेतत्रासन्सुखोषिताः ॥ किमरिष्टंसमुत्प
न्नंमुहुर्भूश्चलतेनुकिं ४७ सख्यश्चबालिकाःसर्वाःपार्वतींसेवितुंययुः ॥ उत्तिष्ठमातर्बालस्तेनीतःस्याद्वामृतोपिवा ४८ त्वरयापार्वतीयाताधावमानाबहिःसुतम् ॥
ददर्शनिश्चलंगौरीसोत्थापयितुमुद्यता ४९ भूगोलभारसदृशंमत्वातस्थौविमानसा ॥ ततोममर्दसहसाबालस्तंसममारच ५० ततःसाददृशेदैत्यंदशयोजनमायत
म् ॥ प्रसारितमुखंकूर्मंवमंतंरुधिरंबहु ५१ चूर्णयामाससहसाश्रमान्नानाविधान्द्रुमान् ॥ ततःसाबालमादायस्तनपानंददौमुदा ५२ नज्ञायतेऽसुराणांहिना
नामायांप्रकुर्वताम् ॥ त्रिलोचनप्रसादेनपुनर्लब्धःसुतोमया ५३ यतःकृतांताद्बलवान्निहतःकमठासुरः ॥ सख्यश्चतद्गणाःप्रापुःपप्रच्छुःक्षेममर्भके ५४ क्षेम
मित्येवतान्गौरीनिजगादमुदान्विता ॥ ततोगणाःखंडशस्तंकृत्वादूरतरंजहुः ५५ ववर्षुःपुष्पवर्षाणितस्मिन्देवगणास्तदा ॥ यइदंपरमाख्यानंशृणुयाच्छ्राव
येत्तथा ५६ सर्वारिष्टविनिर्मुक्तःसर्वान्कामानवाप्नुयात् ५७ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेकमठासुरवधोनामसप्ताशीतितमोऽध्यायः ८७ ॥ व्यासउवाच ॥
अद्भुतानिचरित्राणिश्रुतानित्वन्मुखांबुजात् ॥ ब्रह्मन्नघौघहारीणिगुणेशेनकृतानिवै १ तथापिश्रोतुमिच्छामिनोनापैतिसर्ववित्तम ॥ अतोबालस्यचरितंपुनर्मेब्रू
हिसादरम् २ ॥ ब्रह्मोवाच ॥ शृणुष्वावहितोब्रह्मन्गुणेशस्यकथांपुनः ॥ श्रुतिरम्यांचपापानांसंहर्त्रीं धर्ममोक्षदाम् ३ अष्टमेमासिमध्याह्नेग्रीष्मर्तौगिरिजाकि
ल ॥ ऊष्मणापीडितागेहेसाययौपुष्पवाटिकाम् ४ अशोकाश्चंदनायत्रपनसाम्रबिभीतकाः ॥ मालतीचंपकाजातीचिंचिणीपिचुमंदकाः ५ पारिजातकवृक्षाश्च

घनच्छायासमन्विताः ॥ रम्यंशीतजलंचारुसरःकमलमंडितम् ६ तत्रमंचकवर्यैसासख्यानीतेशुभास्तरे ॥ सुष्वापगिरिजाबालयुक्तानिःशंकचेतसा ७ सखी
भ्यांवीजितावालव्यजनेनाश्मसुष्टिना ॥ सुषुप्तिमगमद्यावत्तावदैत्योमहाबलः ८ तल्पासुरइतिख्यातोवायुरूपोविशत्ततः ॥ मंचकांतर्गतःसोथतेनसाकंय
यौदिवम् ९ तस्यशब्देनसंत्रस्तेतेसख्यौपतितेभुवि ॥ आक्रंदंपरमंचक्रेपर्यंकस्थातदाशिवा १० व्योमस्थापर्यदेवत्साधावधावेतिशंकर ॥ किंमयाविकृतंदे
वकिमर्थंमामुपेक्षसे ११ अयंदैत्योतिबलवान्व्योमाक्रम्यप्रधावति ॥ परहस्तगतांकांतांशक्तःकथमुपेक्षसे १२ अस्यपुत्रस्ययोगेननानादुःखमभून्मम ॥ अ
स्माद्दैत्यान्मृतिर्मेकिंसपुत्रायाविनिर्मिता १३ अयमेववनजातश्चेत्कथंबंधनमाप्नुयाम् ॥ कउवाच ॥ एवमाक्रंदनंश्रुत्वाउमाबालोमहामनाः १४ तदामुहुर्जगर्जा
सौघनवद्गर्जयन्दिशः ॥ चकंपेधरणीतेनससमुद्रवनाकरा १५ तामदृष्ट्वातुशोचत्सुगणेषुप्रमथादिषु ॥ पादाघातेनबालोथमंचकंसमताडयत् १६ बिभ्युर्भूतानि
सहसाशतधैवाभवन्नभः ॥ मंचकःखंडशस्तेनभूत्वानिपतितोभुवि १७ ततस्तल्पासुरोदृश्योजातोबालोदधारतं ॥ हस्तेनैकेनजननींदधारासौस्वलीलया १८
घनमुक्तंतोयबिंदुंचंचेवचातकःक्षणात् ॥ स्कंधारूढांतुतांकृत्वाशिखांवामेनतस्यच १९ ततस्तत्याजभूदेशेतंबालःसहसाबलात् ॥ पद्मासनंदैत्यदेहेकृत्वायो
गीवतास्थिवान् २० सभूमौपतितोदूरान्मर्दितोबलवत्तरं ॥ प्राणांस्तत्याजदैत्योथवमन्नास्यादसृक्मुहुः २१ सतुदृष्टोजनैर्दैत्यएकविंशतियोजनः ॥ चूर्णयन्
वृक्षपाषाणानाश्रमान्शरणान्यपि २२ ततोदृष्टोबालकोसौगणैःसखिजनैरपि ॥ ऊचुस्तेगौरिबालोयंरमतेकुशलीबली २३ सातुभ्रांत्यैवनाजानात्गगनेधरणीं
शिशुम् ॥ मुनयस्तामथोचुस्तेसावधानमनासति २४ भवदैत्योहतस्तेनधृत्वारूपंमहत्तरं ॥ उन्मीलयनयनेपश्यपुनर्बालंशिवंशुभम् २५ ॥ कउवाच ॥ तद्वा
क्यात्प्रतिबुद्धासापश्यद्दैत्यंचबालकम् ॥ गौर्युवाच ॥ विपरीतंमयादृष्टंगूढोबालेनवाकथम् २६ हतोनेनमहादैत्यएकविंशतियोजनः ॥ मातॄणामृणमुत्तीर्णोबा
लोमेजीवितप्रदः २७इत्युक्त्वाबालमादायकारयामासशांतिकम् ॥ दत्वादानानिचददौस्तनपानंशिशोरपि २८दृष्ट्वातेकौतुकंतस्यप्रशशंसुर्मुदान्विताः ॥एतस्मि
न्नंतरेघोरंचक्रेशब्दंमहासुरः २९ दुंदुभेःसदृशंसोपिख्यातोदुंदुभिनामतः ॥यस्यपाणितलाघाताद्धराचूर्णत्वमागता ३०आच्छादितोदिनमणिर्देहेनगगनस्पृशा ॥
गणबालस्वरूपेणगौरीबालंजुहावसः ३१ इतएहिरमावोद्यसोपियातस्तदैवतं ॥ स्वांकेकृत्वातुतंबालंहालाहलफलंददौ ३२ अध्यद्धीतिफलंबालंशीघ्रमि
त्यब्रवीत्सः ॥ दूरदेशात्समानीतंजन्ममृत्युजरापहम् ३३ सतुजानन्दुष्टभावंफलंतज्जगृहेततः ॥ अभक्षयदयाचत्सफलांतरमभीःपुनः ३४ ॥ कउवाच ॥ अ
मृतंविषतांयातिविषंतत्तांशिवेच्छया ॥ धृत्वावक्षस्थलंतस्यतत्क्षणाद्रुदतिष्ठत ३५ तज्जानुनोर्न्यस्यपादौकराभ्यांजगृहेशिखाम् ॥ पराभ्यांश्मश्रुणी
गृह्यदोलयामासलीलया ३६ ननर्तजानुभागेस्यभूमंडलभरान्वितः ॥ सपीडितउवाचाथजानुभागादवातर ३७ तवभारेणनृत्येनममदेहोतिपीडितः ॥ मुं
चमुंचगमिष्यामिस्वालयंगिरिजासुत ३८ कउवाच ॥ एवंसंप्रार्थितस्तेननमोचयतिबालकः ॥ उदतिष्ठद्बलाद्दैत्योभग्नदेहस्तुपूर्ववतः ३९ बलाच्चकर्षबालो

पिमूर्द्धानमस्यतत्क्षणात् ॥ कंठनालात्तच्छिरोपिबालहस्तगतंबभौ ४० रुधिराक्तामहीसर्वातत्क्षणंसमपद्यत ॥ शिरःकमलहस्तोसौखेलतेगिरिजासुतः ४१
शोणितेनविलिप्तांगोगणामात्रेन्यवेदयन् ॥ सागत्वापश्यतिस्माथपुत्रंदृष्ट्वातथाविधम् ४२ तच्छिरोदूरतःक्षिप्त्वावस्त्रेणचममार्जतम् ॥ स्नापयित्वास्वयंस्नात्वाद
दौस्तन्यंतदामुदा ४३ ततःसख्योगणाश्चापुःपप्रच्छुःक्षेममर्भकम् ॥ सोवाचपरमंक्षेमबालकेशिवभक्तितः ४४ मरीचिरक्षणाच्चापिकुशलंममबालके ॥ ततस्ते
तंनिरासुर्वैदूरतोदुष्टदानवम् ४५ ततोहर्षयुताजग्मुर्गणाःसख्योनिजंगृहम् ॥ पार्वतीहर्षसंयुक्तासबालाप्राविशद्गृहम् ४६ इतिश्रीगणेशपुराणेउत्तरखंडेमंच
कासुरवधोनामअष्टाशीतितमोऽध्यायः ८८ ॥ कउवाच ॥ ततस्तुदशमेमासेत्रिमुहूर्तागतेरवौ ॥ किंचिच्चरिंगमाणोसौरमतेचशिवासुतः १ पादाभ्यांचालय
न्क्वापिगूढंगूढंचभाषते ॥ लुंठतेनर्ततेचापिरोदनंकुरुतेचताम् २ दृष्ट्वाशिवांचसहसापृष्ठलग्नोव्रजत्यपि ॥ दृष्ट्वातथाविधंबालंजहर्षेपार्वतीतदा ३ एतस्मिन्नंत
रेदृष्टोदैत्यआजगराभिधः ॥ वमदग्निकणान्दृष्ट्यावज्रसारतनुर्दृढः ४ ललज्जिह्वोदीर्घदेहोग्रसन्निवमहागिरिम् ॥ उपविष्टोद्रुमतलेद्विजिह्वेलालयन्मुहुः ५ तंबालो
बालभावेनरिंगित्वाविददारह ॥ सनिनायचतंशीघ्रमास्यांतःसहतेनच ६ अंतःप्रविष्टेओष्ठौसन्यमीलयतवायुभुक् ॥ नापश्यदंगणेबालंगौरीविह्वलमानसा ७
अत्रक्रीडन्स्थितोबालःकेननीतोहतोनुवा ॥ शुशोचपरमार्तासौतताडमस्तकंनिजम् ८ तावद्गणैर्निषिद्धासामामातर्विमनाभव ॥ बालप्रभावोविज्ञातःशतशो
बलवत्तरः ९ बालस्तदुदरगतोवत्रंधेचनिरुध्यच ॥ श्वासंतस्यतुदैत्यस्यपुच्छांतंसोप्यचालयत् १० प्राणवायुस्तुनेत्राभ्यांरुधिरेणविनिर्ययौ ॥ विदार्यदेहमस्या
सौबहिर्यातोंबिकासुतः ११ चिक्रीडरुधिरार्द्रांगःकिंनुपुष्पितकिंशुकः ॥ ततोगणास्तंनिरीक्ष्यलिहंतंस्वांगुलिंशिशुम् १२ उच्चैरूचुर्गिरिसुतामयंबालोविनिर्गतः ॥
अस्यास्यान्मारयित्वातंदैत्यमाजगरंखलम् १३ ॥ कउवाच ॥ तद्वधानंतरंबालमादायसत्वरंशिवा ॥ स्नापयामाससहसालालयित्वास्तनंददौ १४ क्वगतोसिक्ष
णोबालत्वांविनाब्दत्वमागतः ॥ ततोददर्शाजगरंविस्तीर्णंशतयोजनम् १५ भयानकमुखंदुष्टंवमंतंरुधिरंबहु ॥ पतितंवृक्षजालानिपातयित्वागृहाणिच १६
गौर्युवाच ॥ अस्मिन्स्थलेकियंतोनुभवेयुर्दैत्यराक्षसाः ॥ कियंतोनिधनंप्राप्ताअस्यबालस्यविक्रमात् १७ ततस्तंचिक्षिपुःसर्वेगणादूरेमहासुरम् ॥ ततस्त्वेकादशे
मासेद्वारदेशेशिवाययौ १८ सखीभिःपश्यतीबालकौतुकानिबहून्यपि ॥ कस्यचिद्वदनंबालश्चुंबतेचुंबयत्यपि १९ आच्छादतेचक्षुषीचकस्याचित्पृष्ठगःस्वयम् ॥
पिबतेमातुरन्यस्याःस्तन्यंगत्वाबलादसौ २० मुखमाच्छाद्यवस्त्रेणबिभीषयतिचापरान् ॥ मुखंकेशान्नासिकांचकर्षतेभूषणान्यपि २१ वदतेस्खलितां
वाणींपरंदृष्ट्वास्वकान्यपि ॥ एतस्मिन्नंतरेदुष्टोदानवःशलआसुरः २२ ब्रह्मादीनामगम्योसौपर्वतस्कंधमंडलः ॥ व्योमस्फोटिमहामूर्धानीलवर्णोयथावनः
२३ जपाकुसुमनयनोमेघस्पृक्शृंगमंडलः ॥ बालांतिकमुपायातोग्रसन्निवजगत्त्रयम् २४ तंधर्तुंबालकोयातियत्रयत्रसगच्छति ॥ एवंतौसुचिरंकालंभ्रमतः
स्ममहाजवौ २६ ततःश्रांतोऽभवद्बालोरुषाधावत्तदंतिकम् ॥ दधारसहसादैत्यंशलंबलवत्तरम् २६ सपक्षौस्फालयामासश्येनोहस्तगतोयथा ॥ बाधते

चरणाघातैस्तंबालंशलभासुरः २७ प्रसार्यनयनेक्रूरेपश्यतिस्मतदाशिशुम् ॥ मुमुचेतंतदाबालोदधारचपुनःपुनः २८ दर्शयामासजननींधराष्ठेव्यपोथय
त् ॥ शिवोवाचदयाविष्टातंबालंक्रूरमानसम् २९ जीवघातोनकर्तव्योमुंचैनंप्राणिनांशिशो ॥ बलात्पुनःशिलापृष्ठेहठाच्चिक्षेपबालकः ३० सतदाशतधाजा
तोनिपपातचभूतले ॥ गर्जयन्गगनंवृक्षान्पातयन्गृहतोरणान् ३१ वमन्रक्तंबहुमुखाद्दशयोजनविस्तृतः ॥ चूर्णयन्नाश्रमान्वृक्षांस्ततोमातानिनायतम् ॥
३२ बालंसंस्थापयामासप्रादात्स्तन्यंचभोजनम् ॥ सख्योनिरीक्ष्यतंबालंमृतंदैत्यंतथाविधम् ३३ साधुसाध्वितिताःप्रोचुस्तांचपर्वतकन्यकां ॥ गृहंविवेश
गिरिजाताश्चसख्योमुदान्विताः ३४ चिक्षिपुर्दूरतोदैत्यंतदाज्ञावशगागणाः ॥ मुमुचुःपुष्पवर्षाणिबालंदेवगणास्तदा ३५ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेश
लभासुरवधोनामैकोननवतितमोध्यायः ॥ ८९ ॥ कउवाच ॥ ततोद्वादशमासेतुगिरिजासुतमद्भुतम् ॥ उपविष्टालिभिःसार्धमंकेकृत्वास्वलंकृतम् १ को
टिसूर्यनिभंकोटिभूषणैश्चविराजितम् ॥ ततस्तस्यामहानासीदुत्सवोनृत्यदर्शने २ बालकानांहरस्याथज्ञात्वावांछांशिशुस्तदा ॥ थेथीथेयीतिशब्देनननर्त
गिरिजासुतः ३ श्रुत्वातदीयंतंशब्दंहरोनर्तितुमागतः ॥ शिवंनृत्यंतमालोक्यननर्तश्रीवरोपिच ४ ततइंद्रादयोदेवास्तत्रनर्तितुमागताः ॥ सयथानर्ततेबाल
स्तेपिनृत्यंतितादृशम् ५ दर्शयंतितथाभावंसयथादर्शयत्यपि ॥ मनुष्याःपशवोवृक्षायक्षराक्षसपन्नगाः ६ मुनयोमनवोभूपाभुवनानिचतुर्दश ॥ एकविंशतिस्व
र्गस्थाःसचेतनमचेतनम् ७ बालप्रभावान्ननृतेबालच्छंदेनभूतलम् ॥ मुनिपत्न्योदेवपत्न्योननृतुर्गिरिकन्यया ८ नूपुराणांसिंजितेनक्षुद्रघंटारवेणच ॥ पादाघात
स्यशब्देनदिशोविदिशएवच ९ गगनंपर्वताआसन्नादयुक्तास्तदामुने ॥ चकंपेधरणीशेषोरविश्चंद्रश्चतारकाः १० ततोनृत्यस्यातिशयंज्ञात्वागौरीन्यषेधयत् ॥
नचक्रेबालकोवाक्यंयदागौरीसमीरितं ११ नूपुराख्योमहादैत्योमहाकृष्णतनुर्दृढः ॥ पातालचरणोव्योमसंस्पर्शिदृढमस्तकः १२ नूपुरांतर्गतोदुष्टःसूक्ष्मरूपः
शिशोरसौ ॥ स बालस्तंबबंधाशुमाययाबलवत्तरं १३ शृंखलाभिश्चतुर्दैत्यंतथामदच्युतंगजं ॥ अंकेजग्राहतंबालंपुनरेवाद्रिकन्यका १४ तद्भारेणपिपीडाथभूआरे
णसमेनसा ॥ उवाचवचसागौरीकथंगुरुतरोभवान् १५ इदानीमेवजातोसितस्माद्गुरुतरमेऽकतः ॥ ममप्राणागमिष्यंतितवभारेणबालक १६ ॥ कउवाच ॥
श्रुत्वामातुर्वचोबालःपीडितासाभृशंतदा ॥ उत्ततारबलादंकादुधावांघ्रियुगंशिशुः १७ ततोनिसृत्यदैत्योसौव्योम्निबभ्रामपक्षिवत् ॥ तमसाव्याप्तिभूःस
र्वातेनसंछादितेरवौ १८ सोऽकस्मान्निपपातोर्व्यांशतधाचाभवत्खलः ॥ ततस्तेमुनयोदेवाःपरमानंदनिर्वृताः १९ तुष्टुवुर्बालरूपंतंपरमात्मानमव्ययम् ॥
॥ ॥ देवर्षयऊचुः ॥ ॥ नजानीमोवयंदेवरूपाणितवयन्महः २० लीलामायाश्चविविधादैत्यदानवनाशिकाः ॥ चरणात्त्याजितोदैत्योरविमंडललोपकः
२१ भ्रमित्वाव्योमनिभृशंपतितःशतधाभवत् ॥ संहृत्यजीवसंघातान्वृक्षानाश्रमपर्वतान् २२ तवनृत्यंततोवीक्ष्यसर्वेनृत्यंप्रचक्रिरे ॥ ॥ कउवाच ॥ ॥
ततस्तेपुपुजुःसर्वेतंबालंविश्वरूपिणम् ॥ नृत्योत्सवेनिवृत्तेतुगौतमादीन्विसृज्यसा २३ पार्वतीबालमादायलालयित्वास्तनंददौ ॥ स्त्रियःसर्वाविसृज्यार्थ

विवेशनिजमंदिरम् २४ ततःपुनःकदाचित्समुनिबालैःसमन्वितः ॥ गृहाद्बहिःक्रीडनार्थंययौचिक्रीडलीलया २५ मल्लयुद्धंचतेचक्रुर्द्वंद्वशोनेकधाबहु ॥ पा
तयामासुरग्रन्यशिखायांतेपरस्परम् २६ जघ्नुःशिरःशिरोभिश्चजानुभिर्जानुनीतथा ॥ कूर्परंकूर्परेणैवचरणंचरणेनच २७ हृहृहुःपृष्ठभागंतेस्कंधभागंपरस्प
रम् २८ लत्ताप्रहारान्निर्जघ्नुरुदरेमस्तकेपिच २८ केचिच्चपुपुजुर्बालंगंधपुष्पाक्षतादिभिः ॥केचिन्नीत्वाश्रमपदंभोजयामासुरंधसा २९ नमश्चक्रुःपदयुगंकेचि
न्मालांददुःशुभाम् ॥ अविपुत्रस्वरूपेणदैत्यःसिंधुप्रणोदितः ३० यंदृष्ट्वाभयमभ्येतिदंडपाणिर्भयानकः ॥ स्वबलेनजवानारींस्तीक्ष्णधारनखोबली ३१
विरुदंबाहुदेशेसजित्वासर्वान्बबंधह ॥ विशालाक्षोबृहच्छृंगोमहागोत्रविदारणः ३२पुच्छाघातेनजीवानांयश्चक्रेनाशनंखलः ॥उन्मूलयामासद्रुमानृशृंगाघातेन
पर्वतान् ३३ पृष्ठलग्नोमनुष्याणांबलान्मारयतेबली ॥ सययौपार्वतीबालंहंतुकामोमहासुरः ३४ पृष्ठतोधावयित्वासयावन्मारयतेतुतम् ॥ दधारशृंगयो
र्बालोहस्ताभ्यांतावदेवहि ३५ रुरोहचसतत्पृष्ठेहयपृष्ठेयथार्भकः ॥ ततोमुनिसुताःकेचित्पुच्छंधृत्वाभ्यकर्षयन् ३६केचिद्दंडैश्चलगुडैर्निजघ्नुर्दैत्यपुंगवम् ॥ सोव
मत्यतुतानजघ्नेपुच्छांतेनससत्वरम् ३७ निपेतुस्तेतदाभूमौपुच्छाघातेनपीडिताः ॥ दृष्ट्वातस्यबलंबालोवतरच्चदधारतम् ३८ आस्फालयत्तदापृष्ठेभ्रामयित्वा
चिरंतुतम् ॥ सहस्रधाविशीर्णांगोममारसहसासुरः ३९ अंत्यशब्देनतस्याथबिभायभुवनत्रयम् ॥ वमन्रक्तंबहुमुखात्प्रसार्यविकृतंमुखम् ४० ततोबाला
मुनीनांतेकथयन्नचलोद्भवाम् ॥ अनेनानिधनंनंतिअविजेयोमहासुरः ४१ निहंतुंनःसमायातःक्रीडताबलशालिना ॥ कउवाच ॥ अंबानिरीक्ष्यनिहतंमहा
दैत्यंसुतंचतम् ४२ आश्चर्यंपरमंकृत्वानिनायनिजमंदिरम् ॥ दध्योदनंभ्रामयित्वाबालोपरिजलेनह ४३ तस्याजदूरतोगेहात्स्तनपानंततोददौ ॥ तानिस्वं
हानिदैत्यस्यतत्यजुर्दूरतोगणाः ४४ मुनयोमुनिपत्न्यश्चमुनिबालाःस्त्रियोपिच ॥ प्रशशंसुःसुतंगौर्यादेवाःपुष्पाणितत्यजुः ४५ आशिषोपिददुर्विप्रानृत्यं
तेस्माप्सरोगणाः ४६ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेअविजेयवधोनामनवतितमोध्यायः ॥ ॥ ९० ॥ ॥ कउवाच ॥ ततोद्वितीयेवर्षेसबालो
बालैरसंख्यकैः ॥ चिक्रीडवाटिकामध्येनानाद्रुमलताकुले १ फलानिभक्षयामासखर्जूरीपनसानिच ॥ ददौतेभ्योतिबलात्सपातयित्वाबहून्यपि २
कूटोनाममहादैत्यःकूटमायाकरःखलः ॥ तत्तृषाकालमाज्ञायवापिकायांविषाणिसः ३ लोडयामासदुर्बुद्धिःसर्वेषांहिजिघांसया ॥ येषांतुस्पर्शमात्रेणम्रियं
तेप्राणिनःक्षणात् ४ यदुत्थवायुनास्पृष्टानिपतंतिखगाभुवि ॥ ततःकूटोगतस्तत्रतस्थौनाशादिदृक्षया ५ ततस्तेबालकाःपातुमज्ञानात्तुजलंययुः ॥ पपुःसर्वे
स्वचुलकैरंजलीभिश्चकेचन ६ मृतान्मत्स्यान्समादायबहिर्यातामृतास्तदा ॥ रक्षकोग्राममध्येतुघोषयामासतन्मृतिम् ७ ततोमहारवंकृत्वातत्रायुःसर्वना
गराः ॥ घ्नंतःपाणितलैर्वक्षःपाषाणैरपरेशिरः ८ हाहाकारोमहानासीत्पुंवधूयोषितामपि ॥ तेषामाक्रंदनंश्रुत्वाशिवायाअपिबालकः ९ अजीवयद्दृष्टिपातैः
सर्वांस्तान्पुरबालकान् ॥ क्रूरदृष्ट्याकूटदैत्यंमृतंभूमौन्यपातयत् १० पंचयोजनविस्तीर्णांचूर्णितांतेनवाटिकाम् ॥ददृशुर्नागराःसर्वेकातिचिच्चपलायिताः ११

सोजीवयज्जलचरान्निर्विषांवापिकांव्यधात् ॥ स्वंस्वंबालंसमादायसर्वेतेस्वालयंययुः १२ प्रशशंसुःशिवाबालंनिनिंदुर्नास्तिकाःखलाः ॥ अस्यसंगादरि
ष्टानिनश्यंतीतिपरेब्रुवन् १३ ततस्तृतीयवर्षेतुप्रातःकालेद्रिजासुतः ॥ वंचयित्वाबहिर्यातोमुनिबालास्तमन्वयुः १४ अहोरात्रवियोगेनपरस्परमथाश्लिषन् ॥
तऊचुर्निशिदेवत्वांस्वप्नेपश्यामसर्वदा १५ रात्रिर्युगसमादेवजायतेत्वामपश्यताम्॥ इदानींत्वांनिरीक्ष्यैवप्रसन्नास्मोखिलावयम् १६ क्रीडामोद्यमहासत्वंद्वंद्वी
भूययथासुखम् ॥ ततोर्धएकतोभूत्वापरेर्धेपरतोपिच १७ अभ्यघ्नन्पंकगोलेननादयंतोऽथरोदसी ॥ आह्लादेनाथयुध्यंतोविकर्षंतःपरस्परं १८ रमंतस्तेययु
र्दूरमाश्रमंकस्यचिन्मुनेः ॥ सरोवरेतत्रेरेमुर्योजनायतविस्तरे १९ सिंचंतोंजलिभिर्वारिद्वंद्वीभूतायथापुरा ॥ निमज्ज्यस्कंधमारुह्यमज्जयंतोबलात्परम् २०
ततोदैत्योमत्स्यरूपीतेषुक्रीडारतोभवत् ॥ आस्फालयन्कराघातैस्तज्जलंतेषुपुच्छतः २१ कलुषात्तज्जलाद्भंगाज्जग्मुस्तीरंमुहुर्मुहुः ॥ तीरेदृष्ट्वाद्रिजापुत्रंमत्स्य
स्तन्निकटंययौ २२ व्यादायवदनंदध्रेतदंघ्रीविचकर्षच ॥ निनायधावधावेतिक्रोशयंतंमहाजले२३निमज्ज्यसजलेतेनचिरकालंमहासुरः ॥ अरोदिषुर्मुनिसुता
मग्नंवीक्ष्याद्रिजासुतं २४ हाहाकारंप्रकुर्वंतःकरपृष्ठोष्ठसंयुतम् ॥ केचिद्गत्वासरोरम्यंपश्यंतोदद्दशुर्नतम् २५ भवानीताडनाद्भीताःकेचिद्बालाःपलायिताः ॥
केचित्तेबालकागत्वाशंसन्मग्नांशिशुंचतम् २६ सर्वान्नःक्रीडतोहित्वानीतोमत्स्येनबालकः ॥कउवाच॥ श्रुत्वातद्वचनंगौरीमूर्छितापतिताभुवि २७ मुहूर्ताच्चेत
नांलब्ध्वारोदमानाययौबहिः ॥ मुंचंतीनेत्रजंवारिमस्तकात्पतितांचला २८ स्खलंतीनिश्वसंतीचपतंतीधरणीतले ॥ सख्यस्तामन्वयुःकाश्चिद्हित्वाकार्याणि
सत्वराः २९ सरस्तीरंशीघ्रतरमागतासखिभिःसह ॥ मुनयस्तमुदंतंचश्रुत्वायाताःसरःप्रति ३० अगाधेंभसितेकेचिन्मग्नानापुरुमासुतम् ॥ तामूचुर्जननींके
चिन्मग्नानोबालकाजले ३१ तैःपुनर्नचदृष्टश्चमत्स्योदरगतःसुतः ॥ रोदनंपुनरारेभेगौरीश्रुत्वातुतद्वचः ३२ उमोवाच ॥ ममप्राणागमिष्यंतिविनातंसर्वसुंदर
म् ॥ अतिक्लेशेनसंलब्धमतिपौरुषमीश्वरं३३चराचरगुरुंमायातीतंमायाविनंपरम् ॥ अनंतकोटिब्रह्मांडनायकंविश्वसंभवम् ३४ ललाटंनिजपाणोरोवारंवा
रंकरेणसा ॥ रुरुदुर्मुनयोवीक्ष्यरुदतींतांतथाविधाम् ३५ ततःकारुणिकोदेवोनिशम्यकरुणंवचः ॥ स्वयमंडजरूपोभूद्युयुधातेपरस्परम् ३६ तदाघातेनजल
जामृतास्तीरेनिपेतिरे ॥ दंष्ट्राभ्यांदशतःस्मोमौघ्नतःस्मपुच्छघाततः ३७ उदरंस्वोदरेणैवपृष्ठंपृष्ठेनजघ्नतुः ॥ एवंचिरतरंयुद्धंकृत्वादारुणमोजसा ३८ मत्स्य
रूपंगुणेशोथबलाज्जग्रेसुखेमुखं ॥ मग्नास्योभग्नदर्पोसौभग्ननेत्रोभवन्नसः ३९ पपालजलमध्येसप्रेष्ठगात्सउमासुतः ॥ यत्रयत्रययौसोथतत्रतत्राप्यसौययौ
४० क्वचिल्लीनंतुतंदृष्ट्वापुच्छाघातैरताडयत् ॥ तत्पुच्छंतुमुखेधृत्वागुणेशोबहिरानयत् ४१ चुचूर्णनिजभारेणगतासुंविससर्जसः ॥ स्यजंतंरुधिरंवक्त्रान्नदंतंब
लवत्तरं ४२ तेनशब्देनमहाताचकंपेभुवनत्रयं ॥ निर्ययौजलमध्यात्सलिलिंगपार्वतींतदा ४३ आनंदमग्नागौरीतंस्तनपानंमुदाददौ ॥ मामपृष्ट्वाथकुत्रत्वंगतो
सिबालकैःसह ४४ यद्यदायातिविघ्नंतेतत्तद्दैवाद्विनश्यति ॥ मरीचेरक्षणाच्छंभोःकृपयाजगदीशितुः ४५ कुरुषेकिंचपलतांरक्षितव्यःकथंमया ॥ त्वद्वियो

गाम्ममप्राणागमिष्यंतिप्रियार्भक ४६ ॥ ॥ कउवाच ॥ ॥ ततोमुनिगणाःप्रोचुस्त्वांविनादुःखितावयं ॥ इदानींपुनरानंदंप्राप्तास्त्वद्दर्शनाद्विभो
४७ पुपूजुर्मुनयोनानाद्रव्यैःसख्यःस्त्रियोपिच ॥ नमस्कृत्यगुणेशंतंप्रार्थयन्सर्वएवतं ४८ वयंत्वदीयादेवेशननस्त्यक्तुंत्वमर्हसि ॥ ततोमाबालमादाययययौ
स्वस्थानमुत्तमं ४९ अनंतरंगणाःसख्योमुनयोहर्षनिर्भराः ॥ मार्गमध्येपरःशैलनामादैत्योमहाबलः ५० सर्वशत्रुहरोनक्रद्दढांगोऽशनिनाशनः ॥ गिरि
णांयस्यशब्देनदारणंजायतेक्षणात् ५१ मार्गंनिरुध्यसहसासंस्थितोरोदसीस्पृशन् ॥ द्वियोजनमस्तकोसावधोद्वादशयोजनः ५२ सरस्तडागावृक्षाश्चलतायत्र
विभांतिच ॥ क्रीडंतिसिंहशर्दुलावारणायक्षराक्षसाः ५३ सर्वेतेविह्वलाःप्रोचुःकिमिदंविघ्नमुत्थितं ॥ तदंतिकेस्थितागौरीतेपिसर्वेस्थितास्तदा ५४ तत
स्तेमुनयःप्रोचुःकदाद्रक्ष्यामयोषितः ॥ अपत्यानिगुणेशस्यकदास्यादत्रविक्रम ५५ गमिष्यातिवृथाहोमकालोयंनःस्वधाक्रियाः ॥ गौरीजगादतान्सर्वान्माखेदं
कर्तुमर्हथ ५६ ममापिचिंतासंप्राप्ताशंकरस्यहिजायते ॥ ॥ कउवाच ॥ श्रुत्वावाक्यानितान्याशुगुणेशोबुद्धिमत्तरः ५८ प्रवृत्त्यतुविराड्रूपंश्वासमा
त्रान्निराकरोत् ॥ ददृशुर्नचतद्रूपंमोहितामुनयोपिते ५८ तच्छ्वासयोगात्सगिरिर्बभ्रामगगनेतदा ॥ आश्चर्यंपरमंप्राप्ताःसर्वेतेतंप्रशंसिरे ५९ वात्यागतंयथा
पत्रंततोसौपपातितोभुवि ॥ सहस्रधामवच्छैलःपुनर्वृक्षानचूर्णयत् ६० ततस्तेमुनयःप्रोचुःसाधुसाधुगुणेश्वर ॥ दूरीकृतमरिष्टंनःस्वाश्रमस्थावयंसुखं ६१ व
सामस्त्वत्प्रसादेनस्वस्वकर्मरताभृशं ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वाचनत्वाचपृष्ट्वासंपूज्यतंययुः ६२ पार्वतीचतमादायविवेशनिजमंदिरं ॥ सख्य
श्चमुनिपत्न्यश्चपृष्ट्वातांस्वगृहंययुः ६३ इदंयःशृणुयान्मर्त्यःसर्वत्रसुखमाप्नुयात् ॥ आयुरारोग्यमैश्वर्यंसर्वत्रविजयंतथा ॥ ६४ ॥ ॥ इतिश्रीगणेशपुरा
णेउत्तरखंडेवत्सशैलासुरवधोनामएकनवतितमोध्यायः ॥ ९१ ॥ ॥ ॥ कउवाच ॥ ततःकदाचिद्गिरिजाप्रातःस्नात्वात्वरान्विता ॥ सुप्तेबालेचतुर्वर्षेलिं
गपूजांचकारसा १ वामहस्तेनिधायैवपार्थिवींमूर्तिमुत्तमां ॥ सउत्थायरुदन्स्तन्यंययाचेहठतत्परः २ क्षणंतिष्ठक्षणंतिष्ठेत्येवंमातान्यषेधत ॥ सरुषापातयन्मूर्तिंत
द्धस्ताद्धस्तघाततः ३ तंचसाहस्तघातेनजघानदृढरोषतः ॥ सरुषापुनरागत्यददंशांगुलिमुल्बणं ४ मुंचमुंचममप्राणागमिष्यंतीतिसाब्रवीत् ॥ दष्टामंगुलिमृत्सृ
ज्यपपालदूरतोर्भकः ५ अस्त्रवद्रुधिरंतस्याअंगुलेर्बहुलंभुवि ॥ यथाक्षीरमर्कवृक्षाद्दृढाघातेनपीडितात् ६ ततोयष्टिंसमादायताडितुंसासुतंययौ ॥ धावयित्वा
दधारैनंददर्शशिवरूपिणं ७ पंचवक्त्रंदशभुजंत्रिनेत्रंशेषशोभितम् ॥ त्रिशूलंडमरुंभस्मरुंडमालांचबिभ्रतं ८ वसानंचर्मणीहास्तिव्याघ्रयोःशशिशेखरं ॥
दृष्ट्वेत्थंलज्जितायष्टिंतत्याजाधोमुखीशिवा ९ पुरोवामंदिरंवापिगंतुंसानाशकत्तदा ॥ तच्चिंतांसपरिज्ञायबभूवार्भकरूपवान् १० क्रीडतेमुनिपुत्रेषुमुनिबालः
स्वरूपवान् ॥ अन्वयाद्गिरिजाबालंनापश्यत्तेषुतंसुतम् ११ पप्रच्छतान्मुनिसुतान्ममबालःकुतोगतः ॥ दष्टांगुलींमदीयांतुपपालचपलोर्भकः १२ तऊचुर्मु
निपुत्रास्तामितोयातोर्भकस्तव ॥ ततोजगामागिरिजापुरतःपुरतोपिच १३ विशीर्णकबरीभाराश्रमघर्मसमन्विता ॥ इतस्ततोधावमानास्रस्तवस्त्रांचलाशिवा ॥

तस्याःश्रमंसविज्ञायययौपूर्वस्वरूपवान् १४ तदंतिकंदयारैनंहस्ताभ्यांगिरिजाद्दढम् ॥ स्वीयांचलेनतंबध्वाययौद्दृष्टास्वमंदिरम् १५ उवाचरोषात्सम्यक्त्वं
ममहस्तेसमागतः ॥ अपरमारातिचपलमारयिष्येधुनाभृशम् १६ शंभवेवानिवेदिष्येसत्वांवाताडयिष्यति ॥ श्रुत्वेत्थंवचनंमातुर्लुलुंठधरणीतले १७ निः
सृतंबंधनंज्ञात्वापपालत्वरयापुनः॥ पुनर्धावतिसापृष्ठेदुःखिताभृशविह्वला १८एतस्मिन्नंतरेदुष्टोदानवःकर्दमासुरः॥ द्विजरूपधरोमालांदधानोदक्षिणेकरे १९
कमंडलुंवारिपूर्णंभस्मोद्धूलितविग्रहः ॥ अरुणार्कनिभेवस्त्रेवसानोमायिकोभृशम् २० सऊचेवचनंबालंकिमर्थंत्वंपलायसे ॥ त्वद्भीतेवारणंसद्यःकरिष्येहंनस
शयः २१ नेष्येत्वांयत्रतेमातानजानीयात्कथंचन ॥ नचकालभयंतत्रनचान्यद्भयमण्वपि २२॥ ॥ कउवाच ॥ ॥ तमुवाचार्भकोभीतस्तथाकुरुयथामम ॥
नपश्येज्जननीतातःशरणंत्वामुपागतः २३ एवंवदतियावत्तुयथौबालस्वभावतः ॥ गिगीलतावदेवासौतंदुष्टःकर्दमासुरः२४ रंआफलस्यपक्वस्यखंडंकोमल
मर्भकम् ॥ तत्पादपद्मचिह्नानिभूमौदृष्ट्वाययौशिवा २५ द्विजंददर्शपुरतोपृच्छत्तंचततोर्भकम् ॥ स्वामिन्त्वयाममसुतइतोगच्छन्निरीक्षितः २६ इमानिप
दपद्मानिचिह्नयुक्तानिपश्यभोः ॥ इदानींधावमानःसकुत्रगुप्तोभवद्द्विज २७ ततस्तामब्रवीद्विप्रोदुःखितांतद्वियोगतः ॥ ॥ द्विजउवाच ॥ ॥ किंनःप्रयोजनं
मातस्तनयेनतवानघे २८ उदासीनतयामातस्तिष्ठतामीशचेतसाम् ॥ तथापिनैवदृष्टस्तेतनयःक्वापिशैलजे २९ तनयःकिंत्वयादेविमदधीनःकृतोभवत् ॥
॥ कउवाच ॥ ॥ एवंवदतितस्मिंस्तुदुःखितांवीक्ष्यशैलजाम् ३० आविरासीन्निर्विकारस्तन्मुखात्सगुणेश्वरः ॥ साप्राहतनयंदृष्ट्वाकथंमिथ्याब्रवीषिरे ३१
तवैवनिकटेपुत्रोदृष्टोयंगोपितस्त्वया ॥ संतःप्राणात्ययेप्राप्तेनभाषंतेनृतंक्वचित् ३२ ॥ ॥ कउवाच ॥ ॥ इतितस्यावचःश्रुत्वासदैत्योदीर्घदेहवान् ॥
व्योमस्पृङ्मस्तकोबालमादयनिर्ययौततः ३३ ततःसापृष्ठतोलग्नाक्रंदंतीतनयंशिवा ॥ गुणेशोपिततोदध्रेतस्माद्दीर्घतरंवपुः ३४ दृष्ट्वादुःखंजनन्यास्तुप्रशो
चंत्यासुहुर्मुहुः ॥ तद्देहंशतधाकृत्वाचुचूर्णांघ्रिविघाततः ३५ पतमानोपितद्देहश्चूर्णयामासशाखिनः ॥ जनन्याअग्रतस्तस्थौसंहृत्यैवंतुदानवम् ३६ गुणे
शोमुनयोदेवास्ततपत्न्योथसमागताः ॥ ऊचुस्तांपार्वतींविप्राःकियंतोस्यभवंतिहि ३७ तएवनाशमायांतितवपुण्यात्सुरेश्वरि ॥ सर्वैस्तैःपूजितंबालंगृही
त्वास्वकटौशिवा ३८ गृहंजगामतैस्ताभिर्हर्षनिर्भरमानसा ॥ पुरामरगणान्जित्वागरुत्मानमृतंयथा ३९ उत्ततारशिवाबालंस्वांगणेकटिदेशतः ॥
सतुमूर्छागतोलुंठन्धरण्यांचपुनःपुनः ४० वारंवारंददौजृंभांप्रसार्यमुखपंकजम् ॥ किंजातमधुनैवास्यधावयित्वाययौशिवा ४१ मुखमध्येददर्शास्यविश्वं
विश्वस्वरूपिणः ॥ सप्तद्वीपांवसुमतींपुरग्रामवनाकरान् ४२ ब्रह्माणंभास्करंशेषंविष्णुंपर्वतसागरान् ॥ गंधर्वान्यक्षरक्षांसिमुनिपाक्षिगणानपि ॥ नदीवापी
तडागानिमनूनष्टौवसूनपि ४३ शशिसूर्यानलोडूनिसचेतनमचेतनम् ॥ पातालान्यपिसप्तानिस्वर्गानप्येकविंशतीन् ४४ एवंत्रिभुवनंदृष्ट्वामुमूर्छगिरिजात
दा ॥ निमील्यनयनेभ्रांतामुहूर्तंद्वयमास्थिता ४५ शिवंसस्मारमनसासावधानाततोभवत् ॥ यथापूर्वस्थितंबालंपश्यतिस्मपुरःस्थितम् ४६ ततस्तंपरितु

ष्टावतत्प्रसादप्रसन्नधीः ॥ पार्वत्युवाच ॥ परमात्मात्वमेवासिचराचरगुरुर्भवान् ४७ चिदानंदघनोनित्योनिरयानित्यस्वरूपवान् ॥ त्वत्कुक्षौ परिदृष्टानिभुव
नानिचतुर्दश ४८ देवायक्षाश्चरक्षांसिसरितोवृक्षसंचयाः ॥ सर्वंचराचरंदृष्टंमयावक्तुंनशक्यते ४९ भ्रांताहंपतिताभूमौ सावधानाशिवस्मृतेः ॥ जाताहंबाल
रूपेणापश्यंत्वांप्राकृतंशिशुं ५० ॥ कउवाच ॥ एवंस्तुवत्यांतस्यांतुमायामाविश्वकारसः ॥ लालयित्वाकटौगृह्यस्तनपानंददौशिवा ५१ गृहंप्रविष्टागिरिजा
गृहकार्यरताभवत् ॥ मुनयोमुनिपत्न्यश्चययुःस्वंस्वंनिवेशनम् ५२ इदमाख्यानकंश्रुत्वासर्वपापैःप्रमुच्यते ५३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेविश्वरूपदर्श
ननामद्विनवतितमोध्यायः ९२ ॥ कउवाच ॥ ततस्तुपंचमेवर्षेप्रवृत्ते मुनिबालकाः ॥ उषःकालेगुणेशस्यसमागम्यगृहंप्रति १ प्रातःकाले कथंशेषेप्रोत्तिष्ठोत्तिष्ठ
हेसखे ॥ उत्थापयनिजंबालमित्यूचुस्तेशिवामपि २ तानुवाचशिवावाक्यंनिद्रावोनसमागता ॥ क्रीडायामेवसक्तानांचपलानांदिवानिशं ३ कथंयाहीत्यनुदि
तेनिर्लज्जामूढभावतः ॥ तऊचुः ॥ मातर्नतववाक्येनकोपोनोजायतेक्वचित् ४ वयंतेबालकाःकिंनत्वंवानोजननीनकिं ॥ अस्मिंस्तवशिशौसक्तंसर्वेषांमानसंस
दा ५ एनंपश्यामपुरतोदिवानक्तंनिरंतरम् ॥ विनैनंचसमाधानंननश्चेतसिजायते ६ श्रुत्वावाक्यानितेषांतुप्रोदतिष्ठत्तदाशिशुः ॥ लिलिंगबहिरागत्यगुणेशस्तैः
परस्परं ७ ययुर्बहिर्मुदायुक्ताधृत्वाहस्तान्परस्परं ॥ द्विभागीभूयचिक्रीडुर्नानायुद्धविचेष्टितैः ८ मस्तकंमस्तकेनैववक्षसावक्षएवच ॥ बाहुभ्यांचैवबाहूचनिज
घ्नुस्तेपरस्परं ९ जलेनरजसाचैवकंदुकैर्मुष्टिभिस्तथा ॥ कर्दमैर्गोमयैःकेचिद्दांदोलनविकर्षणैः १० कोलाहलंप्रकुर्वंतःशृंगवंशरवानपि ॥ दैत्यभूताजयंप्रापुर्देवभूताः
पराजयं ११ एवंयुद्धचस्तुतेष्वेवंस्वङ्गनामामहासुरः ॥ आययावुष्ट्ररूपेणविशालेननभस्पृशा १२ पुच्छवातेनमहतापातितावृक्षसंचयाः ॥ शूलदंतोललज्जिह्वःपा
देनामर्दयन्दिशः १३ समहांतंरवंकृत्वातमधावद्गणेश्वरं ॥ प्रतिशब्देनसहसानादयन्विदिशोदिशः १४ तंदृष्ट्वाविद्रुताःसर्वेमुनिपुत्राभयातुराः ॥ धावधा
वेतितंबालंचुक्रुशुःकेचिदर्भकाः १५ तेषामाक्रंदितंश्रुत्वासहसासगुणेश्वरः ॥ कृत्वामहत्तररूपंउड्डीयतंजवानह १६ मुष्टिघातेनाशिरसिवज्रेणेवमहाचलं ॥
सभिन्नहृदयोदुष्टोवमन्रक्तंमुखाद्बहु १७ कृत्वाघोरंमहाशब्दंपतितोधरणीतले ॥ विचाल्यचरणान्ग्रीवामाक्रंद्यचपुनःपुनः १८ स्वीयंदेहंसमास्थाय
तत्याजजीवितंक्षणात् ॥ दशाष्टयोजनायामःपातयन्वृक्षसंचयान् १९ उदुद्धूलरजोभौमंगगनंप्रावृतंक्षणात् ॥ तद्देहपातात्पतिताजंतवोथपतत्रिणः २० तं
तथापतितंदृष्ट्वासर्वएवकुमारकाः ॥ साधुसाधुशिवापुत्रमहादैत्योनिपातितः २१ दृष्टामहांतंतंदैत्यंवयंभीत्यापलायिताः ॥ कथंत्वयामहादैत्यःपौरुषेण
कनीयसा २२ हतोयंविस्मिताःसर्वेपुनस्तंसमुपागताः ॥ इत्युक्त्वातेपुनःक्रीडांचक्रुःसर्वेयथापुरा २३ कर्षयंतोंघ्रिकमलेधृत्वाकेचित्परस्परं ॥ ततस्तस्यस
खाप्रायान्मृतप्रतिकृतीच्छया २४ छायारूपंसमास्थायमहाबलपराक्रमः ॥ पादाघातेनतस्याशुचकंपेशेषविग्रहः २५ व्योमस्पृङ्मस्तकोदुष्टोगुणेश
पृष्ठतोपयौ ॥ छायांतदीयामाविश्यपातयामासतंतदा २६ इतरेषामदृश्योसौमायावीबलवत्तरः ॥ यथायथानृत्यतेसतथादैत्योपिनृत्यति २७ तंपतंतंगुणे

शंतेनिरीक्ष्यमुनिबालकाः ॥ ऊचुस्तंधाविताःकेचित्केचिच्चदुःखिताभृशं २८ कथंवा पतसे नाथक्वसामर्थ्यंगतंतव ॥ वारंवारंस्खलसिकिंप्रियेषुचसखिष्वपि २९
ततोबालोददर्शाशुदशदिक्षुसमंततः ॥ सामर्थ्यादुग्रतोयातुमियेषनाशकच्चसः ३० पुनश्चप्रणिधानेनसमंतादवलोकयन् ॥ छायाप्रविष्टंतंदैत्यंज्ञातवान्सगु
णेश्वरः ३१ गंडशैलंसमादायप्राक्षिपच्चोदरेस्यह ॥ उपरिष्टान्ननर्त्तासौममृतश्चूर्णतांगतः ३२ अंतकालेमहद्रूपंसमास्थायनिजंखलः ॥ चूर्णयामासवृक्षा
न्सपर्वतान्प्राणिसंचयान् ३३ तन्मेदसाचरक्तेनधरणीचगुणेश्वरः ॥ रक्ततांसमनुप्राप्तौवसंतेकिंशुकाविव ३४ एवंतंविनिहत्याशुगुणेशोलीलयारमत् ॥ त
तएकोवृषस्कंधःसूकरास्योगजोदरः ३५ गंडशैलारजइवश्वासाद्यस्यचलंतिच ॥ चंचलाख्योमहादैत्योबालरूपधरोविशत् ३६ तेषुनानाविधाःक्रीडादर्श
यामासलाघवात् ॥ महाबलोमहामायःपोथयामासकांश्चन ३७ चरणंकस्यचिद्धृत्वाचकर्षमुनिबालकम् ॥ उभौकरौविधृत्वैवकस्यचिन्मस्तकेहनत् ३८
यस्यनृत्येधरासर्वाकंपतेस्मसपर्वता ॥ तेघर्मेमृत्तिकांसर्वेचर्चयंतिस्वविग्रहे ३९ सोपिचर्चयतेस्वांगंचंदनेनेवभाग्यवान् ॥ ततस्तेकंदुकंकृत्वातेनक्रीडा
मथारभन् ४० कंदुकोव्योममार्गस्थोबालत्यक्तोस्पृशत्करम् ॥ कृत्वाश्वदच्चतंबालमारोहेत्ससकंदुकः ४१ आरोहकोबलाद्भूमौनिक्षिपेत्तंचकंदुकम् ॥ अप
रोधारयेदूर्ध्वमागतंसोपिवापुनः ४२ यद्धस्तेकंदुकःसोथबालमारुह्यतंत्यजेत् ॥ भूमौनिपतितंबालमादायतेनताडयेत् ४३ तेषुमध्येपलायत्सुयस्यलग्नःस
कंदुकः ॥ तेनापिव्योममार्गस्थःकार्योयस्यकरंस्पृशेत् ४४ हस्तेनायातिचेत्सोपिव्योमगंतंतुकारयेत् ॥ येनहस्तेधृतःसोमुमारुह्यपूर्ववत्क्षिपेत् ४५ क
दाचित्कंदुकःक्षिप्तोगुणेशेनचव्योमनि ॥ चंचलेनधृतोहस्तेतमारूढस्तदासुरः ४६ आरेणाक्रम्यतंदेवमुवाचदुष्टदानवः ॥ सहस्वभारंमेदुष्टवलगसेर्भकसंचये
४७ त्यक्तंत्यक्तंकंदुकंसगृण्हातिस्वकरेपुनः ॥ मुहूर्तद्वयमेवंहिचिक्रीडदुष्टदानवः ४८ प्राहसन्मुनिबालास्तेगुणेशंतंतथागतम् ॥ ततोगुणेशोदैत्यंतमा
रूढोदृढविक्रमः ४९ चंचलश्चंचलोजातोनेतुंदूरेमुदान्वितः ॥ व्योममार्गेणसहसाबालाभूमिगताययुः ५० विमानवत्पक्षिवच्चसजगामत्वरान्वितः ॥ ततोनि
वृत्तास्तेबालाःशोचमानाययुर्गृहान् ५१ स्थितास्तत्रैवकेचिच्चप्रतीक्षंतोगुणेश्वरम् ॥ ततोगुणेशस्तंज्ञात्वामनसादुष्टदानवम् ५२ हिमवत्सदृशंभारंचका
रसहसाविभुः ॥ भारेणपतितोदैत्यःप्रावदत्तंगुणेश्वरम् ५३ उत्तरस्वमहाभारंगमिष्यंतिममासवः ॥ दयांकुरुष्वदीनेत्वंप्रपन्नेशरणंतव ५४ एवंवदन्सुमूर्छा
सौततोबालोदधारतम् ॥ भ्रामयामासबहुशोगरुडोभुजगंयथा ५५ तत्याजदूरदेशेतंचंचलंदुष्टदानवम् ॥ ५६ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडे
चंचलवधोनामत्रिनवतितमोध्यायः ॥ ॥ ९३ ॥ ॥ कउवाच ॥ ॥ ततोमुनिसुतायाताःप्रतीक्षंतःस्थिताश्चये ॥ तेषांजयरवैर्व्योमगर्जितंचदिगंतर
म् १ चिक्रीडुस्तेपुनस्तत्रनानानृत्यैश्चगायनैः ॥ एवंरमत्सुबालेषुसार्द्धयामेदिवाकरे २ पितरौतानदृष्ट्वैवग्राममध्येक्वचिद्गृहे ॥ प्रत्येकंयष्टिमादायययुः
सर्वेशिशून्प्रति ३ रमंतोविविधाःक्रीडामध्येकृत्वागुणेश्वरम् ॥ नृत्यंतंनर्तयंतंचतंचतेनिरभर्त्सयन् ४ ॥ पितरऊचुः ॥ त्वयाविनानोबालाश्चनाचरन्स्नानभोजने ॥

आचाराध्ययनेचापिब्राह्मण्यंविनयंतथा ५ ततःपरस्परंप्राहुर्गतक्रोधानिरीक्ष्यतम् ॥ एतस्यताडनेबुद्धिर्गतैनंवीक्ष्यनःकुतः ६ कथयामोयदिशिवौतावस्यकिं
करिष्यतः ॥ अनेकेनिहतादैत्याबालेनैवमहाबलाः ७ वयंदेशांतरंयामोभीत्यातवगुणेश्वर ॥ कउवाच ॥ एवंवदत्सुलोकेषुपिदधेसगुणेश्वरः ॥ आविरासीद्दूरदे
शेततोबालाव्यलोकयन् ८ धावयित्वापितृंस्त्यक्त्वागुणेशंतेययुःपुनः ॥ क्रीडंतस्तेययुःशीघ्रंगौतमाश्रममुत्तमम् ९ ध्यानस्थंतंमुनिंवीक्ष्यपचंतींतस्त्रियंचते ॥
गुणेशोगान्मध्येदेशंजग्राहौदनपात्रकम् १० ददौतेभ्योविभज्यान्नंप्रार्थयामाससादरम् ११ मत्संगेनचिरंकालंयूयंसर्वेबुभुक्षिताः ॥ सावकाशंप्रभुंजध्वंततः
क्रीडामहेपुनः १२ अहल्यातंचुकोपाशुममान्नंस्पृष्टवान्कथम् ॥ नक्तौवैश्वदेवोवानैवेद्यश्चपलार्भकाः १३ विसृज्यध्यानंकिंकुर्याद्गौतमोमुनिसत्तमः ॥ उ
त्थापयामासतदाध्यानस्थंमुनिसत्तमम् १४ सउत्थायददर्शाथगौतमःसकलार्भकान् ॥ जक्षतोन्नंक्षुधायुक्तान्बभाषेचगुणेश्वरम् १५ ॥ गौतमउवाच ॥ म
हतोःपुत्रतांप्राप्यकथमन्यायकृद्भवान् ॥ अत्यद्भुतानिकर्माणिश्रुत्वातेत्वांवयंपुरा १६ परात्परतरंदेवंपरब्रह्मस्वरूपिणम् ॥ मन्यामहेबालभावंकुरुषेत्वंगुणेश्व
र १७ ॥ कउवाच ॥ धृत्वाकरंसचमुनिःपार्वत्यागृहमागमत् ॥ करेधृत्वान्नसहितंतत्पात्रंनिजमंदिरात् १८ उवाचमातस्तेबालोनित्यमन्यायकृन्मम ॥
अद्यत्वांकथितुंयातःकिंकार्यंगौर्यतःपरम् १९ इतोवागमनंदूरेमन्यसेयदितद्वद ॥ कउवाच ॥ ततोरुषासमायुक्ताश्रुत्वावाक्यंमुनीरितम् २० ताडयामासय
ष्ट्यातंवमंतीनेत्रतोनलम् ॥ उवाचचमुनिंगौरीप्रणताक्रोधसंयुता २१ ममापिचमुनेत्रासोजायतेजन्मतोस्यह ॥ द्रष्टव्याराक्षसकृताःकियंतोविघ्नसंचयाः २२
स्त्रियःप्रवक्तुंकुत्रापिनायांतिमुनिपुंगवाः ॥ अयंतुसर्वतोदुष्टोमुनिपुत्रविभेदकः २३ ममात्मजइतिजनोनैनंशापंप्रयच्छति ॥ बध्वैनंहस्तपादेषुतत्समक्षांशि
वासुतम् २४ गृहमध्येतुसंस्थाप्यतद्द्वारंपिदधेदृढम् ॥ मैवंमैवंवदन्यातोगौतमःस्वाश्रमंप्रति २५ ततस्तेबालकाःसर्वेशोचंतस्तंगुणेश्वरम् ॥ कथंनोदर्शनं
चास्यभविष्यतिकदानुवा २६ द्वारंदत्वादृढंमध्येस्थापितोगिरिकन्यया ॥ एवंतेषुवदत्स्वेवतन्मध्येसययौक्षणात् २७ जनन्याःकटिदेशेपिबस्यतेतद्दृहोपिच ॥
ऊचुस्तांगौरिपुत्रस्तेनिःसृतोगृहमध्यतः २८ पश्यतिस्मगेहमध्येबद्धमेवगुणेश्वरम् ॥ बहिस्तान्मुनिपुत्रान्सातत्स्वरूपानपश्यत २९ यंकंचित्स्तनपानायजु
हावविह्वलाशिवा ॥ निषिद्धासासुतैस्तैस्तुगृहमध्येशिवेस्थितः ३० उद्घाटयद्द्वारंसाबालंमुक्त्वास्तन्यंददौमुदा ॥ गौतमःस्वाश्रमंयातोदेवतार्चनमा
रभत् ३१ गुणेशरूपान्सोपश्यन्नृत्तान्देवांस्तथाखिलान् ॥ पुरःप्रकीर्णमन्नंचततोविस्मितमानसः ३२ चिंतयामासमनसिदुर्बुद्धिस्तुकृतामया ॥
उमायैकथितंसर्वमन्नपात्रंप्रदर्शितम् ३३ तयासताडितोबद्धोऽव्यक्तोव्यक्तस्यकारणम् ॥ परात्परतरोदेवोयस्मिंस्त्वक्षेमहाफलम् ३४ आगत्यबुभुजे
बालैःसार्द्धंतुमुनिसंभवैः ॥ मोहितोमाययाचास्यऽपूर्वमज्ञासिषंनतम् ३५ ॥ कउवाच ॥ अहल्यापिपुनःपाकंचकाराद्भुतमानसा ॥ सोपिध्यानस्थितोभू
त्वानित्यकर्मसमापयत् ३६ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेचतुर्नवतितमोध्यायः ॥ ९४ ॥ ॥ कउवाच ॥ ॥ षष्ठेवर्षेप्रवृत्तेतुक्वाचिद्धातो

बहिःशिशुः ॥ उमायाबालकैःसार्द्धंचिक्रीडानेकधापुनः १ तंदिदृक्षुर्विश्वकर्मायियावंतगृहंप्रति॥ पार्वतीबहिरागत्यमानयामासतंबहु २ चित्रासनेसमावेश्यपूज
यामाससादरं ॥ प्रक्षाल्यचरणौप्रादाद्गंधंतांबूलमेवच ३ ततस्तदादरंदृष्ट्वाविश्वकर्मातुतोषह ॥ तुष्टावपरयाभक्त्याप्रणिपत्यशिवांमुदा ४ विश्वकर्मोवाच ॥
नमामिविश्वेश्वरिविश्वरूपेब्रह्मेंद्ररुद्रार्यमविष्णुरूपे ॥ त्वयाततंविश्वमनंतशक्तेब्रह्मादिदेवैरभिनंद्यरूपे ५ त्वमेवविश्वंरजसाविधत्सेसत्त्वेनमातःपरिपासितच्च ॥
त्वमेवसर्वंतमसाथहंसित्रैगुण्यमेतत्तवनित्यरूपं ६ त्वयाहतादैत्यगणाविमुक्तिंब्रह्मर्षयोज्ञानबलात्प्रपन्नाः ॥ त्वमेवविष्णोरतुलासिशक्तिःसर्वस्यहेतुःपरमासि
माया ७ सतोसतोयापिपरासिशक्तिश्वराचरंत्वंविदधासिविश्वं ॥ संमोह्यलोकान्सकलान्सुरेशान्काष्ठाकलाभिश्चददासिभोगं ७ येत्वांप्रपन्नानभयंतुतेषांमृत्यो
स्तथादैत्यकृतंकदाचित् ९ त्वमेवलक्ष्मीःसुकृतामलक्ष्मीर्दुष्टात्मनांत्वंप्रमदास्वरूपा ॥ विद्यास्वरूपासिजगत्त्रयेत्वंप्रभास्वरूपाशशिसूर्ययोस्त्वं १० यआ
श्रितास्तेजगदाश्रयास्तेविपत्तिलेशोनचतेषुमातः ॥ त्वमेवविश्वेश्वरिविश्वमेतद्धरस्यथाप्यायसिवारिरूपा ११ अनादिमध्यानिधनाप्यगम्याहरीशलोके
शसुरेश्वराणां ॥ तेनुग्रहात्त्व.प्रभजंतिभक्ताआनंदरूपानिवसंतिनाके १२ अभक्तिकामान्विनिहंसिरुष्टात्वामेवमातःशरणंप्रपन्नः ॥ धन्येममैतेनयनेथविद्या
जनुश्चमातापितृवंशएव १३ कुलंचधन्यंचरणौत्वदीयौदृष्टौयतस्तेजगदंबिकेमया ॥ ॥ कउवाच ॥ ॥ एवंस्तुताजगन्मातावरमस्मैन्यवेदयत् १४
सवव्रेपरमांभक्तिंसातथेतितमब्रवीत् ॥ इदंस्तोत्रंपठेद्यस्तुसर्वान्कामाँल्लभेच्चसः १५ सर्वत्रविजयंपुष्टिंविद्यामायुःसुखंशिवं ॥ ॥ शिवोवाच ॥ ॥ विश्व
कर्मन्महाबुद्धेज्ञानवानासिसर्वतः १६ यच्छ्रुतंशिववाक्येनदृष्टंतत्सकलंत्वयि ॥ सिंधुनापीडितादेवाःसर्वेकारागृहेस्थिताः १७ शिवश्चात्रसमायातःकैला
सेतुहृतेसति ॥ दंडकारण्यदेशेत्रकोप्यासोनाहिदृश्यते १८ त्वंतुसम्यक्समायातोबहुकालेनदर्शनम् ॥ ॥ विश्वकर्मोवाच ॥ ॥ किमाश्चर्यंजगन्मातर्बालो
मातरमाव्रजेत् १९ द्रष्टुंदेवंमहाभक्तोविद्याकामोगुरुंशिवे ॥ पुत्रस्यतेश्रुतोमातर्महिमापरमाद्भुतः २० तमहंद्रष्टुमायातोयुवयोर्दर्शनोत्सुकः ॥ ॥ क
उवाच ॥ ॥ एवंतयोस्तुवदतोरागतोसौविनायकः २१ असंख्यशशिसंकाशोरजसारुणविग्रहः ॥ प्रसन्नवदनोबालसमूहपरिवारितः २२ तन्मध्ये
शोभतेस्मासौमरुन्मध्येयथाहरिः ॥ तंदृष्ट्वाप्रणिपत्यासौकृतांजलिपुटःस्थितः २३ तुष्टावपरमात्मानंज्ञात्वातंगिरिजासुतम् ॥ ॥ विश्वकर्मोवाच ॥ ॥ न
मामिपरमात्मानंसच्चिदानंदविग्रहम् २४ चराचरगुरुंसर्वकारणानांचकारणम् ॥ गुणेशंचगुणातीतंसृष्टिस्थित्यंतकारिणम् २५ सर्वव्यापिनमीशानंव्यक्ता
व्यक्तस्वरूपिणम् ॥ अगम्यंसर्वदेवानांमुनिहृत्पद्मवासिनम् २३ सिद्धिबुद्धिपतिंनानाभक्तसिद्धिप्रदंविभुम् ॥ अभक्तकामदहनंसहस्ररविसन्निभम्
२७ अनेकशक्तिसंयुक्तंदैत्यदानवमर्दनम् ॥ अनादिमव्ययंशांतंजरामरणवर्जितम् २८ त्रितनुंचत्रयीमूलंब्रह्मविष्णुशिवात्मकम् ॥ ॥ कउवाच ॥
एवंस्तुतिंसमाकर्ण्यसंतुष्टःसगुणेश्वरः २९ स्वासनेतमुपाविश्यपूजयामाससादरम् ॥ प्रक्षाल्यचरणौगंधमक्षतान्पुष्पमेवच ३० धूपंदीपंचनैवेद्यानि

वेद्यतमथाब्रवीत् ॥ ॥ गुणेशवाच ॥ ॥ विश्वकर्मन्नागतोसिममदर्शनकांक्षया ३१ किमानीतंममसुदेह्युपायनमनुत्तमम् ॥ ॥ विश्वकर्मोवाच ॥
निजस्वानंदपूर्णानांपरवांछाविधायिनाम् ३२ निस्पृहाणांसर्वकृतांसर्वशक्तिमतामपि ॥ समलोष्टाश्महेम्नांचकल्पवृक्षाधरीकृताम् ॥ कर्तुमकर्तु
शक्तानामन्यथाकर्तुमेवच ३३ स्वाधीनानांचतुष्टानांस्वसत्तावर्तिनामपि ॥ पराधीनैरशक्तैश्चकिंचनैर्मर्त्यधर्मभिः ३४ किंदेयंपरितोषायस्वशक्त्याकिंचि
दाहृतम् ॥ कउवाच ॥ एवमुक्त्वाविश्वकर्मास्थापयत्पुरतःस्वणिम् ३५ पद्मंचपरशुंपाशंसहस्रादित्यसन्निभम् ॥ सर्वशत्रुहरंतीक्ष्णंदधारसगुणेश्वरः ३६ उ
वाचविश्वकर्माणंकुतएतानिविश्वकृत् ॥ आनीतानिममप्रीत्यैतद्वदस्वाधुनाऽनघ ३७ ॥ विश्वकर्मोवाच ॥ संज्ञानामेतिनाम्नामेकन्याचारुस्वरूपिणी ३८
वाचविश्वकर्माणंकुतएतानिविश्वकृत् ॥
लज्जितोयन्मुखंवीक्ष्यसहसाशशलांछनः ॥ रमाशचीचसावित्रीशारदारुंधतीरतिः ३९ त्रिलोक्यांनसमाकापिपरायस्यागुणेश्वर ॥ सामयारवयेदत्तात्रिवे
दायत्रिरूपिणे ४० आगतेषुत्रिलोकेषुसांगोपांगेषुसर्वशः ॥ महोत्सवोमहानासीद्दिनाष्टकमहर्निशम् ४१ यांदृष्ट्वास्खलितादेवालज्जयाधोमुखागताः ॥ सावि
तातामथादायययौस्वस्थानमुत्तमम् ४२ तेजसातस्यतप्तामेकन्यकाकृशतामगात् ॥ साततोनिर्ममेछायांसंज्ञातुस्वप्रभावतः ४३ सर्वंतस्यैनिवेद्यैवसद्यो
ममगृहंगता ॥ गतेकियतिकालेसाछायाज्ञातातुभानुना ४४ नेयंसंज्ञेतिसप्रायात्गृहंसद्योममार्यमा ॥ ततोभीतापुनःसंज्ञामामुवाचनमोपितः ४५ नि
वेदयरवेर्हस्तेतेजोहंनक्षमेस्यच ॥ ततःपित्राधिकृतासाबहिरेवययौकिल ४६ अश्विनीरूपमास्थायगुप्तरूपावनेवसत् ॥ ततस्तुविश्वकर्मातामनवेक्ष्यकाचि
द्गृहे ४७ प्रोवाचार्यमणंसोथतेजस्तेसोढुमक्षमा ॥ क्वगतानचजानेतामुपायंतेब्रवीमिच ४८ यदितेतेजसोभागोन्यूनःकिंचिद्भविष्यति ॥ तदासाप्रकटीभू
याद्विहरस्वततस्तया ४९ ॥ रविरुवाच ॥ ॥ यथातवभवेच्चेतस्तथाकर्तुंत्वमर्हसि ॥ कउवाच ॥ विश्वकर्माततश्चैनंयंत्रेस्थाप्योल्लिलेखह ५० तेजोन्हा
संचकाराशुकिंचित्सौम्योऽभवद्रविः ॥ यत्रगुप्ताभवत्संज्ञातत्रयातोर्यमाविभुः ५१ अश्वोभूत्वातयारेमेसानासत्यावसूतच ॥ तामादायार्यमालोकंनिजंहर्षयुतोग
मत् ५२ ॥ विश्वकर्मोवाच ॥ ॥ तेजःशेषेणतस्याथप्रबलेनगुणेश्वर ॥ निर्मितान्यायुधान्याशुत्वदर्थंजगदीश्वर ५३ अतितीक्ष्णानिकालस्यसदाजयकरा
ण्यपि ॥ चत्वारितेप्रदत्तानिदत्तेचक्रगदेहरेः ५४ त्रिशूलःशंभवेदत्तःसर्वशत्रुनिबर्हणः ॥ ॥ गुणेशउवाच ॥ ॥ सम्यक्कृतंविश्वकर्मन्नायुधानिशुभानिमे ५५
दत्तानिदैत्यनाशायपरोपकृतयेसताम् ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वायुधान्याशुदधारचतुधावच ५६ तदाचकंपेपृथिवीपर्वताश्चवनानिच ॥ शुशुभेसोपि
तैःशस्त्रैःकोटिसूर्यनिभैर्विभुः ५७ विश्वकर्मानमस्कृत्ययपयौस्वस्थानमाज्ञया ॥ उमात्मजोपिचिक्रीडमुनिबालैर्वृतःपुनः ५८ तत्रायययौवृकोनाममहान्दुष्टत
मोसुरः ॥ भयंकराननोमत्तोग्रसन्निवमहाबली ५९ पुच्छाघातेनचभुवंकंपयन्हलदंतवान् ॥ दृष्ट्वाभयंकरंदैत्यंमुनिपुत्राःपलायिताः ६० सआयुधानिगृह्याशुतं
वृकंसमताडयत् ॥ अंकुशाघातमात्रेणपतितोभुविसोसुरः ६१ वमन्नक्तंनिजंरूपमास्थितश्चूर्णयन्द्रुमान् ॥ संहरन्जीवसंघातान्दशयोजनविस्तृतः ६२ सततो

स्तमितेसूर्येययौबालयुतोगृहम् ॥ बालाःप्राहुरुमायैतेनेनाद्य निहतोसुरः ६३ वृकोनामांकुशाघाताद्दशयोजनमायतः ॥ तानुवाचाद्रिजारोषाद्वःजंतुनिजमंदिर
म् ६४ ततस्तद्वाक्यमाकर्ण्यतेबालाःस्वालयान्ययुः ६५ इतिश्रीगणेशपुराणेउत्तरखंडेवृकासुरवधोनामपंचनवतितमोऽध्यायः॥ ९५ ॥ कउवाच ॥ ततः
कदाचिद्गिरिजाप्रसन्नंप्राहशंकरम् ॥ शिवोवाच ॥ देवेशसप्तमंवर्षंप्रहत्तंसांप्रतंशिशोः १ क्रियतांव्रतबंधोस्यसुमुहूर्तेमहोत्सवात् ॥ शिवउवाच ॥ सम्यगु
क्तंत्वयाभद्रेज्ञात्वाचेतोगतंमम २ संपादयिष्येसाध्वस्यव्रतबंधंयथाविधि ॥ कउवाच ॥ इत्युक्त्वागिरिजांदेवःसमाकार्यचगौतमम् ३ विचार्यसुदिनेलग्नंसामग्री
समपादयत् ॥ मंडपंचसुविस्तीर्णंसर्वान्ऋषिगणान्मुनीन् ४आकार्यपरिपूज्यैतांस्तदाज्ञावशगोहरः ॥ यथाविधिचकारास्यव्रतबंधंमुदातदा ५ उपायनानिसर्वे
तेशिवयोर्बालकस्यच ॥ अष्टाशीतिसहस्रेभ्योनमस्कृत्यहरोपिच ६ संपूज्यदिदिवत्प्रादान्नानोपायनसंचयान् ॥ त्रिंशत्रिकोटिदेवेभ्योयक्षेभ्योपितथैवच ॥ कि
न्नरेभ्यश्चारणेभ्योवाद्यघोषेणदत्यपि ७गायत्सुकिन्नरेष्वाशुनर्तकीनांगणेषुच ॥ नृत्यत्सुसर्वलोकेषुपश्यत्सुसुमहोत्सवम् ८ उपायनानिदानानिददौहर्षात्सदाशि
वः ॥ देवतास्थापनंकृत्वाभोजयामासचाखिलान् ९ प्रातःकालेबटुंस्नाप्यचौलकर्मसमाप्यच ॥ चतुर्भिर्ब्राह्मणैःसार्धंतंभोज्यसंस्नाप्यवैपुनः १० वेदिकायामंतरा
तुधृत्वापटमनुत्तमम् ॥ मुहूर्तंसाधयामासमुनिभिर्मंत्रवादिभिः ११एतस्मिन्नंतरेदैत्यौकृतांतकालसंज्ञकौ ॥ गजरूपधरौमत्तौमदोदस्राविणौदृढौ १२तीक्ष्णदंतौ
दीर्घशुंडौगगनस्पर्धिपुष्करौ ॥ चीत्कारभीषितजनौसिंदूरारुणमस्तकौ १३कंपतेपादघातेनययोराशुवसुंधरा॥दंताघातेनयुध्यंतौरजसाछादयरोदसी १४सभाद्वार
गतंशक्रकरिणंसमुपागतौ ॥ दंतप्रहारैस्तद्वंद्वंभिंदंतौबलवत्तरम् १५ स्रवद्रक्तःपपातोर्व्यांमूर्छितोगजराट्क्षणात् ॥ ऐरावतःपपालाशुमुहूर्तात्प्राप्यचेतनाम् १६
करिणौपृष्ठलग्नौतौदंताघातैर्निजघ्नतुः ॥ ततस्तौमत्तमातंगौसभामध्यंसमीयतुः १७ शुंडाभ्यांमंडपंतौतुताडयामासतुस्तदा ॥ उत्तस्थुःसर्वलोकास्ते
श्रुत्वाकोलाहलंतयोः १८ यतोयतोगच्छतःस्मततोदेवाःपलायिताः ॥ मुनयश्चतयोर्भीत्यादशदिक्षुपलायिताः १९ ॥ गणाऊचुः ॥ शिवंतत्रसमाचख्यु
र्विघ्नमेतदुपस्थितम् ॥ सेंद्रासभामुनियुताविध्वस्तागजभीतितः२० ततःपलायितागौरीसखीभिर्गृहमागता ॥ बालस्ततोनिरीक्ष्यैतौदंतिनौबलवत्तरौ२१ज
गर्जघनवच्छीघ्रंतयोःशुंडेदधारह ॥ उभाभ्यामपिहस्ताभ्यांचीत्कारंतौप्रचक्रतुः२२भ्रामयित्वास्फालयत्सएकस्मिन्नपरंगजम् ॥ उभौतौशतधाजातौपतितौध
रणीतले २३ धराचकंपेवृक्षाश्चनिपेतुश्चूर्णिताभुवि ॥ ततःखंडानितान्याशुदूरतश्चिक्षिपुर्गणाः २४ बटुंजग्राहजननीशीघ्रमागत्यस्वकटौ ॥ सर्वेपलायिता
देवामुनयोनेनदानवौ २५ बालेनानिहतौशीघ्रमित्युवाचाशिवांसखी ॥ ततस्तेमीलितादेवाइंद्राद्यामुनयोपिच २६ ऊचुर्गणेशंतेसर्वेस्वामिन्सर्वगुणाकर ॥
सर्वप्राणहरौदैत्यौकापट्याद्गजरूपिणौ २७ निहतौलीलयादेवमायिनौबलवत्तरौ ॥ इत्युक्त्वाशक्रमुनयोदेवाश्चविविशुःसभाम् २८ उपविष्टेषुसर्वेषुनृत्युश्चा
प्सरोगणाः ॥ ततोवाद्यान्यवाद्यंतब्रह्माबटुसमीपगः २९ दत्वापरस्परंप्रैवंबबंधमेखलांशिशोः ॥ यज्ञोपवीतमजिनंहोमंचसमिधामपि ३० कारयामास

विधिवत्सावित्रीवाचनंततः ॥ ततोमातादंदौभिक्षामंशुकेभूषणानिच ३१ उत्तरीयंचरत्नानिमुक्ताफलयुतानिच ॥ लड्डूकान्भक्ष्यखाद्यानित्रिशूलंशशिनंशिवः
३२ ददौनामचकारास्यभालचंद्रइतिस्फुटम् ॥ शूलपाणिरितिपरंततश्चक्रंहरिर्ददौ ३३ शोचिष्केशेतिनामास्यचक्रेसम्यङ्महात्मनः ॥ ततःपुरंदरःपूज्यकंठेचिं
तामणिंददौ३४नामाचिंतामणिरितिचक्रेसर्वार्थदंशुभम् ॥ ददौतदैवकमलमभ्यर्च्यकमलासनः३५विधातेतिचनामास्यस्थापयामाससंसदि ॥ ततःसर्वेसुरगणाः
समभ्यर्च्यगुणेश्वरम् ३६ नानाविधानिनामानिचक्रुःस्वस्वेच्छयासुराः ॥ आदितिःकश्यपश्चाथतंपुपूजतुरादरात् ३७दर्शयामासदेवोपिपूर्वरूपंतयोःशुभम् ॥
भालचंद्रंदशभुजंमुकुटेनविराजितं ३८ दिव्यांबरंदिव्यगंधंदिव्याभरणभूषितम् ॥ सिंहारूढंविराजंतमुरगोदरबंधनं ३९ दृष्ट्वेत्थमदितिर्हृष्टालिलिंगस्नेहनिर्भ
रा ॥ रोमांचितशरीरासाप्रेमगद्गदनिःस्वना ४० विस्मयंपरमंप्राप्तास्रवदश्रुजलाविला ॥ परमानंदमग्नाभूत्स्नेहस्नुतपयोधरा ४१ तथैवकश्यपोदेहभावं
तत्याजतत्क्षणात् ॥ ऊचतुस्तौसुतस्नेहाद्वत्सावांतेवियोगतः ४२ कृशतांगमितौतेद्यदर्शनात्पुष्टतांगतौ ॥ नावांत्यजसुतेदानींदीनौत्वच्चरणेरतौ ४३ ॥ गजा
ननउवाच ॥ प्रतिश्रुतंमयामातर्दास्येदर्शनमंकदा ॥ तदिदानींमयादत्तंनशोकंकर्तुमर्हसि ४४ सर्वांतर्यामिणोमेवैवियोगोनकदाचन ॥ कउवाच ॥ एवंतुवदतोरे
वपार्वतीसमुपागता ४५ उवाचपरमप्रीतादृष्ट्वास्नेहंतयोःशिशौ ॥ अदितेदेहिमेपुत्रंगृहीतंचिरकालतः ४६ नायंतवसुतःसुभ्रुसम्यक्पश्यशुचिस्मिते ॥ साऽपश्य
त्पुनरेवैनंस्वस्यैवतनयंविभुम् ४७ ॥ अदितिरुवाच ॥ ॥ त्वमेवगौरिपश्याशुतनयंमेपुरःस्थितम् ॥ सापश्यत्पुनरेवैनंगुणेशंतनयंस्वकम् ४८ अदिति
स्तांममेत्याहपार्वतीतांममेतिच ॥ एवंविवदमानेतुप्राहुर्देवाःसुविस्मिताः ४९ अनादिनिधनोदेवःसृष्टिस्थित्यंतकारकः ॥ अनंतरूपोनंतश्रीरनेकशक्तिसंयु
तः ५० कस्याअयंभवेत्पुत्रउभेभ्रांतेस्यमायया ॥ ॥ तेऊचतुः ॥ ॥ यस्याअयंभवेत्पुत्रस्तस्याहस्तेप्रदीयताम् ५१ ॥ कउवाच ॥ ततोदेवानि
रीक्ष्यैनंनानारूपिणमीश्वरम् ॥ कश्चिदाहविधातायंकश्चिद्विष्णुंचतुर्भुजम् ५२ कश्चित्त्रिलोचनंप्राहवरुणंविस्मिताःसुराः ॥ उचुस्तेनिश्चयोस्माभिर्विधातुं
नैवशक्यते ५३ भवतीभ्यांविवेकेनग्राह्योयंपरमःपुमान् ॥ ततोगौरीगृहाणाशुतंविभुंतनयंस्वकम् ५४ स्तनपानंददौस्नेहाददितिर्नीरसाभवत् ॥ ममचेद्बा
लकोयंस्यात्कथंयायात्परंप्रति ५५ अहंभ्रांत्याऽभवंसक्तापरस्यतनयेवृथा ॥ मुनयःकश्यपश्चैनंपुपूजुस्तेगुणेश्वरम् ५६ नमस्कृत्याभ्यनुज्ञाप्यययुःस्वंस्वंनि
वेशनम् ॥ भवानीचगृहंयातापुत्रमादायहर्षिता ५७ ततःसमागताःसर्वेप्रागमन्निलयान्स्वकान् ५८ इतिश्रीगणेशपुराणेउत्तरखंडेगौर्यदितिविवादोनामष
ण्णवतितमोध्यायः ॥ ९६ ॥ ॥ मुनिरुवाच ॥ ॥ त्वयाविनायकोदेवोमयूरेश्वरसंज्ञितः ॥ ततोगुणेशनाम्नामेमहिमायंनिरूपितः १ सकथंप्रापत
न्नामकिंचतेनकृतंमहत् ॥ कर्मतन्मेसमाचक्ष्वसांप्रतंविश्वसृग्विभो २ ॥ ॥ कउवाच ॥ ॥ यथातेनकृतंकर्ममयूरेश्वरनामच ॥ प्रापद्विनायकोदेवो
निरूपिष्येखिलंतव ३ पातालभवनेशेषःसभामध्यगतोभवत् ॥ वासुकिप्रमुखैःसर्वैःसमंतात्परिवारितः ४ ततःकद्रूःसमायातातेजोरूपासुरूपिणी ॥ मुक्ता

मणियुतंचारुबिभ्रतीकंचुकंशुभम् ५ बिंबोष्ठीचंद्रवदनादिव्यभूषांबरावृता ॥ तांदृष्ट्वाजननींशेषोवासुकिप्रमुखाश्चये ६ नेमुर्मातर्बहुदिनैरभवद्दर्शनंतव ॥
कांक्षंतेदर्शनंसर्वेत्वंतुनिष्ठुरतांगता ७ इत्यूचुस्तांकरेधृत्वास्थापयन्पैत्र्यआसने ॥ पुपूजुःपरयाभक्त्याततःशेषोब्रवीत्तुताम् ८ ॥ शेषउवाच ॥ ॥ त्वं
मातःकश्यपस्यापिपत्नीचारुतरासती ॥ सर्वविद्यानिधानस्यसृष्टिस्थित्यंतकारिणः ९ ब्रह्मादयोदेवगणास्तत्त्वंयस्यनवैविदुः ॥ त्वंचापिसहसाशापानुग्रहे
चक्षमाह्यसि १० तवपुत्रावयंमातस्त्रैलोक्यग्राससाहसाः ॥ साकथंत्वमिहायाताकिमुद्दिश्यप्रयोजनम् ११ ॥ कद्रूरुवाच ॥ ॥ विनाप्रयोजनंपुत्रको
पिनायातिकिंचन ॥ तच्चतेकथयिष्येहंशृणुसादरमात्मज १२ विनतामेसपत्नीयाजननीपुत्रपक्षिणाम् ॥ तस्यादर्शनकांक्षामेकदाचित्संबभूवह १३ अना
हूतातयाहंतुतद्गृहंसहसागता ॥ नासनंनचसत्कारंस्वागतंनचसाऽकरोत् १४ पूर्ववैरंस्मरंतीसाजटायुंपुत्रमादिशत् ॥ तेनचाकर्षितावेणीविवस्त्राहंकृता
क्षणात् ॥ मामुवाचमहादुष्टेनावलोक्यंमुखंतव १५ ममातुस्तुदासीत्वंपूर्वमासीःकृतंत्वया ॥ तदानकरुणालेशोधृतोमनसिकर्हिचित् १६ इ
तोगच्छनचेत्प्राणान्गृहीष्यामिमहाखले ॥ श्रुत्वातदीयवाक्यानिदुःखिताहंफणीश्वर १७ आक्रंदंपरमंप्राप्ताप्राणत्यागेतुनिश्चिता ॥ आगताऽहंत
तोयुष्मद्दर्शनार्थंसुदुःखिता १८ यदिवोमयिभक्तिःस्यात्साहाय्यंक्रियतांमम ॥ सत्पुत्रायदिमान्याहंतदातस्याविनाशनम् १९ कर्तव्यंचसपत्न्यामेत
तोत्द्वदिसुखंभवेत् ॥ ॥ कउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंशेषोरोषसमन्वितः २० जज्वालसहसावह्निर्घृतेनेवप्रदीपितः ॥ मममातुःकृतापीडा
विनतातनयैर्यदि २१ तदाहंतवप्रतीकारंकरिष्यामिनसंशयः ॥ एवमुक्त्वासशेषोथवासुकिप्रमुखैर्युतः २२ तत्रगंतुंमनश्चक्रेयत्रसाविनताभवत् ॥
वासुकिरुवाच ॥ ॥ अहमेवगमिष्यामिकोटिनागैर्युतोनव २३ विनतामानयिष्यामितिष्ठत्वंभुजगाधिप ॥ कउवाच ॥ एवमुक्त्वाययौशीघ्रंवासुकिर्विनता
श्रमं २४ असंख्यानुरगान्दृष्ट्वाबिभायविनतातदा ॥ तदैववेष्टितासर्पैःक्रूरैर्दुष्टस्वभावकैः २५ निन्युस्तेशेषनिकटंसाचतानब्रवीत्तदा ॥ ॥ विनतोवाच ॥ ॥
किमर्थंबंधनंकृत्वाममनेतुंसमुद्यताः २६ अपराधविहीनायाःपापिष्ठागदताशुभे ॥ ममपुत्रस्यानुभवोज्ञातोस्तिसर्वपन्नगैः २७ अतोमुंचंतुमांनोचेत्ससंहारंक
रिष्यति ॥ ॥ कउवाच ॥ ॥ धार्ष्ट्यंतेषांसमीक्ष्यैवसस्मारगरुडंतुसा २८ सोपिज्ञात्वास्मृतिंतस्याआगतःपक्षिभिःसह ॥ श्येनःसंपातिरथचजटायुःपक्षिपुं
गवः २९ येषांपक्षसमीरेणचकंपेभुवनत्रयं ॥ भुजगास्तेतुसर्वेपिवमद्विषकणाभवन् ३० युद्धमासीन्महाघोरंभुजगेंद्रपतत्रिणां ॥ ततोजटायुंसंपातिंश्येनंब
ध्वानयंस्तुते ३१ मातुःस्मृतेतुसंप्राप्तोगरुडःपक्षवाततः ॥ कंपयन्जगतींसर्वांपातयन्द्रुमपर्वतान् ३२ तद्गंधंभुजगाघ्रात्वापलायनपरायणुः ॥ पक्षवातेन
गगनेबभ्रमुर्भुजगाःपरे ३३ मुक्तातुविनताबंधात्स्वस्थानंगंतुमुद्यता ॥ तांदृष्ट्वावासुकिःक्रुद्धोदहन्व्योमवमन्विषं ३४ पक्षाघातेनगरुडोपातयद्भूतलेचतं ॥
विनतातुगतावेगात्स्वस्थास्वस्थानमुत्तमं ३५ प्रतापंवासुकेर्दृष्ट्वागरुडःसूक्ष्मरूपधृक् ॥ विनतांरक्षितुंयातोयातेतस्मिंश्चकोपह ३६ वासुकिर्विषमत्यंतमसृ

जज्वगतींदहन् ॥ नागलोकंनिनायाशुबध्वातान्विवरेक्षिपत् ३७ पिधायद्वारंशिलयाततोमातरमभ्यगात् ॥ उदंतंसर्वमाचख्यौमात्रेशेषायचारुधीः ३८
शुशोचविनताश्रुत्वाबध्वानीतान्सुतांस्तुतान् ॥ प्रययौकश्यपंशीघ्रंनमस्कृत्याब्रवीदिदं ३९ विपरीतमिदंजातंप्रत्यक्सूर्योदयो यथा ॥ गृहेस्थितांमामनय
त्सहसावासुकीरिपुः ४० पृष्ठतोनुययौश्येनोजटायुर्मोचितुंचमां ॥ संपातिःसर्वसंघांस्तेमारयामासुरोजसा ४१ पराजितेपुतेष्वाशुभुजगैर्बहुभिर्मुने ॥ ग
रुडंचास्मरंतेनजित्वासर्पगणांस्तुतान् ४२ मोचितावाणुरूपेणतेनाप्यागमनंकृतं ॥ जटायुस्तेनसंपातिःश्येनोवासुकिनाबलात् ४३ नीताःपातालविवर
पिधायस्थापितादृढं ॥ गमिष्यंतिममप्राणास्तान्विनानिश्चितंमुने ४४ एतावत्दुःखमाप्ताहंत्वयिनाथेसतिप्रभो ॥ ॥ कउवाच ॥ ॥ इति
श्रुत्वाप्रियावाक्यंप्राहतांकश्यपोमुनिः ४५ ॥ ॥ मुनिरुवाच ॥ ॥ माचिंतांकुरुभद्रेत्वंव्येतुतेमानसोज्वरः ॥ ऋतुंतेहंप्रदास्यामिपुत्रस्तेन्योभवि
ष्यति ४६ अभेद्यमंडंवज्रेणपार्वत्यायदिबालकः ॥ क्रीडन्भेत्स्यतिपादाभ्यांततःपुत्रोभवेत्तव ४७ सनीलकंठोबलवान्नीलकंठइवापरः ॥ श्रवणा
त्तस्यशब्दस्यभुजगास्तेपराभवं ४८ यास्यंतिचगुणेशोपितमारुह्यभुवोभरं ॥ हरिष्यतितदापुत्रान्मोक्ष्यंतेनागबंधनात् ४९ एवमुक्त्वामुनिस्तस्यैरहोनी
त्वाऋतुंददौ ॥ विनताथययौहर्षात्काननंजंतुवर्जितं ५० कालेनसुषुवेचांडमभेद्यंवज्रपर्वतैः ॥ मृद्भांडेवल्कलैर्वेष्ट्यनिक्षिप्यांडंस्थिराभवत् ५१ यथा
भूमिगतंद्रव्यंभुजगोबलवत्तरः ५२ इतिश्रीगणेशपुराणेउत्तरखंडेसप्तनवतितमोध्यायः ९७ ॥ ॥ छ ॥ ॥ कउवाच ॥ एवंगतेसप्तमेब्देत्वष्टमेसगु
णेश्वरः ॥ उषःस्नात्वास्थितोब्रह्मजपन्वेदचतुष्टयं १ कस्तूरीतिलकोनानाभूषणैःसुविराजितः ॥ दिव्यांबरधरोदिव्यगंधमालाविभूषितः २ ततस्तेतापससु
ताआगातास्तंगुणेश्वरं ॥ तद्दीप्त्याभासिताःसर्वेरुणदीप्त्यायथावनाः ३ तान्दृष्ट्वाध्ययनेबुद्धिजातांतस्याभकैःसह ॥ सर्वेषांमस्तकेहस्तंन्यधात्तत्समयेविभुः
४ त्रिचतुःपंचवर्षाणांवेदस्फूर्तिःस्ततोभवत् ॥ विनातुचेतनांशब्दोनभोवाण्याहिश्रूयते ५ चतुर्णामपिवेदानांसर्वेपारायणंव्यधुः ॥ नाभक्षयन्पशु
गणाग्रासंसुखगतंतदा ६ श्रवणेतत्पराजाताःशब्दानांवेदचारिणाम् ॥ समाप्तेवेदत्रितयेसामगानमथारभन् ७ हरिणाःसिंहशार्दूलाभुजगाःपक्षिजातयः ॥
गानस्यश्रवणेसक्ताअश्रुपातान्प्रसुस्रुवुः ८ अष्टाशीतिसहस्राणिमुनयःश्रवणेरताः ॥ आनंदह्रदसंमग्नाःशेरतेस्मयथानिशि ९ प्रमथाद्यागणाःसर्वेशिवाद्या
हर्षनिर्भराः ॥ अस्रवन्नामृतंचंद्रःशिवभालस्थितस्तदा १० तत्संसर्गाद्रुंडमालारुंडानिपुरुपाविभुः ॥ लज्जिताःकिंनराःसर्वेगंधर्वाश्चास्यगानतः ११ स्मरत
प्ताःस्त्रियःशांताआरार्तिक्यंव्यधुस्तदा ॥ तत्राजगामसहसादैत्यश्चाग्निनिभाकृतिः १२ यस्यशब्देनदीर्णास्तामंदराद्रिगुहास्तदा ॥ हलदंतोवापिनासस्तडा
गनयनोरिहा १३ सतुश्वापदरूपेणबभ्रामतत्रतत्रह ॥ पंचनेत्रश्चतुःशृंगोवसुपादश्चतुःश्रुतिः १४ त्रिमुखश्चाद्विपुच्छोसौजहासोच्चैर्निरीक्ष्यतम् ॥ पश्यंतुकौतुकंबा
लाःप्रोवाचेतिशिशून्विभुः १५ अत्यद्भुतंदृष्टमिदामित्यूचुस्तेगुणेश्वरम् ॥ ततोदैत्योननर्तोच्चैरुड्डीयन्यपतत्भुवि १६ क्षणंलीनःक्षणंतिष्ठन्दृश्यादृश्यस्वरूपधृक्

ध्रीयत।ध्रीयतामेषइत्युवाचाशिशून्विभुः १७ इत्युक्त्वादैत्यमगमद्वेगेनचगुणेश्वरः॥ पलायतिमहादैत्योयातिपृष्ठेसबालकैः १८ महारण्यंगताःसर्वेयत्रवायु
र्नसर्पति ॥ गर्जंतिसिंहशार्दूलागजसूकरवानराः १९ तंधर्तुंतत्रयातोसावुड्डीयदैत्यपुंगवः ॥ क्वापियातोदूरदेशंततःखिन्नोगजाननः २० क्रोधसंरक्तनयनो
मुमोचपाशमुल्बणम् ॥ चकंपेधरणीव्योमभ्रमन्मेघममूत्तदा २१ न्यपतन्भानिखात्पृथ्वींककुभोव्यनदन्स्वनात् ॥ सपाशोदैत्यमाक्रम्यक्षणेनायाद्गुणेश्वर
म् २२ श्वासरोधात्पपातोर्व्यांलुठन्पादौभुजौमुखम् ॥ नेत्रद्वारागताःप्राणाःपश्यत्सुबालकेष्वपि २३ पतितोरूपमास्थायचतुर्विंशतियोजनम् ॥ सपाश
कंठंतंकेचिद्विचकर्षुरितस्ततः २४ गुदेकाष्ठंमुखेधूलिंप्राक्षिपन्नपरेर्भकाः ॥ केचिन्मूत्रंपुरीषंचचक्रुस्तन्मस्तकेर्भकाः २५ गुणेशनिकटेयाताःसर्वेबालाःक्षुधातु
राः॥ रसालानिबभक्षुस्तेकेचित्तन्मस्तकेगताः २६ आजघ्नुःफलघातेनभूभिस्थाउपरिस्थितान् ॥ पतितान्यपरेखादन्ददृशुर्विनतांततः २७ अंडमाच्छाद्यातिष्ठं
तीसाधावद्बालकान्प्रति॥ पलायमानांस्तान्दृष्ट्वाविनतापृष्ठतोययौ २८ निघ्नतीपक्षवातेनश्वापदानिद्रुमानपि ॥ गुणेशस्तत्समालोक्यलीनोवृक्षस्यकोटरे
२९ ददर्शांडंश्वेततरंमंडलंशशिनोयथा॥ दधारहस्तेसहसागुणेशोबलवत्तरम् ३०अस्फुटत्तन्ददृशेपतत्रीनीलकंठवान् ॥ दीर्घपक्षोविशालाक्षोवमन्ज्वालाक
णान्मुखात् ३१ व्याधूनयद्दुभौपक्षौकंपयन्जगतीतलम् ॥ चेलुर्वेलामतिक्रम्यसमुद्रास्तस्यशब्दतः ३२ चचालमंडलंभानोरर्भकास्तेपलायिताः ॥ पृष्ठतोनु
ययौसोथपक्षघातेनताडयन् ३३ तद्दृष्ट्वाक्रंदनंतेषांयोद्धुकामोगुणेश्वरः ॥जग्राहपक्षेतंक्रूरंततोयुद्धमवर्तत३४ पक्षघातैश्चंचुपुटैर्जघानपक्षिपुंगवः ॥ आरक्तनय
नःसोपितंजघ्नेमुष्टिघाततः ३५ अतिदार्ढ्यंतस्यदृष्ट्वाचतुर्भिरप्यथायुधैः॥ गुणेशस्तंजघानाशुतानिपेतुर्धरातले ३६ उड्डीयसपपालाशुबालानादायसत्वरः॥
गुणेशस्तान्समुन्मुच्यसमारूढोंडजंततः ३७ वशेतमंडजंकृत्वाचारुरोहगुणेश्वरः॥ ततस्तमाययुर्बालाविनतापिसमाययौ ३८ तुष्टावपरमात्मानंगुणेशं
तंधियास्वया॥ त्वंसृष्टिकर्तारजसाब्रह्मासत्वेनपालकः ३९विष्णुस्त्वमसितमसासंहरन्शंकरोपिच ॥ नदेवानर्षयस्तत्वंविदुस्तेसगुणस्यह ४० निर्गुणस्य
तुकोवेदचराचरगुरोरपि॥ एवंस्तुत्वावदीत्सातंप्रणताभक्तितत्परा४१ कश्यपस्यमुनेर्भार्यांविनतांविद्धिमामिह॥ तस्यपुत्रःशिखंडीचसेवकस्तेभविष्यति४२
मुनिनापूर्वमुक्तंमेयोंडमेतद्भिनत्तिच ॥ सोस्यस्वामीनसंदेहोमोचयिष्यतितेसुतान् ४३ प्रतीक्षंत्यामयादृष्टंपादपद्मंचिरंतव ॥ जटायुःश्येनसंपातीनिताकद्रू
सुतैस्त्रयः ४४ तान्मोचयजगन्नाथशीघ्रंदर्शयमेसुतान् ॥ ॥ गणेशउवाच॥ ॥ माचिंतांकुरुमातस्त्वंदर्शयिष्येसुतांस्तव४५॥ कउवाच॥ ॥ ए
वमुक्त्वातुविनतांबहुहर्षसमन्वितः॥ शिखिनंचततःप्राहवरंमत्तोवृणीष्वह ४६॥ ॥ मयूरउवाच॥ ॥ यदिमेत्वंप्रसन्नोसियदिदेयोवरोमम॥ तदाम
न्नामपूर्वंतेनामाख्यातंभवेद्भुवि ४७ एतन्मेदेहिसर्वेशतवभक्तिंदृढांतथा॥ ॥ देवउवाच॥ ॥ साधुसाधुत्वयाप्रोक्तंनिर्लोभेनांतरात्मना ४८ त्वन्नामपूर्वं
मन्नाममयूरेश्वरइत्यथ॥ विख्यातंत्रिषुलोकेषुभक्तिर्मयिदृढाभवेत् ४९॥ कउवाच॥ एवमाकर्ण्यसासर्वैविनतास्वाश्रमंययौ॥ शिखंडिनंसमारूढोमयूरेशो

निजंगृहम् ५० मयूरेशमयूरेशमयूरेशेतिचासकृत् ॥ गृणद्भिर्मुनिबालैस्तैरन्वितःशोभयन्दिशः ५१ मातरंप्रणिपत्याहवृत्तांतंसर्वमंजसा ॥ वर्णयंतोमयूरेशंमु
निपुत्रागृहान्ययुः५२ इत्थंमयूरेशनामप्रापचासौगुणेश्वरः ५३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेशिखंडिवरप्रदानंनामअष्टनवतितमोऽध्यायः ॥ ९८ ॥
कउवाच ॥ ॥ अद्भुतंकृतवान्वर्षेनवमेसौगुणेश्वरः ॥ शिखंडिनंसमारुह्यचतुरायुधभूषितः १ नानालंकारसंयुक्तोमृगनाभिजशोभितः ॥ दिव्यांबरधरोबालैः
क्रीडितुंसमुपाययौ २ पूर्णचंद्रनिभःश्रीमान्जयशब्दैरभिष्टुतः ॥ केचिन्नमंतितंबालाःकेचिच्छत्रंध्वजंपरे ३ दध्रुःकेचिद्वीजयंतस्तद्दर्शनमहोत्सवाः ॥ क्रीडं
तःसरसींयाताःपंचयोजनविस्तृताम् ४ अगाधोदांनक्रझषकूर्ममंडूकसंयुताम् ॥ लतातरुपरीवारांनानापक्षिगणैर्युताम् ५उड्डीयपतिताःकेचित्तस्यांकेचिच्छनै
र्ययुः ॥ चूतंतत्तीरगंदृष्ट्वाविशालफलसंयुतम् ६ आरुरोहमयूरेशोबालाःफलजिघत्सया ॥ रसालैस्तेनिजघ्नुस्तानभिन्नांगान्पलायिताः ७ बालाःस्कंधान्दा
रयंतोनिपेतुःकेपितज्जले ॥ एवंक्रीडत्सुबालेषुदैत्योगादश्वरूपवान् ८ यस्यपादप्रहारेणचूर्णतांयांतिपर्वताः ॥ यस्यहेषितशब्देनकंपतेभुवनत्रयम् ९
पुच्छचांचल्यतोजीवान्हंतिस्कंधंजघर्षह ॥ यस्मिञ्श्रुतेस्यशब्देनकंपितेपतितार्भके १० केचित्पलायिताबालाःकेचिद्व्यग्राश्वमस्तके ॥ केचिन्निपतिताश्चा
शुगुणेशेपतितेजले ११ निमग्नेद्विमुहूर्तेस्मिन्प्रारुदन्मुनिबालकाः ॥ किंवक्तव्यमुमायैचदर्शनीयंमुखंकथम् १२ शंकरोपिरुषाविष्टोभस्मसान्नःकरिष्यति ॥
अगाधेस्मिन्जलेमग्नंप्रवेष्टुंचनशक्नुमः १३ मातापितापालयिताभ्रातात्रातासखाचनः ॥ ॥ कउवाच ॥ ॥ एवंशोचत्सुबालेषुमयूरेशोदधारतम्
१४ कर्णयोर्जलमध्येतुचकर्षबलवान्विभुः ॥ आरुरोहबलाद्दैत्यंभारेणामज्जयन्मुहुः १५ सदैत्योनिर्वमन्नेत्रान्मुखाद्बहुजलंमुहुः ॥ जलपूर्णश्रुतिश्वासोऽत्य
जन्प्राणान्महारवः १६ एकहस्तेनधृत्वातंदोलयित्वाजलाद्बहिः ॥ मयूरेशस्ततोबालाजहर्षुर्ननृतुर्भृशम् १७ श्रुवितेशतधाजातंददृशुर्दैत्यपुंगवम् ॥ प्रश
शंसुर्मयूरेशंमहाबलपराक्रमम् १८ तऊचुस्तंतदादेवंमृतंमत्वारुदामहे ॥ तावदेवाहिदृष्टोसिहतदैत्योबहिर्गतः १९ पुनस्तेजलमाविश्यप्रासिंचन्नंजलीन्मिथः ॥
एकमत्याचसर्वेतेप्रासिंचन्गणनायकम् २० वर्षाकालेयथामेघाधरणींपर्वतानपि ॥ षड्भुजैःपरिषिंचन्सन्अपर्याप्तोभवद्यदा २१ तदासंख्यभुजैर्वारिचिक्षेप
बालकेषुसः ॥ तदाश्चर्यंतुतेदृष्ट्वापरस्परमथाब्रुवन् २२ षड्भुजोयंकथमभूदनंतभुजमंडितः ॥ मंदीभूतामुनिसुताःक्वद्विहस्तावयंविभो २३ असंख्यभुजवी
र्यैर्जाकेचत्वंभुवनेश्वर ॥ पुनःसर्वेसिषिंचुस्तेमयूरेशंरुषान्विताः २४ सोनंतरूपस्तान्सर्वान्सिषेचेगणनायकः ॥ एकैकस्याग्रतोभूत्वाषड्भुजोनिजतेजसा २५
तावच्छिखंडिनिष्ठोसौचतुरायुधभूषितः ॥ प्रणेमुस्तेंजलिपुटंबध्वादेवंगुणेश्वरम् २६ पश्यंतस्तन्मुखेविश्वंसर्वस्वर्गान्वितंतुते ॥ गंधर्वयक्षरक्षांसिसरिदब्धि
द्रुमानपि २७ सर्वंचराचरंविश्वंसदेवासुरमानुषम् ॥ प्रार्थयामासुरथतेदृष्ट्वेत्थंतंभयातुराः २८ ॥ बालाऊचुः ॥ ॥नविदामस्वमात्मानंपरंवानापिकिंच
न ॥ एकरूपोभवविभोक्षपांकृत्वाखिलेश्वर २९ ॥ कउवाच ॥ ॥ इतितत्प्रार्थनांश्रुत्वाजातोसौपूर्ववद्विभुः ॥ एतस्मिन्नंतरेतत्रचिक्रीडुर्नागकन्यकाः ॥

३० यानिरीक्ष्याभवन्नष्टनायिकानांत्रपाभृशम् ॥ नेत्रैर्निरीक्ष्यहीमंत्यःप्रापलन्हरिणस्त्रियः ३१ अतिसुंदरगात्रास्ताःसर्वालंकारभूषिताः ॥ तानिरीक्ष्यम
यूरेशंविह्वलामदनाग्निना ३२ ताऊचुश्चमिथःसर्वाअयंभर्ताभवेद्यदि ॥ सफलंनस्तदाजन्मजीवितंचवयोपिच ३३ धैर्यात्तमूचुस्ताःसर्वाःकुतआगमनंतव ॥
दृष्ट्वातेवदनंचेतोविह्वलंनोभिजायते ३४ विश्रांतंकुरुचेतोनःस्वांगसंगान्नृपूत्तम ॥ ॥ देवउवाच ॥ ॥ अहंशिवसुतोनाम्नामयूरेशइतिस्फुटम् ३५
विख्यातोमुनिपुत्रैस्तुमार्जितोबलवत्तरैः ॥ दृष्टवान्पादकमलंभवतीनांप्रसंगतः ३६ ॥ ॥ ताऊचुः ॥ ॥ अस्मद्गृहेक्षणंस्थित्वाविश्रामंक
र्तुमर्हसि ॥ ॥ देवउवाच ॥ ॥ पार्वतीमाद्वियोगेनपरितप्येद्भृशंयतः ३७ अतोनायामिवःस्थानंगच्छंतुनागकन्यकाः ॥ ॥ कउवाच ॥ ॥
एवंवदतितस्मिंस्तुधृत्वानिन्युर्गृहंतुताः ३८ तमदृष्ट्वापुनःशोकंव्यधुर्मुनिसुतास्तदा ॥ ॥ बालाऊचुः ॥ ॥ कथंकठिनतांयातोदयालुःसगुणेश्वरः ॥
३९ अमृतस्राविकिरणोनचंद्रउष्णतांव्रजेत् ॥ नपितात्यजतेबालानपराधायुतेसति ४० क्कगतोसिविनात्वांहिगमिष्यंतिहिनोऽसवः ॥ कउवाच ॥ केचिन्नि
पतिताभूमौकेचिद्बालंनिजघ्निरे४१केचिद्ययुःस्वाश्रमंतेपथितस्यपदांबुजे ॥ दृष्ट्वानेमूरुदंतस्तेददृशुस्तेअगासुरम् ४२ मूर्धजावाततोयस्यमानिभूमौनिपेतिरे ॥
शतयोजनपादाब्जोभूमावास्यंप्रसार्यसः ४३ तेषांमार्गेप्रसुष्वापततस्तोशिशवोययुः ॥ ध्यायंतस्तंमयूरेशंशोचंतःपथिविह्वलाः ४४ उदरेतस्यतेयाताआप
गाजलधीनिव ॥ भ्रांताःपरस्परंचक्रुर्वार्त्तानानाविधास्ततः ४५ मयूरेशोगतःक्कापिवयंवुव्रजामहे ॥ नजानीमोदिशंसर्वेनोदृश्यंतेगृहाणिच ४६ इंद्रिया
णामधिपतिर्मनोनीतंतुतेननः ॥ विनानोमनसाज्ञानंकथमुत्पत्स्यतेर्भकाः ४७ क्कमातरोभ्रातरोवापितरःक्कगुणेश्वरः ॥ एवंवदत्सुबालेषुमयूरेशोखिलार्थक
त् ४८ ॥ आविरासीत्तत्पुरतश्चतुरायुधभूषितः ॥ ॥ गुणेशउवाच ॥ ॥ माशोचंतुभवद्दुःखंज्ञात्वाहंशीघ्रमागतः ४९ अगासुरोदरगताना
त्मानंविदुरर्भकाः ॥ ॥ कउवाच ॥ ॥ निद्रयामोहयामासमुनिपुत्रान्गुणेश्वरः ५० दैत्यदेहांतरगतोववृधेवामनोयथा ॥ विपाट्यदेहंतस्याशुशक
लेद्वेव्यधाद्विभुः ५१ ततोऽस्तमितआदित्येनागतेष्वर्भकेषुच ॥ मातरःपितरश्चैवचिंतामापुःशुचान्विताः ५२ ऊचुःपरस्परंतेतुशिवापुत्रोमहाबलः ॥ बाला
न्नीत्वागतःकुत्रमृतोवाशिशुभिःसह ५३ जीवंश्चेदागतःसस्यात्सायंकालेबुभुक्षितः ॥ केचित्प्राणान्विनातैस्तुतत्यजुर्मातरोपिच ५४ केचिदूचुरुमायैतद्वृत्तंसर्वंनि
वेद्यताम् ॥ केचित्तेषुवनंयाताबभ्रमुर्वनपर्वतान् ५५ नापुस्तंचस्वकान्बालान्खिन्नाःप्रापुर्गृहान्पुनः ॥ नानाकोलाहलंचक्रुर्जनन्यःपितृसोदराः ५६ तेषामाक्रं
दितंश्रुत्वाकृपालुःसमयूरराट् ॥ तत्तद्रूपंस्वमात्मानंतत्तद्भूषासमन्वितम् ५७ तत्तद्वासःपरीधानंतत्तच्छीलगुणान्वितम् ॥ तत्तदंगंचकाराशुविवेशासौगृहेततः ५८
कृत्वातत्तद्वयोवेषंतत्तन्मानयुतंशुभम् ॥ जनन्यस्ताःसमुत्थायबालानादायसत्वराः ५९ स्तनपानंददुःप्रीत्यापरमानंदनिर्भराः ॥ ततोददृशिरेबालाःपितृभिर्मा
तृभिस्तदा ६० ताऊचुःक्कस्थितारोषादुषःकालेगताःकुतः ॥ नस्नानंनचभुक्तंवानचान्यद्वापिभक्षितम् ६१ मयूरेश्वरसंगेननेदानींगंतुमर्हथ ॥ कउवाच ॥ एवंशिक्षा

प्यतान्बालानालिंग्यबुभुजुःसुखम् ६२ शिवापिपुरतोपश्यन्मयूरेशंसमागतम् ॥ आलिंग्यपरिपप्रच्छकिंभुक्तंवनगोचरे ६३ त्वद्वियोगजदुःखेनमयाकिंचि
न्नभक्षितम् ॥ स्तनौपिबपयोवृद्धौभोजनंचसमाचर ६४ ततःसर्वंचकारासौमातृवाक्यंगुणेश्वरः ६५ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेनवनवतितमोध्यायः
९९ ॥ कउवाच ॥ अनेकरूपवान्देवोमयूरेशोखिलेश्वरः ॥ अतिसुंदरदेहःसन्नागकन्याभिराहृतः १ गृहंस्वकीयंक्रीडार्थंपूजितोबहुविस्तरात् ॥ सुगंधतैलो
द्वर्तनैःस्नाप्योष्णैरपितंजलैः २ दिव्यवस्त्रैरलंकारैश्चंदनैरपिपूज्यच ॥ धूपदीपैश्चनैवेद्यैःफलतांबूलकांचनैः ३ ऊचुःकरपुटंबध्वावयंधन्यतमाविभो ॥ यद्दृष्टंते
पदंदेवब्रह्माद्यैरपिकांक्षितं ४ नागलोकोधन्यतमोजीवितंनःसुजीवितं ॥ आनंदह्रदमग्नंनोमानसंतापमत्यजत् ५ यद्यत्तेईप्सितंदेवतत्तदत्रापिगृह्यतां ॥ अत्र
स्थित्वाकतिदिनंपश्चात्त्वंगंतुमर्हसि ६ मयूरेशउवाच ॥ वांछितंवोविधास्येहंगिरिजामांप्रतीक्षते ॥ मद्वियोगेनतत्प्रासानभक्षयतिकिंचन ७ यूयंकस्यात्मजा
स्तस्यदर्शनंचेद्भवेन्मम ॥ कउवाच ॥ ततऊचुर्नागकन्यावासुकेःपुत्रिकावयम् ८ ब्रह्माद्यामुनयोदेवायांतियस्यगृहंसदा ॥ यस्यविषभवाज्वालादहेत्त्रिभुव
नंविभो ९ ॥ कउवाच ॥ इत्युक्त्वातंपुरस्कृत्यपितरंप्रापुरंगनाः ॥ रत्नसिंहासनेदीप्तेतिष्ठंतंपन्नगैर्युतं १० सूर्यकोटिनिभंरत्नमालयाशोभितंतदा ॥ मूर्धस्थ
रत्नकिरणैर्भासयंतंदिशोखिलाः ॥ तंदृष्ट्वावासुकिंदेवोगर्वितंबलवत्तरम् ११ उड्डीयतत्फणास्थंमणिंजग्राहसत्वरम् ॥ येनपातालविवरेनांधकारोऽभवत्किल
१२ आंदोलयामासशिरःकंपयन्सप्तपर्वतान् ॥ उदधीन्सप्तस्वर्गांश्चपातालानिरसातलं १३ हस्तेनैकेनतंगृह्यमयूरेशःस्वलीलया ॥ वासुकिंनिजकंठेतंबबंध
सर्पभूषणः १४ विख्यातःस्वर्गलोकेभूजगर्जानंदतोविभुः ॥ तद्गर्जितंसमाकर्ण्यचुक्षुभेभुवनत्रयम् १५ ततःसर्पगणाःशेषंनीत्वावासुकिमब्रुवन् ॥ सचक्रोध
समाविष्टोविस्तार्यनिखिलान्फणान् १६ विषाग्निमुत्सृजन्दग्धुंत्रैलोक्यमुपचक्रमे ॥ उवाचकःक्षमोजेतुंममबंधुंतुवासुकिं १७ आवेशेनययौरोषाद्दावानल
इवज्वलन् ॥ शीघ्रंयातोमयूरेशंतिष्ठतिष्ठेतिचाब्रवीत् ॥ १८ ॥ ततोनागकुलान्याशुतंशेषमन्वयुस्तदा ॥ ततःपन्नगवृंदंतंदृष्ट्वादेवोप्यतिष्ठत १९ शिखंडि
मस्तकेहस्तंन्यधाद्युद्धायपन्नगैः ॥ सययौतंनमस्कृत्यग्रसन्निवमहाद्भुतः २० दुधावपक्षौतद्वातात्भ्रामयन्भुजगोत्तमान् ॥ कांश्चित्सभक्षयामासचुचूर्णचाप
रानपि २१ मारयामासकांश्चित्सभुजगान्बलवत्तरान् ॥ निरीक्ष्यतंमृताःकेचित्पन्नगाभयविह्वलाः २२ दृष्ट्वापराक्रमंतस्यशेषःश्वासमपासृजत् ॥ शिखंडी
पतितस्तेनमूर्छितोधरणीतले २३ मयूरेशंततःशेषोययौक्रोधाद्दहन्निव ॥ त्रैलोक्यंविषवह्निस्थंसमालोक्यगुणेश्वरः २४ विराड्रूपंसमास्थायरुरोहतत्फणो
परि ॥ उड्डीयबालभावेनगर्जन्मेघइवापरः २५ ननर्तकरतालेनपादाघातेनमर्दयन् ॥ अनंतकोटिब्रह्मांडभारेणपरिपीडितः २६ एकब्रह्मांडवाहीसकथं
तद्भारमावहेत् ॥ बबंधशेषंहिकटौरज्जुंबालोयथारनन् २७ ततस्तेभुजगाःसर्वेयोद्धुकामास्तमन्वयुः ॥ हुंकारेणैवतान्सर्वान्पातयामासविघ्नराट् २८ अब
ध्नान्मस्तकेकांश्चित्कांश्चिच्चकर्णयोर्विभुः ॥ पारिश्रांतस्तदाशेषस्तंतुनावगुणेश्वरम् २९ नस्वरूपंविदुर्देवाब्रह्माद्यामुनयोपिच ॥ त्वमेवसृजसेविश्वंपासिहंसि

त्वमेवहि ३० नानावतारकर्तात्वंनानादैत्यविमर्दनः ॥ त्वमेवसाक्षीसर्वस्यसर्वांतर्यामितांदधत् ३१ सर्वत्रकारणंत्वंहिकारणानांचकारणम् ॥ अज्ञानादभि
मानेनयोद्धुकामानक्षमस्वनः ३२ ॥ कउवाच ॥ संपातिंचजटायुंचश्येनमानीयसर्पराट् ॥ निवेद्यचनमस्कृत्यशेषस्तूष्णींबभूवह ३३ तेपितंप्रणिपत्याहुर्दीन
नाथप्रसादनः ॥ बंधान्मुक्तासर्पकृतान्नमस्तेपरमेश्वर ३४ ॥ कउवाच ॥ एवमुक्त्वामयूरेशंबंधुंतंशिखिनंत्रयः ॥ आलिलिंगुर्मुदायुक्तास्तदागद्गदभाषि
णः ३५ पप्रच्छुःकुशलंमात्रेतेचक्षेममथाब्रुवन् ॥ ततःशिखंडिनंसोथरुरोहगणनायकः ३६ पाताद्धरणींप्रायात्तत्स्त्रीभिःसंयुतोवशी ॥ भगासुरंददर्शाद्ध
मार्गेशिशुहरंचतम् ३७ उद्यम्यपरशुंदीप्तंशशिसूर्यनिभंविभुः ॥ तस्याजकंठेतंतस्यपशुमारममारयत् ३८ तच्छिरःपरिबभ्रामशृंगंवज्राहतंयथा ॥ ततस्त
उत्थिताबालायोगमायाविमोहिताः ३९ मयूरेशःक्वचास्तीतिप्राक्रोशन्सर्वएवते ॥ आसनेक्रीडनेस्वापेजागृतौभोजनेपिच ४० तमेवध्यायमानास्तेतत
न्मुखाद्बहिराययुः ॥ गर्भवासादिवोत्तीर्णाददृशुस्तंगुणेश्वरम् ४१ दृष्ट्वातेरुरुदुःस्नेहादालिलिंगुर्मुदाखिलाः ॥ ॥ तेऊचुः ॥ ॥ त्यक्त्वास्मान्दैत्यजठरेमृता
न्क्वास्तिगतोभवान् ४२ त्वत्स्मृतेस्तस्यजठरेजीवितानिर्गतास्ततः ॥ मयूरेशउवाच ॥ सर्वव्यापीसर्वगतःसर्ववेत्ताखिलेश्वरः ४३ नत्यक्तवान्कदाचिद्वो
माचिंतांकर्तुमर्हथ ॥ ॥ कउवाच ॥ ॥ ततोययौमयूरेशोबालकैःपरिवेष्टितः ४४ केचिद्धावंतिपुरतोनानाशब्दकराभृशम् ॥ केचिच्छत्रधराःकेचिद्दंडचा
मरधारिणः ४५ धूलिध्वजंसमालोक्यययुर्मुनिगणाबहिः ॥ शिख्यारूढंमयूरेशंबालकैःपरिवेष्टितम् ४६ ऊचुःपरस्परंसर्वेमुनयोविस्मयान्विताः ॥ गृहेस्मि
न्शिशवश्चामीकुतोन्येस्यसमीपतः ४७ तांश्चतान्मीलिताःसर्वेपश्यंस्तेदेवरूपिणः ॥ विचारेणचतान्सर्वेपरब्रह्मस्वरूपिणः ४८ आनंदहृदमग्नास्तेनविदुःस्वं
परंपुनः ॥ नापश्यंस्तेपुनस्तांस्तान्भ्रांताइवव्यलोकयन् ४९ माययामोहिताःसर्वेस्वान्स्वान्बालान्व्यलोकयन् ॥ कश्चित्पितरमासाद्यपठतिस्मयथापुरा ५०
कश्चिन्मातरमासाद्यापिबतिस्मस्तनंमुदा ॥ आलिलिंगाथजननींपितरंवापिकश्चन ५१ भ्रातरंताडयित्वान्योरुरोदताडनादिव ॥ उमापितनयंदृष्ट्वालिं
ग्यप्रादात्स्तनंमुदा ५२ कथंचिरतरंयातइतिक्रोधादभाषत ॥ आदायहस्तेगिरिजामयूरेशंगृहंययौ ५३ सर्वेतेमुनयोजग्मुःशिशुभिःस्वंस्वमाश्रमम् ५४
इतिश्रीग०पु०उ०भगासुरवधोनामशततमोऽध्याय ॥ १०० ॥ कउवाच ॥ ततस्तुदशमेवर्षेसुखासीनंमहेश्वरम् ॥ गिरिजासहितंवामेसप्तकोटिगणा
न्वितम् १ नृत्यंतंतंमयूरेशंपश्यंतंस्वांगणेशिशुम् ॥ आययुर्मुनयःसर्वेगौतमाद्याःप्रणम्यतम् २ ऊचुःप्रबुद्धमतयोमहादेवंमहौजसम् ॥ यावत्कालंशिवात्रत्वं
मयूरेशसमन्वितः ३ स्थितोसितावद्दैत्यानामनंतानांसमागमः ॥ वयंतेनप्रपीड्यामोऽन्यत्रयाहिशिवाधुना ४ वयंवान्यत्रगच्छामोयद्याज्ञातेभवेद्धर ॥
शिवउवाच ॥ ॥ भवत्संगेनचमयानववर्षाणिसौख्यतः ५ अतिक्रांतानिविघ्नानिमयूरेशेनतानिच ॥ भवतांगमनेस्माकंस्थित्वाकिंनुप्रयोजनम् ६
अहमेवप्रयास्यामिस्थलमन्यंनिराकुलम् ॥ कउवाच ॥ इतिशंभुवचःश्रुत्वामुनयस्तंप्रणम्यते ७ जयदेवमयूरेशेत्युक्त्वास्वस्थानमाययुः ॥ शिवोपिगण

संयुक्तोवृषारूढोंबिकायुतः ८ बर्ह्यारूढंमयूरेशंपुरस्कृत्वामुदान्वितः ॥ नानावादित्रनिर्घोषैर्नादयन्विष्टपंततः ९ अन्वयुर्मुनयःसर्वेमयूरेशंशिवान्वितम् ॥ प
त्न्योपिबालकैःसार्द्धंस्नेहगद्गदआशिषैः १० रजसाव्योमनिततेनप्राज्ञायतकिंचन ॥ परावृत्यशिवःसर्वान्दक्षिणाभिमुखोययौ ११ ददृशुर्मार्गमध्येतंद्वादशाक्षौ
हिणीयुतं ॥ कमलासुरमायांतंधूलिधूसरितांबरं १२ गजाश्वपुरतोयांतिरथाश्वपादचारिणः ॥ नज्ञायतेरवेस्तेजःशस्त्रदीप्त्यार्थकिंचन १३ कोलाहलोमहाना
सीद्गजाश्वरथपत्तिजः ॥ नानाविधानांशस्त्राणांसंघट्टस्वनमिश्रितः १४ ददृशुस्तंमहादैत्यंशिवचाराःपुरोगताः ॥ शंखासुरस्यतंबंधुंनानाभूषाविराजितं
१५ नानायुधधरंप्रोचुरागत्यतुशिवंगणाः ॥ पादाघातेनतरयाशुकंपंतिकमठादयः १६ मुनयोग्रेचराःपेतुर्भयभीतास्तमब्रुवन् ॥ मयूरेशमहाभागकथंरक्ष
सिनोखिलान् १७ ॥ ॥ कउवाच ॥ ॥ इतितद्वचनंश्रुत्वाप्रावदत्सगुणेश्वरः ॥ विद्यमानेशिवेचिंतानकार्यामुनिपुंगवाः १८ मयूरेशोहरंप्राहनमस्कृ
त्यततःपुनः ॥ ॥ देवउवाच ॥ ॥ महासेनायुतोदैत्योनाम्नासौकमलासुरः १९ यदितेनुग्रहोमेस्त्याशुद्धायाशुव्रजाम्यहं ॥ शिवउवाच ॥ ॥ सम्यगुक्तं
त्वयापुत्रत्वद्दयानंदनंवचः २० द्वादशाक्षौहिणीसेनायुतोसौदैत्यपुंगवः ॥ एकाकीकथमायासिसप्तकोटिगणैर्युतः २१ व्रजाशुहिजयंशीघ्रंजहिशत्रुंमहाबलं ॥
॥ ॥ देवउवाच ॥ ॥ तवप्रसादात्त्रैलोक्यंदहेयमितिमेमतिः २२ कियंतोनहतादैत्यानज्ञातास्तेत्वयानुकिं ॥ अस्यकागणनास्वामिन्नायास्येजयवानहं २३
कउवाच ॥ एवमाकर्ण्यतद्वाक्यंशंभुरालिंग्यतंददौ ॥ त्रिशूलंपुत्रहस्तेतन्मूर्ध्निन्यस्यकरंशुभं २४ आज्ञांददौस्वपुत्रायगणयुक्तायशंकरः ॥ क्ष्वेडितैर्जयशब्दैश्चना
दयन्सदिशोदश २५ प्रययौप्रमथैर्युक्तोविग्रहायुद्धलालसः ॥ वृषारूढःशिवायुक्तोहरोपिद्रष्टुमन्वगात् २६ दृष्ट्वापारंदैत्यसेनांमयूरेशःशरैरितः ॥ निर्ममेबहुलां
सेनांततोयुद्धमवर्तत २७ कालानुरूपास्तेवीराब्रह्मांडाशनतत्पराः ॥ मेरोरधिकमानास्तेशब्दतःशृंगपातिनः २८ परस्परंनिजघ्नुस्तेतुमुलेसंयुगेततः ॥ अंधका
रोमहानासीद्रजसाच्छादितादिशः २९ विस्मयंचक्रिरेदैत्याइदानीमयमेकलः ॥ अनेकतांकथंयातस्तस्मादेषपरःपुमान् ३० भूभारंहर्तुकामोयमवतीर्णःशि
वालये ॥ सोपिदीर्घतरंरूपंदधारसहसाविभुः ३१ दृष्ट्वादीर्घंदैत्यरूपंयोगमायासमावृतः ॥ दशायुधधरोदेवोदशहस्तोमहाबलः ३२ मयूरेशश्चदैत्यश्चयुध्य
मानौविरेजतुः ॥ नानाशस्त्रप्रहरणैर्नानायुद्धविशारदैः ३३ व्यस्ताव्यस्तमयुध्यंतगणासेनाचराश्चते ॥ मुष्टिप्रहारैर्दंतैश्चशस्त्रास्त्रैरितरेतरं ३४ केषांचिन्मस्त
काभग्नाअपरेषांमुखानिच ॥ जानुजंघाविरहितानिपेतुरपरेरणे ३५ गर्जयंतोदशदिशःशस्त्रास्त्रघातनिस्वनैः ॥ स्वामिस्वनामतोजघ्नुरंधकारेरजस्कृते ३६
कबंधामारयंरतत्रपरान्स्वानपिसंमुखं ॥ दैत्यसेनाचराभग्नादैत्यमेवान्वयुरुस्तदा ३७ असंख्यातान्मृतान्प्राहुर्नद्यस्तुरक्तसंभवाः ॥ ॥ दैत्यउवाच ॥ इंद्रादयोलो ७२
कपालाब्रह्माद्यादेवतागणाः ३८ निर्जितायेनतेनेहकोयुद्धंकर्तुमुत्सहेत् ॥ भूगोलंन्युब्जतांनेतुंकोन्यःशक्तोभविष्यति ३९ ॥ कउवाच ॥ ॥ इत्युक्त्वांदोलया
मासशस्त्रांदोलनतोजगत् ॥ क्रोधसंरक्तनयनोमारयामासदैत्यराट् ४० मयूरेशगणान्सर्वान्नानावाहनहेतिकान् ॥ शिरःपादान्करौहस्तान्भित्त्वापातयदाहवे

४१ उत्कर्षंतस्यतंदृष्ट्वामयूरेशोययौपुरः ॥ खगंचगर्जयन्व्योमदशशस्त्रैर्द्विषोहनत् ४२ असंख्याताहतादैत्यामुक्तिंप्रापुःसुदुर्लभां ४३ इतिश्रीगणेशपुराणे
उत्तरखंडेदैत्यसेनावधोनामएकशततमोऽध्यायः ॥ १०१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ कउवाच ॥ ॥ विनष्टेबहुवासैन्येरुरो
हाश्वंसदैत्यराट् ॥ खड्गपाणिर्ययौयोद्धुंमयूरेशंरुषान्वितः ॥ १ ॥ तंदृष्ट्वातुमयूरेशोरुरोहस्वंशिखंडिनं ॥ तंदृष्ट्वाशीघ्रमायांतंपन्नगास्त्रंसदैत्यराट् ॥ २ ॥
जप्त्वामंत्रंचशतधाभार्गवादिष्टमादरात् ॥ ससर्जपन्नगास्त्रंतत्तेजसाजज्वलुर्दिशः ॥ ३ ॥ सर्पसैन्यैरवेष्टयंतद्देवसेनाचरानराः ॥ मृताःकेचिद्गताः
केचित्पतिताश्चापरेऽवनौ ४ ननंददेवस्तंदैत्यमतिवीर्यपराक्रमम् ॥ साधुयुध्यसिदैत्येंद्रनेदृशःकोपिवीक्षितः ५ एवमुक्त्वारिपुंदेवोगारुडास्त्रमवासृजत् ॥ ततः
पलायिताःसर्पाःप्रोत्तिष्ठंश्चचमूचराः ६ चक्रास्त्रमसृजद्देवोदैत्यसेनानिबर्हणम् ॥ तेनकेचिन्मृतादैत्याःकेचिच्छिन्नांघ्रिमस्तकाः ७ विभिन्नजानुजंघाश्चछिन्न
गुल्फाःपरेपतन् ॥ गर्जंतिधावधावेतिपितर्मातःसुतेतिच ८ मुक्तिंयातामयूरेशंदृष्ट्वाप्राणानजहुश्चये ॥ एवंसेनानिरस्तास्यततोदैत्योरुषाद्रवत् ९ खड्गपाणी
रुषागर्जन्वेगेनायाद्गजाननम् ॥ तथाविधंरिपुंदृष्ट्वापरशुंजगृहेविभुः १० ययौदैत्यंमहावेगमसृजत्परशुंचतम् ॥ सदहंस्तेजसाव्योमदिशःपक्षिगणानपि ११
अच्छिनद्दैत्यहस्तंचखड्गंचशतधाजवात् ॥ सचापंसहसागृह्यसज्जंकृत्वाशरान्बहून् १२ असंख्यातान्बलाद्विध्यन्छादयामाससैनिकान् ॥ गगनंचदिशः
सर्वाजगर्जघननिस्वन. १३ शराघातेनबलवान्निवार्यशरपंजरम् ॥ अंधकारेबाणमयेनाज्ञासीत्कोपिकंचन १४ मयूरेशोथशीघ्रंतदश्वंभूमावपातयत् ॥ ततों
तरिक्षेतिष्ठन्त्सप्रोचेचगणनायकम् १५ अश्वोनिपातितस्तस्यपश्यमेकौतुकंमहत् ॥ शिखंडिनंहनिष्यामिपश्यतस्तेगुणेश्वर १६ उभयत्रनिषंगस्थानश
रान्भूमौव्यचिक्षिपत् ॥ चापमाकृष्यकर्णांतंचिक्षेपशरसंचयान् १७ मयूरेशस्यसेनायांमारयन्सर्वसैनिकान् ॥ ववर्षशरजालानिवर्षाकालेघनायथा १८
कियंतोभिन्नसर्वांगाःकेचित्प्राणानजहुःसुराः ॥ एवंनश्यत्सुवीरेषुमयूरेशोरुषान्वितः १९ कमलासुरबाणैस्तुविद्धंत्यक्त्वाशिखंडिनम् ॥ पाशंकरेणजग्राहतो
लयित्वाससादरम् २० जगर्जनादयन्व्योमतस्याजमहसायुतम् ॥ सपातयन्दैत्यगणान्ददाहरिपुसैनिकान् २१ कंठेचन्यपतत्तस्यदैत्यसेनाधिपस्यह ॥ रुरो
धश्वासमस्यासौदैत्योरूपांतरंश्रितः २२ मूर्ध्नासंछादयामासतत्क्षणाद्रविमंडलं ॥ अंधकारेघोरतमेनप्राज्ञायतकिंचन २३ उवाचसंमुखोभूत्वामयूरेशंरुषा
न्वितः ॥ मयाकिंयुध्यसेबालगच्छमातुःस्तनंपिब २४ रमस्वबालकैर्नोचेन्मरिष्यसिममाग्रतः ॥ ममचाक्रंदनेनैवकंपतेभुवनत्रयम् २५ पादेभूमौस्थाप्यमा
नेशेषोपिचलतेह्यधः ॥ ममसुष्टिप्रहारेणचूर्णीभूतामहाचलाः २६ नखाग्रेणशिरस्तेहंगमयिष्येरसातलं ॥ कउवाच ॥ एवमाकर्ण्यदुर्बुद्धेर्वाक्यंप्रोचेगजाननः॥
पिशाचवन्मद्यपवत्किंवल्गसिममाग्रतः२७नजयंप्राप्नुतेकापिदेवद्विजविनिंदकः॥ ममचेद्भविताक्रोधोज्वालयेद्भुवनत्रयम् २८ यशस्तेख्यापितुंलोकेयुद्ध्यामिह
र्षनिर्भरः ॥ नोचेद्धुंकारमात्रेणनीतःस्याद्यमसादनम्२९ कउवाच ॥ एवमाकर्ण्यतद्वाक्यंदैत्यःक्रोधानलाकुलः ॥ क्ष्वेडितंप्रतिशब्देननादयन्विदिशोदिशः ३०

तदागार्भेनिपतितास्तस्यशब्देनतत्क्षणात् ॥ प्रमथाद्यागणाःकेचिन्मूर्छिताधरणींगताः ३१आकर्णंधनुराकृष्यमुमोचकमलासुरः ॥ शरवृष्टिंपुनारौद्रांमयूरेशे
बलेपिच ३२ इतिश्रीगणेशपुराणेउत्तरखंडेकमलासुरसंग्रामोनामद्व्युत्तरशततमोध्यायः १०२ कउवाच ॥ उत्कर्षंतस्यदैत्यस्यदृष्ट्वादेवस्त्वरान्वितः ॥ आय
यौपुरतोदैत्यंजघानशरवृष्टिभिः १ न्यवारयतदैत्योपिस्वशरैरतिवेगितैः ॥ ततस्तुतोषभगवान्मयूरेशोगुणाग्रणीः २ दर्शयामासतस्मैसविश्वरूपमनंतकम् ॥
दशदिक्षुमयूरेशंददर्शकमलासुरः ३ विस्मितश्छादयनयनेहृदितंपरिदृष्टवान् ॥ ततःपलायनपरोयावद्गच्छतिदैत्यराट् ४ शिखामाक्रम्यदेवोपिधृत्वाप्रोवाचतंपु
नः ॥ तिष्ठयुध्यस्वदैत्येंद्रस्मरवाक्यानितानिच ५ पुनर्ददर्शदैत्यस्तमेकमेवपुरःस्थितम् ॥ अधावत्सहसायोद्धुंजगर्जचमहाबली६ दशायुधधरोदेवोयोधयामास
तंतदा ॥ बिभेदास्यशरीरंसविघ्नराट्शस्त्रघाततः७ यत्रास्यन्यपतद्रक्तबिंदुस्तत्रासुरोभवत् ॥तद्रूपस्तद्बलश्चैवमसंख्यातास्तदासुराः ८नानाशस्त्रैरथास्त्रैस्तेतंजघ्नुः
शरवृष्टिभिः ॥ ततःपरावृतोदेवोमयूरेशोरुषाज्वलन् ९ सार्द्धकोटित्रयमितैःसिद्धिबुद्धीतदाबलैः ॥ ईयतुःपरमक्रुद्धेततोयुद्धमवर्तत १०ऊचतुर्गणराजंतेदेहिभक्ष्यं
क्षुधापहम् ॥ तऊचेभक्षतंदेवोदैत्यास्तज्जनितान्बहून् ११ इत्युक्तेतेतदातेनमयूरेशेनसत्वरम् ॥ बभक्षतुर्भूतगणैस्तान्दैत्यानखिलानपि १२ देवोजघानखड्गेनतं
दैत्यंकमलासुरम् ॥ पुनश्चशतशोजातादैत्यास्तद्रक्तसंभवाः १३ बभक्षुस्तानपिततोपिबन्रक्तंसमंततः ॥ ततःखिन्नोमयूरेशःशूलमुद्यम्यवेगवान् १४ तत्या
जसहसादैत्येययौसप्रदहन्दिशः ॥ चूर्णयन्पर्वतान्व्योमनादयन्अानिपातयन् १५ वेगेनपतितोदैत्यदेहंभित्त्वाद्विधाकरोत् ॥ मस्तकस्तस्यपतितोभीमायादक्षि
णेतटे १६ कृष्णायाउत्तरेतीरेतस्थौतत्रगुणेश्वरः ॥ सर्वेसंतुष्टमनसोजयशब्दैस्तमब्रुवन् १७ जयदेवमयूरेशकुरुदुष्टविनाशनम् ॥ ततस्तत्राययौगौरीपतिर्गणपरी
वृतः १८ गौतमाद्यैश्चमुनिभिःपार्वत्याचसमायुतः ॥ वाद्यत्सुसर्ववाद्येषुपुष्पवृष्टिःपपातखात् १९आलिंग्यपार्वतीप्रादात्स्तनपानंमुदातदा ॥ मुनयस्तुष्टुवुश्चैनं
मयूरेशंसुरेश्वरम् २० कमलाकांतहृदयहृदयानंदवर्धन ॥ कमलाकांतनमितकमलासुरनाशन २१ कमलासेवितपदजयत्वंकमलाप्रद ॥ कमलासनवंद्येशकम
लाकरशीतल २२ कमलांकसुपादाब्जकमलांकितसत्कर ॥ कमलाबंधुतिलकभक्तानांकमलाप्रद २३ कमलासूनुरिपुजकमलासूनुसुंदर ॥ कमलापितृरत्ना
नांमालयाजयशोभित २४ कमलासुरबाणानांकमलेननिवारक ॥ कमलाक्रांतकमलकोशजित्करपंकज २५ कमलापतिहस्तस्थपद्मकोशनिभेक्षण ॥ सर्वहृ
त्कमलानंदजयसर्वाघनाशन २६ कमलांकुशहस्ताब्जजयाविघ्नहराव्यय ॥ त्वयाविनिहतःपापःशक्रादिभयदोरिपुः २७ वज्रचक्राद्यभेद्योयोमुनीनामपिभीति
दः ॥ एवंस्तुत्वापुपूजुस्तेगौतमाद्यामहर्षयः २८ दशभिर्दोर्भिरालिंग्यपुपूजगिरिशोपितम् ॥ ततस्तेमुनयःप्रोचुर्मयूरेशंचशंकरम् २९ अत्रत्वंसर्वदातिष्ठसर्वदेव
गणैर्युतः ॥ पूरयन्भक्तकार्याणिवारयन्विघ्नसंचयान् ३० ॥ कउवाच ॥ एवंतैःप्रार्थितौ देवौसर्वदेवगणैर्युतौ ॥ पूरयंतौभक्तकामान्हरंतौविघ्नसंचयान् ३१ स्थितौ
तत्रमयूरेशशंकरौलोकशंकरौ ॥ विश्वकर्माव्यधात्तत्रमंदिरंसुंदरंततः ३२ असंख्यशिखरद्वारमसंख्याश्चर्यसंयुतम् ॥ तत्राभून्नगरंचारुसर्वलोकसमन्वितम् ३३ म

यूरेशपुरंतस्यनामचक्रुर्महर्षयः ॥ तपस्तेपुर्मुनिगणानानाश्रमसंश्रिता ३४ हरोपिचतपस्तेपेगिरिजागणसंयुतः ॥ तस्यध्यानंपूजनंचस्मरणंतेव्यधुर्द्विजाः ३५
मयूरेशःपुनर्बालैःक्रीडतिस्मयथापुरा ३६ इतिश्रीगणेशपुराणेउत्तरखंडेकमलासुरवधोनामत्र्युत्तरशततमोऽध्यायः १०३ कउवाच ॥ अहंप्रयातस्तंद्रष्टुंगुप्तरूपोद्वि
जोत्तम ॥ अदर्शंतत्रतंदेवमुमयासहितंप्रभुम् १ स्नात्वासीनंजपंतंचपरंब्रह्मसनातनम् ॥ अहंतमस्तुवंदेवंमयूरेश्वरसंज्ञकम् २ पुराणपुरुषंदेवंनानाक्रीडाकरंमुदा
॥ मायाविनंदुर्विभाव्यंमयूरेशंनमाम्यहम् ३ परात्परंचिदानंदंनिर्विकारंहृदिस्थितम् ॥ गुणातीतंगुणमयंमयूरेशं० ४ सृजंतंपालयंतंचसंहरंतंनिजेच्छया ॥
सर्वविघ्नहरंदेवंमयूरे० ५ इंद्रादिदेवतावृंदैरभिष्टुतमहर्निशम् ॥ सदसद्व्यक्तमव्यक्तंम० ६ नानादैत्यनिहंतारंनानारूपाणिबिभ्रतम् ॥ नानायुधधरंभक्त्याम० ७
सर्वशक्तिमयंदेवंसर्वरूपधरंविभुम् ॥ सर्वविद्याप्रवक्तारंमयूरे० ८ पार्वतीनंदनंशंभोरानंदपरिवर्धनं ॥ भक्तानंदकरंनित्यंम० ९ मुनिध्येयंमुनिनुतंमुनिकामप्रपूरकं
समष्टिव्यष्टिरूपंत्वांम० १० सर्वाज्ञाननिहंतारंसर्वज्ञानकरंशुचिं ॥ सत्यज्ञानमयंसत्यंम० ११ अनेककोटिब्रह्मांडनायकंजगदीश्वरम् ॥ अनंतविभवंविष्णुंम०
१२ त्वद्दर्शनेनपूतोहंपरमानंदनिर्भरः ॥ आश्चर्यंपरमंप्राप्तस्तस्यदैत्यस्यमारणात् १३ येनशक्रोंतकोदेवालोकपालाजिताबलात् ॥ सहस्रशतयोधीयोसंख्यदे
होरणेहतः १४ त्रिधाभूतास्त्रिस्थलेषुपतितःकमलासुरः ॥ तंसमापूजयमहंसर्वतीर्थजलैःशुभैः १५ कमंडलुगतैरेनोनाशकैरभिषचयं ॥ दिव्यवस्त्रैर्दिव्यगंधैर्दिव्य
पुष्पमयींशुभां १६ वनमालामस्यकंठेदत्वानामव्यधामहं ॥ वनमालीतिलोकेषुविख्यातंसर्वमंगलं १७ पूजाविधिंसमाप्यैनंप्रदक्षिणामथोव्यधां ॥ पादा
घातेनमेतत्रन्युब्जतांगमितःक्षणात् १८ नानातीर्थजलैर्युक्तःस्थापितोमेकमंडलुः ॥ यतेहंतज्जलंभर्तुंततोमामब्रवीद्विभुः १९ ॥ मयूरेशउवाच ॥ इदंब्रह्मकृतं
स्तोत्रंसर्वपापप्रणाशनं ॥ सर्वकामप्रदंनृणांसर्वोपद्रवनाशनं २० कारागृहगतानांचमोचनंदिनसप्तकात् ॥ आधिव्याधिहरंचैवभुक्तिमुक्तिप्रदंविधे २१ स्थि
रोभवविरिंचेत्वंनदीयंसर्वपावनी ॥ कमंडलुभवानाम्नाख्यातालोकेभविष्यति २२ दर्शनाद्वाचिकंपापंस्पर्शनाच्चमनोमयं ॥ स्नानाच्चकायिकंसर्वंनाशयिष्य
तिनिम्नगा २३ निरंतरंसेवनाच्चमोक्षमेषाप्रदास्यति ॥ कउवाच ॥ एवंदत्तेवरेतेनसस्नुस्तत्रमुनीश्वराः २४ सदाराःसपरीवाराःसप्तकोटिगणाअहं ॥ तपस्तेपुस्त
दातत्रमुनयस्तेमयासह २५ ततोहंमाययातस्यमोहितःप्राब्रुवंबहून् ॥ जगत्कर्ताजगद्वंद्यःशक्रादिसुरपूजितः २६ बालमेकादशाब्दंतत्कथंप्रणतवानहं ॥ अर्भ
कैःक्रीडमानंतमाचाररहितंशिशुं २८ धिङ्मेज्ञानंमहत्त्वंचपैतामहपदंचाधिक् ॥ इमांसृष्टिंविधायाहंस्थास्यामिगुप्तरूपधृक् २८ अयंचेत्परमात्मास्याद्परांनि
र्ममेत्पुनः ॥ एवंनिश्चित्यमनसासृष्टिमात्मानमेवच ॥ अंतर्धायस्थितोयावत्तावद्देवोगजाननः २९ नददर्शसखीन्बालांस्ततस्तेषांगृहानगात् ॥ शून्यान्दृष्ट्वागृ
हान्सर्वान्खिन्नोवृक्षानलोकयत् ३० नददर्शद्रुमानजंतून्पशुपक्षिगणान्यदा ॥ तदास्वर्गंगतोदेवोनापश्यत्तत्रतान्सुरान् ३१ गंधर्वान्किन्नरान्यक्षान्पितॄन्नशशिर
वीनच ॥ अंधकारेगाढतमेनप्राज्ञायतकिंचन ३२ ततोसौप्रणिधानेनज्ञात्वाब्रह्मकृतंचयत् ॥ सामर्थ्यंनिजमायांचआविश्चक्रेखिलात्मकः ३३ ब्रह्मांडंनि

ममेदेवोमयूरेशःस्वलीलया ॥ विश्वंचराचरंतत्रमयूरेशपुरीमपि ३४ यथापूर्वंपश्यतिस्मसर्वंत्रिभुवनंविभुः ॥ स्वंचबालैःपरिवृतंब्रह्माणंचतथाविधं ३५ शंक
रंचभवानींतामनुष्ठानगतान्मुनीन् ॥ तपनंशशिनंभानिस्वर्गान्देवगणानपि ३६ पृथिवींसर्ववृक्षांश्चसमुद्रान्सरितोपिच ॥ पातालानिमयूरेशोददर्शपूर्ववत्
विभुः ३७ ॥ कउवाच ॥ ततोहंस्मृतिमापन्नोपश्यन्देवंचिदात्मकं ॥ कलाकाष्ठामुहूर्तादिदिनपक्षस्वरूपिणं ३८ इत्थंतमहंनत्वाक्षमापयमुदारधीः ॥ मास
र्तुवर्षकल्पादिचराचरस्वरूपिणं ३९ असंख्यब्रह्मांडयुतंरोमांचैरुपशोभितं ॥ देवर्षियक्षगंधर्वसरित्सागररूपिणं ४० मनुष्यकिंनरलतावृक्षपन्नगरूपिणं ॥ इ
त्थंतमहंनत्वाक्षमापयमुदारधीः ४१ पुनःपुनरपश्यंतंमयूरेशंकिरीटिनं ॥ कुंडलाभ्यांनूपुराभ्यामंगदाभ्यांविराजितं ४२ शेषनाभिसर्पकंठंदिव्यमालांबरावृतं ॥
दिव्यसिंहासनगतंसर्वदेवैरभिष्टुतं ४३ सिद्धिबुद्धिसमायुक्तंविभूतिभिरुपासितं ॥ चराचरमयंसर्वंनमस्यंतंतस्वरूपिणं ४४ प्रत्येकंतत्रचारमानंतद्रूपंस्वंव्यलो
कयं ॥ ततस्तंस्तुतवान्नत्वाप्रार्थयंचपुनःपुनः ४५ क्षमापराधंनेदेवत्वन्मायागर्वितस्यमे ॥ प्रभावंद्रष्टुकामस्यदीनस्यशरणार्थिनः ४६ क्षणेनानंतब्रह्मांडकारिणे
तेनमोनमः ॥ एवंवदंतंमांनासापवनात्स्वोदरेनयत् ४७ तत्रापश्यत्सर्वलोकंयथाबाहिःप्रदृष्टवान् ॥ देवंतथाविधंचापिकोटिब्रह्मांडरोमकम् ४८ सर्वंचराच
रंविश्वंयथाभूमौयथादिवि ॥ एकस्माद्दंडतश्चान्यब्रह्मांडांतरमाविशम् ४९ तथैवदृष्टवान्सर्वांनिवंनानांडमध्यगः ॥ अपश्यंविश्वमखिलंस्वात्मानंदेवमे
वच ५० ततःखिन्नोऽब्रुवंदेवंनांतंपश्यामितेक्वचित् ॥ कृपांकुरुममविभोमायानेतांनिवारय ५१ ततःसकरुणाविष्टःसर्वमंतर्दधेक्षणात् ॥ पुनरेवमयूरेशमप
श्यंबालकैर्वृतम् ५२ क्रीडंतंपूर्ववन्नत्वाब्रुवंमायांनतेविदम् ॥ अपराधसहस्रंमेमातृवत्त्वंक्षमस्वच ५३ मयूरेशोऽब्रवीन्मांहिमूर्ध्निहस्तंनिवेश्यह ॥ देवउवाच
नमेक्रोधोनभिन्नाधीःस्वीयःपरइतिभ्रमः ५४ कस्मादपिभयंमेननमत्तोभयमण्वपि ॥ श्रुत्वेत्थंवचनंतस्यमयूरेशपुरंशिवम् ५५ भवानीमपितत्सूनुमद्राक्षं
मुनिबालकैः ॥ गृहीत्वाज्ञांस्वकंस्थानमगमंहर्षनिर्भरः ५६ भवानीबालकेनायान्मंदिरंस्वंचबालकाः ५७ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेविश्वरूपद
र्शनंनामचतुरधिकशततमोऽध्यायः ॥ ॥ १०४ ॥ ॥ कउवाच ॥ ॥ ततोभाद्रचतुर्थ्यांतुतेसर्वेमुनिबालकाः ॥ मृदमाहर्तुमायाताविमलांतामथानयन्
१ स्वस्वबुद्ध्याविधायाशुमूर्तीर्नानाविधाःशुभाः ॥ सिंहारूढामयूरस्थाःकाश्चिन्मूषकसंस्थिताः २ नानायुधधरानानादिव्यालंकारसंयुताः ॥ चतु
र्भुजागणेशस्यदिव्यगंधांबराःशुभाः ३ भक्त्यापरमयापूजन्नुपचारैःपृथक्पृथक् ॥ मंडपेताःप्रतिष्ठाप्यपुष्पादर्शप्रभायुजि ४ पद्मपुष्पयुतामालादददुस्ताः
सुमनोहराः ॥ वाद्यस्तुतूर्यघोषेषुनगरीहर्षमापसा ५ गौरीतस्यांजन्मतिथौद्वादशाब्दिकमर्भकम् ॥ स्नापयामासचददौवायनानिसुवासिनीः ६ सं
पूज्यविधिवद्भक्त्याहरिद्राकुंकुमादिभिः ॥ एतस्मिन्नंतरेदैत्योविश्वदेवइतिश्रुतः ७ भगवद्रूपमास्थायश्रीमुद्रांकितमायया ॥ शंखचक्रगदापद्मवनमा
लालसत्तनुः ८ तुलसीदामरुचिरोदिव्यवस्त्रानुलेपनः ॥ कमंडलुंवारिपूर्णंवेणुदंडंदधत्करे ९ गौरीतमतिथिंद्वारितिष्ठंतंप्राहभक्तितः ॥ कुतआगम्य

तेब्रह्मंस्तुष्टाहंतवतेजसा १० इत्युक्तःप्राहतांविप्रःश्रुतवानस्मियत्पुरा ॥ तद्दृष्ट्वानयनाभ्यांतेपरितुष्टंमनोमम ११ क्षुधयापीडितश्चाहं भवतीगृहमागतः ॥
पार्वत्युवाच ॥ ॥ आस्यतांभुज्यतांस्वस्थंसचतत्रासनेस्थितः १२ आसीनस्यमयूरेशोविप्रस्यक्षालयत्तदा ॥ चरणौततीर्थजलैःसिषेचसर्वतोऽमलैः १३
संपूज्यभोजयामासपक्वान्नैःपायसैरपि ॥ अपोशानकरस्तूष्णीमासीच्चिंतातुरोद्विजः १४ उमोवाचद्विजंपश्चाद्भुज्यतांभुज्यतामिति ॥ यदिनान्नंमनो
योग्यंतदादास्येतिवांछितम् ॥ वदतच्छीघ्रमानेष्येशंकरस्यप्रभावतः १५ ॥ ॥ द्विजउवाच ॥ ॥ क्षीरार्णवस्थितंदेवंदृष्ट्वानित्यंभुनज्म्यहम् ॥ जलंपिबा
मितच्चाद्यविस्मृतंमोहतोमया १६ ॥ ॥ उमोवाच ॥ ॥ पूर्वमेवकथंनोक्तोनियमस्तेद्विजोत्तम ॥ पात्रादुत्थायगंतासिकथंसत्वविलुंपक १७ शंकरःक्षोभमा
पन्नोनजानेकिंकरिष्यति १८ मयूरेशोब्रवीत्तत्रयदिभावोदृढोहृदि ॥ तदात्रैवभवेत्पद्मनाभेदर्शनमाशुते १९ प्रायोभाग्यंमहद्दृष्टंयत्पक्वान्नंचपायसम् ॥ त्य
क्त्वाव्रजसिकुत्रत्वंमूढभावेनवाद्विज २० बहुजन्मतपोभिर्यत्कटाक्षोभुविलभ्यते ॥ तयातेपरिविष्टान्नंकथंत्यजसिसुव्रत २१ ब्रह्मादीनांनगम्यायादृष्टासा
क्षात्त्वयाशिवा ॥ सर्वलोकस्यजननीसर्वयोषिद्वराहिसा २२ सर्वेषामेवदेवानांशक्तिःसापरमाद्भुता ॥ तद्दर्शनेनदेवस्यविष्णोर्जातंहिदर्शनम् २३
चकोरस्येवाग्निभुजोमिष्टान्नंनैवरोचते ॥ तथाकिंतेनरोचेतदेवान्नममृतोपमम् ॥ ममवासर्वरूपस्यदर्शनंस्यद्धरेर्भवेत् २४ ॥ ॥ द्विजउवाच ॥ ॥ रमा
पतेरहंदासोननमस्यामिकंचन ॥ यदित्वंसर्वरूपोसियदिसामर्थ्यमस्तिते २५ तदादर्शयविश्वेशंनारायणमनामयम् ॥ एवंबुद्ध्वादृढंतस्यानिश्चयंसमयूर
राट् २६ अंतर्धायप्रादुरासीन्नारायणस्वरूपवान् ॥ पीतांबरःशंखचक्रगदापद्मधरोविभुः २७ नानालंकाररुचिरःसर्वालंकारसुंदरः ॥ कौस्तुभेनलस
द्वक्षावनमालाविभूषितः २८ शेषशायीमहालक्ष्म्यासंवाहितपदांबुजः ॥ विश्वदेवश्चतंदृष्ट्वाननामपरिपूज्यच २९ यातस्तन्मयतांभक्त्याविस्मृत्य
चशरीरताम् ॥ उवाचचचिदानंदपरिपूर्णोद्विजोत्तमः ३० अद्यधन्यंजनुर्मेद्यजीवितंचसुजीवितम् ॥ अद्येयंनगरीधन्याधन्यौतौपितरौमम ३१ मयूरेशोप
देशेनभवान्यादर्शनेनच ॥ परात्परस्यविष्णोस्तेचराचरस्वरूपिणः ३२ लब्धंदर्शनमत्रैवसर्वांतर्यामिगोविभोः ॥ नारायणोपितंभक्तंबाहुभिःपरिषस्वजे
३३ उवाचचप्रसन्नात्माबाष्पगद्गदयागिरा ॥ मदर्थंत्यक्तवान्मुक्तिंक्षीराब्धेरहमागतः ३४ दृष्ट्वातेनिश्चयंभक्तिंदृढामव्यभिचारिणीम् ॥ भक्तमार्गप्रसि
चामिमारुतोद्धृतकंटकम् ३५ भक्ततृषानिवृत्त्यर्थंजातोहंजलरूपधृक् ॥ नानारूपधरोजातोभक्तानामार्तिनाशनः ३६ यथाभक्तःप्रियोनित्यमितिते
दर्शयाम्यहम् ॥ अभूद्भाद्रचतुर्थ्यांहिमयूरेशमहोत्सवः ३७ मूर्तिमहीनर्यीकृत्वाबालाःखुसिंहगांपृथक् ॥ नानालंकारशोभाढ्यांनानारंगैःसुशोभिता
म् ३८ अनेकैःपूज्यतांसम्यग्बालकैर्मुनिसंचयैः ॥ केचिदग्रेप्रगायंतिकेचिन्नृत्यंतिभक्तितः ३९ वाचयंतिपुराणानिप्रदक्षिणपराःपरे ॥ एतस्मिन्नं
तरेपौत्रोवसिष्ठस्यमहात्मनः ४० पराशरइतिख्यातआययौस्वेच्छयामुनिः ॥ सचतुर्वार्षिकोमूर्तिंविदधेभक्तितत्परः ४१ शुष्कपर्णकृतांमालांकु

त्वातस्मैन्यवेदयत् ॥ गंधबुद्धयाकर्दमेनतांव्यलेपयदादरात् ४२ मिष्टान्नानिचलड्डूकान्दक्षिणांचफलानिच ॥ न्यवेदयत्तदापत्रैरनेकैःकर्दमै
रपि ४३ संकल्पंलीलयाचक्रेजंबावाद्यंशनैःशनैः ॥ मुहूर्तंनर्तनंकृत्वारुरोदभक्षयेतिच ४४ संप्रार्थ्यमूर्तिंबहुधाततःसाचेतनांययौ ॥ यद्य
त्तेनयदुद्देशात्स्थापितंपुरतोभवत् ४५ तत्तथैवचसंजातंततःसाभक्षयत्तदा ॥ लड्डूकान्मोदकान्नानापक्वान्नंपायसान्वितम् ४६ विश्वदेवश्चतंदृष्ट्वा
मिथ्याभूतंयथार्थवत् ॥ मृत्तिकान्नानिसत्यानिसर्वंपुष्पफलादिकम् ४७ सचेतनांचतांमूर्तिंषड्भुजांचपुनःपुनः ॥ व्यलोकयद्विष्णुरूपांचतुर्बाहुविराजि
ताम् ४८ उवाचसततंदेवंकिमिदंमृत्तिकाशनम् ॥ ॥ मूर्तिरुवाच ॥ ॥ भक्त्यायदर्पितंमह्यंसुधारससमंभवेत् ४९ अभक्तार्पितममृतंविषमेवभवे
न्मम ॥ ॥ कउवाच ॥ ॥ एवंतद्वचनंश्रुत्वाविश्वदेवोऽब्रवीत्पुनः ५० कस्तेभक्तोममचतंदर्शयस्वसुरेश्वर ॥ ततस्तस्यकरंधृत्वाबहिरायान्मयूरराट्
५१ गृहेगृहेपूज्यमानंदेवंतस्मैव्यदर्शयत् ॥ शिखिनंसुसमारूढंमयूरेशमलोकयत् ५२ तत्रापिपर्यपश्यत्सविश्वदेवयुतंचतम् ॥ नायंममभवेत्स्वामी
त्येवंबुद्धिर्विसृज्यताम् ५३ गृहेगृहेविश्वदेवोनारायणमलोकयत् ॥ सर्वत्रसददर्शाथपूज्यमानंगुणेश्वरम् ५४ क्वापिक्वापिमयूरेशंददर्शविष्णुरूपि
णम् ॥ पुनरालोकयंस्तत्तन्मयूरेशमलोकयत् ५५ भुजंस्वंपरिगृह्यैवबहिर्यातंस्वलीलया ॥ आक्षिप्यहस्तंसप्रायान्नायंस्वामीममेतिच ५६
अटन्गृहेगृहेसोथपूज्यमानंददर्शह ॥ मयूरेशंवाद्यघोषैर्नृत्यगीतैरनेकधा ५७ क्वापिदृष्ट्वाविष्णुरूपंनमस्कर्तुंययावथ ॥ पुनर्मयूरेशरूपंददर्शसशिखिस्थितं
५८ गरुडारूढमन्यत्रशेषारूढंतथाक्वचित् ॥ नमस्कर्तुंयदायातिविश्वदेवोमुदायुतः ५९ तावद्बर्हिसमारूढंपश्यतिस्मपुनःपुनः ॥ भुंजंतंचरमंतंचस्वपंतंच
ददर्शसः ६० ततःखिन्नोविश्वदेवोवसिष्ठद्वारमागमत् ॥ ततोब्रवीन्मयूरेशःपश्यमेभक्तमुत्तमं ६१ ततःपराशरंसोथददर्शपुरतःस्थितं ॥ मृन्मयैरुपचारैस्तंपू
जयंतंगुणेश्वरं ६२ भक्षयंतंचलड्डूकान्मृन्मयान्देवमेवच ॥ पश्यतिस्मपुनर्व्योम्निजलेभूमौतमेवसः ६३ क्षणंनारायणंदेवंमयूरेशंक्षणादपि ॥ ततःस्वभे
दबुद्धिंस्वांतत्याजभ्रांतिमेवच ६४ सर्वभावेनतंनत्वास्तुत्वाभेदधियापुनः ॥ अनुज्ञातोमुदाप्रायाद्विश्वदेवःस्वमाश्रमं ६५ इतिश्रीगणेशपुराणेउत्तरखंडेविश्वदे
वभेदबुद्धिनिरासोनामपंचाधिकशततमोध्यायः १०५ ॥ ॥ कउवाच ॥ ॥ ततस्त्रयोदशेवर्षेनमस्कृत्यमहेश्वरं ॥ अस्मांगरागरुचिरंपंचास्यंदिग्भुजंशुभं १
रुंडमालाधरंसुप्तंचंद्रशेखरमच्युतं ॥ मयूरेशोथजग्राहशशिनंतच्छिरोगतं २ क्रीडन्बहिःसमायातोबालकैःपरिवारितः ॥ सुहृद्भिःपरिनृत्यद्भिर्वदद्भिश्चपरस्परं
३ एतस्मिन्नंतरेतत्रदैत्योमंगलसंज्ञकः ॥ करालवदनःक्रोडीविजेतापरमाद्भुतः ४ वराहरूपीबलवान्दंतच्छिन्नमहीरुहः ॥ वज्रसारसटाभिःसोभिंदन्व्योम
पदैर्धरां ५ अंजनाद्रिरिवश्यामोवह्निकुंडनिभेक्षणः ॥ दृष्ट्वातंविद्रुताबालावर्षाघननिभस्वनः ६ नदष्टःसूकरःक्वापीदृशइत्यब्रुवंश्चते ॥ यावन्मारयतेबा
लांस्तावद्देवोमयूरराट् ७ दधारदंतयोर्दुष्टंतदासूकरदानवं ॥ अथापरेणहस्तेनदधाराधरपोत्रकं ८ पाटयामाससहसावंशखंडमिवार्भकः ॥ पूर्वदेहंस

मास्थायदशयोजनविस्तृतं ९ पतितश्चूर्णयन्वृक्षान्दारयन्धरणीतलं ॥ ततस्तमब्रुवन्बालाधन्योयंपार्वतीसुतः १० क्षणेननाशितोदैत्योलीलयासौम
हाबलः ॥ अस्यदर्शनतस्त्रस्तावयंयातादिशोदश ११ पतमानेनयेनेहचूर्णितानिगृहाणिच ॥ ॥ कउवाच ॥ ॥ ततःशिवोललाटेस्वेनापश्यच्छशिनंय
दा १२ क्रोधसंरक्तनयनोविष्टपंप्रदहन्निव ॥ गणानूचेरुषाविष्टोरक्षणंक्रियतेकथं १३ केनदैत्येननीतोमेललाटस्थोऽमलःशशी ॥ ॥ कउवाच ॥ ॥ ततोली
नागणाःसर्वेकंपमानाभयातुराः १४ अपरेधैर्यमालंब्यवदंतिस्माशिवंप्रति ॥ उमाकांतभवत्पुत्रोमयूरेश्वरसंज्ञकः १५ क्रिडितुंबहिरायातस्तस्यहस्तेविलो
कितः ॥ चंद्रस्तेनकदानीतोनजानीमोवयंविभो १६ इतितद्वचनंश्रुत्वाप्रोचेरुष्टोमहेश्वरः ॥ कथंनुक्रियतेरक्षाभवद्भिर्भक्ष्यतत्परैः १७ चंद्रोवाचंद्रहर्तावा
यद्यानीतस्तदाशुभं ॥ नोचेद्भस्मीकरिष्यामिसर्वेषांनात्रसंशयः १८ ततस्तेक्षुब्धमनसोधावमानास्त्वरान्विताः ॥ मयूरेशंसमभ्येत्यप्राभणन्रुष्टचे
तसः १९ याहिदुष्टशिवंदेवंचंद्रंवायच्छतस्कर ॥ गणवाक्यंपरिश्रुत्यचुकोपगणनायकः २० नमेस्तिगणनाकापिभवतांतस्यवागणाः ॥ जगत्रयजनन्यामे
तनयस्यप्रभाविनः २१ ॥ कउवाच ॥ तस्यश्वासेनसर्वेतेवात्यापत्रमिवोद्धृताः ॥ पेतुःशिवस्यपुरतोगणादीनास्तदाखिलाः २२ अतिरोषान्महादेवःप्र
मथादीनथाब्रवीत् ॥ आनीयतांसदुष्टात्माबध्वोमातनयोलघुः २३ तेतुशीघ्रतरंयातायत्रक्रीडारतःशिशुः ॥ ददृशुस्तंशिशुगतंक्रीडंतमकुतोभयं २४ वेष्टितुंता
न्समायातान्मोहयित्वाविनायकः ॥ अंतर्हितश्चतुर्दिक्षुगणास्तेतंव्यलोकयन् २५ गृहेगृहेकाननेषुनापश्यंस्तेविनायकं ॥ क्वचिद्दृष्ट्वातुतंप्राहुरस्मदग्रेकथं
भवान् २६ गंतुंशक्तोब्रह्मलोकेस्थितंनेष्यामतंशिवम् ॥ एवमंतर्हितोदृश्योवारंवारंबभूवसः २७ ततःखिन्नान्गणान्दृष्ट्वापरमात्माकृपान्वितः ॥ तस्थौ
तत्पुरतःसम्यग्दृष्ट्वातंहर्षनिर्भराः २८ बबंधुर्गिरिजासूनुंनिन्युस्तेशंकरंप्रति ॥ पृथिवीभारसदृशमुपविष्टंतुतेगणाः २९ नशेकुरुत्थापयितुंततोविस्मितमान
साः ॥ हतोद्यमागणाःसर्वेशिवमेत्यसमूचिरे ३० सर्वेवयंसमानेतुमेकंशक्तानशंकर ॥ आज्ञापयामासशिवोनंदिनंपुरतःस्थितम् ३१ झटित्यानयगच्छत्वंम
यूरेशंतुतस्करम् ॥ ॥ नंद्युवाच ॥ ॥ शेषंसूर्यंशशांकंचहनिष्येहंतवाज्ञया ३२ कनीयसोनमेकाचिद्रणनास्तिमहेश्वर ॥ ॥ कउवाच ॥ ॥
इत्युक्त्वागाद्वायुवेगोभंजन्वृक्षांश्चपर्वतान् ३३ क्रोधसंरक्तनयनस्तीक्ष्णशृंगोग्रसन्दिवम् ॥ उवाचतंमयूरेशंयाहिरेत्वंशिवंप्रति ३४ नोचेद्द्यनयिष्यामिन
समोहिगणैरहम् ॥ एवंवदतितस्मिंस्तुमयूरेशोरुषान्वितः ३५ श्वासचक्रेक्षिपत्तंतुगमनागमसंकुले ॥ तत्याजतंदृढश्वासादतिखिन्नंशिवांतिके ३६ वमंतंरुधि
रंवक्त्रात्पृथिव्यांपतितंतुतम् ॥ ब्रुवंतंपौरुषंनानामूर्छितंद्विमुहूर्ततः ३७ अपश्यच्चमयूरेशंजानुआगेस्थितंशिवः ॥ देदीप्यमानवपुषादिव्यभूषासमन्वितं ३८
गणाऊचुःशिवंदृष्ट्वाभालचंद्रंयथापुरा ॥ ललाटेतेशशीदेवव्रथाज्ञप्तावयंशिव ॥ ३९ ॥ ॥ शिवउवाच ॥ ॥ मयूरेशंगणांश्चाहशशिनंवीक्ष्यमस्तके ॥
श्रांतास्तेचगणास्त्वंचनंदीचापिममाज्ञया ४० चंद्रेस्थितेललाटेमेवृथायुद्धमभूद्विवः ॥ ॥ प्रमथाऊचुः ॥ ॥ अद्यप्रभृतिदेवेशस्वामीनोस्तुमयूरराट् ॥

॥ ४१ ॥ ॥ कउवाच ॥ ॥ तथेतिशिवऊचेतान्गणराजोभवत्तुसः ॥ नत्वाशिवंगणेशंचगणेशजननीमपि ४२ प्रशंसयित्वादेवेशंमयूरेशंतथाविधं ॥
गर्जंतोथगणाजग्मुर्मुदास्वंस्वंनिवेशनम् ॥ ४३ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेषडधिकशततमोध्यायः ॥ १०६ ॥ ॥ ॥ ॥ कउवाच ॥
ततश्चतुर्दशेवर्षेगौतमाद्याःसुरर्षयः ॥ आययुर्गिरिजागेहंनानागणयुतंशिवम् १ नमस्कृत्यचतानंबानानासनगतान्पुरः ॥ पूजयित्वाविधानेनप्रोवाचत्वद्वतंवचः
२ विघ्नभीत्यापरित्यक्तंत्रिसंध्याक्षेत्रमुत्तमं ॥ अस्यबालस्यमेविघ्नाअत्रापिबहवोभवन् ३ दिशंतुविघ्नरहितंकर्मवास्थानमुत्तमं ॥ मुनयऊचुः ॥ इंद्रयागेकृते
देविसर्वविघ्नंहरिष्यति ४ ॥ कउवाच ॥ तदेवकारयामासमंडपंबहुविस्तरम् ॥ संभारान्कारयामासशक्रसंतोषकारकान् ५ आज्ञांगृहीत्वाशंभोःसापार्वतीहर्ष
निर्भरा ॥ कारयामासविधिवदिंद्रयागंमहर्षिभिः ६ ध्यानमावाहनंचक्रुरिंद्रस्यैतेमहर्षयः ॥ पुपूजुर्गिरिजादेशात्सांगमिंद्रंगणानपि ७ कुंडेवह्निंप्रतिष्ठाप्यमंत्रैरेव
द्विजर्षभाः ॥ जपानांतद्दशांशेनजुहुवुस्तिलपायसं ८ प्रणवाद्यैर्नमोंतैश्चस्वाहांतैर्मंत्रसंचयैः ॥ शांतिपाठान्पठंतिस्मचतुर्वेदभवान्द्विजाः ९ एतस्मिन्नंतरेबालाः
क्रीडित्वाबालकैःसह ॥ यज्ञवाटमुखोयातिदैत्यौतुकलविंकलौ १० तावत्संमुखतांयातौमाहिषंरूपमास्थितौ ॥ महारवौमहाशृंगौभीषयंतौजगत्रयं ११ सटा
भिन्नघनौपुच्छाद्दारयंतौगिरीनथ ॥ नासानिरोधपवनाच्चूर्णयंतौद्रुमानपि १२ उमासुतंहंतुकामौयातौशीघ्रंतदंतिकं ॥ प्रायुध्येतांतदाद्यौतौमत्ताविवमहागजौ
१३ तयोःशब्देनगगनंगर्जतिस्मयथाघनैः ॥ जयंअंगक्रमेणोभौप्रापतूरुधिरोक्षितौ १४ विद्रुतामुनिबालास्तेताभ्यांभीतावृकादिव ॥ दूराद्ददर्शगिरिजासुतस्तौदै
त्यपुंगवौ १५ कथमेतौमहादुष्टौहनिष्यामीतिचिंतयन् ॥ पश्यत्सुतेषुबालेषुचिक्षेपगगनेचतौ १६ पुच्छेगृहीत्वातिबलौभ्रामयित्वापुनःपुनः ॥ मुहूर्तात्पतितौ
पृथ्व्यांतान्विदार्यद्रुमानपि १७ शतधादेहखंडानितयोरादन्वृकादयः ॥ ततस्तेमुनिबालास्तंययुर्भक्त्याप्रतुष्टुवुः १८ यस्यतत्वंनजानंतिब्रह्माद्यामुनयोपिच ॥
सर्वांतर्यामिणस्तेतुकथंविद्यामहेवयम् १९ बाल्यात्प्रभृतिदैत्यास्तेनाशिताःकोटिशस्त्वया ॥ एतौमाहिषरूपेणहंतुंत्वांसमुपागतौ २० मूषकाविवसंत्यक्तौ
पुच्छेधृत्वास्वलीलया ॥ ययोःश्वासेनचलिताःपर्वताश्चद्रुमाधराः २१ ॥ कउवाच ॥ मयूरेशस्ततःप्रायाद्यज्ञवाटंरमन्रमन् ॥ ददर्शद्रुमखंरुष्टोध्वंसयामास
तत्क्षणात् २२ दूरेक्षिप्त्वाशक्रमूर्तिंप्रोचेसर्वान्मुनीश्वरान् ॥ व्रतोमुनिसुतैःसर्वैःकिंकर्मक्रियतेमलाः २३ किंतुष्टेनप्रदातव्यंवासवेनाखिलार्थेना ॥ अजाप्रा
र्थनयाकिंनुकामधेनुफलंलभेत् २२ सआदच्छेषसामग्रींकृत्वाशांतंहुताशनम् ॥ मुनयोविस्मितहृदोवीक्ष्यचापल्यमस्यतत् २५ उमानिविष्टहृदया
नाशकत्तंगुणेश्वरम् ॥ उपालब्धुंशिक्षितुंवावक्तुंक्रोधेनकिंचन २६ उमायैसर्वमाख्यायजग्मुःस्वंस्वंनिवेशनम् ॥ श्रुत्वेंद्रःक्षुब्धहृदयेयत्स्यात्तच्चभवत्विति ॥
२७ स्वापमानेपरिज्ञातेशक्रश्चक्रोधवेष्टशम् ॥ क्रोधसंरक्तनयनोदहन्निवजगत्त्रयम् २८ आकार्यदेवनिचयानुवाचवाक्यमुत्तमम् ॥ ॥ इंद्रउवाच ॥ ॥
ममयागोमुनिगणैरारब्धःपरमादरात् २९ सविध्वस्तोगुणेशेनतस्यद्रक्ष्येचपौरुषम् ॥ दृष्टेमयिभवेन्नष्टंत्रैलोक्यंसचराचरम् ३० ॥ ॥ देवाऊचुः ॥ ॥

तवाज्ञाचेन्मयूरेशंबध्वानीमःक्षणेनह ॥ ॥ शक्रउवाच ॥ ॥ मयूरेशपुरेवह्नेःस्थानंमास्तुक्वचित्तव ३१ सर्वेषांजाठरोपित्वंलीनोभवममाज्ञया ॥ ॥ कउवा
च ॥ इतिश्रुत्वावचस्तस्यशक्रस्यरुषितात्मनः ३२ वह्निरंतर्हितस्तत्रपुरेपिजठरेपिच ॥ नापश्यन्मुनयोवन्हिंममंथुर्होमहेतवे ३३ नायातीतिपरिज्ञायतेऽप
क्वंजक्षुरादरात् ॥ नचतत्पच्यतेतेनव्यथाभवतिदुर्धरा ३४ ततस्तेमुनयोजग्मुर्मयूरेशंकृपाकरम् ॥ नमस्कृत्याब्रुवन्सर्वेशक्राहूतोगतोनलः ३५ जाठरोपि
गतोवह्निरिंद्रयागेहतेत्वया ॥ इत्याकर्ण्यवचस्तेषांप्रत्येकंजठरेनलः ३६ सोभवत्क्षुधयाविष्टाःसर्वेजातास्तुतत्क्षणात् ॥ महानसेषुकुंडेषुतथैवज्वलितोभ
वत् ३७ ततोवायुंनिनायाशुशक्रःक्रुद्धोमहाबलः ॥ प्रेतभूतापुरीसर्वापंचप्राणेगतेभवत् ३८ पंचप्राणमयोदेवस्ततस्तान्समजीवयत् ॥ ततइंद्रोब्रवीत्सूर्यं
तापयैनांपुरींबहु ३९ ततःसूर्योतपत्सर्वद्वादशादित्यरूपवान् ॥ वापीकूपतडागेषुनद्यांजलमशोषयत् ४० जज्वालपृथिवीसर्वापुरग्रामवनाकरा ॥ ततः
शीघ्रंमयूरेशोमेघोभूत्वाववर्षह ४१ शमयामासतंवह्निंमृतांश्चसमजीवयत् ॥ ततोहर्षयुतालोकाःसाधुसाध्वित्यपूजयन् ४२ ॥ कउवाच ॥ प्रतिकूलंकृतं
यद्यत्तत्सर्वंनिराकृतम् ॥ ज्ञात्वाशक्रोययौदेवंमयूरेशंननामच ४३ बद्धांजलिपुटोभूत्वास्तोतुंसर्वेश्वरंविभुम् ॥ शक्रउवाच ॥ नवेदानर्षयोजग्मुर्ब्रह्माद्यास्ते
गतिंविभो ४४ सर्वांतर्यामिणःसर्वरूपस्यब्रह्मरूपिणः ॥ ब्रह्मादीनांविश्वसृजांकारणानांचकारणम् ४५ अपराधान्क्षमस्वाद्यत्वामहंशरणंगतः ॥ मस्तकंपा
दयोर्न्यस्यप्रार्थयामाससादरम् ४६ ॥ कउवाच ॥ निर्विकल्पंमनस्तस्यज्ञात्वाप्राहगुणेश्वरः ॥ उत्तिष्ठोत्तिष्ठभद्रंतेपदोतिष्ठसुखंस्वके ४७ ततःसंपूज्यतंदेवंनमस्कृ
त्यशचीपतिः ॥ प्रदक्षिणीकृत्यययौहृष्टःसन्नमरावतीम् ४८ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेसप्ताधिकशततमोध्यायः ॥ १०७ ॥ ॥ छ ॥ ॥ कउवा
च ॥ ॥ ततःपंचदशेवर्षेमयूरेशोर्भकैःसह ॥ गतःस्नातुंनदींपुण्यांनाम्नाब्रह्मकमंडलुम् १ स्नात्वानित्यंसमाप्याशुमानसैःषोडशैःपृथक् ॥ उपचारैःपुपूजुस्ते
हृदिस्थंगणनायकम् २ केचित्पद्मासनगतंकेचिद्बहिर्गतंचतम् ॥ दिव्यगंधैर्दिव्यवस्त्रैर्दिव्यैःपुष्पैरपूजयन् ३ गार्ग्योमुनिर्मंदिरेतंध्यात्वारत्नान्वितेर्चयत् ॥
एतस्मिन्नंतरेऽकस्मात्पिदधेद्वारमस्यतत् ४ यावदुद्घाटयत्येवतावत्तद्दृढतामगात् ॥ तत्रआक्रंदनंचक्रेसचतेबालकाअपि ५ ॥ बालकाऊचुः ॥ ॥ त्वमेवज
ननीतातःकथमभ्यंतरेस्थितः ॥ दत्वाकपाटंदेवेशनोपराधान्क्षमस्वच ६ ॥ कउवाच ॥ एतस्मिन्नंतरेदैत्योमहाबलपराक्रमः ॥ यस्यशब्देनमहताकंपतेभु
वनत्रयम् ७ सटाभिन्नघनोदुष्टोव्याघ्ररूपीसमभ्यगात् ॥ व्यादायवदनंघोरंग्रसन्निवजगत्त्रयम् ८ दृष्ट्वातंदुद्रुवुर्बालाक्रंदंतस्तेदिशोदश ॥ सतुद्वारंविनिर्भिद्य
मयूरेशंतमाययौ ९ शार्दूलसदृशंरूपंकृत्वायास्तोपितंक्षणात् ॥ पपालसहसाव्याघ्रःपृष्ठेलग्नोययौचसः १० भ्रमन्सतुवनंयातोनिकुंजेलीयतास्थिवान् ॥
देवोवृक्षंसमारुह्यकुंजमध्येपपातह ११ उभाभ्यांवदनंतस्यकराभ्यांजगृहेदृढम् ॥ अन्याभ्यांबहिरानीयततःपरशुनाच्छिनत् १२ नासिकांश्रवणेपा
दौपुच्छमग्रभवावुभौ ॥ नमुखंदर्शयेत्युक्त्वाविससर्जगुणेश्वरः १३ निजंरूपंसमास्थायतथैवविकृतोभवत् ॥ एवमेवकरिष्यामित्वदेहमित्युवाचतम् १४ य

यौनिजालयंदैत्योदेवःस्वंधामचाययौ ॥ ततोमुनिसुताश्रेमुःकंदंतःक्रमयूरराट १५ अतिश्रांताद्रुमतलेसुच्छायेप्रास्वपंस्तदा ॥ अनेनयास्यतिपथाद्रक्ष्या
मस्तत्पदांबुजम् १६ पादौदक्षिणतस्तेषांदृष्ट्वाचुक्रोधभानुजः ॥ अत्यारक्तदृशोरोषाद्ब्रह्मांडग्राससाहसः १७ बध्वातान्स्वस्थलंयातोमयूरेशस्ततोगमत् ॥
नापश्यत्तत्तटेबालान्विस्मयंपरमंययौ १८ चिंतांपरमिकांप्राप्तोविनातैःसमयूरराट् ॥ नसुखंक्वापिसंप्रायात्ततोमुनिगणाययुः १९ ॥ मुनयऊचुः ॥ क्वा
स्माकंबालकादेवप्रातर्नीतास्त्वयाखिलाः ॥ विनातैर्नोगमिष्यंतिप्राणास्त्वय्यागतेधुना २० ॥ कउवाच ॥ नकिंचिदूचेतान्देवोमुंचन्नश्रुमुहुर्मुहुः ॥ विचा
र्यभास्करीयातःपुरींदूतैर्निवेदितः २१ ॥ दूताऊचुः ॥ कोपियातोयोन्बुकामोलोकत्रयविनाशकृत् ॥ उग्रारावोमहाबाहुर्वार्यमाणोबलाद्यमः २२ यमउवाच ॥
ब्रह्मांडंचूर्णतांयातिदंडाघातेनयस्यमे ॥ तस्यमेपुरतोयुद्धंकथंबालोविधास्यसि २३ ॥ देवउवाच ॥ त्वमात्मानंवर्णयसेरंकवद्भासिमेयम ॥ ममवक्त्रभ्रु
वासर्वंब्रह्मांडंचविनश्यति २४ एवमुक्त्वामयूरेशोयमस्कंधंरुरोहसः ॥ पातयामासमहिषात्पपातोपरितत्क्षणात् २५ पराक्रमंतस्यबुध्वाबद्धांजलिपुटो
यमः ॥ तुष्टावपरयाभक्त्यामयूरेशंसुरेश्वरम् २६ ॥ यमउवाच ॥ नतेरूपंविदुर्देवाब्रह्माद्याःसनकादयः ॥ नेतिनेतिचवेदास्त्वांवदंतिपरमेश्वरम् २७ स्र
ष्टारंपालकंस्रष्टेःसंहर्तारंनिजेच्छया ॥ दैत्यानांसर्वदुष्टानांनाशकंसर्वरूपिणम् २८ अकस्मादपराधंनःकृतंक्षंतुंत्वमर्हसि ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वापुपू
जासौवस्त्रैरत्नैःफलैरमुम् २९ बालानानीयतद्धस्तेनिवेद्यपुरतःस्थितः ॥ आलिलिंगुर्मुदासर्वेपरस्परमथाब्रुवन् ३० ॥ बालाऊचुः ॥ श्रांतास्त्वद्दर्शनार्थायब
ध्वानीतायमेनह ॥ त्वद्दर्शनाद्बंधमुक्तायास्यामोनिजमंदिरम् ३१ ॥ कउवाच ॥ ततस्तेस्वाश्रमंप्राप्तामयूरेशपुरस्कृताः ॥ मयूरेशपुरंयातानानावादि
त्रसंकुलम् ३२ नानाध्वजपताकाढ्यंपुष्पमालाविभूषितम् ॥ यमोपिपृष्ठतोयातिद्रष्टुंतत्कौतुकंमहत् ३३ संमुखंतस्यतेसर्वेमुनयोपिययुस्तदा ॥ पुपूजु
स्तुष्टुवुर्देवंलिलिंगुर्बालकानपि ३४ उवाचदेवस्तान्सर्वान्मुनीन्पूर्वंप्रकुप्यतः ॥ आनीताबालकालोकाद्यमस्यक्षणमात्रतः ३५ ॥ मुनयऊचुः ॥ सर्वत्ररक्ष
सेत्वंहिसर्वशक्तिःसदाचनः ॥ कउवाच ॥ इत्युक्त्वातमनुज्ञाप्यस्वाश्रमान्मुनयोययुः ३६ यमोपितंनमस्कृत्यस्वालयंमुदितोगमत् ॥ देवोपिस्वालयंप्राप्य
हर्षयामासमातरम् ३७ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेरविजगर्वपरिहारोनामअष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ कदाचित्पार्वतीप्राहसुखासीनंमहेश्वरम् ॥
गतानितुमहादेववर्षाणिदशपंचच १ विवाहश्चिंत्यतामस्यमयूरेशस्यसांप्रतम् ॥ सुशीलासुमुखीबालामृगाक्षीहंसगामिनी २ पिकवाक्तनुसातन्वीव
धूःक्वापिविचार्यताम् ॥ मन्मथातुलदेहस्यसर्वांगसुंदरस्यह ३ कउवाच ॥ इतितद्वचनंश्रुत्वासाधुसाध्वित्यभाषत ॥ सोचिंतयच्छुभांकन्यांमनसानापकुत्र
चित् ४ ततश्चिंतांपरांप्रापतावन्नारदआगतः ॥ संपूज्यचोपवेश्यैनमासनेशंभुरब्रवीत् ५ शंभुरुवाच ॥ आह्लादंपरमंप्राप्तस्तवागमनतोमुने ॥ चिराग
तोसिचमुनेदिनंस्थातुंत्वमर्हसि ६ अतिसुंदरकायस्यतनयस्यममानघ ॥ गवेषयवधूंविप्रयतस्त्रैलोक्यगोभवान् ७ ॥ ॥ कउवाच ॥ ॥ तथैवपार्वतीप्राह

वधूंशीघ्रंविचारय ॥ ॥ नारदउवाच ॥ नस्थातुंशक्यतेस्वामिन्कर्मणाद्विमुहूर्तकम् ८ एतदर्थमहंप्राप्तोब्रह्मणाप्रेषितःशिव ॥ तवपुत्रप्रभावश्चलावण्यंव
यएवच ९ ज्ञातंधात्रासिद्धिबुद्धीतस्मैदातुमभीप्सता ॥ अनसूयाशचीचापितयोरूपेणलज्जिते १० संज्ञाभूद्दंडकारण्येशिलाहल्यापिसाह्यभूत् ॥ जालंधर
स्ययापत्नीवृंदामाधवमोहिनी ११ सापिवृक्षत्वमापन्नायद्रूपदर्शनाद्धर ॥ अन्येनानावरागौरिनागताब्रह्मणोहृदि १२ नैतादृशं कापिदेविसौंदर्यंशौर्यमेवच ॥
तयोर्योगेनचतवसुतःशोभामवाप्नुयात् १३ रत्नकांचनयोर्यद्वद्यथामुक्ताप्रवालयोः ॥ कउवाच ॥ एवंनारदवाक्येनसतुतोषहरःशिवा १४ शिवउवाच ॥
सम्यगुक्तंमुनेवाक्यंवांछितार्थकरंशुभम् ॥ कउवाच ॥ शिवोपितत्क्षणादेववृषारूढःसमाह्वयत् १५ इंद्रादीन्देवनिचयान्गौतमादीन्मुनीनपि ॥ अर्धांगेपा
र्वतींगृह्यययौहर्षसमन्वितः १६ शिखंडिनंसमारुह्यमयूरेशःपुरोययौ ॥ नारदस्तुतपोयोगादंतरिक्षचरोययौ १७ सप्तकोटिगणाःक्रीडांकुर्वंतोभिययुस्तदा ॥
नानायुधधराहर्षाद्गर्जयंतोदिशोदश १८ वाद्यत्सुसर्ववाद्येषुरजसाच्छादितेरवौ ॥ अष्टाशीतिसहस्राणिमुनयोपिययुर्मुदा १९ गंडकीनगरंसर्वेगंतुकामाव्य
लोकयन् ॥ गुल्मंमार्गेरक्षसांतेसप्तकोटिगणान्वितम् २० नभस्पर्शिमुखानांचसर्वदाकालधिकृताम् ॥ निशाचराःशुश्रुवुस्तेसेनायास्तुरवंदृढम् २१
सुप्तोत्थिताश्चसन्नद्धाययूरणविधित्सया ॥ राक्षसाऊचुः ॥ कस्ययूयंकुतोयाथकुतआगमनंचवः २२ विनाज्ञांनपुरेगंतुंदास्यामःस्वामिनश्चनः ॥ मयूरेशउवाच॥
स्वतंत्राअंतकादैत्यरक्षसांसाधुपालकाः २३ अतोयच्छंतुनोमार्गंनोचेन्नाशंव्रजिष्यथ ॥ कउवाच ॥ एतस्मिन्नंतरेप्राप्तोविकृतोहेमनामकः २४ असुरोथाब्रवी
द्देवमेकाकीप्रहितःपुरा ॥ इदानींराक्षसैःसार्द्धमादास्येजीवितंतव २५ उवाचराक्षसान्मोथनानादैत्याहताबलात् ॥ अहंचविकृतोनेनयतोहंहन्यतेजवात् २६
कउवाच ॥ इतितद्वचनंश्रुत्वाचुक्रोधसमयूरराट् ॥ मुनिपुत्रान्समाज्ञाप्ययुध्यध्वंमेह्यनुग्रहात् २७ कुशानुद्यम्यतेहर्षात्युद्धंकर्तुंसमुद्यताः ॥ उवाचपृष्ठतोदेवोग्रं
तुबालाःकुशैरिमान् २८ मंत्रितास्तेकुशास्तेषांमस्तकानच्छिनन्बहून् ॥ तेषांशस्त्राणिकुंठानिजातानितदनुग्रहात् २९ जायंतेतावदेतेतान्कुशैर्जघ्नुस्तुराक्षसान्॥
खंडशस्तेनिपेतुर्वैछिन्नबाहूरुजानवः ३० व्यस्मयंतचरक्षांसितृणैर्मृत्युंव्रजंतिकिं ॥ एवंसर्वेहताबालैरखिलाराक्षसास्तदा ३१ जगर्जुस्तेमयूरेशंप्राप्यपुनस्त्वाप्यपूजयन्
बालाऊचुः ॥ आज्ञयानिहताःसर्वेराक्षसास्त्वत्प्रसादतः ॥ पुनराज्ञांनःप्रयच्छकरिष्यामोगुणेश्वर ३२ आश्चर्यंपरमंजग्मुर्मुनयोयेसमागताः ॥ दृष्ट्वाबालैर्हतान्स
र्वान्राक्षसान्कुशसंचयैः ३३ पार्वतीवृषभात्तस्मादवरुह्यालिलिंगतम् ॥ शिवोपिप्राब्रवीद्देवंदृष्टस्तेद्यपराक्रमः ३४ तवशस्त्रहताःपूर्वंनिहताबालकैःकुशैः ॥ ब्रह्मा
दीनामगम्यस्तेप्रभावोगिरिजासुत ३५ नज्ञायतेमयावापिकिंकिमग्रेकरिष्यसि ३६ इतिश्रीगणेशपुराणेउत्तरखंडेराक्षसवधोनामनवाधिकशततमोध्यायः १०९
कउवाच ॥ जयशालीमयूरेशोयात्यग्रेहर्षनिर्भरः ॥ ॥ पृष्ठतोयांतिबालास्तेततोवृषगतःशिवः १ गौतमाद्यामुनिगणालग्नाःसिद्धेययुस्ततः ॥ गर्जंतोगर्जयंतश्चदि
शश्चविदिशोपिच २ योजनावधिगंडक्याअवरुह्याशिखंडिनः ॥ अतिष्ठत्समयूरेशोमहार्घासनमुत्तमं ३ ततःसर्वानुपावेश्याशिवंगणमुनीश्वरान् ॥ वाद्यत्सुसर्ववा

घेषुतानाहसमयूरराट् ४ सिंधुनानिहिताःकारागृहेशक्रादिदेवताः ॥ विनातन्मोचनंलग्नासिद्धिर्नैवभविष्यति ५ अतस्तन्मोचनार्थायप्रेष्यतांसिंधवेमहान् ॥ बु
द्धिमान्सगृहीत्वाचेदागच्छेत्तान्सुरानथ ६ तदासाम्नैवसर्वेषांकुशलंहिभविष्यति ॥ नोचेद्युद्धेनजेष्यामोरणेसिंधुंमहाबलम् ७ मोचयिष्यामतान्देवांस्ततोल
ग्नंभविष्यति ॥ कउवाच ॥ एवंतद्वचनंश्रुत्वाप्राहुःसर्वेगुणेश्वरम् ८ सम्यगुक्तंमयूरेशसुधयासदृशंवचः ॥ बालभावेपितेबुद्धिर्बृहस्पतिसमाशुभा ९ पुष्पदंतंमहा
बुद्धिंनीतिशास्त्रविशारदम् ॥ प्रेष्यतांसिंधुनिकटेदेवमोचनहेतवे १० वक्तारंबलिनंश्रेष्ठंस्तोत्रसंतोषितेश्वरम् ॥ कउवाच ॥ ततऊचेपुष्पदंतोमयूरेशंसुरेश्वरम्
११ महिमातेमयूरेशमनोवाचामगोचरः ॥ जानंतिनजनामायामोहितास्तवनित्यदृक् १२ भूभारहरणार्थंत्वमवतीर्णःशिवालये ॥ नमांप्रेषयतत्रत्वमन्यंप्रेष
यसांप्रतम् १३ अपारसेनयायुक्तंसिंधुदैत्यंमहाबलम् ॥ उद्धतंबलिनंद्रष्टुमहंशक्यामिनक्वचित् १४ युद्धमेवकरिष्यामितततोदोर्दंडतेजसा ॥ यदिसाम्नाभवेत्का
र्यंयुद्धंतत्रवृथामतम् १५ दानंभेदोवृथादंडोनीतिरेषासनातनी ॥ एवमाकर्ण्यतद्वाक्यमुवाचपार्वतीपतिः १६ सम्यगुक्तःपुष्पदंतनीतिमार्गःपुरातनः ॥ क्रोधवा
न्नक्षमःसाम्निकेवलंबलवान्परः १७ धरिष्यतिमहादुष्टंप्रेषितश्चेत्षडाननः ॥ प्रेषितोवीरभद्रश्चेत्क्रोधमेवकरिष्यति १८ शृंगीचेत्प्रेषितस्तत्रसंहारंसविधास्यति ॥
प्रमथःप्रेषितोमत्तोनजानेकिंकरिष्यति १९ प्रेषितश्चेद्भूतराजोभेषयिष्यतितांसभाम् ॥ स्त्रीसंभोगरतःस्याच्चप्रेषितोरक्तलोचनः २० ततोब्रवीन्मयूरेशोनिरस्तेषु
चतेषुच ॥ नंदीसमुद्रगंभीरोधैर्येपर्वतसन्निभः २१ बुध्याबृहस्पतिसमोजंभारिसदृशोबले ॥ धूर्तःपराशयज्ञाताप्रेष्यतांसामहेतवे २२ ॥ शिवउवाच ॥ सम्यगुक्तं
मयूरेशज्ञातासिगुणदोषयोः ॥ नंदिनेदीयतांवस्त्ररत्नानिविविधानिच २३ ततोददौमयूरेशस्तानितस्यैशिवाज्ञया ॥ आज्ञापयामासचतंगच्छसिंधुंमहाबलम्
२४ यथादेवाविमुच्यंतेतथानीतिर्विधीयताम् ॥ सतुनत्वामयूरेशंसशिवांशिवमेवच २५ गणान्सर्वान्महावाक्यैःस्तुत्वातंचशिवांशिवाम् ॥ उवाचबुद्धिसंपन्नो
दिष्ट्योचितमिदंवचः २६ ॥ नंद्युवाच ॥ समहान्जायतेलोकेयस्यवःस्यादनुग्रहः ॥ अतोहंश्रेष्ठतांनीतःसाधयिष्येप्रयोजनम् २७ वःप्रसादेनभूगोलंविधास्ये
न्युब्जमंजसा ॥ शेषंसूर्यंवोनिकटेआनयिष्येनसंशयः २८ ॥ कउवाच ॥ एवमुक्त्वाययौनंदीसिंधुदैत्यंबलान्वितः ॥ गतःसनगरद्वारंमनोवेगेनधैर्यवान् ॥ ध्या
यन्गणेशंशंभुंचशिवांसर्वार्थसाधिकाम् २९ कृतांकर्तुंप्रतिज्ञांतांप्रार्थयामासचेतसि ३० ॥ ॥ इतिश्रीगणेपु० उत्त० दशाधिकशततमोऽध्यायः ॥ ११० ॥
कउवाच ॥ प्रायात्सभांमहारम्यांद्वारपालनिवेदितः ॥ नंदीनंदतंदृष्ट्वादैत्यंसिंधुंसभागतम् १ महावीरैःपरिवृतंनानाशस्त्रपुपाणिभिः ॥ वारांगनानृत्यरतंवीज्य
मानंनृभिर्मुदा २ वाद्यत्सुसर्ववाद्येषुनादनादितदिक्षुच ॥ दृष्ट्वातंनंदिनंकेचिन्मेनिरेरविमागतम् ३ महाकायंमहावीरंवीक्ष्यकेचिच्चकंपिरे ॥ जगर्जुरपरेतत्रभी
षयंतोबलादमुम् ४ नबिभेतिमहावीर्योनंदीस्वबलगर्वितः ॥ करसंज्ञार्पितंनंदीभेजआसनमुत्तमम् ५ सर्वेतटस्थतांयाताश्चित्रगाइवपुत्तलाः ॥ बुध्वातदिंगि
तंप्राहनंदीवाचस्पतिःपरः ६ नानासभादृष्टपूर्वानेदृशास्तासुमूढकाः ॥ यूयंसर्वेतिबलिनःश्रियापरमशोभिताः ७ सुंदराःकामसदृशाबुध्याहीनाष्टकाइव ॥

सभायामागतःसाधुरसाधुर्दुर्बलोबली ८ प्रष्टव्योमाननीयश्चनीतिरेषासनातनी ॥ नसाद्दष्टासभामध्येअतोमेविस्मितंमनः ९ वृथासभासदःसर्वेवृथामात्याश्च
नागराः ॥ नायंधर्मोराज्ञएवसभ्यानांकृत्यमेवतत् १० ॥ कउवाच ॥ इतितद्वचनंश्रुत्वासिंधुःप्रोवाचनंदिनम् ॥ पद्मयोनेरिवतवमतिर्दृष्टागुणाकर ११ कस्य
त्वंकुतआयातःकिमर्थंवावृषेश्वर ॥ तेजसावह्निसदृशःपंचास्यइवविक्रमे १२ ॥ नंद्युवाच ॥ सुरभेःकामरूपायाअपत्यंनंदिनामकम् ॥ विद्धिमांगिरिजाना
थवाहंब्रह्मांडभेदिनम् १३ मयूरेशोधराभारहरोदुष्टनिबर्हणः ॥ अवतीर्णःशिवगृहेबाल्यात्प्रभृतिदैत्यहा १४ शेषोमूकोभवत्तस्यप्रतापवर्णनेब्जजः ॥ समु
द्रमथनाद्यद्रत्नजातंबहिर्ययौ १५ तद्वन्नीतिंविमथ्याद्यकार्यसिद्धिंविचारय ॥ आज्ञांशृणुमयूरेशप्रेषितांबलवत्तराम् १६ आज्ञाभंगेतस्यभवेद्विनाशोयस्यक
स्यचित् ॥ यतःसृजतेविश्वंपातिहंतिचराचरम् १७ त्वयाविनिहिताःकारागृहेदेवगणाबलात् ॥ पदानितेषांलब्धानिभाग्यंस्यात्किमतःपरम् १८ इदानींवैरनि
र्मोकंविचार्यकर्तुमर्हसि ॥ मोचयाशुसुरान्सर्वानाज्ञयास्वामिनोमम १९ त्रिपुरेणकृतंवैरंशिवेनसहतत्क्षणात् ॥ हिरण्यकशिपुंस्तंभेवतीर्यहतवान्हरिः २०
तारकेणजितादेवाअतिष्ठंस्तत्पदेस्वयम् ॥ स्कंदेननिहतोयुद्धेक्षणेनतारकोबलात् २१ अतोदत्वासुरान्मह्यंतिष्ठस्थानेसुखंचिरम् ॥ कउवाच ॥ एवंनंदिवचः
श्रुत्वाचुक्रोधसिंधुदैत्यराट् २२ उवाचरक्तनयनोवमन्निवहुताशनम् ॥ सिंधुरुवाच ॥ चातुर्यंबहुधादृष्टंत्वदीयंवृषनंदन २३ प्रसंगंनैवजानासितथावाचस्पतेरपि॥
अज्ञानात्प्रकृतार्थस्यवचोयातिवृथार्थताम् २४ बालस्यतववाक्येनस्वामिनस्तेपिवाक्यतः ॥ मोचयेयंकथंदेवान्यावत्सोपिननिर्जितः २५ प्रमाणंकिंतुतेवा
क्यंतृणादवनचारिणः ॥ कृतेगिरीशस्तत्पुत्रोवृथाभीतिःप्रदर्श्यते २६ लांगलेयोजयाम्यद्यदौत्येननागतोयदि ॥ यदिमेवक्रतांयायाद्भ्रूकुटीक्रोधतोवृष २७
तदात्रिभुवनंनश्येत्कातत्रगणनातयोः ॥ रुष्टःसृगालःकिंकुर्याद्प्रियंसिंहनागयोः २८ ॥ कउवाच ॥ एवंशब्दशरैर्विद्धोनंदीक्रोधादथाब्रवीत् ॥ नंद्युवाच ॥ विप
रीतांमतिंतेद्यलक्षयाम्यसुराधम २९ सन्निपातीवविकलंवल्गसेमरणोन्मुखः ॥ पूर्वंसामप्रयोक्तव्यमितितेनाहमीरितः ३० त्वयिनीतिर्वृथाजाताउपदेशोयथा
खले ॥ यदिनिंदाप्रयुक्तातेमयूरेशेशिवेपिच ३१ क्षीणमायुस्तयातेद्यनयुद्धेजयमेष्यसि ॥ इदानींहन्मित्वांमूढनाज्ञास्तिस्वामिनोमम ३२ नायकेननहंत
व्योदूतस्तेनापिनायकः ॥ इत्युक्त्वापातयन्दैत्यान्नंदीनिश्वासवायुना ३३ क्रोधेनतमपृष्ट्वैवप्रतस्थेहर्षनिर्भरः ॥ सान्निध्यंप्राप्यदेवस्यमयूरेशस्यतत्क्षणात्
३४ दूराद्ददर्शदेवोपिप्राहनंदीसमागतः ॥ प्रणिपत्याब्रवीद्देवंवृत्तांतंसर्वमादितः ३५ ॥ नंद्युवाच ॥ बहुधाबोधितोदैत्योनस्वीचक्रेवचोमम ॥ निर्भर्त्सितोबहुवि
धंतेनाहंचमयाचसः ३६ न्युजेघटेयथाबिंदुस्तस्मिन्सर्वंवृथाभवेत् ॥ कउवाच॥ इतितद्वचनंश्रुत्वाप्रयातस्ययथागतम् ३७ जहर्षसमयूरेशोदैत्यमर्दनलालसः
आज्ञापयत्सयुद्धायप्रमथादीन्गणांस्तथा ३८ इदानींसिंधुनगरेयुद्धंकर्तुंसमुत्सुकाः ॥ गर्जंतुवीरशब्दैश्चमोचितुंबंधनात्सुरान् ३९ हत्वासिंधुंचसबलंमोचितुं
चाखिलान्सुरान् ॥ मुनीनांत्वरमाणानांगंतुंस्वाश्रममंडलम् ४० ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेविचारवर्णनंनामैकादशाधिकशततमोध्यायः ॥ १११ ॥

॥ कउवाच ॥ ॥ शिखंडिनंसमारुह्यमयूरेशःपरेदिने ॥ आयुधानिचचत्वारिप्रगृह्यकरपंकजे १ जगर्जघनवद्धोरंययौरणचिकीर्षया ॥ शिवोपि
गर्जन्सहसावृषारूढोययौतदा २ सप्तकोटिगणाःपश्चात्सन्नद्धाययुरोजसा ॥ ततोनंदीप्राहतत्रनगंतुंसहसाहंथ ३ गणानांनायकेवीरभद्रेचमयितिष्ठति ॥
प्रमथेवाविद्यमानेशक्तेहंतुंसुरद्विषाम् ४ पश्यंतुसेवकमहस्ततोयांतुसुसंयुगम् ॥ ॥ कउवाच ॥ ॥ भारतीमेवमाकर्ण्यदेवोनंदीरितांतदा ५ उवा
चपरमप्रीतःसाधुसाधुत्वयोदितम् ॥ पराक्रमवतःसिंधोर्द्रष्टव्यस्तुपराक्रमः ६ इतियामिपुरोनंदिन्यूयंयांतुसहैवनः ॥ ततस्तुसूतराजोथपुष्पदंतोपिवीर्य
वान् ७ ईयतुःपुरतस्तस्यकोटिसंख्यायुतागणाः ॥ वीर्यश्रियादीप्यमानाःसर्वेवीरामदान्विताः ८ आक्रमंतोदिगंतान्वैगर्जंतोघनवद्भृशम् ॥ भारेण
शेषशीर्षाणिनामयंतोधरामपि ९ क्रोधानलंवमंतस्तेप्रापुस्तांगंडकींपुरीम् ॥ दैत्यगुल्मेनिपेतुस्तेदशकोट्यसुरैर्युते १० ततस्तत्राभवद्युद्धंतुमुलंरोमहर्षण
म् ॥ शस्त्रास्त्रैर्बाणनिचयैर्भिंडिपालपरश्वधैः ११ केषांचिन्मस्तकाभिन्नाःपादाहस्तास्तथोरवः ॥ जानुजंघाश्चगुल्फाश्चमग्नाःकेपिगतासवः १२ निप
त्यपुनरुत्थायप्रायुध्यन्स्वपरैःसह ॥ एवंनिपतितादैत्याअसंख्यातागतासवः १३ पलाय्यनिर्गताःकेचिदाचख्युःसिंधवेखिलम् ॥ सभामध्येवीरगणै
रुपविष्टायकेचन १४ शस्त्राघातैःस्रवद्रक्ताःपुष्पिताइवकिंशुकाः ॥ तत्रागत्यमृताःकेचित्केचिद्वैर्यात्तमब्रुवन् १५ नगरद्वारगुल्मेतुदशकोटिनिशाचराः ॥
निवृत्ताःशस्त्रसंघातैर्युद्धंकृत्वापरस्परम् १६ यदाशैलभिदोयुद्धमभूत्तत्रजयोभवत् ॥ उपविष्टोसिकिंतूष्णींसिंधोस्वहितमाचर १७ आरामारिपुभिर्दग्धा
गृहाणिचप्रतोलिकाः ॥ अंधकारेधूलिकृतेप्रापलन्वह्नितेजसा १८ भुंजंतोनिद्रिताःकेचिन्निर्ययुर्नगराद्बहिः ॥ बालानादायपपलुस्त्यक्त्वाभोगंचकेचन १९
विस्रस्तवसनाःकेचिद्ध्यानस्थावह्निनाहुताः ॥ तत्रापिनिधनंजग्मुर्नानाशस्त्रप्रहारतः २० धनंजयंसर्वदिक्षुवीक्ष्यपौराभयातुराः ॥ मेनिरेप्रलयंप्राप्तंदह्य
तेसकलापुरी २१ ॥ ॥ कउवाच ॥ ॥ एवंदूतमुखाच्छ्रुत्वासिंधुर्जृंभामथाकरोत् ॥ स्वादन्निवमृगान्सिंहःपर्वतेंद्राद्विनिर्गतः २२ उवाचदुर्धरासेनादृश्य
तेकिंभविष्यति ॥ दिदीपेक्रोधानलतोग्रसन्निवत्रिविष्टपम् २३ सिंहस्याग्रेकिंशशकःकरिष्यतिपराक्रमम् ॥ मेरोःकिंशलभःकुर्याच्चालनंजंबुकोपिवा २४
कालस्यममकिंकुर्याद्बालोयंतुमयूरराट् ॥ इत्युक्त्वाक्ष्वेडितेनासौनादयन्विदिशोदिशः २५ चिंतातुरःक्षणंतस्थौमुनिर्मौनमिवास्थितः ॥ ततोवीराःसिं
धुदैत्यंप्राब्रुवन्क्रोधमूर्छिताः २६ आज्ञांदेहिमयूरेशंजेष्यामःक्षणमात्रतः ॥ तवप्रतापात्त्रैलोक्यंवशंनेष्यामसांप्रतम् २७ ॥ ॥ सिंधुरुवाच ॥ ॥ स
म्यगुक्तंमहावीराममापिरिपुदर्शने ॥ मनउत्कंठितंयस्मात्सैन्येनयुध्यतामिह २८ ततःसर्वेपुरोयातागर्जंतोवीरसत्तमाः ॥ असंख्याताःशस्त्रधराश्चतुरंगब
लान्विताः २९ हयारूढःसिंधुदैत्यःक्रोधहर्षसमन्वितः ॥ वमन्क्रोधानलंवक्त्रान्नेत्राभ्यांरणदुर्मदः ३० ययावश्वंपुरोधायमनोवेगंमहाधनम् ३१ ॥ ॥ इ
तिश्रीगणेशपुराणेउत्तरखण्डेद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ छ ॥ ॥ कउवाच ॥ ॥ पदातयःपुरोयांतिकंपयंतोवसुंधराम् ॥

विकरालमुखावीराःसिंदूरारुणमस्तकाः १ केचिन्निबद्धकवचामुक्तकेशाःसुदारुणाः ॥ केचिन्निबद्धकटयःकेचिच्चंदनचर्चिताः २ नानाशस्त्रप्रहरणानाना
युद्धविशारदाः ॥ पुरोयातिगजामत्ताधातुचित्राइवाद्रयः ३ दीर्घदंताविभांतिस्मभूषणैर्विविधैरपि ॥ घंटानादैर्जनंसर्वंबाधिरंचक्रुरंजसा ४ चूर्णयंतोगिरीन्वृ
क्षान्ययुःशुंडाप्रहारतः ॥ लसत्कुंभाःपताकाढ्याश्चित्रध्वजविराजिताः ५ ततोश्वाश्वखुराघातैश्चूर्णयंतोवसुंधराम् ॥ हेषितैर्नादयंतोवैगगनंचदिशोदश ६
सुवर्णरत्नमुक्ताभिर्भूषिताव्योमचारिणः ॥ अधिष्ठितामहायोधैस्तनुत्राणप्रशोभिभिः ७ नानाशस्त्रधरैर्वीरैःपरसेनाविमर्दिभिः ॥ ततस्तुरथिनोजग्मुःशस्त्रा
स्त्ररिपुघातिनः ८ सहितायुद्धमार्गज्ञैर्वीरैःसारथिभिर्मृधे ॥ मुक्तामणिमयामालावहंतोगंधमालिनः ९ धनुस्कंधास्तूणभृतोभल्लहस्ताःसखड्गकाः ॥ शस्त्र
प्रभाभिर्नेत्राणिछादयंतोजनस्यह १० एवंसेनासमायातागर्जयंतीदिशोदश ॥ भूतराजेनसाद्दष्टापुष्पदंतेनवाहिनी ११ मयूरेशमुभौयातौततोभीत्याप
लायितौ ॥ ॥ तावूचतुः ॥ ॥ तवाज्ञयापुरोयातावावाभ्यांनिहताचमूः १२ गुल्मस्थानगरद्वारिदग्धंचनगरंबहु ॥ प्रतापनौसमाकर्ण्यसिंधुःस्वयमुपाग
तः १३ चतुरंगांचमूंगृह्यनानाशस्त्रास्त्रधारिणीम् ॥ ततोभीत्याभवंतंचसमायातौमहाबल १४ ॥ ॥ क.उवाच ॥ ॥ सिंधुसैन्यसमुद्रोथवदतोरेवमेतयोः ॥
दद्दशेपूर्वदिग्भागेदुस्तरःशस्त्रयोधिभिः १५ ततोहर्षयुतोज्ञात्वादैत्यवृत्तंसमासतः ॥ नीलकंठंसमारुह्यमयूरेशोययौपुरः १६ आयुधानिचचत्वारिचतुर्दोःषु
प्रगृह्यसः ॥ सन्नद्धागणकोट्यस्ताधनुर्बाणासिपाणयः १७ परिवार्यस्थितादेवंनीलकंठपृष्ठसंस्थितम् ॥ मुनीश्वराःस्तुवंतिस्मददुराशीर्वचोपितम् १८ उभयोःसे
नयोर्वाद्यघोषकोलाहलोमहान् ॥ परस्परंसंपदंतांवीक्ष्यसेनेसुविस्मिते १९ असंख्यातंबलंवीक्ष्यतुतोषसमयूरराट् ॥ यदुक्तंनंदिनापूर्वंतदृष्टंसर्वमेवहि २० ततो
नंदीमयूरेशंनत्वा गर्जन्मुहुर्ययौ ॥ नभोमार्गेणसैन्येषुचिच्छेदवीरमस्तकान् २१ शृंगाघातेनमहताहयमस्याहनद्दृढम् ॥ शीघ्रमुड्डीयचययौमयूरेशंयथाक्षतः २२
आश्चर्यंचक्रिरेसर्वेगणाःसाध्वितिशंसिरे ॥ छत्रंचपातयामासनंदीशृंगप्रहारतः २३ पतितेस्वेचछत्रेचसिंधुरश्वांतरेगतः ॥ धारयामासचतदाछत्रमन्यन्महा
धनम् २४ आश्चर्यंपरमंमेनेनंदिनःकर्मणासुरः ॥ चुक्रोधसमहावीरान्कगतोवःपराक्रमः २५ एवमाकर्ण्यतद्वाक्यंकौस्तुभोमैत्रएवच ॥ अमात्यौतंनमस्कृत्य
सेनयाचतुरंगया २६ माचिंतांकुरुसिंधोत्वंविधास्यावोरिपुक्षयम् .॥ अन्यथानमुखंनाथदर्शयावःकथंचन २७ एवमुक्त्वाप्रचलितौपरसैन्यनिबर्हणौ ॥ प
दातीनांगणायाताब्रह्मांडास्फोटतत्पराः २८ न्युनतामिच्छवोनेतुंभूगोलंरणदुर्मदाः ॥ कौस्तुभोथमयूरेशंयातोमैत्रश्चपातितुम् २९ शरवर्षैःपरिच्छाद्ययया
तावस्थांतिकंयदा ॥ वीरभद्रस्तदायातोयोद्धुंसचषडाननः ३० असंख्यसेनयायुक्तौगर्जयंतौदिशोदश ॥ निजघ्नतुरुभौरोषात्सिंधुंनानाप्रहारतः ३१ कौस्तु
भोप्यथमैत्रश्चजघ्नतुस्तौपरस्परम् ॥ सहस्वमारयस्वेतिव्याहरंतःपरस्परम् ३२ शस्त्रैरस्त्रैरनेकैश्चताभ्यांयुद्धमकुर्वताम् ॥ शरव्रातैर्भिंडिपालैःपरिघैर्मुसलैर
पि ३३ नानासेनाचराजघ्नुःपरस्परवधेप्सवः ॥ नष्टेषुसर्वशस्त्रेषुशरेषुचपरस्परम् ३४ मल्लयुद्धंप्रचक्रुस्तेजीवग्राहममारयन् ॥ व्यसवःपतिताःकेचिद्भूरक्तंमुखा

द्रुह ३५ पादंपादेनजघ्नुस्तेस्कंधंस्कंधेनचापरे ॥ पृष्ठंपृष्ठेनकेचिच्चहस्तंहस्तेनचापरे ३६ मस्तकंमस्तकेनैवकूर्परंकूर्परेणच ॥ पतिताःपात्यमानाश्चमृताभग्नाश्च
चूर्णिताः ३७ छिन्नकंठाभिन्नभुजाभग्नजंघोरुबाहवः ॥ एवंनष्टेषुसैन्येषुसिंधुसेनाजयंययौ ३८ जयशब्दैःस्तूयमानैर्वंदिभिर्वाद्यनिस्वनैः ॥ सिंधुदैत्येश्वरंयातौ
अमात्यौमित्रकौस्तुभौ ३९ मयूरेशंसमायातौवीरभद्रषडाननौ ॥ ततोस्तमगमत्सूर्यस्ततोयुद्धमुपारमत् ४० अपरेनिश्ययुयुध्यंतदेवसैन्येनदानवाः ॥ पलाय
मानांतांसेनांनिजघ्नुःशरसंचयैः ४१ पुनरावेशमापन्नौवीरभद्रषडाननौ ॥ गर्जंतौगर्जयंतौचगगनंचदिशोदश ४२ निघ्नंतौरिपुसेनांतांनिर्दहंतौकृतांतवत् ॥
अंधकारेमहाघोरेनप्राज्ञायतकिंचन ४३ स्वान्परानपिजघ्नुस्तेयुध्यमानामहाबलाः ॥ भग्नायांसिंधुसेनायांचक्रतुर्जयनिस्वनम् ४४ दैत्यामात्यौपुनर्यातौमर
णेकृतनिश्चयौ ॥ प्रेरयामासतुरुभौनिजाश्वौपरवाहिनीम् ४५ किरंतौशरजालानिजघ्नतुःकरवालतः ॥ ततःषडाननोदृष्ट्वातयोरतिपराक्रमम् ॥ मुष्टिघातेन
तौहत्वानिजसेनामगाज्जवात् ४६ मित्रस्तुभूमिमगमद्वमन्रक्तंमुखाद्बहु ॥ तथाविधंचतंदृष्ट्वाकौस्तुभोयोद्धुमागतः ४७ षडाननमथोरोषान्निजघ्नेकरवाल
तः ॥ तस्मिन्मूर्छामवाप्तेतुवीरभद्रोप्ययुध्यत ४८ कौस्तुभःप्राहनद्रोषाच्छराघातैरनेकशः ॥ सोपितंप्राहनन्मुष्ट्याभूमौचैनमपातयत् ४९ हतेतस्मिन्ननंदा
सौवीरभद्रोमहाबलः ॥ पपालदैत्यसेनासाहतेमित्रेचकौस्तुभे ५० तमूदुतंशस्त्रहताःसर्वतोरुधिरंबहु ॥ न्यवेदयन्दैत्यराजसिंधवेदेवशत्रवे ५१ वाचाविस्पष्ट
यादुःखाच्छस्त्राघातकृतादृशम् ॥ जयमाकांक्षतेनित्यंमित्रकौस्तुभयोर्भृशम् ५२ इतिश्रीगणेशपुराणेउत्तरखंडेमित्रकौस्तुभवधोनामत्रयोदशाधिकशततमो
ध्यायः ॥ ११३ ॥ ॥ वीराऊचुः ॥ ॥ नानाशस्त्रप्रहरणौमृतौतौमित्रकौस्तुभौ ॥ असंख्याताहतासेनाताभ्यांनिशिदिवापिच १ ततोरिपुबलाद्दृष्टौ
वीरौद्वौसमुपस्थितौ ॥ ताभ्यांबलिभ्यांनिहतानिजसेनाविमर्दिता २ ययोःकरप्रहाराभ्यांगतौतौयमसादनम् ॥ दृष्टानानाविधासेनानदृष्टौतादृशौसुरौ ३
॥ सिंधुरुवाच ॥ ॥ यौदृष्ट्वासंबिभेतिस्मकृतांतोभूतहारकः ॥ तौकथंकरघातेनमृतौशंसथसैनिकाः ४ पराक्रममिदानींमेपश्यंतुसर्वसैनिकाः ॥ रणभूमौन
तयिष्येशिरःशत्रोर्नसंशयः ५ चक्रयुद्धंकरिष्यामिचक्रपाणेर्यतःसुतः ॥ इत्युक्त्वाहयमारुह्यमयूरेशंययौखलः ६ असंख्यकोट्योदैत्यानांपुरोयातामहाबलाः ॥
योद्धुकामाःसुरेंद्रेणशिवपुत्रेणदुर्धराः ७ ततोनंदिपुष्पदंतौयोद्धुंयातौमहाबलौ ॥ भूतराजश्चविकटोदशलक्षैश्चयोधिभिः ८ चपलोप्यर्धलक्षेणयोद्धुका
मोभिनिर्ययौ ॥ षडाननोवीरभद्रोसंख्यसेनासमायुतौ ९ ईयतुर्युद्धबलिनौनानाशस्त्रधरावुभौ ॥ सप्तव्यूहान्समालोक्यप्राव्यूहन्दैत्यसैनिकाः १० गंधासु
रोथमदनकांतोवीरोध्वजस्तथा ॥ महाकायश्चशार्दूलोधूर्तनामाथसप्तमः ११ सप्तव्यूहान्पुरस्कृत्ययुयुधुस्तान्समागतान् ॥ बाणवृष्ट्यासमाच्छाद्यभल्ला
स्त्रैस्तान्निजघ्निरे १२ भिंडिपालहताःकेचिन्निपेतुर्धरणीतले ॥ षडाननेनयुयुधेबलाढ्यगंधासुरोबली १३ वीरभद्रेणमदनकांतोपियुयुधेरणे ॥ नंदीचवीररा
जश्चयुयुधातेपरस्परम् १४ ध्वजासुरपुष्पदंतौशस्त्रास्त्रैर्बाणसंचयैः ॥ भूतराजोमहाकायोयुयुधातेपरस्परम् १५ धूर्तश्चविकटश्चैवद्वंद्वयुद्धमकुर्वता

मृ ॥ चपलेनहतोरोषाच्छार्दूलोन्यपतद्भुवि १६ पुनःसंज्ञामवाप्यैनंसोपिखड्गेनचाहनत् ॥ मूर्च्छामवापमहतींचपलश्चपलोयुधि १७ प्रवृत्तेद्वंद्वयुद्धेतु
युयुधातेबलेउभे ॥ जघ्नतुःशस्त्रसंघातैर्बाणजालैःपरस्परम् १८ सहस्वजाहिमाभैस्त्वंहतःस्वर्गंसमेष्यसि ॥ क्षीणेषुशस्त्रबाणेषुलत्ताभिर्मुष्टिभिःपुनः १९ युयु
धुःसर्वसैन्यानिनाशयंतिपरस्परम् ॥ कश्चिच्चचरणौधृत्वापोथयामासवैरिणम् २० कश्चिदुड्डीयन्यपतच्चूर्णयामासवैपरम् ॥ कश्चिच्चिच्छेदचशिरःकश्चिद्बाहुं
रिपोरणे २१ कश्चित्पादौजानुनीचगुल्फौचिच्छेदचापरः ॥ शरवृष्टिंपरेकेचित्परस्परमवासृजन् २२ स्रवद्रक्तःशस्त्रहतोमरणावध्ययुध्यत ॥ कबंधायुयुधुस्तत्र
जघ्नुःस्वांश्चपरानपि २३ अपरेसहसापेतुर्विदीर्णवक्षसोनराः ॥ परस्पराघातहतौमृतौकेचिद्रणाजिरे २४ एकाप्सरःप्राप्तिकृतेस्वर्गेयुद्धमकुर्वतां ॥ असृङ्नद्यभ
वत्तत्रकेशशैवलसंयुता २५ खड्गमत्स्यवतीखेटमहाकूर्मादुरत्यया ॥ प्रेतकाष्ठवहाघोराचामरतृणसंयुता २६ कंचुकग्राहशोभाढ्यामहाकटकभेकिका ॥
शूरमोदकराभीरुमहाभयविवर्धिनी २७ मेदोजलादुःखतरामांसकर्दमशालिनी ॥ ततोस्तमितआदित्येनप्राज्ञायतकिंचन २८ नहंतव्यावयंदैत्यवाहिनी
चारिणःसुराः ॥ नहंतव्यावयंदेववाहिनीचारिणोसुराः २९ एवंकोलाहलैस्तत्रप्रायुध्यंतपरस्परं ॥ आशिषोऽथददुस्तत्रश्वापदाभूतराक्षसाः ३० सृगालाःपतगा
श्येनास्तृप्ताःपार्वतिनंदनं ॥ दिनत्रयमभूदेवंदिवारात्रौमहारणः ३१ वाद्यशब्दैर्जयंरात्रौघोषयंतःपरस्परं ॥ एवंगंधासुरोयुध्यत्सेनान्याबहुविस्तरं ३२ मद्यपा
नेनमत्तोसौत्यक्त्वाशस्त्राणिवेगवान् ॥ अहनन्मुष्टिघातेनसहसातंषडाननं ३३ न्यपतत्सतदाभूमौवज्राहतइवाचलः ॥ अधावत्सोपिलब्ध्वाशुसपक्षइवपर्वतः ३४
संज्ञांद्वादशभिर्हस्तैरविध्यत्तंमहासुरं ॥ शरजालान्यनेकानिविसृजन्षड्धनुर्वरैः ३५ निवार्यशरजालानिछादयामासतंशरैः ॥ गंधासुरोमहावेगात्षडाननमना
मयं ३६ तन्निवार्यदधारैनंचरणेसषडाननः ॥ अकस्माद्भ्रामयित्वैनंपातयामासभूतले ३७ तस्यांगंशतधाजातंगतासोर्दैढवाततः ॥ तस्मिन्हतेतस्यसेनाययौ
व्यग्रादिशोदश ३८ पृष्ठलग्नोनिंदतिस्मसेनांतांसषडाननः ॥ सेनश्चक्रोधनश्चैवशतघ्नोयोद्धुमाययुः ३९ येषांशब्दोमहानासीद्घनानामिवगर्जतां ॥ ऊचुःष
डाननंदुष्टसेनानोनिहताबहु ४० इदानींयाहिभवनंहतोरविसुतस्यह ॥ ततआच्छादयामासुर्युगपत्तेषडाननं ४१ ग्रामसिंहायथासिंहंबहवोबलवत्त
राः ॥ षड्धनुर्मोचितैर्बाणैर्न्यहनत्तान्षडाननः ४२ ततस्तेमूर्छिताःपेतुर्मुहूर्तादुत्थिताःपुनः ॥ पाशांक्षिप्स्वास्कंदगलेनिन्युस्तंपशुवत्त्रयः ४३ ज्ञात्वानीतंषण्मुखं
तमाधावंस्तेत्रयोजवात् ॥ हिरण्यगर्भोबलवान्श्यामलोरक्तलोचनः ४४ त्रिभिस्तेमुष्टिघातेनहताःपेतुर्धरातले ॥ ततोमदनकांतोपिवीरभद्रंमहाबलं ४५ न्यह
नच्छघ्नघातेनसमूर्छांमहतींययौ ॥ त्यक्त्वामूर्छांवीरभद्रोदंडघातात्न्यपातयत् ४६ मृतंमदनकांतंतंवीरराजोमहाबलः ॥ ज्ञात्वाप्रायान्निहंतुंतांस्त्रीन्सुरान्बल
वत्तरान् ४७ ततस्तान्न्यहनद्रोषाच्छृंगाभ्यांनंदिकेश्वरः ॥ अस्रवद्रुधिरंवक्त्राच्छतधाभूतलेपतत् ४८ तंहतंतुविलोक्याशुचत्वारोसुरसत्तमाः ॥ आययुर्नं
दिनंहंतुंशार्दूलोथध्वजासुरः ४९ महाकायोधूतश्चैवसर्वदेवजितोरणे ॥ नानाशस्त्रैर्निजघ्नुस्तेनंदिनंबलवत्तरं ५० पतितेनंदिनिततश्चत्वारोयुद्धदुर्मदाः ॥ पुष्प

दंतोभूतराजोविकटश्चपलोपिच ५१ तेतुशैलान्समादायतोलयित्वानिचिक्षिपुः ॥ सर्वेषांमस्तकाभिन्नाश्चूर्णीभूताश्चकेचन ५२ धरावातेनतेसर्वेधरायांप
तितारणे ॥ केचिन्नासिंधुमगमन्शस्त्रघातप्रपीडिताः ५३ पराजयंस्वसैन्यानांप्राहुर्देवजयंतथा ॥ जयंप्राप्यदेवसेनाबहुवाद्यान्यवादयत् ५४ मयूरेशमयूरेश
जयत्वंजयसर्वदा ॥ इत्यब्रवीद्धर्षयुतास्वानंदेननतंच ५५ इतिश्रीगणेशपुराणेउत्तरखंडेचतुर्दशोत्तरशततमोध्यायः ११४ ॥ कउवाच ॥ श्रुत्वासेनाजयंदैत्योय
यौचिंतांमहत्तरां ॥ अत्यंतम्लानवदनोनिमग्नोदुःखसागरे १ मनसापरितप्तेनचिंतयामासदैत्यराट् ॥ सिंधुरुवाच ॥ विपरीतमिदंकस्माज्जातंनज्ञायतेमया २ पि
पीलिकाग्रेसेकिंनुब्रह्मांडंलोकसंकुलं ॥ यस्याग्रेमशकादेवाआसन्निंद्रादयोमम ३ शिवार्भकेनतस्याद्यकथंसेनाविनिर्जिता ॥ कउवाच ॥ इत्युक्त्वाहयमारुह्य
धनुर्बाणासिचर्मभृत् ४ अहत्वातंमयूरेशंदर्शयिष्येमुखंनच ॥ इत्युक्त्वाभिययौसिंधूरणभूमौपतंगवत् ५ सज्जंचकारचधनुर्नादयन्गगनंदिशः ॥ व्यसृजद्बाण
जालानितीक्ष्णान्यग्निमुखानिसः ६ चकंपेपृथिवीसर्वामूर्छिताजंतवोखिलाः ॥ प्राक्षिपद्देवसेनायामसंख्याताश्चपत्रिणः ७ छिन्नाभिन्नाःसुराःपेतुस्तच्छ
स्त्राघातपीडिताः ॥ पलायंतःसुराःपेतुस्तेपिपृष्ठेशरैर्हताः ८ ततःसर्वामयूरेशवाहिनींव्यग्रतामियात् ॥ द्विधाभूताजानुपादाःकेषांचिन्मस्तकाअपि ९ शर
वृष्ट्यासिंधुहस्तमुक्तयारणमूर्धनि ॥ अभवत्तुमुलंयुद्धमनिवार्यंभयावहम् १० सिंधोश्चैवगणेशस्यसेनयोरुभयोरपि ॥ कोलाहलेमहाघोरेध्वांतेगाढेरजःकृ
ते ११ पुरोगानन्जघ्निरेसर्वेपरान्स्वानपितेतदा ॥ शस्त्राघातैर्हतासेनादेवसेनाचरैःपरा १२ ततःसिंधुर्हयात्तस्मादवरुह्यपदेग्रहीत् ॥ पातयामाससहसावीरभद्रंच
वेगतः १३ अहनन्मस्तकेसोथनंदिनंबलवत्तरम् ॥ भूतराजंचखड्गेनमारयन्सहसाकटौ १४ पुष्पदंतस्योदरंचाबिभेद्बलवत्तरम् ॥ शिखामाक्रम्यप्राकर्ष
द्धिरण्यगर्भमोजसा १५ श्यामलस्यललाटंसबिभेदशरघाततः ॥ चपलस्यहनूरोषाज्जघानविकटंरणे १६ लंबकर्णस्यकंठंसबिभेदबाणसंचयैः ॥ धृत्वा
तुचरणौरक्तलोचनंचन्यपातयत् १७ हस्तान्निस्तीर्यसहसासुमुखःप्रापलज्जवात् ॥ सोमंलत्ताप्रहारेणरणभूमावपातयत् १८ जठरंदारयामासभृंगिणोसिप्र
हारतः ॥ दावानलस्यचशिरोभेदयामाससायकैः १९ पंचाननस्यपृष्ठेसोवधीन्नचपलोयुधि ॥ एवंसर्वेमहावीरानिहतारणमूर्धनि २० हतंपलायिताश्चा
न्येततःसिंधुःपुरोययौ ॥ जगर्जघनवद्धोरंनादयन्भुवनत्रयम् २१ साविव्याधमयूरेशंशरजालैरनेकधा ॥ तस्यदेहंसमालोक्यविकरालंभयानकम् २२ वि
रूपाक्षादयःसर्वेपलायनमकुर्वत ॥ मुनियुक्तोगणेशश्चयुयुधेसयुगेतदा २३ सचकंपेकरिशिशुःसिंहस्येवास्यदर्शनात् ॥ ततोब्रवीद्रोषवशात्सिंधुस्तंतुगुणे
श्वरम् २४ ॥ सिंधुरुवाच ॥ दूरात्तेश्राविबहुशःपुरुषार्थःशिवार्भक ॥ प्रत्यक्षंदृश्यसेरेत्वंजंबूकइवदुर्बलः २५ कथंमेसहसेमूढतलाघातंशिलाभिदम् ॥
त्वयामातुःस्तनंपीत्वानर्तव्यंहिगृहांगणे २६ शक्रादयोजितायेनतस्यतेगणनात्रका ॥ निवारयतिमांमूढकृपात्वांहंतुमुत्सुकम् २७ कथंतेकोमलांगेषुवि
ध्येतीक्ष्णतरान्शरान् ॥ ॥ देवउवाच ॥ किमर्थंवल्गसेमूढभावेनाधमपामर २८ नावतारंगृहिष्येहंयदिजानेल्पकंवपुः ॥ तवेदानींहनिष्यामिक्षणेन

देहमल्पकम् २९ मूर्यदत्ताद्वराद्दुष्टदुष्कर्मनिरतोभवान् ॥ इदानींसगतःकालोमृत्युकालउपस्थिते ३० वलगनाकुशलस्त्वंकिंयुद्धमद्यकारिष्यसि ॥ त्वाहं
तुंमोचितुंदेवान्धृतंरूपमिदंमया ३१ अंतकालेसन्निहितेपुरुषार्थोव्वथाभवेत् ॥ मयाहतेमहास्थानंममप्राप्स्यासिदुर्लभम् ३२ ॥ सिंधुरुवाच ॥ याव
न्नच्छेद्मितेमूढकोमलंदेहमुत्तमम् ॥ तावद्दलगसियोयस्यभक्तःस्यात्समृतोव्रजेत् ३३ तस्यलोकंव्रथाहित्वंनप्रशंसांवदात्मनः ॥ ॥ कउवाच ॥ ए
वमुक्त्वामहादैत्यःसायकंपरभेदिनम् ३४ नकदाचित्प्रकटितमतितीक्ष्णंजयावहम् ॥ स्मृत्वासूर्यंधनुर्गृह्यसज्जंकृत्वान्ययोजयत् ३५ टणत्कारेणधनुषोनादितं
भुवनत्रयम् ॥ मुमोचबाणंतंदेवेमयूरेशेबलात्खलः ३६ सजज्वालदिशःसर्वागगनंविदिशोपिच ॥ तंदृष्ट्वासमयूरेशस्तत्याजपरशुंनिजम् ३७ वज्रात्सारतरंसर्व
वैरिदर्पहरंपरम् ॥ अदहत्सोपित्रींल्लोकान्प्रलयानलसन्निभः ३८ परशुःखंडयामासनभस्येवचतंशरम् ॥ धरायांपात्यशतधादैत्यहस्तमथाच्छिनत् ३९ धनुर्भा
रसहंघोरंनभस्येवगतंकरात् ॥ ततःक्रोधेनदैत्यःसचक्रंतत्याजशत्रवे ४० शतह्रदेवतच्छब्दंचकारगर्जयन्दिशः ॥ दृष्ट्वातत्रमयूरेशःशूलमुग्रंमुमोचह ४१
ददाहभुवनंतच्चपपातदैत्यमस्तके ॥ मुकुटंकुंडलेकर्णौखंडयित्वाययौपुनः ४२ मयूरेशकरंशीघ्रंयथानत्याजितंतथा ॥ ततःक्रोधादुवाचैनंछिन्नकर्णो
महासुरः ४३ पौरुषंदर्शितंतेद्यदर्शयिष्येतवापिच ॥ इदानींशरघातेनछिन्नभिन्नासिकांतव ४४ इत्युक्त्वाखड्गहस्तोसौतंजगामगुणेश्वरम् ॥ मयूरेशस्त
दाचक्रेनानारूपाणिसर्वतः ४५ आयुधानिचचत्वारिबिभ्रन्करचतुष्टये ॥ ततःसाविस्मयाविष्टोदशादिक्षुव्यलोकयत् ४६ ददर्शतत्रतंदेवंचतुरायुधभूषितम् ॥
ततःसलज्जितोगेहंनिजंगंतुंमनोदधे ४७ तथापिपुरतोपश्यन्मयूरेशंतथाविधम् ॥ आच्छाद्यनेत्रेसययौहृद्येनंसमलोकयन् ४८ उन्मील्यनेत्रेसोपश्यत्पु
रएनंशिखंडिनि ॥ ततोदैत्योबुबोधैनंस्वांतेरविप्रसादतः ४९ रणस्थलात्पुरींयातआच्छाद्यवदनांबुजम् ॥ हतशेषैश्चवीरैश्चतादृशैःपरिवारितः ५०
पर्यंकेन्यपतच्चिंतापर्याकुलितमानसः ॥ वीरास्तेस्वगृहंयाताश्चिंताव्याकुलचेतसः ५१ ॥ ॥ इतिश्रीगणेपुराणेउत्तरखंडेसिंधुवैरूप्यकरणंनामपंचदशाधि
कशततमोऽध्यायः ॥ ११५ ॥ ॥ कउवाच ॥ ॥ जयंप्राप्तेमयूरेशेययुस्तत्रमुनीश्वराः ॥ शिवोपिगिरिजायुक्तोययौतंचनिरीक्षितुम् १ औत्सुक्यात्पार्वती
चैनंसमालिंग्याब्रवीत्तदा ॥ पार्वत्युवाच ॥ अतिश्रांतोसिदैत्यस्यकठिनस्यरणेसुत २ कोमलानितवांगानिकथंशस्त्राणिसेहिरे ॥ कृतांतसदृशोदैत्योमा
यावीबलवत्तरः ३ सकथंकोमलांगेनत्वयायुधिविनिर्जितः ॥ प्रारुदत्करुणंदेवीधृत्वांकेनिजबालकम् ४ ततोमुनिगणाःशंभुर्वारयामासतांशिवाम् ॥ शिव
उवाच ॥ नजानीषेमयूरेशंसर्वकारणकरणम् ५ अनादिनिधनंदेवंवेदांतागोचरंविभुम् ॥ त्रयस्त्रिंशत्कोटिदेवैर्नुतंदेवारिदारणम् ६ सृष्टिस्थितिज्ञानहेतुंल
यहेतुमनामयम् ॥ भूभारोत्तारणार्थायनानारूपधरंपरम् ७ ब्रह्मांडव्याप्तरोमांकमेकानेकस्वरूपिणम् ॥ तपोबलसमायुक्तंयोगशास्त्रसमन्वितम् ८ माया
विभेदकंदेवंमायिनामपिमायिनम् ॥ बालभावेपिदैत्यानांहंतारंकिंनवेत्सितम् ९ ॥ कउवाच ॥ एवंस्तुतिंसमाकर्ण्यहृष्टासापार्वतीतदा ॥ ततोहृष्टोमयूरे

शोमुनीन्प्राहशिवंशिवाम् १० ॥ मयूरेशउवाच ॥ नअयंवज्रहस्तान्मेअन्यस्मात्तत्कथंभवेत् ॥ सर्वेषांनमनान्मातर्मुनीनामाशिषोपिच ११ शिवस्यवरदा
नेनासिंधुदैत्योजितोमया ॥स्कंदादयोजितायेनयुध्यंतेनहितेनते १२असंख्याताहतादेवादैत्यसेनाचरैर्नरैः॥ असृङ्नद्यःसंप्रवृत्तावीरहर्षकराबहु १३रणेनिपतिता
न्देवान्विचिन्वानोमुनीश्वराः ॥ कउवाच ॥ एवंमयूरेशवचोनिशम्यप्राहधर्मवित् १४ वसिष्ठोमुनिवर्यस्तंयामःसर्वेचलंतुवै ॥ ततोययौरणेद्रष्टुंमुनिभिस्तैर्मयू
रराट् १५ मज्जारक्तवसागंधोघ्रातुंयत्रनशक्यते ॥ अतिभीषणकायांस्तान्छिन्नभिन्नाननेकशः १६ दृष्ट्वाबीभत्सरूपांस्तान्प्रफुल्लान्किंशुकानिव ॥
विक्रांतिपरियातानिमनांसिदानवद्विषाम् १७ पश्यतांवीरराशींस्तान्वीरोपरिप्रतिष्ठितान् ॥ कांश्चिच्चजीवतःकांश्चिन्मूर्छितान्शस्त्रघाततः १८ कांश्चिच्चप्र
विशीर्णांगान्देवान्देवाव्यकर्षयन् ॥ सहसानविदुर्देवादेवान्वादानवानपि १९ अन्नुवंस्तत्रकेचिच्चत्वदर्थंमृत्युमागताः ॥ अंतेतेदर्शनंप्राप्तमित्युक्त्वाव्यसृ
जन्नसून् २० ॥ कउवाच ॥ एवंश्रुत्वातुतद्वाक्यंसाश्रुकंठोमयूरराट् ॥ भ्रमन्भ्रमन्ददर्शाग्रेमूर्छितंतुषडाननम् २१ पतदश्रुर्मयूरेशःस्नेहात्तंचाब्रवीदिति ॥
उत्तिष्ठोत्तिष्ठभद्रंतेकिंशेषेप्राकृतोयथा २२ श्रांतोसिदैत्यहननात्पच्छालिंगनमद्यमे ॥ प्रमार्जितस्तुहस्तेनततःसप्रोदतिष्ठत २३ अपश्यन्निकटेदेवपादपद्मंभ
यापहम् ॥ उवाचचमयूरेशंदर्शनात्तेगतंमम २४ सर्वदुःखंश्रमश्चैवविश्रांतश्चास्मिसांप्रतम् ॥ आलिलिंगमयूरेशंदोर्भिर्द्वादशभिस्तदा २५ उभौयातौरणं
द्रष्टुंगृहीत्वाचपरस्परम् ॥ अपश्यतांपुरःसुप्तंवीरभद्रमिषुक्षतम् २६ नंदिनंचशराघातैःपीडितंबलवत्तरम् ॥ भूतराजंचपुरतोविभिन्नमस्तकंतदा २७ क्रंदंतं
विकटंचैवपुष्पदंतंश्रशार्दितम् ॥ ललाटेदृढविद्धंचहिरण्यगर्भमेवच २८ मृतप्रायंचचपलंमृतंश्यामलमेवच ॥ लंबकर्णोनचाज्ञासीद्भ्रांत्याकंचनसंगरे २९
उदानवायुनाक्रांतःसुमुखस्तत्रचाभवत् ॥ परमंखेदमापन्नःसोमश्चरक्तलोचनः ३० शेतेस्ममूर्छयाभृंगीपंचास्यश्चमुमूर्षया ॥ शंखःप्रेतत्वमापन्नोभय
कृत्सर्वयोधिनाम् ३१ एवंदृष्ट्वासर्ववीरान्हतप्रायान्हतानपि ॥ चिंतयापरयाविष्टोपप्रच्छतंषडाननम् ३२ ॥ ॥ मयूरेशउवाच ॥ ॥ असुराश्च
स्वकीयाश्चमहावीराहतामृधे ॥ निजधामगताःसर्वेजीवतामत्रकागतिः ३३ ॥ ॥ स्कंदउवाच ॥ ॥ अनंतकोटिब्रह्मांडनायकस्त्वंगुणेश्वर ॥ चतु
र्दशानांविद्यानांसर्वासांचस्वयंनिधिः ३४ कलानांतत्रकिंप्रश्नंकरोषित्वंममांतिके ॥ नाहंमंत्रंविजानामिवेत्थत्वंहिनवैसुराः ३५ विवर्द्धयसिकीर्त्तिंत्वंनानादै
त्यविभंजनात् ॥ यथामतिब्रवीमित्वामाज्ञयाचस्मृतेर्बलात् ३६ पूर्वंतुत्रिपुरवधेशिवेनयुद्धमद्भुतम् ॥ कृतंतत्रमृतान्देवान्द्रोणाद्रेर्वल्लिजंरसम् ३७ दवक्ष
तेषुसंयोज्यजीवयामासतत्क्षणात् ॥ ॥ कउवाच ॥ ॥ श्रुत्वेत्थंवचनंदेवोजगादतंषडाननम् ३८ इदानींदैत्यकोव्यस्तुयुद्धार्थंबलवत्तराः ॥ आया
स्यंतितदाकोत्रयुद्ध्येत्ताभिःषडानन ३९ कश्चानेतुंव्रजेदाद्रिंवल्लीरसमनुत्तमम् ॥एवंब्रुवन्मयूरेशोमायामाविश्वकारह ४० उज्जीवयामासतदानिजांगवायुसंगतः ॥
ततस्तेहर्षसंपन्नाःप्रणेमुस्तंगुणेश्वरम् ४१ आलिलिंगुःपुनर्युद्धकर्त्तुंतंचविजिज्ञपुः ॥ त्वद्दृष्टिविनिपातेनतेजोनोद्विगुणीकृतम् ४२ ॥ ॥ गुणेश्वरउवाच ॥

ब्रह्मादयोदेवगणाःस्तुवंतिवःपराक्रमम् ॥ तारकासुरमुख्याश्चनिहतादैत्यदानवाः ४३ ॥ ॥ कउवाच ॥ ततस्तैःसहितोदेवैर्मयूरेशःशिवंययौ । नमस्कृ
त्यशिवंगौरींयुद्धायगंतुमुद्यतः ४४ आलिलिंगमुदागौरीशिवस्तंचगुणेश्वरम् ॥ ततःषडाननाद्यास्तेशिवमालिंगिरेमुदा ४५ वयंरणेनिपतिताःपुनःसंजीवि
ताहर ॥ मयूरेशांगसंभूतवायुनाद्भुतकारिणा ४६ पुनर्युद्धाययास्यामोनेनसार्द्धंशिवाधुना ॥ प्रसादात्तवजेष्यामःसर्वानेवासुरान्युधि ४७ ॥ इतिश्रीग०
उ०रणशोधनंनामषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ कउवाच ॥ ॥ सिंधुस्तल्पगताश्चिंतामवापमहतींतदा ॥ अग्निसंतप्तहृदयोविचारंनान्वपद्य
त १ निर्हर्षोम्लानवदनोनिस्तेजानिष्कलोपिसः ॥ ततउग्रात्मजादुर्गालावण्यलहरीशुभा २ चिंताशीविषदग्धंतंश्रुत्वागान्मंचकस्थितम् ॥ असंख्यभूष
णैर्यस्याःकबरीभातिमस्तके ३ कस्तूरीतिलकंयस्याललाटेभातिसुंदरम् ॥ कंठेहारंकटौकांचिंबिभ्रतींरत्नसंयुताम् ४ सर्वालंकारसंयुक्तांसर्वावयवसुंदराम् ॥
आगतांतुनिरीक्ष्यैवमंचकाभ्याशमुत्सुकाम् ५ बहिस्तत्सेवकायातास्ततःसापतिमब्रवीत् ॥ दुर्गोवाच ॥ किंचिंतांकुरुषेस्वामिन्यद्भाव्यंतद्भविष्यति ६ ईश्वर
स्यवशेलोकोनस्वतंत्रःकदाचन ॥ सर्वेषांमानसंत्वंकिमुद्वेजयसिमेपिच ७कोहेतुस्तेवदविभोततोयुक्तिंवदामिते ॥ कउवाच ॥ प्रियावाक्यंसमाकर्ण्यगंडकीना
यकस्तदा ८ सावधानमनाभूत्वावृत्तांतंतामथाब्रवीत् ॥ सिंधुरुवाच ॥ किंवदामिप्रियेश्लाघ्येमनःखेदकरंपरम् ९ युद्ध्यतोमेरणेकर्णौमयूरेशेनसादितौ ॥ समको
टिमितासेनानिहतापौरुषेणह १० स्कंदादयोमहावीराःपातिताःशरवृष्टिभिः ॥ अकस्मान्मेहतौकर्णौत्रिशूलंप्रेष्यशत्रुणा ११ आच्छाद्यमुखमायातोवाससा
निजमंदिरम् ॥ येनोपायेनमेशत्रुवधःस्यात्तंवदस्वमे १२ ॥ ॥ दुर्गोवाच ॥ ॥ वीरधर्मःकृतःसम्यङ्निहताःसर्वसैनिकाः ॥ नयशःप्राप्यतेस्वामिन्गो
ब्राह्मणसुरद्विषाम् १३ तद्द्वेषाच्चैवकल्याणंकस्यापिहिनजायते ॥ सेवनाद्वंदनाद्ध्यानात्स्मरणात्पूजनादपि १४ देवैरिंद्रादिभिःस्थानान्याप्तानिचस्थिरा
णिच ॥ यःसमःसर्वभूतेषुशुभाशुभफलप्रदः १५ तत्सेवयाभीष्टासिद्धिःकामधेनोरिवाभवत् ॥ अंकुरोजायतेतादृग्यादृग्बीजंहिउप्यते १६ अशुभात्क
र्मणोदुःखंसुखंस्याच्छुभकर्मणः ॥ अतःसंतःप्रकुर्वंतिशुभंकर्मसदादरात् १७ हितंचसर्वजंतूनांकायेनमनसागिरा ॥ अवतापुरुषार्थेनपीडितास्तेसुरर्षयः१८
पुरुषार्थःसविज्ञेयोयश्चतुर्णांहिसाधकः ॥ यन्मनोनार्थलुब्धंस्यात्परदारेषुनक्वचित् १९ सएवपुरुषार्थःस्यात्यश्चानिंद्यंनानिंदति ॥ शरणागतरक्षायांदृढो
धर्मपरायणः २० समःसर्वेषुभूतेषुपुरुषार्थःसगम्यते ॥ स्वामिन्मेपरमंवाक्यंशृणुतेहितकारकम् २१ अदुष्टवाक्सत्यशीलःस्वगुणानामकीर्तकः ॥ परो
पकरणेसक्तःपरपैशून्यवर्जितः २२ तत्कुरुष्वमहाभागममप्रीतिंयदीच्छसि ॥ मोचयस्वसुरान्सर्वान्प्रबद्धान्शक्रसंयुतान् २३ प्रयास्यातिमयूरेशोखिल
लोकप्रपालकः ॥ वत्स्यावःसुसुखंस्वामिन्नान्यथातुसुखंभवेत् २४ ॥ ॥ कउवाच ॥ ॥ एवंवाक्यामृतंतस्यास्तद्भूद्विषसन्निभम् ॥ मुमूर्षोरौष
धंयद्वद्वहरोगाप्लुतस्यह २५ क्रोधसंरक्तनयनोदुर्गांतांसिंधुरब्रवीत् ॥ नदग्धेहृदितस्याःसउपदेशोंहितावहम् २६ ॥ ॥ सिंधुरुवाच ॥ ॥ सम्यगुक्तंत्व

याभद्रेलोकनिंदाकरंवचः ॥ चातुर्यैतववित्रातंकार्याकार्यविदामया २७ नशत्रुंभजतेकोपिपरिपुर्मानपरायणः ॥ नारभेत्कृत्यमन्याय्यमारब्धंचेन्नतत्त्यजेत्
२८ ततोदुःखंसुखंवास्यादयशोयशएवच ॥ लाभोवाप्यथवालाभोजीवनंमृत्युरेववा २९ पूर्वंभद्रेमयासंधिःसाम्नातेननवैकृतः ॥ इदानींभावितायद्यत्तद्भ
वत्येवसर्वथा ३० पूर्वमेवहियज्जंतोर्लिखितंसाध्वसाधुवा ॥ कश्चिन्नपुरुषार्थेनकर्तुंशक्तोन्यथासति ३१ रणेमृतस्यस्वर्गोथख्यातिःस्याद्दिष्टपत्रये ॥
यातस्यशरणंशत्रोरयशोनरकेपिच ३२ पूर्वजैःसहितस्याशुजायतेनात्रसंशयः ॥ जानामितंमयूरेशंदेवदेवंजगद्गुरुम् ३३ संभूतंममनाशायरावणेराघ
वंयथा ॥ पातयिष्येशिरोस्याहमितिमेनिश्चितामतिः ३४ त्यजंतिजीवितंशूरानाभिमानंकदाचन ॥ नमेस्तिगणनासुभ्रुकृतांतस्यापिकर्हिचित् ३५ तत्रका
गणनान्येषांलज्जामेकर्णतःकृता ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वाभूषणानिवस्त्राणिचदधारसः ३६ केयूरंमुकुटंरत्नयुक्तंहारंचकुंडले ॥ तूणौख
ड्गंचखेटंचचापंसज्जंचशस्त्रिकाम् ३७ आच्छाद्यकर्णौरौक्मीयवस्त्रेणोष्णीषगेनच ॥ आययावुपविष्टःसभद्रासनमनुत्तमम् ३८ ॥ ॥ इतिश्रीगणेशपु
राणेउत्तरखण्डेदुर्गावाक्यंनामसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ छ ॥ ॥ कउवाच ॥ ॥ युद्धावेशदुराधर्षउपविष्टोमहासने ॥ सतदावी
रमुख्यांस्तानुपविष्टानथाब्रवीत् १ ॥ ॥ सिंधुरुवाच ॥ ॥ गतौममप्रधानौतौत्रैलोक्याकर्षणक्षमौ ॥ नतादृशोस्तिवीरोत्रयोमेहन्याद्रिपुंबलात् २ नैतादृ
शौबुद्धिमंतौपराक्रमजयैषिणौ ॥ वीराऊचुस्ततःसिंधुंमाचिंतांकुरुसर्वथा ३ यावद्वयंप्राणवंतोलघुकृत्यउपस्थिते ॥ किमर्थंचिंताकुलतांतावद्व्रजसिदैत्यरा
ट् ४ स्वापंकुरुमहाभागपर्यंकेपुष्पसंस्तरे ॥ कृतांतस्ताडितोयाभ्यांतयोःकस्माद्भयंभवेत् ५ एवमुक्त्वाकलःसिंधुंविकलश्चमहाबलौ ॥ शालकौतस्यदैत्य
स्यनिर्यातौयुद्धदुर्मदौ ६ नानायुद्धेषुकुशलौनानायुधधरावुभौ ॥ नानाभूषणवस्त्राढ्यौनानासेनासमन्वितौ ७ नानागर्जनतोव्योमचक्रतुर्नादसंयुतम् ॥
देवकोटिनिहंतारौअसंख्यवाहिनीयुतौ ८ ययुस्तत्पुरतोवीराःसिंदूरारुणमस्तकाः ॥ अग्निशस्त्रधरामुक्तकेशपाशाःसचंदनाः ९ लसच्छस्त्रधराःसर्वेयममत्तुमि
वोद्यताः ॥ ततःकरिघटायातानानाधातुविचित्रिताः १० अधिष्ठितामहामात्रैर्नानाभूषाविराजिताः ॥ तीक्ष्णदंताःसिंदुरिताघंटानादनिनादिताः ११ त
तोऽश्वसादिनोयातास्तनुत्राणविराजिताः ॥ धनुर्बाणधराःसर्वेलसच्छस्त्रविभूषिताः १२ अनेकयुद्धसंभाररथायातास्ततःपरम् ॥ अनेकवीरसंयुक्तानानासू
तविराजिताः १३ एवंतौशालकौयातौरणस्थानंरुषान्वितौ ॥ ददृशातेमयूरेशमाशीविषभुजिस्थितं १४ षडाननादिभिर्वीरैरन्यैश्चपरिवारितम् ॥ दृष्टा
तैस्तुतयोःसेनाघोरासाचतुरंगिणी १५ असंख्यातंबलंतस्यसमायातंविचित्रितं ॥ प्रेषितोदेवप्रवरैर्दूतोनीतिविशारदः १६ ज्ञात्वावृत्तांतमायातःसजगाद
सुरान्प्रति ॥ ॥ दूतउवाच ॥ ॥ कलश्चविकलश्चैवनानासेनासमायुतौ १७ जेतुंसुरान्समायातौनानायुद्धविशारदौ ॥ ताभ्यांयुद्धायसंप्राप्तौपुष्पदंतवृषावु
भौ १८ धनुषीसज्जतांनीत्वाषष्ट्याबाणैरविध्यतां ॥ दैत्यौबाणान्निवार्यैवतावुभौबाणवृष्टिभिः १९ छादितौशरघातेनघ्नतःस्मदेवसैनिकान् ॥ कलस्यखड्गख

ङ्गेनबिभेदसमहावृषः २० सैन्यमादायतस्याशुखङ्गंछित्त्वान्यपातयत् ॥ विकलस्यपुष्पदंतोधनुश्चिच्छेदसायकैः २१ ततस्तौमल्लयुद्धेनपरस्परमयुध्यतां ॥
तेसेनेयुध्यतांतत्रनानाशस्त्रास्त्रपत्रिभिः २२ मायाभिर्विविधाभिश्चपरस्परजयेच्छया ॥ ततःपपालदैत्यानांसेनाशस्त्रार्दिताभृशम् २३ केपिदेवाःपृष्ठलग्नामा
रयंस्त्वसुरांश्चतान् ॥ पादाघातेननिहतादैत्यसेनाचरानराः २४ मृतास्तक्प्रवहातत्रवाहिनीभीरुभीतिदा ॥ संप्रवृत्तामहाघोराभूतपक्षिप्रमोदिनी २५
ततोवेगात्समुड्डीयकलश्चविकलश्चह ॥ शस्त्रवृष्टिंमहोग्रांतौचक्रतुर्युद्धदुर्मदौ २६ तयाहतादेवसेनास्त्रवद्रक्तापपालह ॥ ततोवृषोहनत्सेनांशृंगाभ्यांचतयो
र्भृशम् २७ लत्ताभिश्चजघानाशुफूत्कारेणन्यपातयत् ॥ पुच्छाघातेनकांश्चिच्चचूर्णयामासदैत्यपान् २८ एवंतेनहतासेनानानादैत्यसमाकुला ॥ हाहाका
रोमहानासीद्दैत्यानांतत्रनश्यताम् २९ ततोतिबलिनौवीरौकलश्चविकलश्चह ॥ जगर्जतुरुभौरोषात्गर्जयंतौदिशोदश३० निनिंदतुस्तौवृषभंकिंत्वंयुध्यसिनौ
पुरः ॥ तृणादनेषुशक्तस्त्वंतृणरूपोसिसांप्रतम् ३१ दध्मातएवमुक्त्वातौतस्यशृंगेमहाबलौ ॥ विकृष्यनिन्यतुरुभौस्वसेनांचतुरंगिणीम् ३२ तंमोचितुं
पुष्पदंतोऽभिययौसहसाजवात् ॥ ततस्तंविकलोलत्ताप्रहारैःपातयद्भुवि ३३ ननर्दवाद्यघोषेणहर्षनिर्भरमानसः ॥ समूर्छितोमुहूर्त्तात्तुसंज्ञांप्रापदनातुरः
३४ ततोयोद्धुंसमायातौवीरभद्रषडाननौ ॥ कलःपर्वतघातेनशतधान्यपतद्भुवि ३५ वीरभद्रस्तुविकलंतलघातादपातयत् ॥ दृष्ट्वास्कंदेननिहतंकलंदैत्यं
महाद्रिणा ३६ ततोययुःस्वशिबिरंगणास्तेजयशालिनः ॥ ततःशस्त्रहताःकेचिज्जीवंतोगंडकींययुः ३७ शशंसुर्दैत्यराजायनानासेनायुतःकलः ॥ विकलश्च
हतोरोषाद्वीरभद्रादिभिर्गणैः ३८ गतास्तेशिबिरंदेवगणास्तुजयशालिनः ३९ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेकलविकलवधोनामअष्टादशोत्तरशततमोध्यायः
॥ ११८ ॥ कउवाच ॥ कलंचविकलंश्यालंदेवसेनाविघातिनम् ॥ निहतंवीरभद्रेणपर्वतेनमहासुरम् १ षडाननेनविकलंहतंतलप्रहारतः ॥ श्रुत्वाभद्रा
सनगतोनानावीरसमन्वित. २ प्रापसिंधुर्महाचिंतांस्मरंश्शिवसुतंतदा ॥ किंकरिष्यतिदेवोसौनाशमित्थंसुरद्विषाम् ३ इत्येवंचिंतयाविष्टोमूर्छामापम
हत्तराम् ॥ तावदाजग्मतुरुभौपुत्रावस्यमहाबलौ ४ धर्माधर्मौभद्रपीठेजनकंवाक्यमाहतुः ॥ कथंबिभेषिजनकशिवायाअर्भकाल्लघोः ५ नावाज्ञां
देहिदैत्येंद्रहनिष्यावःक्षणादमुम् ॥ संमुखेतौहतौवीरौमातुलौनौदिवंगतौ ६ उत्तीर्णौतौस्वामिकार्यंकीर्त्तिंकृत्वामहत्तराम् ॥ हत्वानेकविधांसेनांनानावीरैः
प्रपालिताम् ७ आवामपिप्रयुध्यावोथावोहत्वारिपुंबलात् ॥ अथवामोक्षमायावोनिहतौतेनचेद्रणे ८ यावदावांहिजीवावश्चिंतांतावन्माकुरु ॥ इंद्राद
यःसुरगणाःकारागारेधुनातव ९ यदात्वंविजितापूर्वंपितरस्तत्रकेभवन् ॥ आनीवोमस्तकंतस्यरिपोस्तवनसंशयः १० अन्यथादर्शयिष्यावोमुखंलोके
पुनःक्वचित् ॥ कउवाच ॥ एवंतयोःसमाकर्ण्यवचनंहर्षमाप्तवान् ११ तावूचेपरमंयुद्धंप्राप्तुंतंयशउत्तमम् ॥ नाशयित्वारिपुंघोरंयातंशीघ्रंममांतिकम् ॥
१२ एवमाकर्ण्यतद्वाक्यंईयतुर्युद्धलालसौ ॥ नमस्कृत्यपितुःपादौमातुर्गृह्यतदाशिषः १३ दशकोटिमितांसेनांप्रत्येकंगृह्यसत्वरौ ॥ रथाश्वहस्तिपादातै

र्नानाशस्त्रधरैर्युताम् १४ पत्तयोपियुर्हृष्टाःसिंदूरारुणमस्तकाः ॥ गजानानागिरिनिभानानाधातुध्वजान्विताः १५ अश्वाःसादीभिरारूढानानाश
स्त्रासिपाणिभिः ॥ गर्जद्भिर्मेघसदृशंगर्जयद्भिर्दिशोदश १६ ततःसेनामध्यगतौरेजतुर्भ्रातरावुभौ ॥ नानालंकारसंयुक्तौनानायुधधरावुभौ १७ रत्नकां
चनसंयुक्तकुंडलाभ्यांविराजितौ ॥ किरीटाभ्यांसुतेजोभ्यांभ्राजमानौमहाबलौ १८ मुक्तामणिमयौहारौबिभ्रंतौयुद्धदुर्मदौ ॥ प्रापतूरणभूमिंतौनाना
वादित्रनिस्वनैः १९ ददृशुर्वीरभद्राद्यास्तौचतांवाहिनीमपि ॥ निकटेतौसमालोक्यमयूरेशप्रचोदिताः २० आज्ञयाभिययुर्वीरभद्रोसौचषडाननः ॥ हिर
ण्यगर्भःसंक्रुद्धोभूतराजोविशालदृक् २१ असंख्यसेनयासार्द्धंततोयुद्धमवर्तत ॥ परस्परमयुध्यंततत:सेनाचराभृशम् २२ छिन्नांतःशिरांसिपादांश्चबाहूरूदरकं
दराः ॥ निहताश्वनिहन्यंतेतमसाच्छादितेरवौ २३ केचिच्चक्राणिमुमुचुर्भिंडिपालांस्तथापरे ॥ बाणवृष्टिंपरेचापिनानाशस्त्राणिकेचन २४ मल्लयुद्धंचतत्रा
सीत्सैनिकानांपरस्परम् ॥ एवंसासंहतासेनामयूरेशप्रपीडिता २५ पपालतत्रशेषायाविह्वलातुदिशोदश ॥ ततःषडाननःक्रुद्धोद्वादशायुधभूषितः ॥
२६ तैरायुधैर्जघानाशुसेनांतांदैत्यपालिताम् ॥ केषांचिद्बाहवोभिन्नाःकेपिमध्येद्विधाकृताः २७ केषांचिन्मस्तकाभिन्नाःकेषांचिच्चरणारणे ॥ एवंसा
नाशितासेनाहस्त्यश्वरथसंकुला २८ केपिस्वर्गंगताःकेचिद्रूपंप्रापुःषडाननम् ॥ निरीक्ष्ययेमयूरेशंजहुःप्राणान्प्रहारिताः २९ जग्मुस्तेतत्प्रसादेननिजधाम
महाबलाः ॥ तद्दृष्टिपातात्तद्यत्नंनष्टंसर्वंजनुःक्षनम् ३० दृष्ट्वाविशाखाविशिखेःसशिखैर्निहतांस्वकाम् ॥ सेनांतस्यसुतौवीरावधर्मोधर्मएवच ३१ युयुधाते
बहुविधंशस्त्रैरस्त्रैःशरव्रजैः ॥ चक्रतुर्मल्लयुद्धंतौमहासेनेनतत्क्षणात् ३२ तयोर्बलंनिरीक्ष्यैवकार्त्तिकेयोमहाबलः ॥ शिखयोस्तौदधाराशुषड्बाहुःषट्करैर्बलात् ॥
३३ भ्रामयामासबहुधापोथयामासभूतले ॥ शतखंडानिजातानितयोस्तुपततोर्भुवि ३४ जयंप्रापशिवसुतेनदुर्वाद्यानिसर्वशः ॥ जयत्वंहिमयूरेशजगुःसर्वेपि
सैनिकाः ३५ चत्वारस्तेययुर्देवंमयूरेशंनिजंप्रभुम् ॥ आलिलिंगुर्मुदातेतुपरस्परमथाब्रुवन् ३६ प्राप्ताइवपुनर्जन्ममुमुदुस्तेपरस्परम् ॥ शशंसुःसर्ववृत्तांतंशिवायै
चशिवायच ३७ सेनांचनिहतांमिथोःपुत्रौचबलवत्तरौ ३८ इतिश्रीगणेशपुराणेउत्तरखंडेएकोनविंशोत्तरशततमोऽध्यायः ११९ ॥ कउवाच ॥ हतशिष्टाःके
पिवीराःस्रवद्रक्ताःसुदुःखिताः ॥ सिंधुंसआगतंचेत्थंभीतभीताअथाब्रुवन् ॥ १ ॥ वीराऊचुः ॥ धनुर्धरनिबोधेदमतिदुःखकरंवचः ॥ धर्माधर्मौतवसुतौकृत्वा
युद्धंमहत्तरम् २ निन्यतुर्देवसेनांतौहत्वाहत्वायमक्षयम् ॥ ततःकोपिमहावीरोमुखैःषड्भिर्विराजितः ३ सोपिताभ्यांरणेघोरेपातितोधरणीतले ॥ पुन
स्तेनधृतौवीरौशिखायांतावुभावपि ४ भ्रामयित्वाबहुतरंपातितौतौधरातले ॥ शतधाशीर्णदेहौतौगतौतौस्वर्गमुत्तमं ॥५ ॥ कउवाच ॥ ॥ एवमाकर्ण्यत
द्वाक्यंन्यपतद्दैत्यपुंगवः ॥ शोकसागरमग्नोभूद्वज्राहतइवाचलः ६ यावमानैःसुहृद्वर्गैःसआश्वासितोबलात् ॥ मुहूर्तात्प्रकृतिंयातःशुशोचबहुदुःखितः
॥ ७ ॥ ॥ सिंधुरुवाच ॥ ॥ शक्रादयोलोकपालाजितायाभ्यांरणेपुरा ॥ तौहतौनुकथंवीरौषडास्येनमहाबलौ ८ विहायमृत्युलोकेमांकथंस्वर्गंगता

सुरसेनानिहंतारौकृतांतस्यांतकावुभौ ९ नानेष्येशत्रुमूर्द्धानंतदास्यंदर्शयेनच ॥ गमनावसरेप्रोक्तंतत्सत्यंकिंकृतंत्वया १० अथदुर्गांसखीभिस्तुत्र स्तेकोटरेतदा ॥ कथितोविस्तरेणैवरुदतीभिःसुदुःखतः ११ ॥ सख्युवाच ॥ ॥ भर्त्तारौदितितेसुश्रुधर्मौधर्मौमृतावितिं ॥ साथपर्यंकसुगतान्यपतत्प्र केषांग्रि १२ रंभेववातनिहताकोमलारुणपल्लवा ॥ सखीदुष्टवचोभिःसाबाणैरिवहृदिक्षता ॥ विस्रस्तकेशाभरणासाप्यरोदीत्तदाभृशम् १३ विस्रस्तव स्त्राविकसत्बिल्वचारुपयोधरा ॥ अश्रुश्यामलगंडासाशोकानलहतप्रभा ॥ १४ ॥ जघ्नेमुखंसापाणिभ्यांदंतासृक्सिक्तभूतला ॥ निरस्तदेहभावासा विकलाविगतत्रपा १५ सभांगणगतालुंठद्धठकृत्बालकोयथा ॥ सर्वेततःसभ्यवरारुरुदुर्दुःखकर्षिताः १६ प्रस्रवन्नेत्रसलिलाप्राब्रवीत्तान्सभासदः ॥ ॥ ॥ राज्ञीउवाच ॥ ॥ कथंसर्वेषुवीरेषुजीवत्सुतौसुतौमम १७ प्रेषितौरणभूमिंतौमामपृष्ट्वातुकोमलौ ॥ मयाशीर्भिर्नियुक्तास्यान्नतयोर्मरणंभवेत् १८ नहिमेवचनंधातामिथ्याकर्त्तुंसमीहते ॥ याभ्यांजितादेवगणास्तौकथंनिधनंगतौ १९ क्वद्रक्ष्याम्यहमेतौयौजिग्यतुर्मदनंरुचा ॥ बुद्धीनांयौसरस्वंतौतौमां त्यक्त्वाकथंगतौ २० तयोःशोकाग्निनादग्धामरिष्याम्यहमद्यवै ॥ इत्युक्त्वान्यपतद्भूमौनिघ्नतीहृदयंमुहुः २१ ततःसख्योनागराश्चबोधयामासुरंजसा नमातःकोपिशोकेनयोमृतःपुनरागतः २२ मृत्युलोकेचिरंस्थातानेक्षितोनश्रुतोपिच ॥ विहायहनुमंतंचकल्पशास्त्हतंबलिम् २३ व्यासंपरशुरामंचबिभी षणमथापिच ॥ द्रौणिंनान्यश्चिरंस्थायीनभूतोनभविष्यति २४ ब्रह्मादीनामभवेन्मृत्युःकातत्रगणनात्मनः ॥ रोदनंतेनकर्त्तव्यंनस्यान्मृत्युःकदास्यचेत् २५ क्षीणेऋणानुबंधेचस्त्रीपुत्रःपशुरेवच ॥ नतिष्ठतिध्रुवंतत्रकृतःशोकोवृथाभवेत् २६ यथाकाष्ठंकाष्ठगतंपूरेस्याच्चवियुज्यते ॥ तद्वज्जंतुर्वियोगंचयोगंचप्राप्नु तेवशः २७ नानापक्षिगणारात्रावेकवृक्षागतायथा ॥ प्रातर्दशदिशोयांतितत्रकिंपरिदेवनम् ॥ ॥ कउवाच ॥ ॥ एवंप्रबोधिनादुर्गासिंधुश्चजनएवच २८ हठाच्छोकंनिगृह्यासावासनेसंविवेशह ॥ उपहासंकरिष्यंतिसपत्नारुदतामिति २९ दुर्गांधृत्वाबलाल्लोकानिन्युरंतःपुरंहिताम् ॥ निश्वसंतीपपा तासौपर्यंकेशोककर्षिता ३० सासिंधुःक्रोधसंयुक्तोजग्राहशस्त्रसंचयम् ॥ पुत्रयोर्निष्कृतिंकर्त्तुंहयारूढोययौरणम् ३१ यातेतस्मिन्महासैन्यंचतुरंगं रणोत्सुकम् ॥ उड्डीयोड्डीयधावंतोययुःपूर्वंपदातयः ३२ नानावर्णाएकरूपानानाशस्त्रास्त्रपाणयः ॥ ततोवारणसंघातानानाधातुविचित्रिताः ३३ घंटा भरणशोभाढ्यादानोदकप्रवर्षिणः ॥ चीत्कारभीषितपराःमहारावभयंकराः ३४ ततोश्वाःप्रागमन्सादियुक्तावायुजवारणम् ॥ खुराघाताद्विस्फुलिंगानिपतं तोधरातले ३५ शुशुभुःसादिनस्तत्रखेटकुंतासिपाणयः ॥ चंदनागरुलिप्तांगानानामालाविभूषिताः ३६ तनुत्राणभृतःसर्वेकंकटभ्राजिमस्तकाः ॥ ग्रसंत इवचाकाशंनादयंतोदिशोदश ३७ रथास्ततोगमन्नानामहावीरैरधिष्ठिताः ॥ नानाशस्त्रास्त्रसंपूर्णाधनुस्तूणीरसंयुताः ३८ तन्मध्येशुशुभेसिंधुर्महामुकुटकुं डलः ॥ नानाशस्त्रधनुष्पाणिस्तूणीरक्तभूषणः ३९ वीरकंकणशोभाढ्यःकटिसूत्रांगदप्रभः ॥ क्रोधसंरक्तनयनोलोकत्रयबुभुक्षया ४० वाद्यस्सुसर्ववाद्येषु

बंदिषुचस्तुवत्सुच ॥ यावद्यातिमहावेगात्तावद्दूतस्तमब्रवीत् ४१ पितातेयातिदैत्येशतंप्रतीक्षस्वसुव्रत ॥ परावृत्त्यैक्षतेयावत्तावदश्वगतंसुतम् ॥
४२ अपश्यदस्याशगतंनमश्चक्रेसचापितम् ॥ ददौपितातत्रसुतंदुर्गंकृत्वाचभूचरैः ४३ उपदेशंचकृतवान्सुखायामुत्रचेहच ॥ चक्रपाणिरुवाच ॥ गर्वेणव
र्तसेपुत्रश्रियामत्तोनबुध्यसे ४४ अर्थज्ञानेमहावृद्धाःप्रष्टव्याभूतिमिच्छता ॥ अग्रेशुभेच्छयापूर्वमशुभंनसमाचरेत् ४५ अल्पेनकर्मणानाशंपुण्यमे
त्यशुभेनह ॥ अणुरग्निर्दहेत्सर्वंपुण्यंदोषस्तथासुत ४६ नलाभोदृश्यतेपुत्रबद्धेषुतेषुतेकाचित् ॥ सएवपुत्रोयोमातापितृवाक्यकरोनिशम् ४७ तस्यचोल्लंघने
पुण्यनाशमेतिचजायते ॥ दोषजालंमोहजालंनानानिरयदंसुत ४८ अतःशृणुहितंवाक्यंमोचयाशुसुरान्सुत ॥ मुक्तेषुतुभवेन्मित्रंमयूरेशोऽखिलार्थदः ४९
नचेहद्वेषतःकश्चित्सुखंप्राप्तोधरातले ॥ विनाशंप्रापितादेवैर्हिरण्याक्षादयोऽसुराः ५० ॥ कउवाच ॥ इतिपितृवचःश्रुत्वाचुकोपातितरांसुतः ॥ धिक्कृत्यपित
रंप्राहममभ्रांतिरभूत्पुरा ५१ चतुरस्त्वंपितामेवैज्ञानंसम्यक्प्रकाशितम् ॥ आभाषसेमूढवत्तातकस्त्वाशयामंमुखंव्रज ५२ येनमेनिहतासेनापरार्धगणितापितः ॥
तेनेदानींकथंसामकर्तव्यमयशस्करम् ५३ कुशाक्षमालाधरणंराजधर्मेहिनेष्यते ॥ तस्माद्दयानरेंद्रेणनकार्याशत्रुसंचये ५४ निर्दयत्वमरावेवस्मृतंनीत्यामये
यथा ॥ एवमुक्त्वानमस्कृत्यपितरंसिंधुदैत्यराट् ५५ परावृत्यबलात्तंसययौयोद्धुंरणोत्सुकः ॥ ५६ ॥ इतिश्रीग०उ०पितृसिंधुसंवादोनामविंशत्यधिकशत
तमोऽध्यायः १२० ॥ ॥ छ ॥ ॥ कउवाच ॥ वीरभद्रादिभिर्वीरैःसुखासीनंगणेश्वरम् ॥ आययुर्वेगतोदेवाभीताःश्वाससमाकुलाः १ न्यवेदयंत
वृत्तांतंस्वयंसिंधुःसमागतः ॥ मेनिरेतेपुनःप्राप्तंकालंसंहर्तुमात्मनः २ ततोहर्षान्मयूरेशोरुरोहशिखिनंतदा ॥ आयुधानिचचत्वारिप्रगृह्यचजगर्जच ॥ ३ ॥
नमस्कृत्यशिवंवेगाद्ययौप्रद्योतयन्दिशः ॥ तदाशीःकवचोवीरसहितोवाहिनीयुतः ४ यावत्सपुरतोयातिसिंधुंहंतुंसमुद्यतः ॥ तावत्षडाननःप्राहयामियुद्धा
यविघ्नराट् ५ तिष्ठत्सुबहुवीरेषुकथंयुद्धाययास्यसि ॥ पौरुषंपश्यसर्वेषांतस्मिन्क्षणेरणंकुरु ६ एवमुक्त्वानमस्कृत्यययौयुद्धायषण्मुखः ॥ चतु
रंगबलंगृह्यसिंधुसेनामथावधीत् ७ सोपितान्यहनत्सेनांनानाशस्त्रैःशरव्रजैः ॥ सहस्वप्रहरस्वाद्यहन्मिसंमुखतांव्रज ८ एवंकोलाहलोप्यासीद्वीराणां
तत्रयुद्ध्यताम् ॥ पेतुर्वीराःशस्त्रहताःशरजालगतासवः ९ छिन्नांगाभिन्नपादाश्चछिन्नबाहूरुमस्तकाः ॥ असिभिर्भिंडिपालैश्चकुंतैर्मुद्गरसंचयैः १० मा
रयन्मिश्रितावीरास्तान्परान्युद्धदुर्मदान् ॥ कोलाहलोमहानासीत्क्ष्वेडितैर्हेषितैरपि ११ वाद्यध्वनिप्रतिध्वानैर्बृंहितैरथनेमिभिः ॥ असंबद्धमभूद्युद्धंसेनयो
...र्वि १२ यथाप्रतिज्ञंवीरास्तेनिजघ्नुर्मस्तकंमुखम् ॥ नेत्रेबाहूदरंनाभिंपादौगुल्फौचजानुनी १३ कोपिहस्तेनपादेनकोपिखड्गेननाशयन् ॥ असिना
णान्बंधकारेमहत्यपि १४ अस्तंयातेदिनकरेदक्षाःपृष्ठानिजघ्निरे ॥ देवानज्ञात्वासुराजघ्नुरितरानितरेपिच १५ असृक्प्रवाहस्तत्रासीत्प्रधनेतुमु
॥ वहन्प्रेतानिषजीवान्हुंकारेणचतान्परे १६ बलान्निष्काशयामासुर्विशल्यांश्चक्रिरेयथा ॥ इतोनसेनेपंचाहाविरामंयुद्धलंपटे ॥ एवंपदाताःसिंधो

स्तेकोटिशोथहताःसुरैः १७ ततोगात्तद्गजानीकमसंख्यंशस्त्रसंयुतम् ॥ धिष्ठितंसादिभिर्वीरैर्नानायुद्धविशारदैः १८ वीरभद्रादयोजघ्नुर्गजसेनांदुरत्ययाम् ॥
केषांचिन्मस्तकाभिन्नाःकेषांचिच्चकराद्विजाः १९ अग्निशस्त्रधरैःकेचित्पातितावीरसंयुताः ॥ वीरभद्रोतिवीर्येणगजेनैवाहनद्गजम् २० पेततुरष्टधाभि
न्नावुभावपितदागजौ ॥ ततःषडाननोनिघ्नन्गजानीकेव्यरोचत २१ वीरैस्तुसहितान्मत्ताननंतान्करिसंचयान् ॥ शक्त्याशरैरनेकैःसोनाशयत्षड्धनुश्च्युतैः
२२ हिरण्यगर्भोनेकवीरयुतांस्तानप्यपातयत् ॥ भूतराजोपिशस्त्रैस्तान्गजान्नानाविधान्रणे २३ न्यपातयद्वीरयुक्तान्नाराचक्षतजीवितान् ॥ सिंहोभूत्वा
पुष्पदंतोदारयामासतान्गजान् २४ नंदीतुगजरूपेणबभंजतान्गजान्बहून् ॥ अन्यैश्चशरसंघातैःसर्वेतेविनिपातिताः २५ कंचित्पुच्छेगृहीत्वैवभ्राम
यित्वापरेक्षिपत् ॥ उभावपिलयंयातौदृढाघातेनचूर्णितौ २६ ततोश्वचारायुयुधुर्गजानीकेनिवारिते ॥ असंख्यातान्निजघ्नुस्तान्सुरान्नानायुधैरणे २७
पतितामूर्छितादेवाःपुनःसंज्ञांचलेभिरे ॥ ततोविविधुरश्वस्थान्वीरानश्वानथोरुषा २८ क्रोधेनदेवान्घ्नंतिस्महयारूढामहासुराः ॥ सुरांस्तान्निन्युरंतंतेशस्त्रा
स्त्रशरवृष्टिभिः २९ षड्वीराःपुनरायाताःश्रुत्वादेवाह्वतान्युधि ॥ ततस्तेपुनराजघ्नुर्दैतेयानश्वसादिनः ३० चत्वारस्तेचतुर्दिक्षुप्रायुध्यन्बलवत्तरम् ॥ रर
क्षतुरुभौसैन्यंस्वीयंदेवगणैर्युतम् ३१ मारयामासुरश्वांस्तानश्वस्थान्वीरसंयुतान् ॥ अयुध्यन्पादचारेणनिघ्नंतोरिगणान्बहून् ३२ कोटिकोटिमितास्त
त्रपेतुस्तेतुशरार्दिताः ॥ नंदीभृंगीहतानश्वान्पतितान्वीक्ष्यसादिनः ३३ पादाघातेनतेनाशुपातयन्नंदिकेश्वरः ॥ वीरभद्रोप्यसंख्यातानश्वयोधान्न्यपातय
त् ३४ हतेषुमुख्यवीरेषुचतुर्भिःसर्वतोदिशम् ॥ कल्पांतइवतत्रासीद्दैत्यानांरणकर्मणाम् ३५ ततःकेचित्सुरगणान्प्रपेदिरेशरणंतदा ॥ हाहाकारोमहाना
सीद्दैत्यसैन्याश्वसादिषु ३६ एवंहत्वाखिलांसेनांषड्वीरास्तेमुदंययुः ॥ वाद्यस्तुसर्ववाद्येषुजगर्जुस्तुष्टुवुर्विभुम् ३७ जयःप्राप्तोमयूरेशप्रभावात्स्मरणा
न्नतेः ॥ ततःसिंधुःसमाकर्ण्यशरणागतवाक्यतः ३८ वृत्तांतंहतसेनायाहस्त्यश्वरथसंयुतः ॥ अमात्यान्सर्ववीरांश्चप्रोवाचयुद्धलालसः ३९ ॥ सिंधुरुवाच ॥
येयेगच्छंतियोद्धारस्तान्घ्नंतिमिहतान्परैः ॥ इदानींयामितंहंतुंगुणेशंचस्वयंबलात् ४० ॥ कउवाच ॥ इत्युक्त्वाश्वेडितेनासौगगनंचदिशोदश ॥ नादयामा
सत्रीन्लोकान्ग्रसन्भूस्वर्गमंडलम् ४१ योजयित्वाक्षिपत्बाणमाकर्णकर्षणाजवात् ॥ सेनायांवीरभद्रादिपालितायांमहाबलैः ४२ निरीक्ष्यसर्ववीरान्सबाणं
धनुषिसंदधे ॥ अस्त्रमंत्रेणसहसाशतजमेनदैत्यराट् ४३ कपीटयोनिःसहसातस्माज्जातोददाहताम् ॥ देवसेनांचपृथिवींसवनांचसपर्वताम् ४४ ततोपश्य
न्सैनिकास्तेदह्यमानान्कृशानुना ॥ पुरुषंवह्निसंभूतंजटिलंदीप्ततेजसम् ४५ विद्युज्जिह्वंकरालास्यंगिलंतंदेवसैनिकान् ॥ षडाननादयोभीताहुद्रुवुस्तेदि
शोदश ४६ यंयंसभक्षातिस्माजौससप्रापस्मरन्मुदा ॥ निजधाममयूरेशमेवमत्ताखिलाचमूः ४७ यतोयतोयातिसेनाततस्तद्वह्निसंभवः ॥ तनूनपाद्दह
त्येनांप्रलयाग्निरिवज्वलन् ४८ एवंसावह्निनादग्धामयूरेशस्यवाहिनी ॥ धूमांधकारेमहतिनप्राज्ञायतकिंचन ४९ ततःसर्वेमयूरेशपृष्ठभागंसमाश्रिताः ॥

त्राहित्राहीतिजल्पंतोदग्धास्तेजातवेदसा ५० अनिवार्यमहास्त्रंतद्दृष्ट्वादेवोमयूरराट् ॥ निस्तेजास्त्वितथामासभीतोलोकेल्पबुत्वतः ५१ शिवःप्रसादंचेत्कुर्यात्त
दैवात्रजयोभवेत् ॥ इत्युक्त्वापरशुंगृह्यमंत्रयित्वाक्षिपन्बलात् ५२ महसाजितसूर्यःसगर्जयन्गगनंदिशः ॥ यातोदहन्वैरिसैनांजगत्कल्पानलोयथा ५३
तस्मादपिमहानेकःपुरुषःसमजायत ॥ यस्यास्येसर्वभूगोलःकिंतुमास्यतिसांबरः ५४ पुरुषःपुरुषेणासावस्त्रमस्त्रेणवैतदा ॥ अयुध्यतांततोजग्मुर्द्वंद्वंदेवर्षय
स्तदा ५५ दैत्यास्त्रंभक्षितंतेनकृतांतास्त्रेणसत्वरम् ॥ ययौसेनांचनिर्दग्धुंज्वालामालीवहव्यभुक् ५६ दैत्यराजोपितंदृष्ट्वाबाणवृष्टिमवासृजत् ॥ एकस्मा
न्मंत्रिताद्बाणादनंतानिःसृताःशराः ५७ देवसेनाचरास्तेषुनिमग्नावेगशालिनः ॥ मयूरेशःक्रोधवशान्नानास्त्राणितदासृजत् ५८ तैरस्त्रैर्दैत्यराजस्यनिरस्यास्त्रा
णिसर्वशः ॥ अभक्षयद्दैत्यसेनांसकालपुरुषःपुनः ५९ यतोयतःपलायंतेऽसुरास्तत्रचयातिसः ॥ चिंताक्रांतस्ततोदैत्यःकर्त्तव्यंनाभ्यपद्यत ६० किंकर्त्तव्यंकगं
तव्यंकनस्थेयमचिंतयत् ॥ अस्तंयातेदिनकरेस्वधामप्रत्यपद्यत ६१ गच्छन्स्खलन्पतन्भूमौनष्टकुंडलभूषणः ॥ नगरंप्राविशदसौततःशंभुरिवापरः ६२
गुप्तएवावसत्क्वापिस्त्रीणांचैवानुजीविनाम् ॥ जगर्जसगणोदेवोज्ञात्वातद्वृत्तमाशुसः ६३ तेननादेनसहसानादितंभुवनत्रयम् ॥ संजहारकृतांतास्त्रंमंत्रविद्धुजगंय
था ६४ स्वनिवेशंजगामाशुमयूरेशोगणैर्वृतः ६५ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखण्डेएकविंशोत्तरशततमोध्यायः ॥ १२१ ॥ ॥ छ ॥ ॥
॥ कउवाच ॥ ॥ सिंहासनस्थेदेवेशेमयूरेशेगणैर्वृते ॥ गौतमाद्यामुनिगणाःप्रशशंसुर्गुणेश्वरम् १ ॥ ॥ ऋषयऊचुः ॥ ॥ येनशक्रोजितःसंख्येनागैः
शेषोधरातले ॥ तस्यकागणनान्येषांमोपियुद्धेजितस्त्वया २ रक्षिताबहवस्तस्मात्सिंधोर्दुष्टात्सुरेश्वर ॥ गणानांसर्वलोकानामन्यथाजीवनंकथम् ॥ ३ ॥
कउवाच ॥ ॥ इत्थंतेषुवदत्स्वेवतत्कीर्तिंगिरिजायया ॥ आलिंग्यप्राहपुत्रंसाश्रांतोसियुद्धलालसः ४ ततःशीघ्रंसमायातोभर्गोदेवंसस्वजे ॥ उवाचेंद्रा
दिभिर्देवैरसाध्यंकृतवानसि ५ परब्रह्मस्वरूपस्यचराचरगुरोरपि ॥ सर्वज्ञस्यधराभारोद्धरणेनिरतस्यते ६ महिमानंस्वरूपाणिब्रह्माद्यानविदुःसुराः ॥ गौ
तमाद्याश्चमुनयःशक्तिःकातत्रनोभवेत् ७ ॥ ॥ कउवाच ॥ ॥ इत्थंवदतिदेवेशेशिवेथपार्वतींजगौ ॥ नारदोमुनिवर्योसौमातःशृणुवचोमम ८ बहवोवास
राजाताअत्रस्थानेकदाशिवे ॥ मोक्षमेष्यतिदैत्योसौसिंधुर्दुष्टतमोनघे ९ कदाविवाहोभवितामयूरेशस्यसुव्रते ॥ वासवाद्याजितायेननाशंसकथमेष्यति १०
आज्ञांदेहिगमिष्यामःपुनरेष्यामसत्वरम् ॥ कदास्युःसिंधुदैत्यात्तेदेवाश्चमुक्तबंधनाः ११ दैत्यस्यमरणंमातरसाध्यंदृश्यतेमया ॥ ॥ कउवाच ॥
सुरर्षेर्वाक्यमाकर्ण्यप्रोचुस्तंतेगणास्तदा १२ षडाननादयोवीरानारदंदेवदर्शनम् ॥ उद्दीपयंतंतंदेवंमयूरेशंसुरेश्वरम् १३ आश्चर्यंनारदमुनेसर्व
ज्ञस्यापितेनघ ॥ एतदर्थंसमायातोनिजधाम्नोभुवंविभुः १४ अवाप्तसकलार्थोसौमयूरेशोखिलार्थकृत् ॥ अगुणस्यगुणेशस्यगुणक्षोभविधायिनः १५ स्व
रूपंकिंनजानासिब्रह्माद्यैरनिरूपितं ॥ मयूरेशस्यवीर्यंचभूभारोत्तारणैषिणः १६ इंद्राद्यवध्यानसुरान्निघ्नतोबलशालिनः ॥ अनेककोटिब्रह्मांडनायकस्या

खिलात्मनः १७ उत्पत्तिस्थितिसंहारकारिणोजगतामपि ॥ कउवाच ॥ ॥ इतितद्भारतींश्रुत्वापुनःप्रोवाचनारदः १८ यदाद्रक्ष्यामितंदैत्यंनिहतंमुक्ति
मागतम् ॥ तदासर्वंवचःसत्यंमन्येहंनान्यथाक्वचित् १९ निशम्येत्थंवचस्तस्यचुक्रोधसमयूरराट् ॥ जगर्जक्रोधदीप्तोसौनादयन्भुवनत्रयम् २० दहन्निव
त्रिलोकींसशीर्णयन्पृथिवीमपि ॥ मेघगंभीरयावाचाबभाणतंमुनिंतदा २१ ॥ ॥ मयूरेशउवाच ॥ ॥ मान्योसिब्रह्मपुत्रत्वात्सर्वज्ञत्वान्मुनीश्वर ॥ अतस्त्वां
प्रब्रवीम्यद्यमर्यादांपरिपालयन् २२ तवप्रसादात्ब्रह्मांडंप्राशयिष्येतत्क्षणात् ॥ भूगोलंन्युब्जतांनेष्येशोषयिष्येंबुधीनपि २३ चालयिष्येतथामेरुंमुने
निश्वासवायुना ॥ शृणुनारदसत्यांमेप्रतिज्ञामद्यसर्वग २४ हनिष्येसिंधुदैत्यंतंनात्रकार्याविचारणा ॥ कउवाच ॥ ॥ इत्युक्त्वाप्रययौयोद्धुंबर्ह्यारूढोविनाय
कः २५ आहतुस्तंतदानंदीभृंगीचोभौविनायकम् ॥ आवांयुद्धंकरिष्यावोपश्यनौरणकौशलं २६ इत्युक्त्वावायुवेगेनगतौतौगंडकींपुरीं ॥ वीरभद्रोभूत
राजोययौश्रुत्वातयोर्गतिं २७ तदाचकंपेधरणीशेषोविह्वलतांययौ ॥ ददृशुस्तेचचत्वारोदुर्गंदुर्गंसुरेश्वरैः २८ पर्यंकेसुखमासीनंसिंधुंचारान्यवेदयन् ॥
चत्वारःपर्वताकारागर्जयंतोदिशोनभः २९ वीरास्तवपुरींयाताःकिंस्थितोसिमहासुर ॥ श्रुत्वेत्थंवचनंसिंधुर्मग्नश्चितार्णवेक्षणात् ॥ दुर्गापिचिंतयावि
ष्टासासोपिश्यामतामियात् ३० अधोमुखतयाचोभौदुःखंप्रापतुरंजसा ॥ दुर्गाप्रोचेमहाराजमयोक्तंनकृतंत्वया ३१ तस्येदंहिफलंप्राप्तमिदानींकिंनुचिंतया
॥ एवंवदतिसावाक्यंतावत्तेवीरसत्तमाः ३२ नानाश्चर्ययुतंनानारत्नकांचननिर्मितम् ॥ अनेकशिखरंतस्यसभामंडपमाययुः ३३ उड्डीयसहसाभृंगीत
स्थौक्रुद्धस्तुमंडपे ॥ बभंजमंडपंसद्यःसबलेनमहाबलः ३४ अंगणेतस्यखंडानिपतितानिसमंततः ॥ ततस्त्रयोपितेवीराभृंगिनंसमुपागताः ३५ युद्धावेशा
रुणमुखाःससैन्यंतंग्रसिष्णवः ॥ दृष्ट्वातत्कर्मतेषांतुसिंधुसेनाययौपुरः ३६ खड्गचर्मधनुर्बाणकुंतमुद्गरधारिणी ॥ घ्नंतुघ्नंतुमहावेगांश्चतुरोवीरपुंगवान् ३७
इत्युक्त्वाचतुरोहंतुमागतादैत्यसैनिकाः ॥ असंख्याताश्चतुर्भिस्तैर्युयुधुर्जातसंभ्रमाः ३८ हन्मित्वांजहिमत्थंचेत्यत्रकोलाहलोभवत् ॥ ततोभूत्तुमुलंयु
द्धंचतुर्भिर्दैत्यसेनया ३९ रजोंधकारेशस्त्राणांप्रकाशेनावलोकयन् ॥ शतकोटिहतादैत्याश्चतुर्भिःसंयुगेतदा ४० असंख्यातान्महावीरान्पोथयामा
सुरोजसा ॥ गृहीत्वापादयोस्तेतान्भ्रामयित्वापुनःपुनः ४१ नभोक्षिपन्महावीरास्तेभूमौशतधापतन् ॥ शरैरस्त्रैश्चशस्त्रैश्चपादेनकरघाततः ४२ ना
शितासर्वसेनासादैतेयीरणमंडले ॥ ततस्तेतद्गृहंगत्वासिंधुंपर्यंकसंस्थितं ४३ रणस्तंभंसमानिन्युर्धृत्वाकेशेषुवेगतः ॥ ततःसिंधुर्महास्त्रैःसचक्रेयुद्धंतुतैः
सह ४४ व्यसृजत्पन्नगास्त्रंसभुजगैर्वेष्टितास्त्रयः ॥ गरुडास्त्रंचसहसाभृंगिणामोचितत्क्षणात् ४५ अग्न्यस्त्रेमोचितेतेनपर्जन्यास्त्रंचसोसृजत् ॥
वाय्वस्त्रेमोचितेतेनपर्वतास्त्रंचतेमृजन् ४६ ततस्तेमल्लयुद्धेनयोधयामासुरादरात् ॥ नंदीतुपातयामासमुकुटंदैत्यमस्तकात् ४७ भृंगीतुताडयामा
सपृष्ठेदैत्यंमहारुषा ॥ वीरभद्रोग्रहीद्भार्यांकचेतस्याथपश्यतः ४८ भूतराजोजघानैनंलत्तयावैरभावतः ॥ दुर्गानेत्रेनिमील्यैवनापश्यत्तंतथाविधम् ४९ निंदं

तीतस्यकर्माणिपपालनिजमंदिरम् ॥ आवेशात्तिंसधुदैत्योपिवीरभद्रंपदेग्रहीत् ५० मुष्टिनानंदिनंहत्वाशिखामाक्रम्यभृंगिणः ॥ अपातयद्भूमितलेभूतरा
जोमुमूर्छह ५१ मुकुटंमस्तकेन्यस्यमुक्ताहारंगलेतथा ॥ तुरंगवरमारुह्यशेषानाहूयसैनिकान् ५२ हनिष्येद्यमयूरेशमित्युक्त्वायुयुधेपुनः ॥ जगर्जसहसा
दैत्योगर्जयन्विदिशोदिशः ५३ गतेषुतेषुवीरेषुचतुर्षुगणनायकम् ॥ वदत्सुदैत्यसेनायांसर्वेषांनाशनंकृतम् ५४ आनीतःसिंधुदैत्योपिरणभूमिंगणेश्वर ॥
अल्पसेनाचरैर्युक्तोमोचयैनंभवार्णवात् ५५ वयमेवहनिष्यामोनाज्ञासीत्तवविघ्नराट् ५६ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेद्वाविंशोत्तरशततमोध्यायः १२२
॥ कउवाच ॥ आगतंसिंधुमाकर्ण्यजहर्षेसमयूरराट् ॥ नीलकंठंसमारुह्ययोद्धुंयुद्धायसत्वरः १ चतुर्भिरायुधैःसर्वाभासयन्विदिशोदिशः ॥ कल्पांतमेघस
दृशनादेननादयन्नभः २ ददर्शपुरतःसिंधुंयुद्धायकृतनिश्चयम् ॥ सोप्येनंसमरेदृष्ट्वापश्यतिस्मपुनःपुनः ३ यथासिंहंनागराजोगरुडंचाथवायुभुक् ॥ मधु
कैटभौयथाविष्णुंत्रिपुरोवाशिवापतिम् ॥ ४ ॥ शुंभोवापिनिशुंभोवाजगदंबांमहाबलाम् ॥ ततोयुद्धंप्रकुर्वतेनानाशस्त्रैःपरस्परम ५ जपाकुसुमसंका
शौदेहौजातौतदातयोः ॥ ददाहपृथिवींसाद्रिंशस्त्रसंघट्टजोनलः ६ चकंपेपृथिवीसर्वासाब्धिद्वीपासपर्वता ॥ बाणमादायसिंधुःसवन्ह्यस्त्रेणनिमंत्र्यच ॥
॥ ७ ॥ ससर्जदग्धुंतंदेवंमयूरेशंरणांगणे ॥ सदहन्देवसेनांतांदशदिक्षुससर्पह ॥ ८ ॥ ततःपाशंमयूरेशोमेघास्त्रेणसुयोज्यच ॥ न्यक्षिपद्दैत्यसेनायांकंपयन्
भुवनत्रयम् ९ अशमच्चततोवह्निर्जलधाराभिवृष्टिभिः ॥ प्रभूतेनाथतमसादिशोव्याप्तादशापिच १० विशीर्णाःपर्वतास्ताभिःपतितावृक्षसंचयाः ॥ अयंकिं
प्रलयःप्राप्तइत्यशोचत्सदैत्यराट् ११ पवनास्त्रेणतान्मेघांस्तदासिंधुर्न्यवारयत् ॥ सवायुःकंपयामासगगनंचदिशोदश १२ ततोदेवोमंत्रयत्सकमलंनि
जहस्तके ॥ पर्वतास्त्रेणसहसातत्याजदैत्यपुंगवे १३ उन्मूलयतद्रुमान्व्योमद्योतयच्चदिशोदश ॥ अगच्छद्दैत्यसेनायांप्रासुवत्पर्वतान्बहून् १४ असंख्या
तैर्गिरिवरैश्छादितंपृथिवीतलं ॥ नस्थातुमवकाशोभून्नचगंतुमथापिच १५ पवनंकुंठितंदृष्ट्वापर्वतान्सर्वतोपिच ॥ वज्रास्त्रंप्रेरयामासततोवज्राणिनिर्ययुः ॥
१६ असंख्यातैश्चवज्रैश्चपर्वताश्चूर्णितास्तदा ॥ ततोंकुशंमयूरेशोवज्रास्त्रेणन्यमंत्रयत् १७ ससर्जतेषुवज्रेषुवज्रयुद्धमभूत्तदा ॥ तच्छब्देनचकंपेभूःपाताला
निदिशोनभः १८ न्यपतद्वज्रघातेनवह्निर्लोकानददाहसः ॥ परस्परंनिरस्तानिवज्राण्यंतर्दधुस्तदा १९ ततोवदन्महादैत्योमायान्प्रतिमहारुषा ॥ किमनेन
प्रयोगेणभस्मकुर्यांक्षणादमुम् २० शिवबालंशिवास्तन्यपानदक्षंशिवोचितं ॥ इत्युक्त्वाभिद्रवद्दैत्योहंतुंतंसगुणेश्वरम् २१ दधारतंनिरीक्ष्यैवमायांतंदैत्य
पुंगवम् ॥ विराड्रूपोमयूरेशोबिभेदसहसानभः २२ चरणाक्रांतपातालःश्रोत्रव्याप्तदिगंतरः ॥ सहस्रपादंसहसानिरीक्ष्यसहस्रनेत्रंचसहस्रशीर्षं २३ खंरो
दसीव्याप्यचतिष्ठमानंसिंधुर्ममूर्छाथापतच्चभूमौ २४ आच्छादयंतंहस्तेनव्योमसर्वंसुरेश्वरम् ॥ सावधानमनाःकिंचित्सस्माररविजंवरम् २५ ॥ सिंधुरुवा
च ॥ रविणापूर्वमुक्तोहंवरदानेमहौजसा ॥ आच्छादयेद्योगगनमेकहस्तेनरेसुर २६ सतेमुक्तिपदंसद्योनेष्यतेबहुकालतः ॥ अतोनेनरणेनालंयत्वभा

व्यंतद्भविष्यति २७ पुनर्निरीक्ष्यमाणोसौहस्त्यकायंददर्शतम् ॥ षड्भुजंतुमयूरेशंपरंविस्मयमाययौ २८ ततोवरुद्धदेवेशोमयूरेशःशिखंडिनः ॥ उपस्पृश्यज
लंशुद्धंजजापपरमंमनुम् २९ परशुंमंत्रयामासमहोन्थापदिगंतरम् ॥ लक्षीकृत्यरिपोर्नाभिंसुधामंत्रेणसंयुतम् ३० स्फोटयन्निवब्रह्मांडंक्रोधसंरक्तलोचनः ॥
ज्वालामालाकुलंतंसमुमोचगिरिजासुतः ३१ समोच्यमानोगगनंनादयन्विदिशोदिशः ॥ आसयन्महसापृथ्वींसपर्वतवनाकराम् ३२ दृष्ट्वादैत्यःसमायांतं
परशुंकालसन्निभम् ॥ शीघ्रंचक्रेधनुर्घोरंशरंयावद्वियोज्यते ३३ तावत्सबिभिदेनाभिममृताभियुतंलघु ॥ अमृतेनिःसृतेदैत्योवाताहतइवद्रुमः ३४
पपातसहसाभूमौवज्राहतइवाचलः ॥ प्रसार्यवक्त्रंरुधिरंवमन्प्राणान्विसृज्यसः ३५ मयूरेशप्रतापेनमुक्तिंप्रापसुदुर्लभाम् ॥ पश्यतांसर्वलोकानांतदद्भुत
मिवाभवत् ३६ अवतेरुर्विमानानियुद्धंद्रष्टुंस्थितानिह ॥ पपातपुष्पवृष्टिश्चशनैर्मेघाजगर्जिरे ३७ अशीशमद्रजोभौमंववौवातःसुखावहः ॥ प्रसेदुश्च
दिशःसर्वागंधर्वामधुरंजगुः ३८ ननृतुश्चाप्सरःसंघास्तुष्टुवुर्मुनिदेवताः ॥ षडाननादयोवीरामयूरेशंमुदायुताः ३९ ॥ सर्वेऊचुः ॥ परब्रह्मरूपंचिदानंद
रूपंसदानंदरूपंसुरेशंपरेशम् ॥ गुणाब्धिंगुणेशंगुणातीतमीशंमयूरेशमाद्यंनताःस्मोनतास्मः ४० जगद्वंद्यमेकंपरंकारमेकंगुणानांपरंकारणंनिर्विकल्प
म् ॥ जगत्पालकंहारकंतारकंतंमयूरेशमाद्यंनताःस्मोनताःस्मः ॥ ४१ ॥ महादेवसूनुंमहादैत्यनाशंमहापूरुषंसर्वदाविघ्ननाशम् ॥ सदाभक्तपोषंप
रंज्ञानकोशंमयूरे० ॥ ४२ ॥ अनादिंगुणादिंसुरादिंशिवायामहातोषदंसर्वदासर्ववंद्यम् ॥ सुरार्यंतकंभुक्तिमुक्तिप्रदंतंमयूरे० ४३ परंमायिनंमायिनाम
प्यगम्यंमुनिध्येयमाकाशकल्पंजनेशम् ॥ असंख्यावतारंनिजाज्ञाननाशंमयूरेशमा० ४४ अनेकक्रियाकारणंश्रुत्यगम्यंत्रयीबोधितानेककर्मादिबीजम् ॥ क्रि
यासिद्धिहेतुंसुरेंद्रादिसेव्यंमयूरे० ४५ महाकालरूपंनिमेषादिरूपंकलाकल्परूपंसदागम्यरूपम् ॥ जनज्ञानहेतुंनृणांसिद्धिदंतंमयू० ४६ महेशादिदेवैःसदासे
व्यपादंसदारक्षकंयोगिनांचित्स्वरूपम् ॥ सदाकामरूपंकृपांभोनिधिंतंमयू० ४७ सदाभक्तानांत्वंप्रभसपरमानंदसुखदोयतस्त्वंलोकानांपरमकरुणामाशु
तनुषे ॥ षडूर्मीणांवेगंसुरवरसदानाशयविभोततोमुक्तिःश्लाघ्यातवभजनतोनंतसुखदात् ४८ किमस्माभिःस्तोत्रंगजवदनतेशक्यमतुलंविधातुंवारम्यंगुण
निधिरसिप्रेमजगताम् ॥ नचास्माकंशक्तिस्तवगुणगणंवर्णितुमहोत्वदीयोयंवारांनिधिरिवजगत्सर्जनविधिः ४९ ॥ कउवाच ॥ एवंस्तुत्वापुनस्तेसंप्रार्थ
यामासुरादरात् ॥ यदुक्तंतेमयूरेशतत्कृतंपरमंवचः ५० सर्वेषांसुरसंघानामवध्योयंहतोसुरः ॥ ततोगात्पार्वतीतत्रजहर्षेचालिलिंगतम् ५१ शिवोपि
प्रययौतत्रसमालिंग्यतमब्रवीत् ॥ सम्यक्कृतंत्वयावत्सत्रैलोक्यंहर्षाभिर्भरम् ५२ सिंधोर्वधःसर्वसुरैरसाध्योनचतेश्रमः ॥ पराक्रमवतःसर्वलोकरक्षारतस्य
च ५३ चतुर्वेदानिरूप्यस्यसर्वविद्यानिधेरपि ॥ एवमुक्त्वागतास्तेतुसर्वेस्वस्थानमादृताः ५४ मयूरेशंनमस्कृत्यततोदेवाब्रुवंश्चतम् ॥ इदंयःपठतेस्तोत्रं
सकामान्लभतेखिलान् ५५ सहस्रावर्तनात्कारागृहस्थंमोचयेज्जनम् ॥ अयुतावर्तनान्मर्त्योसाध्यंयत्साधयेत्क्षणात् ५६ सर्वत्रजयमाप्नोतिश्रियंपरमदुर्ल

भाम् ॥ पुत्रवान्धनवांश्चैववशतामाखिलंनयेत् ५७ ॥ कउवाच ॥ एवमुक्त्वाह्यनुज्ञाताःसाध्वित्युक्त्वाययुःसुराः ॥ मयूरेशोगणैर्युक्तःस्वधामप्रत्यपद्यत ५८
इतिश्रीगणेशपुराणेउत्तरखण्डेत्रयोविंशत्युत्तरशततमोध्यायः १२३ ॥ ॥ ७ ॥ ॥ कउवाच ॥ पतितेसिंधुदैत्येतुहतशेषारणेस्थिताः ॥ आययुर्गंडकींयाव
त्तावत्तेचिंतयायुताः १ उग्रादुर्गाचक्रपाणिरतिष्ठन्विह्वलाश्शम् ॥ तावत्तेषांदुष्टचिह्नंबभूवविविधंतदा २ उदक्शिराःप्रसुष्वापकश्चित्तत्राशुभावहः ॥ जानु
नोर्मस्तकंन्यस्यतस्थौतूष्णींचलन्निव ३ हनौपाणितलंन्यस्यतस्थौकाचिन्मुदंविना ॥ एतस्मिन्नंतरेदूतायमदूताइवाययुः ४ अतिम्लानमुखादीनानाम्रुव
न्मूकतांगताः ॥ पृष्टस्तेप्राहुरपरेवृत्तांतंरणभूगतम् ५ ॥ दूताऊचुः ॥ असंख्यातान्महावीरान्हत्वासिंधुर्दिवंगतः ॥ बालानस्मान्परित्यज्यतेनहीनारुदामहे ६
निरीक्ष्यदेवान्निहतान्क्रुद्धोगाद्गिरिजासुतः ॥ अस्त्रैरस्त्राणिसंवार्यमुमोचपरशुंशितम् ७ तेनासिंधुर्मृतस्तत्रपतितोधरणीतले ॥ मुमूर्छुस्तत्रसर्वेपितदीया
नागराश्चह ८ श्रुत्वावार्तांदूतमुखाद्रुरुदुःसर्वएवते ॥ विललापाथदुर्गासाजघानाशिरउत्कटम् ९ मुक्तकेशामुहुर्वक्त्रंनिघ्नतीगतभूषणा ॥ उग्राचजननीचा
स्यचक्रपाणिःपितातदा १० पौराश्चरुरुदुस्तत्रनिघ्नंतःपाणिनामुखम् ॥ अवनौशिरआस्फाल्यलुलुठुर्घोरनिस्वनाः ११ कश्चिद्धूलिंनिचिक्षेपमुखेशिरसिदुःखि
तः ॥ हस्तपृष्ठंददंशान्यास्ताभ्यांभूमिमथाहनत् १२ अशपन्गिरिजापुत्रंस्त्रियोभंक्त्वाकरांगुलीः ॥ उग्रोवाच ॥ नानायत्नैस्तपसासूर्यंतुष्ट्वानत्वास्तुत्वालं
घनैःसर्वदानै ॥ प्रातःकालान्महतस्त्वंकथंचिच्छूरोमार्नीकेननीतोसिरेत्वम् १३ त्रिलोकनायकेनाहंश्लाघ्यात्रैलोक्यमंडले ॥ शपिष्यंतिचमांलोकाहतभाग्यासि
सांप्रतम् १४ जितःकृतांतःपूर्वंतेकथंतेनसमागमः ॥ प्राप्तस्त्वयाकथंपुत्रनजितःपुनरेवसः १५ सकामोगिरिजापुत्रस्त्वयियातेदिवंसुत ॥ मामपृष्ट्वाकथंया
तःस्वर्गंलोकंसुखावहम् १६ दुःखितायांमयिसुतकथंसंतोषमेष्यसि ॥ गर्जंतिनैवजीमूतस्त्वयिगर्जतिपुत्रक १७ निःशब्दःसकथंपुत्रपतितस्त्वंरणांगणे ॥
दुर्गोवाच ॥ देहैक्यंकृतवान्धातादंपत्योर्वेददर्शनात् १८ प्राणैक्यंनकृतंकस्मात्ब्रह्मणामूढबुद्धिना ॥ नाहंशचीचसावित्रींसौभाग्यमदगर्विता १९ गणया
मिनचान्याश्चसाकथंविधवाभवम् ॥ स्वहस्तेनचकस्तूरींचंदनंचयदाभवान् २० चर्चतिस्मतदांगानिशीतलानिममाभवन् ॥ इदानींदह्यमानानिशोकेनतानिनि
र्वप २१ नभक्षयसिपूर्वंत्वंमद्विनाविषमण्वपि ॥ सकथंमांविनास्वर्गसुखंभोक्ष्यसिताद्दशम् २२ अपराधंविनाभृत्येनोदासीनाभवंतिहि ॥ साधवःसमशीला
श्चतत्कथंमामुपेक्षसे २३ उपाधिरहितंप्रेमकृतंनानाविधंपुरा ॥ अनिर्वाच्यंकथंत्यक्त्वातद्गतोसिसुरांतक २४ ॥ कउवाच ॥ तपोवृद्धाज्ञानवृद्धाःप्राब्रुवन्निष्ठुरं
वचः ॥ नरोदनंप्रशंसंतिधर्मशास्त्रविदोजनाः २५ यदश्रुसुहृदामास्येप्रेतस्यतत्पतेद्ध्रुवम् ॥ तस्मात्तस्यहितंयत्स्यात्तत्कर्तव्यंदयावता २६ विचार्यमाणेतस्या
पिमोक्षोदायिकृपावता ॥ निर्गुणेनचिदानंदघनेनब्रह्मरूपिणा २७ दयापरवशाजन्मविभ्रतालोकशंकृता ॥ मयूरेशेनसंग्रामेनिघ्नतासंमुखंचतम् २८ आत्मनो
नैवमरणंनोत्पत्तिःक्वापिविद्यते ॥ अनादित्वान्निर्गुणत्वान्नित्यत्वाद्वेदनिश्चयात् २९ स्वार्थंहिरोदतेजंतुर्हितंप्रेतस्यनेहते ॥ असंख्यभारवाट्देवीनभारंसहतेधरा ३०

प्रेतस्यशेषःकमठोवराहोसौधराधरः ॥ इत्युक्त्वातेतदाशोकंविजहुर्वृद्धवाक्यतः ३१ उग्राचचक्रपाणिश्चदुर्गाचसखिभिःसह ॥ नागराश्चापिशोचंतोययुःसंग्रा
ममंडलम् ३२ ददृशुःसेवकैःसिंधुंवीज्यमानंरणांगणे ॥ पतितंवक्त्रकमलंव्यादायसितलोचनम् ३३ असृक्स्रवंतंदुर्गंधंपक्षिश्वापदसंकुलम् ॥ उपविष्टास्तुप
रितःशोचंतोभृशदुःखिताः ३४ अंकेकृत्वाशिरस्तस्यदुर्गाशोचतखरस्वना ॥ पादसंवाहनंनाथहस्ताभ्यांपूर्वमाचरम् ३५ जनमध्येनतच्छक्यमुत्तिष्ठप्राण
नायक ॥ शत्रौजीवतिनिद्रांत्वंकथंवीराधिगच्छसि ३६ तन्मुखेस्थापयित्वास्यंहाहाकारंचसाकरोत् ॥ न्यषेधन्वृद्धविज्ञास्तांततउग्राब्रवीद्वचः ३७ चक्रपा
णिःपिताचास्यंक्षालयंतौशुशोचतम् ॥ उत्तिष्ठवत्सकिंशेषेशेषेरिपुगणेसति ३८ वज्रीवज्राहतइवपतितोधरणीतले ॥ इदानींबालयुद्धेत्वंकथंनिपतितोभुवि ३९
जितःकृतांतोभ्रूक्षेपात्तद्दशांकथमागतः ॥ किंचिद्वाक्यंवदविभोहृदयानंदकारकम् ४० यस्यशब्देनत्रैलोक्यंकंपतेस्मपुरानघ ॥ कथंस्ववचनंनाद्यवदसेमंदविक
म ४१ नावाभ्यामपराद्धंतेयेनमौनंत्वमाश्रितः ॥ नभाषसेरोषवशात्सेनाशेषसमन्वितः ४२ कथंविह्वलतांयातःकामंयोजितवान्रुचा ॥ ततोविज्ञाश्चवृ
द्धाश्चनानादृष्टांतदर्शनैः ४३ समादध्युःप्ररुदतोमृतानुमरणंनहि ॥ रामोदाशरथिःकिंनुलोकांतरगतोनहि ४४ विक्रमेणरिपून्जित्वागतःकिंनरघूत्तमः ॥ अ
न्येपिशतशोभूपास्त्वत्कृतेमरणंगताः ॥ कीर्तिंनानाविधांकृत्वास्वर्गस्थाःसुखमश्नुते ४५ ॥ ॥ कउवाच ॥ ॥ ततस्तेसंस्कृतिंचक्रुर्बिल्वचंदनदारुभिः ॥ दुर्गा
सहैवसंयातापातिव्रत्यगुणान्विता ४६ ततोययौमयूरेशंचक्रपाणिःसनागरः ॥ नमस्कृत्यप्रतुष्टावबद्धांजलिपुटःशनैः ४७ राजोवाच ॥ निर्गुणस्त्वंपरात्मासिच
राचरगतिर्विभो ॥ त्रयीगम्योगुणाध्यक्षोविरजोविश्वनायकः ४८ तवैवमाययादेवामोहितास्त्वांनतेविदुः ॥ अहंधन्योनागरिकाधन्यास्त्वद्दर्शनाद्विभो ४९ कउ
वाच ॥ एवंतेनस्तुतोदेवःकरुणाब्धिर्मयूरराट् ॥ उवाचपरमप्रीतःसर्वशास्त्रार्थतत्त्ववित् ॥ ॥ देवउवाच ॥ ॥ वरंवरयमत्तस्त्वंचक्रपाणेहतार्भक ५० राजो
वाच ॥ यदितुष्टोसिदेवेशयदिदेयोवरोमम ॥ तदागृहानुपागच्छपुनीहिनगरीमिमां ५१ ॥ कउवाच ॥ एवमाकर्ण्यतद्वाक्यंबर्हिणंससमारुहत् ॥ ययौसनगरंप
श्चात्त्र्यंबकोगिरिजायुतः ५२ अग्रतस्तेगणाःसर्वेमुनयोहर्षनिर्भराः ॥ वाद्यत्सुसर्ववाद्येषुययुस्तेगंडकींपुरीम् ५३ नानाध्वजपताकाभिर्युतांसंसिक्तपद्धतिम् ५४
इतिश्रीगणेशपुराणेउत्तरखंडेचतुर्विंशत्युत्तरशततमोध्यायः १२४ ॥ कउवाच ॥ ॥ सभांसंवारयामासचक्रपाणिःपुरोगतः ॥ पराध्यैस्तरणैर्वस्त्रैःपताकाध्वजचा
मरैः १ नानारत्नेषुदीप्तेषुभूमिस्तंभगतेषुच ॥ अनंतोदृश्यतेयत्रसंक्रांतप्रतिमोनरः २ ददर्शनगरींदेवोनानाध्वजविराजिताम् ॥ प्रासादशिखरारूढाःपश्यंतिस्मासु
रस्त्रियः ३ ततोमुक्ताःसुरास्तेतंसंमुखंचक्रपाणिना ॥ आययुर्माधवःशक्रोनलऐलविलोपिच ४ मरुद्रविःशशीचान्येवाद्यघोषेणसत्वरं ॥ स्वस्ववाहात्समुत्तीर्यप्र
णेमुःसर्वएवतं ५ आलिलिंगुर्मयूरेशंदेवाःपौराश्चसादरम् ॥ माधवश्चमयूरेशंदृष्ट्वाहर्षसमन्वितः ६ प्रशशंसुःसिंधुवधात्सर्वेहर्यादयःसुराः ॥ देवाऊचुः ॥ आक्रांतं
विष्टपंयेनसहतःक्षणमात्रतः ७ दत्तानिस्वपदान्याशुनेदृग्दृष्टोनवाश्रुतः ॥ अत्रयेवैष्णवाःशैवाशाक्ताःसौराश्चतेप्यमुम् ८ तत्तद्रूपंनिरीक्ष्यैवपुपूजुःपरया

मुदा ॥ मयूरेशजयस्वेतिश्रुत्वावाचःसुविस्मिताः ९ बालकाश्चसुसंपन्नामुग्धाःप्रौढाश्चयोषितः ॥ पुपूजुर्मनसादेवंवृद्धाश्चतरुणास्तदा १० चक्र
पाणिगृहेदेवोमध्येसिंहासनेशुभे ११ उपविष्टोमयूरेशोविबुधाश्चसमंततः ॥ मुनयश्चगणाःसर्वेसप्तकोटिमितामुने १२ ननृतुर्बंदिनःसर्वेधन्यादेवा
नृपास्तथा ॥ ननृतुश्चाप्सरःसंघाजगुस्तेनारदादयः १३ चक्रपाणिस्ततःसर्वान्संपूज्यविधिवत्तदा ॥ उवाचचसभामध्येधन्यंमेजन्मकर्मच १४ इंद्रादयोलोक
पालाःसमितौयस्यमेधुना ॥ शतजन्मार्जितैःपुण्यैर्मयूरेशोनिरीक्षितः १५ ॥ ॥ कउवाच ॥ ॥ इंद्रोदृष्ट्वामयूरेशंप्रथमंपूजितंरुषा ॥ अब्रवीत्सहसाभ्रांतो
माययाजगदीशितुः १६ ॥ शक्रउवाच ॥ ॥ चतुर्मुखोपिलक्ष्मीशोजगदुत्पत्तिकारकः ॥ मूढोसिचक्रपाणेत्वमर्भकस्यप्रपूजनात् १७ अस्मान्नधिकृत्यय
न्मोहात्पूजितोबालकस्त्वया ॥ जनकंसर्वलोकानांत्यज्यसंहारकारकम् १८ त्रैलोक्यजननीमंबांसृष्टिस्थित्यंतकारिणीं ॥ रविंत्रैलोक्यनेतारंत्रयीकर्मप्रवर्त
कम् १९ हित्वासंपूजितोबालोनेदंसम्यक्कृतंत्वया २० ॥ ॥ कउवाच ॥ ॥ एवंवदतिदेवेंद्रेचक्रपाणिस्तदाब्रवीत् ॥ रुद्रात्सूर्यात्कुबेराच्चशक्राच्चमरुतोन
लात् २१ दृष्टःपराक्रमोतीवसिंधुदैत्यविनाशनात् ॥ मोक्षात्सर्वसुराणांचकारागाराद्गुणेश्वरः २२ योवतीर्णोभुवोभारंहर्तुंशिवनिवेशने ॥ परमात्मानंत
शक्तिर्नानादैत्यविभंजनः २३ ॥ ॥ कउवाच ॥ ॥ एवंवदतितस्मिंस्तुश्रुतःशब्दःसुरैर्महान् ॥ मूर्छिताःपतिताःकेचिद्ब्रह्मांडस्फोटशंकया २४ चकंपेध
रणीसर्वानप्राज्ञायतकिंचन ॥ कोटिसूर्यप्रकाशेनसहसाच्छादितंजगत् २५ ततस्तैस्त्रिदशैस्तत्रदृष्टोदेवोतिसुंदरः ॥ नानालंकारसंयुक्तोदशबाहुर्गजाननः २६
एवंदृष्ट्वास्वरूपंतेविस्मितास्त्रिदशास्तदा ॥ पुनस्तमेवददृशुःपंचरूपिणमीश्वरं २७ पद्मासनगतंमध्येवक्रतुंडंशिवंपुनः ॥ आग्नेय्यांनैर्ऋतेसूर्यंपार्वतीमारुते
पिच २८ नारायणंतथैशानेततोभ्रममिताःसुराः ॥ ततस्तेशुश्रुवुर्व्योमवाणींभ्रमनिवारिकाम् २९ आराध्योयंसर्वजनैरेकोजातःसपंचधा ॥ अनादिनिध
नोदेवोजगद्व्यापीगजाननः ३० अयमेवसदापूज्यःसर्वविघ्नविनाशनः ॥ देवैर्मनुष्यैर्यक्षैश्चनागैरक्षोभिरेवच ३१ एतस्मिन्पूजितेपंचपूजनंचभविष्यति ॥
नबुद्धिभेदंतनुयादेतस्मिन्नरकायसा ३२ ॥ ॥ कउवाच ॥ ॥ श्रुत्वैवंतेमयूरेशंशुंडादंडविराजितम् ॥ ददृशुर्वत्रिमुख्यास्तेआद्यमोंकाररूपिणम् ३३ ततः
प्रबुद्धास्तेदेवास्त्यक्त्वाभ्रांतिंस्मयंचतम् ॥ पुपूजुर्जयशब्दैस्तंसर्वांतर्यामिणंविभुम् ३४ ततःपुपूजेहर्षेणचक्रपाणिर्गुणेश्वरम् ॥ पंचामृतैःशुद्धजलैर्दिव्यवस्त्रै
श्चभूषणैः ३५ पुष्पैर्धूपैश्चदीपैश्चनैवेद्यैर्विविधैरपि ॥ फलतांबूलनिचयैर्दक्षिणाभिरनेकशः ३६ नीराजनैर्मंत्रपुष्पैर्नतिभिःस्तुतिभिस्तदा ॥ तथैवपूज
यामासभक्त्यासर्वसुरानपि ३७ उवाचतान्नृपवरोधन्योहंचप्रपूजनात् ॥ यतोनैतादृशःक्वापिजातःसर्वसमागमः ३८ ततस्तत्राब्रवीत्दृष्टोनारदश्चतुरा
ननम् ॥ ॥ नारदउवाच ॥ ॥ सिद्धिबुद्धिविवाहार्थमाज्ञयातेऽब्जसंभव ३९ शिवंशिवांचविज्ञाप्यनिश्चयःप्राङ्मयाकृतः ॥ मयूरेशायसम्यक्तेदातव्ये
बहुलक्षणे ४० ततःसर्वेसुरादेवंब्रह्माणंमन्मथातुराः ॥ प्रत्येकंतेययाचंतममदेहीतिसादरम् ४१ ततोब्रह्मातयोर्हस्तेमालांदत्वाब्रवीदिदम् ॥ ॥ कउवा

च ॥ त्रयस्त्रिंशत्कोटिसुरेष्वेकोयोभासतेत्त्वदि ॥ ४२ ॥ तमेववृणुतंदेव्यौमालाभ्यांमत्समक्षतः ॥ त्यक्त्वासर्वान्सुरांस्तेतुसिद्धिबुद्धीउभेअपि ॥
४३ मयूरेशगलेमालेनिक्षिपेतांमुदातदा ॥ विमनस्कास्ततोदेवाअसृजन्श्वासमारुतम् ४४ ताभ्यांजानुगताभ्यांतुशुशुभेसमयूरराट् ॥ ब्रह्मायथाविधित
योर्विवाहमकरोत्तदा ४५ उवाचचसभामध्येमयालब्धंत्त्वदिदिस्थितम् ॥ न्यवेदयत्तंदेवेशंमयूरेशंविधानतः ४६ अद्ययावन्मयैतेवैपालितेबहुयत्नतः ॥
इदानींतेमयादत्तेरक्षस्वबहुयत्नतः ४७ ततइंद्रादयोदेवामयूरेशंव्यजिज्ञपुः ॥ तवप्रसादाद्देवेशमुक्ताःकारागृहात्ततः ४८ ततःसिंधुर्गतोमोक्षंस्वस्थानंकृपया
तव ॥ यास्यामोदेह्यनुज्ञांनोमुनिभिर्गौतमादिभिः ४९ ॥ कउवाच ॥ ददावाज्ञांमयूरेशोयातुकामान्मुदातदा ॥ पार्वतीचस्नुषेचोभेस्वांकमारोप्यसाद
रं ५० मयूरेशंचपरमंहर्षमापशिवान्विता ॥ ददौदानान्यनेकानिवासांस्याभरणानिच ५१ यइदंशृणुयान्मर्त्योविवाहंचवधंशुभम् ॥ सिंधोर्जयंगणेशस्य
सर्वकामाल्लँभेन्नरः ५२ इतिश्रीगणेशपुराणेउत्तरखंडेपंचविंशोत्तरशततमोऽध्यायः १२५ ॥ कउवाच ॥ सिद्धेविवाहेचततोमयूरेशःशिखंडिनम् ॥ आरुह्यसह
सागंतुंनगरींस्वामियेषसः १ स्वंस्वंवाहनमारूढागीर्वाणास्तत्क्षणेनच ॥ यांतिस्मपुरतस्तस्यमुनयःपृष्ठतोययुः २ अन्वयुर्नागराःसर्वेस्त्रियश्चबालकानिच ॥
आनंदयुक्तानगरात्सहसाचक्रपाणिना ३ वाद्यत्सुसर्ववाद्येषुननृतुश्चाप्सरोगणाः ॥ रणभूमिंगतोयावन्मयूरेशोखिलैर्वृतः ४ तावत्स्कंदादयोवीराःप्रार्थयां
चक्रिरेविभुं ॥ वीराऊचुः ॥ सेनाचरादैत्यगणैर्निहतायुद्धसंभ्रमात् ५ उत्तस्थुःसर्वएवैतेत्वत्कटाक्षामृतोक्षिताः ॥ तान्दृष्ट्वाजीवितांस्तेनसर्वेदेवाश्चनागराः ६
विस्मयंपरमंप्राप्ताःसाधुसाध्विब्रुवंस्तदा ॥ ततोयोजनमात्रंचदत्वामार्गमत्रस्थितः ७ देवोब्रवीच्चक्रपाणिंमूर्ध्निदत्वाकरंशुभम् ॥ आलिंग्यदशदोर्दंडैःशत्रुप
क्षभयंकरैः ८ ॥ देवउवाच ॥ त्वंयाहिगंडकींशीघ्रंनागरैर्ममवाक्यतः ॥ कउवाच ॥ एवमाकर्ण्यतद्वाक्यंमुमोचाश्रूणिसत्वरम् ९ नागराश्चप्रणम्योच्चैरूचुर्वा
क्यंशुचान्विताः ॥ यत्रयासिनयास्मांस्त्वमत्रत्यक्तुंनचार्हसि १० नागतःस्यात्पूर्वमेवतदादुःखंननोभवेत् ॥ एवमुक्त्वानमस्कृत्यययुःसर्वेतदाज्ञया ११ चक्र
पाणिरपितदानमस्कृत्यययौपुरः ॥ वर्णयंतोगुणगणांस्तदीयानद्भुतान्बहून् १२ क्षणेननगरींप्राप्यचक्रपाण्यनुमोदिताः ॥ नागराःस्वगृहंप्राप्ताश्चक्रपाणिर्नि
जालयं १३ पंचानामपिदेवानांप्रासादानप्यकारयत् ॥ पंचायतनमूर्तिंवस्थापयामासतेषुच १४ प्रत्यहंपूजयामासभक्तिभावसमान्वितः ॥ मयूरेशपुरीं
प्राप्तोमयूरेशोपितत्क्षणात् १५ आश्चर्यंपरमंप्राप्तागणाःसर्वेनिरीक्ष्यतम् ॥ यस्यांरत्नमयास्तंभाभित्तयोष्टापदान्विताः १६ एकोनादश्यतेतत्रासंख्यातजनसं
युतः ॥ प्रविश्यससभांरम्यांब्रह्मादीनुपवेश्यच १७ मध्येविवेशचततोलोकयन्सर्वतःस्वयं ॥ ददर्शपूर्वभागेसमन्मथंरतिसंयुतं १८ देवींमार्जारनाम्नींतांलोके
स्यातांसुखप्रदां ॥ दक्षिणस्यांदिशितदालोकयत्पार्वतीशिवौ १९ तत्पुरोविरजांदेवींअकामप्रपूरिकां ॥ पश्चिमायांदिशिततोवाराहंधरणीयुतं २० आश्रयां
नामदेवींचसर्वविघ्नहरांशुभां ॥ उत्तरस्यांदिशितदाश्रीहरिंसमलोकयत् २१ मुक्तादेवींचाविख्यातांसर्वमुक्तिप्रदांततः ॥ त्रयस्त्रिंशत्कोटिसुराःस्थितास्तद्दर्शने

च्छया २२ भाद्रशुद्धप्रतिपदिस्नात्वाभ्यर्च्यगजाननं ॥ गत्वातुपूर्वदिग्भागेमार्जारींपूजयेत्ततः २३ दत्वादानानिविप्रेभ्यःस्मृत्वाध्यात्वागजाननं ॥ मौनंव्रतंसमास्थायनश्रुत्वापादजध्वनिं २४ कृमिकीटपतंगादीन्नहिंसेत्प्रयतःशुचिः ॥ पुनःस्नात्वासमभ्यर्च्यदेवदेवंगजाननं २५ पूर्ववत्तुद्वितीयेह्निवृतीयेचतत्क्रमात् ॥ तथैवदक्षिणद्वारिविरजांद्वितयेहनि २६ तृतीयेपश्चिमद्वारितथैवाश्रयसंज्ञितां ॥ नत्वार्चयेश्चतुर्थ्यांतुतद्वदुत्तरतोनरः २७ मुक्तांदेवींसमभ्यर्च्यमयूरेशंचतद्दिने ॥ पूजामहोत्सवंकुर्याद्रात्रौजागरणंचरेत् २८ एवंयःकुरुतेभक्त्याद्वाराणिचोपवासतः ॥ ससर्वाँल्लँभतेकामान्मयूरेशप्रसादतः २९ चतुर्थ्यामेवचत्वारिशक्तोद्वाराणिपूर्ववत् ॥ आद्यंतमज्जनादेवदर्शनंचकरोतियः ३० तस्यसद्यःफलंदद्यात्परितुष्टोगजाननः ॥ तस्माच्छुद्धप्रतिपदमारभ्यब्रह्मचर्यवान् ३१ ततश्चतुर्थ्यामुषसिस्नानंकृत्वाविधानतः ॥ नित्यंसंपाद्यविधिवन्मयूरेशंसमर्चयेत् ३२ प्रदक्षिणानमस्कारान्कुर्यादेकविंशतिं ॥ पूर्वद्वारेनमस्कृत्यमार्जारींत्वरयान्वितः ३३ एवंशिवावाश्रयांचमुक्तादेवींनमेत्पराम् ॥ प्रारभेद्दिनशेषेतुमयूरेश्वरपूजनम् ३४ षोडशैरुपचारैस्तुपूजयेत्सुसमाहितः ॥ रात्रौजागरणंकुर्याद्गीतवादित्रनिस्वनैः ३५ प्रभातेविमलेस्नात्वापुनर्देवंसमर्चयेत् ॥ ब्राह्मणैःसहकुर्वीतपारणंस्वस्यशक्तितः ३६ तेभ्योदद्याद्धिरण्यंचवासोधान्यंगवादिकम् ॥ एवंयःकुरुतेमर्त्योह्यसाध्यमपिसाधयेत् ३७ पुत्रपौत्रयुतोभोगान्भुक्त्वाचांतेव्रजेद्दिवम् ॥ इंद्रादयोलोकपालाःपूजयिष्यंतितंनरम् ३८ सेवंतेपादकमलंतस्ययाअष्टनायिकाः ॥ अंधस्तुलभतेदृष्टिंमूकोवाचंलभेद्ध्रुवम् ३९ बधिरःश्रुतिमाप्नोतिपंगुश्चचरणावपि ॥ आर्यार्थीलभतेआर्यांविद्यार्थीलभतेमतिम् ४० एतदेवफलंप्रोक्तंद्वारेषुचोपवासतः ॥ ततःकदाचिद्देवेशोमयूरेशोऽखिलान्सुरान् ४१ उवाचश्लक्ष्णयावाचाहरिब्रह्मशिवादिकान् ॥ मयूरेशउवाच ॥ ॥ यदर्थमवतीर्णोहंतत्कार्यंनःकृतंसुराः ४२ निहताबहवोदैत्याभूभारश्चकृतोलघुः ॥ सिंधोःकारागृहात्सर्वेमोचिताअमृतांधसः ४३ स्वाहास्वधावषट्काराभविष्यंतियथापुरा ॥ भवतामाज्ञयादेवायास्येस्वंधामसांप्रतम् ४४ एवमाकर्ण्यतद्वाक्यंदेवाःसर्वेशुचान्विताः ॥ त्यजंतोश्रूणिसंप्रोचुःपरस्परमुखेक्षणाः ४५ अस्मांस्त्यक्त्वामयूरेशक्वगंतुंसमीहसे ॥ कथंस्नेहंपरित्यज्यनैष्ठुर्यंपरमंगतः ४६ ततस्तत्पार्वतीश्रुत्वासहसाशोककर्षिता ॥ पपातमूर्छिताभूमौमुहूर्तादिवदद्वचसा ४७ ॥ ॥ पार्वत्युवाच ॥ ॥ दीननाथदयासिंधोसिंधुदैत्यविमर्दन ॥ क्वयास्यसिजगन्नाथहित्वामांजननींतव ४८ नस्थास्यंतिममप्राणास्त्वयियातेसुरेश्वर ॥ ॥ देवउवाच ॥ ॥ द्वापरेपुनरेवाहंयास्येत्वत्पुत्रतांशुभे ४९ नमिथ्यावचनंमेस्यान्नचिंतांकर्तुमर्हसि ॥ ममापिदुःखमतुलंवियोगात्तवजायते ५० नैकत्रसर्वदामातःसुहृदांवसतिर्भवेत् ॥ सिंदूरोनामदैत्योपिभविष्यतिसुदारुणः ५१ अवध्यःसर्वदेवानांतदाहंस्यांतवार्भकः ॥ स्मृतमात्रस्तवाग्रेहंस्थास्यामिशिवनंदिनि ५२ ततःषडाननःप्राहनयमांयत्रयास्यसि ॥ बालकेकृपणेदीनेनौदासिन्यंहियुज्यते ५३ ॥ देवउवाच ॥ नचिंतांकुरुबंधोत्वमत्रायास्याम्यहंपुनः ॥ भवतोनवियोगोमेसर्वांतर्यामिणःखलु ५४ तस्मैददौमयूरंतंमयूरेशःस्वबंधवे ॥ मयूरध्वजइत्येवनामचक्रे

स्यतत्क्षणात् ५५ आरुरोहमयूरंतंस्कंदोबंधोरथाज्ञया ॥ तस्मिन्नेवक्षणेदेवोंतर्दधेसमयूरराट् ५६ तस्मिन्नंतर्हितेकेशाअपश्यन्हृदितंसदा ॥ ततोब्रह्मा
वालुकाभिःकृत्वामूर्तिंगजाननीं ५७ स्थापयामासविधिवत्प्रासादेसुमनोहरे ॥ पुपूजुःसर्वलोकास्तमुपचारैर्यथाविधि ५८ वसिष्ठाद्यामुनिगणाःसमुत्ब्र
ह्मकमंडलौ ॥ सर्वेनित्यविधिंकृत्वाययुर्मूर्तिंसुशोभनीं ५९ उपोष्यकेचिद्विदधुर्द्वाराणिधामलब्धये ॥ स्नात्वानत्वामयूरेशंधावमानास्तथापरे ६० ऊचुः
परस्परंदेवामुनयोपिमुदातदा ॥ नैतादृशंपुण्यक्षेत्रंयत्रदेवःस्थितःस्वयम् ६१ मयूरेशोविघ्नहरोभक्तानांकामपूरकः ॥ पूजयित्वैवमुक्त्वातुजग्मुस्तेस्वंस्व
माश्रमम् ६२ ब्रह्मादयःसुराःस्वंस्वंपदमभ्यागमंस्तदा ॥ शंकरःसपरीवारःकैलासमगमन्मुदा ६३ स्वधास्वाहावषट्कारैरिंद्राद्यामुमुदुस्तदा ॥ कउवाच ॥
एवंतेसर्वमाख्यातंत्रेतायुगकृतंमुने ६४ मयूरेशस्यचरितंश्रवणात्सर्वकामदम् ॥ धन्यंयशस्यमायुष्यंसर्वपापहरंनृणाम् ६५ पुत्रदंधनदंविद्याप्रदंदुःखानिवार
णम् ॥ आधिव्याधिहरंकुष्ठदुष्टरोगादिनाशनम् ६६ पठतांशृण्वतांपुंसांभुक्तिमुक्तिप्रदंशुभम् ॥ विजयश्रीप्रदंनॄणांक्षत्रियाणांविशामपि ६७ शूद्राणामपिसर्वे
षांश्रीप्रदंपुष्टिवर्धनम् ॥ यद्यत्तेपरिपृष्टंमेतत्तत्तेकथितंमुने ६८ गजाननस्यचरितंपुनःश्रोष्यसिमन्मुखात् ॥ ६९ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेषड्विंश
त्युत्तरशततमोऽध्यायः १२६ ॥ व्यासउवाच ॥ चतुराननदेवेशगुणेशचरितंशुभम् ॥ कथितंविस्तराद्देवनाहंतृप्तोस्मितच्छ्रवात् १ सुधयातुविरक्तःस्यान्न
कथाश्रवणान्नरः ॥ त्रेतायुगकथासर्वागुणेशस्यश्रुतामया २ गजाननेतिनामास्यद्वापरेतुकुतोभवत् ॥ मूषकोवाहनंचास्यकथंयातोमहाविभो ३ कृपयासं
शयममुंछिंधित्वंकमलासन ॥ कउवाच ॥ सम्यक्पृष्टंत्वयावरसममचित्तगतंमुने ४ यतःश्रोताचवक्ताचपृच्छकःसिद्धिमाप्नुयात् ॥ तांकथांकथयिष्यामि
विनायककृतांमुने ५ द्वापरेयत्कृतंतेनचरितंशृणुसांप्रतम् ॥ यथागजाननोदेवोरक्तवर्णश्चतुर्भुजः ६ गजाननश्चाखुवाहस्तत्सर्वंकथयामिते ॥ कदाचिद्ब्रह्मभु
वनंयातःशंभुर्यदृच्छया ७ उत्थापयामासतदाप्रसुप्तंकमलासनम् ॥ सउत्थितोमहाजृंभांचकारक्रोधसंयुतः ८ ततएकोमहाघोरःपुरुषःसमपद्यत ॥ सचच
क्रेमहाघोरंशब्दंसर्वभयंकरम् ९ चकंपेपृथिवीतेनसाब्धिद्वीपासपर्वता ॥ दिक्पालाश्चकिताःसर्वेशेषःक्षुब्धोसृजद्विषम् १० त्रिशीर्णागिरयःसर्वेभूतान्याकुल
तांययुः ॥ कल्पांतइवतत्रासीत्त्रैलोक्यवासिनांनृणाम् ११ ब्रह्मांडमस्तकेनासौस्फोटयन्निवतस्थिवान् ॥ यद्देहतश्चारुगंधोव्यानशेभुवनत्रयम् १२ जपा
कुसुमदेहस्यप्रभयारुणितादिशः ॥ अयंकिंमदनोजातोद्वितीयोब्रह्मसंभवः १३ कामस्तुलज्जितस्तस्यसद्योरूपनिरीक्षणात् ॥ पुरस्तंसन्निरीक्ष्यै
नंविस्मितःकमलासनः १४ कस्यत्वंकुतउत्पन्नःकिंचिकीर्षसितद्वद ॥ पुरुषउवाच ॥ अनेकानिसुरेशत्वंब्रह्मांडानिसृजस्यपि १५ विभ्रांतइवकस्मान्मांसर्व
ज्ञःसन्नहिपृच्छसि ॥ जृंभायास्तेसमुत्पन्नंकथंमांनावबुध्यसे १६ अनुगृह्णीष्वपुत्रंमांदेहिनामयथामति ॥ स्थानंचदेहिमेनाथभक्ष्यंकार्यंचमेवद १७ इत्या
कर्ण्यवचस्तस्यप्रोवाचचतुराननः ॥ रक्तंवपुर्यतस्तेस्तिसिंदूराख्योभविष्यसि १८ सामर्थ्यंचमहत्तेस्यात्त्रैलोक्याकर्षणक्षमम् ॥ क्रोधादालिंगसेयंत्वंश

तथासभविष्यति १९ पंचभ्योपिचभूतेभ्योनभयंतेकदाचन ॥ देवदानवयक्षेभ्योमानुषेभ्योभयंनते २० इंद्रादिलोकपालेभ्यःकालादपिभयंनते ॥ ननागे
भ्योनरक्षोभ्योनाहोरात्रेभयंनते २१ सजीवान्नचनिर्जीवाद्भयंसिंदूरतेभवेत् ॥ वसयत्रमनस्तेस्यात्स्थातुंत्रिभुवनेष्वपि२२ततःसवरदानेनतुतोषचतुरास्यजः॥
चक्रंदकंपयन्शब्दैस्त्रैलोक्यंसचराचरम् २३ चुक्षुभुःसागराःसर्वेलोकपालाश्चदुद्रुवुः॥ उवाचसतदादेवंनमस्कृत्यपितामहम् २४ ॥ सिंदूरउवाच ॥ तववाक्यामृ
तेनाहंप्रीतोब्रह्मांडनायक ॥ त्वमेवविश्वंसृजसिपासिहंसिगुणैस्त्रिधा २५ त्वयिसुप्तेजगत्सुप्तमंधकारश्चजायते ॥ महद्भाग्यंममविभोतपोदानव्रतैर्विना २६
पुत्रस्नेहात्प्रसन्नस्त्वंनान्यथातेप्रसन्नता ॥ कल्पकोटितपोभिस्त्वंप्रसन्नोजायसेविभो २७ ॥ कउवाच ॥ इत्युक्त्वातंप्रणम्यासौकृत्वापिचप्रदक्षिणम् ॥ जगा
ममनसाभूमिमार्गेतर्कमथाकरोत् २८नमेतपोवाध्यानंवाजपःस्वाध्यायएवच ॥ कथंतेनवरादत्ताःसत्याउतन्वथानुते २९ गत्वाद्रक्ष्यामिपितरमित्युक्त्वागात्पि
तामहम् ॥ तुलयित्वातुदोर्दंडौजगर्जसभयानकः ३० तमेवालिंगितुंचैच्छत्ततऊचेपितामहः ॥ पुत्रस्नेहान्मयादत्तावराअन्यस्यदुर्लभाः ३१ दुष्टभावान्ममै
वत्वमपकर्तुमिहागतः ॥ नाज्ञासिषमहंदुष्टभावंतेखलनायक ३२ भुजगस्यपयोदत्तंविषमेवहिजायते ॥ दुष्टभावंगतोयस्मात्तस्माद्दैत्योभविष्यसि ३३ परमा
त्मावतीर्यांशुहनिष्यतिगजाननः ॥ तवांतंसुरभिज्ञात्वास्वांगेतन्मर्दयिष्यति ३४ सिंदूरारुणदेहश्चसिंदूरप्रियएवच ॥ भविष्यतिसदेवोपिसिंदूरवधएवच ३५
एवमुक्त्वापपालाशुभयेनकमलासनः ॥ मनोवायुमहावेगोनिश्वासश्वाससंकुलः ३६ दैत्योपिपृष्ठतोयातिशापमाकर्ण्यमन्युमान् ॥ स्वेदेनार्द्रतनुर्दुष्टोदृष्ट्वाद
ष्ट्वापुरोव्रजन् ३७ धरिष्यामिपदेन्यस्मिन्नितिदैत्योभ्यधावत ॥ वैकुंठमगमद्ब्रह्माकंपमानस्त्वरान्वितः ३८ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेसिंदूरोत्पत्तिवर्णनंना
मसप्तविंशत्युत्तरशततमोध्यायः ॥ १२७ ॥ ॥ कउवाच ॥ सददर्शसमासीनंनारायणमनामयम् ॥ रत्नकांचनविलसत्पद्मासनगतंविभुं १ सोपितंपुरतो
वीक्ष्यविवर्णवदनंतदा ॥ तत्पृष्ठतोमहादैत्यंगगनस्पर्धिमस्तकम् २ उदतिष्ठत्वेगेनदयालुःकमलापतिः ॥ धृत्वाकरंसमालिंग्यस्वासनेकंन्यवेशयत् ३ सं
पृच्छ्यपरिपप्रच्छकिंतेकार्यमुपस्थितम् ॥ कथंचम्लानवदनःश्वासवांश्चहतप्रभः ४ ममखेदःसमुत्पन्नोदृष्ट्वैवत्वांपितामह ॥ इतितद्वचनंश्रुत्वाजगादकमला
सनः ॥ ५ ॥ ॥ कउवाच ॥ ॥ प्रबोधितःशिवेनाहंप्रतिसुप्तोनिजालये ॥ ततोमेजृंभतोवक्त्रान्निर्गतःपुरुषोमहान् ६ पतंतिभूतलेभानियन्मस्तकवि
घाततः ॥ तस्यसौरभगंधेनसर्वेदेवाविसिस्मिरे ७ यस्यलावण्यमीक्ष्यैवलज्जितोमदनोऽभवत् ॥ यस्यक्रंदितशब्देनचकंपेभुवनत्रयम् ८ सनमस्कृत्यमांदे
वविनीतःपुरतःस्थितः ॥ ततस्तस्मैवरादत्ताःपुत्रस्नेहेनमाधव ९ यंयंत्वमालिंगयसिससमृत्युमुपैष्यति ॥ कालोपिनरणेस्थातुंतवशक्तोभविष्यति १०
स्थानंचस्वेच्छयातस्यदत्तंदेवमयाततः ॥ नमस्कृत्यगतोदूरंवितर्कात्पुनरागतः ११ मामेवालिंगितुंयातोपलमस्माद्भयादहम् ॥ हंसमारुह्यसहसावेगेन
त्वामुपागतः १२ दृष्ट्वादृष्ट्वापृष्ठगतंकंपःश्वासश्चमेभवत् ॥ विनात्वांशरणंक्वायामिसर्वेश्वरेश्वर १३ ततोब्रवीन्महाविष्णुर्ब्रह्माणंशरणागतम् ॥ देव

उवाच ॥ पूर्वंदत्वावरान्देवसंकटंप्राप्यबुद्धितः १४ इदानींचिंतयाकिंस्याद्यद्भाव्यंतद्भविष्यति ॥ सपीडांत्रिषुलोकेषुविधातुमुद्यतोभवत् ॥ १५ ॥ ॥ कउ
वाच ॥ ॥ यावत्तौचिंतयाविष्टौस्थितौब्रह्महरीतदा ॥ तावत्सपुरतोतिष्ठद्दृष्ट्वाताभ्यांमहासुरः १६ जगर्जगर्जयामासत्रैलोक्यंबलवत्तरम् ॥ ब्रह्मांडंकंप
यामासब्रह्माणंचतदाखलः १७ सोवदद्रक्षरक्षेतिविष्णुंत्रैलोक्यरक्षकम् ॥ ततोविष्णुर्जगौदैत्यंवाचामधुरयातदा १८ ॥ ॥ हरिरुवाच ॥ ॥ नत्वयाव
रदानेनमत्तेनयोद्धुमुत्सहे ॥ अहंसत्वगुणोपेतःपालनेनिरतःसदा १९ अयंचब्राह्मणोब्रह्मातेनयोद्धुंनचार्हसि ॥ तवयुद्धप्रदोदेवःख्यातोसौमदनांतकः २०
तेनयुद्धंचस्वतेकीर्तिर्महतीस्यात्रिलोकगा ॥ ॥ कउवाच ॥ ॥ इत्याकर्ण्यवचस्तस्यजहर्षदैत्यपुंगवः २१ उड्डीयप्रययौसद्यःकंपयन्भुवनत्रयम् ॥ पात
यन्पर्वतान्वृक्षांश्चूर्णयन्सहसाबहून् २२ दिग्गजाश्चलिताःसर्वेसंजग्मुर्विदिशोदिशः ॥ एवमुपत्यकांयातःकैलासस्यमहागिरेः २३ ददर्शाधित्यकायांसध्यान
स्थंगिरिशंखलः ॥ नंदिभृंगिगणाकीर्णंपार्वत्यासेवितंविभुं २४ व्याघ्रचर्मपरीधानमर्धचंद्रविभूषणं ॥ भस्मांगरागशोभाढ्यंकरिचर्मोत्तरीयकम् २५ दृष्ट्वादे
वंतदादैत्योनिर्निंदसहसाहरं ॥ अनेनकिंमयायुद्धंकर्तव्यंतापसेनह २६ एतस्यसुंदरींभार्यांनीत्वायामियदृच्छया ॥ एवंनिश्चित्यमनसागौरीमंतिकमाययौ
२७ तदाचकंपेगिरिजाकल्पांतेजगतीयथा ॥ निमील्यनयनेमूर्छामापाशुभयविह्वला २८ दधारतांकेशपाशेसदैत्योदुष्टमानसः ॥ उड्डीयचलितोवेगाच्छुशोच
गिरिजातदा २९ रावणेननीयमानायथासाधरणीसुता ॥ गिरिजोवाच ॥ औदासिन्यंकथंयातोमयिदेवोखिलार्थवित् ३० ध्यानंकथंगतोस्यर्धेन्हीयमाणेत्वदंग
के ॥ नाकारिदास्यंन्यूनंतेयेनकाठिन्यमागतः ३१ कःसखामोचयेन्मांहिप्राणदाताभवेन्मकः ॥ पुनर्मेशंकरंकोनुदर्शयेद्बलवत्तरः ३२ ॥ कउवाच ॥ ततःशोकाकुलां
वीक्ष्यतांगणाःप्राद्रवंस्तदा ॥ अनेनयोद्धुंशक्तिर्नोत्रैलोक्यनाशिनाधुना ३३ शिवश्चध्याननिष्ठोभूद्दैवादस्यानुकूलता ॥ नीतानोजननीविश्वसृष्टिस्थित्यंतका
रिणी ३४ मोहिनीसर्वदेवानांसर्वदुःखविनाशनी ॥ लावण्यलहरीनीतासर्वयोषिद्वराशुभा ३५ रत्नभूताकथंनीताकथंसापुनरेष्यति ॥ ध्यानस्थेशंकरेसर्वनाशने
नेत्रवह्नितः ३६ तस्मिन्यास्यतिलोभेनपुत्रानिवजनन्यथ ॥ एवंशोकंप्रकुर्वत्सुहाहाकारैरुदत्सुच ३७ गणेषुविससर्जाशुध्यानंक्रोधान्महेश्वरः ॥ क्रोधान
लेनब्रह्मांडंदहन्निवदिशोदश ३८ पप्रच्छतान्गणान्शंभुःसंकटंकिमुपस्थितम् ॥ भस्मसात्तंकरिष्यामियेनवःकदनंकृतम् ३९ इतितद्वचनंश्रुत्वाप्रोचुस्तं
तेगणास्तदा ॥ त्वयिध्यानस्थितेदेवमंदराचलसन्निभः ४० कृतांतसमरूपःसन्नागतोदैत्यपुंगवः ॥ यस्यश्वासानिलहताअचलाश्चलतांगताः ४१ संमोहं
प्रापितादेवादर्शनादेवशंकर ॥ ततःसगिरिजांधृत्वाकेशपाशेमहाबलः ४२ निनायसत्वरंव्योममार्गेणजननींहिनः ॥ नीयमानाशिवाप्राहधावधावेतिस
त्वरम् ४३ मूर्छितापतिताभूमौवयंसर्वेविमूर्छिताः ॥ तथाविधांसमादायययौसदुष्टमानसः ४४ श्रुत्वातेषांवचःशंभुर्जज्वालपरमंरुषा ॥ कुर्वन्भस्मेवलो
कानामारुरोहवृषंनिजम् ४५ त्रिशूलादीनिशस्त्राणिदधानोदशभिर्भुजैः ॥ नभोमार्गेणप्रययौगर्जयन्विदिशोदिशः ४६ यत्रासीत्सिंदुरोदैत्यस्तंदेशमगम

क्षणात् ॥ अहनत्पृष्ठदेशेतंतस्थौससंमुखंतदा ४७ मुंचमायांमहादुष्टदुष्टःसन्क्कगमिष्यसि ॥ इत्युक्तःसरुषाविष्टस्त्रिलोकींभस्मतांनयन् ४८ बाहुभ्यांमार
यन्नेवप्रययौशिवसन्निधौ ॥ उवाचचमहादैत्योगर्वेणपरिमोहितः ४९ नाहंमशकवाक्येनबिभेमिभुवनाधिपः ॥ यस्यश्वासानिलेनाशुकंपतेमेरुपर्वतः ५०
तस्यमेगणनानास्तिमुखंमांमाप्रदर्शय ॥ यदिशक्तिर्मयासार्धंयुद्धंकर्तुंतदाकुरु ५१ नोचेदन्यांपरिणयततःसौख्यमवाप्स्यसि ॥ किंमयासहयोद्धव्यंमश
केनत्वयालवो ५२ एवमुक्त्वाबाहुयुद्धंकर्तुंशंकरमाययौ ॥ दुर्गादेवीतुसस्मारमयूरेशंस्वचेतसि ५३ द्विजरूपधरोदेवोमयूरेशस्ततस्तयोः ॥ अंतराले
प्रादुरासीत्कोटिसूर्यनिभःक्षणात् ५४ सर्वांगसुंदरोनानाभूषणैरुपशोभितः ॥ परशुंमध्यतःकृत्वावारयामासदैत्यपम् ५५ उवाचश्लक्ष्णयावाचासिंदूरंतं
द्विजोत्तमः ॥ त्रैलोक्यजननींगौरींस्थापयाशुममांतिके ५६ युध्यस्वशंकरेणत्वंयावज्जयपराजयौ ॥ जयोयस्यभवेत्तेनग्राह्येतिनान्यथावचः ५७ ॥ ॥ क
उवाच ॥ ॥ द्विजवाक्यंसमाकर्ण्यसिंदूरोहृष्टमानसः ॥ स्थापयामासगिरिजांयुद्धायबहुलालसः ५८ तयोस्तुपश्यतोरेवतावुभावप्ययुध्यताम् ॥ सिंदू
रश्चमहेशश्चनानायुद्धविशारदौ ५९ क्रोधसंरक्तनयनौतुल्यतेजःपराक्रमौ ॥ बाहुभ्यांवेष्टितुंयावद्ियेषसोऽसुरोहरम् ६० अदृश्यएवपरशुरस्यजघ्नेबलाद्उरः ॥
क्षीणशक्तिंततोदैत्यंत्रिशूलेनाहनद्धरः ६१ ततोऽशक्तंद्विजवरोवदतिस्महितंवचः ॥ त्रैलोक्यनायकेनत्वंनयुद्धंकर्तुमर्हसि ६२ गिरिजांशांविहायाशुव्रजस्वनि
जमंदिरम् ॥ नोचेदयंशिवोभस्मकरिष्यतितवाधुना ६३ एवमुक्तोद्विजेनासौवांछांत्यक्त्वा भुवंययौ ॥ ततःसापार्वतीप्राहद्विजंप्रासेजयंशिवे ६४ कोसित्वंमु
निशार्दूलयेनाहंमोचिताखलात् ॥ निजंमेदर्शयस्वीयंरूपंनेदंस्वभावजम् ६५ ममप्राणाधिकोसित्वंसखाप्राणप्रदोयतः ॥ नभवेदुपकारस्तेप्राणेस्थकेद्विजो
त्तम ६६ एवमाश्रुत्यतांवाचमुवाचसमुनीश्वरः ॥ नचमातर्मयाकारिकिंचिदत्रमहेश्वरः ६७ अजयत्सिंदुरंदैत्यंमोचितात्वंशिवेनह ॥ इत्युक्त्वापूर्वरूपंसआवि
श्चक्रेविनायकः ६८ दशदोर्दंडरुचिरंकर्णकुंडलमंडितम् ॥ कस्तूरीतिलकंरत्नमुक्तामालाविभूषितम् ६९ नानालंकाररुचिरंशेषकंठमणिप्रभम् ॥ दृष्ट्वैवंपरमात्मा
नंनंनंदगिरिजातदा ७० ननामपादयोस्तस्यसउत्थाप्यचतांजगौ ॥ विनायकउवाच ॥ त्रेतायुगेप्राव्रुवंत्वांदास्यामिदर्शनंपुनः ७१ अवतीर्यद्वापरेतेगृहेनाम्ना
गजाननः ॥ भविष्यामिहनिष्यामिसिंदूरंदैत्यमोजसा ७२ कउवाच ॥ मुनिरूपधरोदेवउक्त्वावांतरधीयत ॥ ततःशुशोचगिरिजामूर्छांसापरमांययौ ७३ ततऊ
चेविश्वनाथोमनःस्वस्थंकुरुप्रिये ॥ पश्यत्वंतद्ददितंदेवंविनायकमनामयं ७४ नमिथ्याभाषितंतस्ययदुक्तंतत्करिष्यति ॥ एवमुक्त्वामहादेवोवृषारूढस्तयासह
७५आययौपरमंप्रीतःकैलासंपर्वतेश्वरं७६इतिश्रीग०पु०उ०अष्टाविंशत्युत्तरशततमोध्यायः १२८॥ कउवाच ॥ ततोदैत्योमृत्युलोकंगतोगर्वाद्गर्जत ॥ कंपि
ताःपर्वताःसर्वेवृक्षानिपातिताभुवि १ पक्षिसिंहाःश्वापदानिबभ्रमुःकाननेतदा ॥ ततोजिगायनृपतीन्सर्वान्वीरांश्चदानवः २ ब्रह्मादयोजितायेनतेनायुध्यन्कथंनृ
पाः ॥ केचिद्द्विधाकृतास्तेनकेचिन्नभसिबभ्रमुः ३ केचिच्चसम्मुखेयुद्धंकृत्वास्वर्गंगतानृपाः ॥ केचिच्चशरणंयाताःसेवकत्वमुपागताः४ केचिद्भ्रष्टपदाजग्मुरभिमा

नेनकाननं ॥ एवंजित्वानृपान्सर्वान्मुनीनामाक्रमेमतिं ५ अकरोद्दुष्टबुद्धिःसबबंधसहसाचतान् ॥ तदाकेचिन्मुनिगणास्त्यक्त्वादेहंदिवंगताः ६ केचिच्चमेरुकंद
र्यान्यवसन्विगतज्वराः ॥ केचिच्चनिहतास्तेनकेचित्ताडिताभृशं ७ प्रासादाःसकलास्तेनाविध्वस्तादेवताअपि ॥ एवंतुप्रलयेजातेलुप्यन्क्रियाश्चवैदिकाः ८ स्वा
हास्वधावषट्काराहाहाकारोप्यजायत ॥ देवागिरिगुहास्थास्तेमुनयोयक्षकिन्नराः ९ न्यमंत्रयंतकार्यार्थंतत्रप्राहबृहस्पतिः ॥ विद्यमानेभ्योदेवेभ्यस्तेभ्यःस
र्वेभ्यएवच १० नभयंविद्यतेतस्यतस्माद्देवंविनायकं ॥ प्रार्थयध्वंयदाविप्राःप्रादुर्भावंशिवालये ११ गजाननेतिनाम्नासकरिष्यतिचसांप्रतं ॥ हनिष्यतिब
लाद्दैत्यंसिंदूरंनात्रसंशयः १२ निराबाधंजगत्सर्वंभविष्यतिततदासुराः ॥ एवमुक्तास्तुजीवेनतंतुदेवादयोखिलाः ॥ भक्त्यापरमयायुक्तास्तुष्टुवुस्तंविनायकं
१३ ॥ ॥ देवाऊचुः ॥ ॥ जगतःकारणंयोसौरविनक्षत्रसंभवः ॥ सिद्धसाध्यगणाःसर्वेयतएवचसिंधवः १४ गंधर्वाःकिन्नरायक्षामनुष्योरगराक्षसाः ॥ यतश्च
राचरंविश्वंतंनमामिविनायकं १५यतोब्रह्मादयोदेवामुनयश्चमहर्षयः॥यतोगुणास्त्रयोजातास्तंनमामिविनायकं १६ यतोनानावताराश्चयश्चसर्वहृदिस्थितः॥यं
स्तोतुंनैवशक्नोतिशेषस्तंगणपंभजेत् १७सिंदूरोनिर्मितःकेनविश्वसंहारकारकः॥तेनार्तिप्रापितंविश्वंत्वयिस्वामिन्निजाग्रति१८अन्यंकंशरणंयामःकोनुपास्यति
नोखिलान् ॥ जह्येनंदुष्टबुद्धिंत्वमवतीर्यशिवालये १९ इत्युक्त्वापरितेपुस्तेनानानुष्ठानतत्पराः ॥ निराहारायताहाराःप्राणायामपरायणाः २० एकपादास्थ
ताःकेचिज्जलमध्येस्थिताःपरे ॥ धूमपानरताःकेचित्केचिच्चमौनमास्थिताः २१ ऊर्ध्वबाहुतयाकेचित्केचिच्चयोगमास्थिताः ॥ केचिच्चकर्तुंस्वान्देहान्के
चिच्चमस्तकानपि २२ एवंतेषांनिरीक्ष्यैवतपांसिगणराट्तदा ॥ आविरासीत्कोटिसूर्यप्रलयानलसन्निभः २३दृष्ट्वातेजोमयंरूपंजहृषुस्तेसुरास्तदा ॥ यश्चिंतितः
सएवाग्रमाविर्भूतोखिलेश्वरः २४ अपनेष्यतिनोदुःखंनात्रकार्याविचारणा ॥ ततऊचेसभगवान्तान्सुरांश्चिंतयायुतान् २५हनिष्येसिंदुरंदेवामाचिंतांकर्तुमर्हथ
॥ दुःखप्रशमनंनामस्तोत्रंवःख्यातिमेष्यति २६ अतोदुःखविनाशोवाजातोस्मान्मदनुग्रहात् ॥ एककालंद्विकालंवात्रिकालंवापियःपठेत् २७ कदाचिन्नभवे
दस्यदुःखंत्रिविधमण्वपि ॥ अहंतुसांप्रतंदेवाअवतीर्यशिवालये २८नाम्नागजाननइतिख्यातःसर्वार्थसाधकः ॥ अविष्यामिहनिष्यामिसिंदूरादीन्महासुरान्
२९ करिष्यामिशिवादास्यंकौतुकानिप्रदर्शयन् ॥ कउवाच ॥ एवमुक्त्वाततोदेवांस्तत्रैवांतरधीयत ३० ततोऽकस्माद्धैमवतीशिवानुग्रहतोदधौ ॥ गर्भंसववृधे
त्वंतंदिनेदिनेयथाशशी ३१ ततस्तत्तेजसातप्तानानादोहदकांक्षिणी ॥ उवाचशंकरंगौरीसंतप्तागर्भतेजसा ३२ अतिशीतस्थलंयत्रतत्रमांनयशंकर ॥ ततोसौ
वृषभारूढःपृष्ठेतामुपवेश्यह ३३आसयंतींमहातेजःपुंजेनाविदिशोदिशः॥वाद्यत्सुसर्ववाद्येषुययौसक्षितिमंडलम् ३४नानागणैःसमायुक्तोबभ्रामकाननानिसः॥
भ्रमतातेनदृष्टंहिपर्यलीकाननंमहत् ३५ तत्रविश्रांतिमकरोत्पार्वत्यानुमतेतदा ॥ नानापुष्पसमाकीर्णंनानाद्रुमफलान्वितम् ३६ सरोवापीयुतंसांद्रतरुच्छायं
मनोरमम् ॥ यत्रोस्त्राणांनप्रवेशःकैलासशिखरोपमम् ३७ नंदनादधिशोभंतद्वनंचैत्ररथादपि ॥ तद्वीक्ष्यगिरिजाप्रोचइच्छयासदृशंशिव ३८ वनंप्राप्तंमहादेव

क्रीडावोत्रचिरंविभो ॥ गणानामपिसर्वेषांप्रीतिस्तत्रव्यभूत्तदा ३९ ततोगणामंडपंतेचक्रुस्तत्प्रियकाम्यया ॥ नानावेदीगृहयुतंनानोपस्करसंयुतम् ४१
ततऊचेशिवोदेवींवसात्रत्वंगणैर्युता ॥ यद्यत्तेप्रार्थितंतत्तेदास्यंतिमदनुग्रहात् ४१ ततःस्वयंजगामाशुध्यानस्थोभूद्धिमालये ॥ सखीभिःपार्वतीतत्र
चिक्रीडेसायथारुचि ४२ अरक्षंस्तांकोटिगणाःसमंतादावृतास्तदा ॥ तदाज्ञावशगाःसर्वेकंदमूलफलाशिनः ४३ ॥ ॥इतिश्रीगणेशपुराणेउत्तरखण्डेगौरीदो
हदवर्णनंनामैकोनात्रिंशोत्तरशततमोऽध्यायः ॥ १२९ ॥ ॥ कउवाच ॥ ततस्तुनवमेमासिपूर्णेसासूतबालकम् ॥ चारुचंद्राननंपद्मशोभाजिन्नयनंशु
भम् १ किरीटकेयूरधरंकोटिसूर्यसमप्रभम् ॥ प्रवालाधरशोभाढ्यंचतुर्बाहुविराजितम् २ मुक्ताहारधरंचारुकंकणैरुपशोभितम्॥ परशुंकमलंमालामोदकांश्च
करैर्दधत् ३ ध्वजांकुशाब्जविलसत्पादपद्मसमन्वितम् ॥ किंकिणीजालविलसच्चारुगुल्फयुतंशुभम् ४ भालचंद्रंकोटिचंद्रनिभंवह्निसमप्रभम् ॥ एवं
दृष्ट्वास्वरूपंसाचकंपेहर्षनिर्भरा ५ किमिदंतेजउदितंनयनाच्छादकंमहत् ॥ कोसित्वंवदमेचेतोनंदयस्वकृपांकुरु ६ इत्युक्त्वातंनमश्चक्रेस्मरंतीपूर्वकंवचः
॥ ततऊचेमहोमूर्तिर्मामातर्विमनाभव ७ गुणेशोहमनेकानांब्रह्मांडानांविनायकः ॥ असंख्यातामेवतारानज्ञायंतेऽमरैरपि ८ इच्छयासृष्टिसंहारपालना
निकरोम्यहम् ॥ त्रिधारूपंविधायाहंविश्वस्याशिवनंदिनि ९ त्रेतायुगेवतीर्याहंत्वद्गृहेलीलयापुरा ॥ अनेकानिचरित्राणिकृतानिसिंधुनाशनम् १० मयूरेश्वर
नामाहंषड्भुजोर्जुनवर्णकः ॥ तदामयावचोदत्तंद्वापरेतेसुतःपुनः ११ भवेयंसेवकश्चाहंसिंदूरान्मोचितामया ॥ द्विजरूपेणसहसास्मरसर्वंशुचिस्मिते १२
तदापितनयस्तेहंभविष्यामीत्यथाब्रुवम् ॥ तदिदंसत्यवचनंमयासंपादिपार्वति १३ भूभारंचहरिष्यामिसिंदूरंचमहाबलम् ॥ सेवनंचकरिष्यामितववमा
तर्गजाननः १४ विख्यातोहंभविष्यामिभक्तानांकामपूरकः ॥ ॥ कउवाच ॥ ॥ एवंश्रुत्वावचोगौरीस्मृत्वासर्वंपुरातनम् १५ नत्वातुष्टावदेवेशंविश्वेशंवि
घ्ननाशकम् ॥ ॥ गौर्युवाच ॥ ॥ निर्विकल्पचिदानंदघनंब्रह्मस्वरूपिणम् १६ भक्तप्रियंनिराकारंसाकारंगुणभेदतः ॥ नमाम्यहमतिस्थूलमणुभ्यो
णुतरंविभुम् १७ अव्यक्तंव्यक्तिमापन्नंरजःसत्त्वतमोगुणम् ॥ मायाविनंमायिनंचसर्वमायाविदंप्रभुं १८ सर्वांतर्यामिणंनित्यंसर्वाधारंपरात्परम् ॥ चतुर्णा
मपिदेवानांमानसस्याप्यगोचरम् १९ महद्भाग्यंममविभोसत्वंमेपुत्रतांगतः ॥ प्रतीक्षंत्याममविभोप्रत्यक्षंदर्शनंगतः ॥ इदानींत्वद्वियोगोमेनस्याद्देवतथाकुरु
२०एवंवदंत्यांतस्यांतुदेवोरूपांतरंदधौ ॥ चतुर्भुजंभालचंद्रंशुंडादंडविराजितम्२१अनेकभूषणयुतंचिंतामणियुतंहृदि ॥ दिव्यांबरंदिव्यगंधंसिद्धिबुद्धियुतंतदा
२२ रुरोदबालवद्वाज्ञोदद्दशेगिरिजातुतम् ॥ शुशोचबहुधातन्वीनिधिःकेनहृतोमम २३ नबालस्त्रिषुलोकेषुदृष्टःशुंडाविराजितः ॥ ब्रह्मादयोहसिष्यंति
लोकाश्चेक्ष्यद्दशंशिशुं २४ एवंबहुविधंशोकंश्रुत्वागाच्छंकरोगृहम् ॥ सगजस्तंशिशुंदृष्ट्वाप्राहतांशृणुमेप्रिये २५ अनादिनिधनोदेवःशुंडादंडविराजितः ॥
यत्रकुंठाश्चतुर्वेदाःशास्त्राणिमुनयोऽमराः २६ प्रपंचेगुंफितायेननानाकार्यवताप्रिये ॥ सर्वांतर्याम्यनेकानांब्रह्मांडानांचकारकः २७ चराचरस्यचरूपा

णिचतुर्षुचयुगेषुच ॥ कृतेदशभुजोनाम्नाविनायकइतिश्रुतः २८ त्रेतायुगेशुक्लवर्णःषड्भुजोसौमयूरराट् ॥ सिंधुंहत्वापालयत्सोवतीर्यस्वालयेप्रिये २९
सएवायंरक्तवर्णश्चतुर्बाहुविराजितः ॥ अवतीर्णोगृहेनौहिसिंदूरंनिहनिष्यति ३० आरुह्यमूषकंदेवोभूभारंचहरिष्यति ॥ नाम्नागजाननइतित्रैलोक्येस्या
तिमेष्यंति ३१ अयंकलियुगेदेविधूम्रकेतुरितिप्रथां ॥ चतुर्बाहुश्चारुनेत्रोयास्यतेसचिरांभुवि ३२ निशम्यशिववाक्यंसउवाचबालकःस्फुटम् ॥ ॥ बाल
उवाच ॥ ॥ सम्यक्बुद्धंस्वरूपंमेसम्यगुक्तंत्वयाशिव ३३ अवतीर्णस्तवगृहेसेवांकर्तुंचसिंदुरम् ॥ निहंतुंचनिहंतारंदेवानांसर्वभूभुजां ३४ मर्दनंभूधराणां
चत्रैलोक्यजयशालिनम् ॥ हत्वातंविश्वसंतोषंकरिष्यामिचशंकर ३५ भक्तानांकामपूरश्चवेदकर्मप्रवर्तकः ॥ भविष्यामिवरेण्यस्यवरदोज्ञानदायकः ३६ मयि
भक्तिर्भवेत्तस्यममध्यानपरायणः ॥ देवद्विजातिथीनांचपूजकःपंचयज्ञकृत् ३७ पुराणश्रवणेसक्तःस्वाचारःसत्यवाक्शुचिः ॥ पुष्पिकानामयस्यापिपत्नीधर्म
परायणा ३८ पतिव्रतापतिप्राणापतिवाक्यपरायणा ॥ ताभ्यांद्वादशवर्षाणितपस्तप्तंसुदारुणम् ३९ तयोर्मयावरोदत्तएष्येवांपुत्रतांध्रुवम् ॥ पुष्पिकायांप्र
सूतायामद्यैवराक्षसैःशिशुः ४० नीतश्चत्यक्ष्यतेप्राणांस्तस्मान्मांनयतत्रह ॥ एवमाकर्ण्यतद्वाक्यंशिवोहर्षसमन्वितः ४१ नानावाङ्मयपुष्पैस्तंपूजयामासभ
क्तितः ४२ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेगजाननाविर्भावोनामत्रिंशाधिकशततमोऽध्यायः ॥ १३० ॥ ॥ ॥ छ ॥ कउवाच ॥ ॥
ततश्चिंताचकारासौतत्रनेतुंतुबालकम् ॥ तज्ज्ञात्वाप्राहतंनंदीस्वामिन्युष्मत्प्रसादतः १ शोषयिष्येसमुद्रांस्तुचूर्णयिष्येगिरीनपि ॥ आज्ञापयततोमह्यंभवा
न्कार्यंहृदिस्थितम् २ ॥ ॥ कउवाच ॥ ॥ भणितंतस्यतच्छ्रुत्वातुष्टःप्राहहरःसतम् ॥ ॥ हरउवाच ॥ ॥ साधुसाधुत्वया
प्रोक्तमाशयंमेविवृण्वता ३ पौरुषंतेमयाज्ञातंशतशोनंदिकेश्वर ॥ इदानीमथयत्कार्यंवदामितत्कुरुष्वभोः ४ माहिष्मत्यांमहापुर्यांआस्तेराजामहाबलः ॥
वरेण्यइतिविख्यातोनानाधर्मपरायणः ५ यस्यपत्नीमहाभागापुष्पिकानामनामतः ॥ तस्यांसद्यःप्रसूतायांसुप्तायांकापिराक्षसी ६ निन्येबालंतत्पुरतोने
योबालस्त्वयालघु ॥ नीत्वास्थाप्यस्तत्पुरतोयावन्निद्रातिसाशुभा ७ ॥ ॥ कउवाच ॥ ॥ एवमाज्ञांसमाकर्ण्यशंकरेणसमीरिताम् ॥ शीघ्रंबालं
समादायनभोमार्गेणसत्वरः ८ प्राक्षिपत्पुरतोबालंसानसुप्ताबुबोधतम् ॥ शीघ्रमुड्डीयसप्रायान्नंदिकेशोमहेश्वरम् ९ उवाचनिजवृत्तांतंमार्गेस्वयमनुष्ठितम् ॥
अकस्माद्गगनाद्देवराक्षसीघोरदर्शना १० भक्षयंतीबालमांसंमांमाश्रित्यास्थिताविभो ॥ तवप्रसादात्पुच्छेनवेष्टिताराक्षसीमया ११ भ्रामयित्वाविनि
क्षिप्तामहापर्वतमस्तके ॥ शतधाखंडितासातुत्वन्नामोच्चारणात्प्रभो १२ ततोपश्यंमहाव्रातंगंधर्वाणांदुरात्मनाम् ॥ कथंमयातैर्योद्धव्यंरक्षितव्यःकथंशि
शुः १३ इतिचिंताकुलतयास्मृतस्त्वंहृदिशंकर ॥ ततःपुच्छेनशृंगाभ्यांक्रोधोच्छ्वासैश्चलत्तया १४ हुंकारेणचतान्सर्वान्निवार्यबलवत्तरान् ॥ मृताःकेचिद्द्रुताके
चित्केचिद्भग्नशिरोंघ्रयः १५ पतिताःशतधाभूमौपुष्पवृष्टिस्ततोपतत् ॥ ततोहमगमद्देवकृत्वाकार्यंत्वयेरितम् १६ तवेच्छाविषयंकोनुहन्यात्त्रैलोक्यमंडले ॥

अतस्त्वन्नामतोदेवजयंप्राप्तःसबालकः १७ ततःशिवोहर्षयुतोलिलिंगनंदिकेश्वरम् ॥ उवाचचप्रसन्नात्माज्ञातंतेपौरुषंदृढम् १८ नास्तित्रिभुवनेकोपित्व
त्समोनंदिकेश्वर ॥ ॥ कउवाच ॥ ॥ ततःप्रणम्यविश्वेशंपार्वतीमगमन्नसः १९ प्रणम्यतांयोज्यहस्ताप्रोचेमधुरयागिरा ॥ मातःशिवाज्ञयाबालोनीतो
माहिष्मतींपुरीम् २० वरेण्यपत्न्याःपुरतःपुष्पिकायांन्यधायिसः ॥ यतस्तेनपुरादत्तोवरस्तस्यबभूवह २१ अहंपुत्रत्वमेष्यामिब्रह्मज्ञानप्रकाशकः ॥ निश
म्यवचनंतस्यसर्वज्ञापार्वतीतदा २२ जहर्षजननीतस्यशिशोर्वीर्यमनंतकम् ॥ उवाचपरयाभक्त्याज्ञातंतेपौरुषंसुत २३ हतात्वयामहाघोराराक्षसीघोरनि
स्वना ॥ गंधर्वीश्चहतादुष्टारक्षितश्चैवबालकः २४ अज्ञातस्त्वपितस्तत्रमहाकार्यमिदंकृतम् ॥ इत्युक्त्वाविससर्जासुंविश्रांतिंचाकरोत्तदा २५ ॥ इतिश्रीगणे
शपुराणेउत्तरखंडेगंधर्वपराजयोनाम०अध्यायः ॥ १३१ ॥ ॥ कउवाच ॥ ततःकदाचिद्दैत्येंद्रःसिंदूरोमदगर्वितः ॥ सभासनगतःप्राहवृथामेपौरुषंकृतम् १
इंद्रादयोनमेयुद्धंददुर्ब्रह्मादयोहरिः ॥ राज्ञांतुगणनानैवमृत्युलोकनिवासिनाम् २ कुलीनायायथानार्यायौवनंहिपतिंविना ॥ तथामेपौरुषंव्यर्थंयोद्धृभिर्हि
विनाभवत् ३ ततोंतरिक्षेवाणींसशुश्रावपरमाद्भुताम् ॥ ॥ वाण्युवाच ॥ ॥ किमर्थंवल्गसेमूढजातोस्तितवयुद्धदः ४ पार्वत्याउदराद्गर्भोवरेण्यगृहगोधुना
वर्द्धतेनंतलीलोसौयथेंदुःशुक्लपक्षगः ५ ॥ कउवाच ॥ श्रुत्वेत्थंसहसावाणींमुमूर्छेसिंदुरस्तदा ॥ विहर्षश्चिंतयामासकिमिदंकेनभाषितम् ६ यदिहस्योभवेन्मह्यं
स्वादेयंतंसमस्तकम् ॥ कालस्यमेकथंमृत्युःपश्चात्सूर्योदयोयथा ७ एवमुक्त्वोदतिष्ठत्सगर्जयन्विदिशोदिशः ॥ उड्डीयसहसाप्रायात्कैलासंगिरिजालयम् ८
चूर्णयन्पर्वतान्वृक्षान्पातयन्स्वांगमारुतात् ॥ चेलतुःकूर्मशेषौचचकंपेचवसुंधरा ९ नददर्शशिवंतत्रपुनःसर्वंसहाययौ ॥ बभ्रामवसुधासर्वांशिवंवेगात्
गवेषयन् १० पर्यल्यारण्यंमहारण्यमाजगामरुषान्वितः ॥ ददर्शदूरतोगौरीसहितंशंकरंतदा ११ मंडपंचगणांश्चैवसरांसिचोत्पलानिच ॥ ततोजगामसहसारि
ष्टंगौर्यैप्रकल्पितम् १२ अदृष्ट्वातत्रबालंसचुकोपाग्निरिवज्वलन् ॥ ततःसतर्कयामासनवाणीनमसोमृषा १३ अस्याःसुतोमांहिहन्यान्नजातश्चेद्भविष्यति ॥
तस्मादेनांनिहन्म्यद्यमूलच्छेदस्ततोभवेत् १४ ॥ कउवाच ॥ एवंनिश्चित्यमनसाततःशस्त्रमुपाददे ॥ यावदुमांहंतिदुष्टस्तावद्दृष्टःशिशुःपुरः १५ चतुर्भुजोति
रुचिरोमुकुटांगदभूषितः ॥ परशुंकमलंमालांदधंतंचतदद्भुतम् १६ कटौशेषंगलेहारंनूपुरौचांघ्रियुग्मयोः ॥ निवृत्तस्तद्वधात्सद्यस्तांचसुप्रामममन्यत १७ दधार
बालकंहस्तेकांक्षन्क्षेप्तुंमहोदधौ ॥ एवंनिश्चितसंकल्पस्ततोसौचकितःपुरा १८ततःसबालोववृधेहिमाचलइवापरः ॥ सिंदूरोपिचकंपेसौमहाभारातुरःक्षणात् १९
श्वासाकुलःपुरोगंतुंनशशाकस्ववशाक्तितः ॥ ततस्तत्याजतंबालंदैत्योविह्वलतांगतः २० बालेतुपतितेभूमौमहारावविराविणि ॥ चेलुश्चपर्वतानादैश्चकंपेचवसुं
धरा २१ बभ्रमुर्विहगाव्योम्निनानारावविराविणः॥अर्णवाःक्षोभिताःसप्तब्रह्मांडमपिपुस्फुटे २२ सबालःपतितोरेवाजलांतसुनिसन्निधौ ॥ तत्रतीर्थमभूच्छ्रेष्ठंगणे

१ कांक्षन्क्षेप्तुंमनोदधे इत्यशुद्धः पाठः ।

शकुंडमित्युत२३अस्याआजन्मतःपापंनाशमेतिस्मृतेःक्षणात्॥दर्शनाद्दशजन्मीयंस्नानाच्चशतजन्मजम् २४सेवनंमोक्षदंयस्याअनुष्ठानवतांनृणाम् ॥ तद्देहरु
धिरात्तत्रप्रस्तरारक्ततांगताः२५तएवनार्मदाःख्यातागणेशाःपापनाशनाः ॥ दर्शनात्पूजनात्सर्वकामदाभक्तिकारिणाम् २६ नर्मदामहिमासर्वोवर्णितुंनैवशक्य
ते ॥ ततःसजहृषेदैत्योरिपुर्मेनाशतांगतः २७ तावत्कुंडात्समुद्भूतोभीषणःपुरुषोमहान् ॥ जटाभारेणसंछन्नोवल्लीछिन्नोधरोयथा २८ दंष्ट्राकरालवदनोजि
ह्वाव्यालीसमावृतः ॥ दीर्घपाण्यंघ्रियुगलःश्वासव्याकुललोचनः २९ दृष्ट्वातथाविधंतंतुक्रोधव्याकुललोचनः ॥ उवाचदैत्यःसिंदूरोनचास्यगणनाममम ३०
एवमुक्त्वाखड्गहस्तोययौहंतुंतुतंरुषा ॥ खड्गेनहंतितंयावत्तावत्सददृशेंबरे ३१ उवाचदैत्यंरेदैत्यवृथामांत्यक्तवान्नक्षितौ ॥ तवांतकस्तुरेमूढवर्धितःक्वचि
देवहि ३२ हनिष्यत्येवनूनंत्वांसाधुरक्षणतत्परः ॥ अंतर्दधेततोभीमएवमुक्त्वासपूरुषः ३३ ततोदैत्योमहारोषादुवाचनिजसेवकान् ॥ ध्रियतांध्रियतामेषये
नोक्तंपरुषंवचः ३४ यदातंक्वापिनापश्यत्तदास्वस्थानमागमत् ॥ द्रक्ष्यामितंयदाशत्रुंजयिष्यइत्यमन्यत ३५ एतावच्चरितंतस्यपार्वत्याज्ञायिनैवतत् ॥ तस्यै
वमायामोहेनप्राप्तयामोहमुत्तमम् ३६ ततःप्रोवाचगिरिशंपार्वतीविनयान्विता ॥ अत्रपीडादैत्यकृताप्रारब्धाजगदीश्वर ३७ कैलासंगंतुमिच्छामितवेच्छा
चेन्नयस्वमाम् ॥ एवमाकर्ण्यतद्वाक्यंजहृषेशंकरोपिच ३८ आरुह्यनंदिनंसद्यःपार्वत्यासहशंकरः ॥ सप्तकोटिगणाकीर्णंकैलासंप्रापतत्क्षणात् ३९ प्र
विश्यस्वालयंगौरीपरमंहर्षमाययौ ४० ॥ ॥ इतिश्रीग०उ०कैलासाभिगमनंनामद्वात्रिंशोत्तरशततमोऽध्यायः ॥ १३२ ॥ छ ॥ ॥ व्यासउवाच ॥
पुष्पिकानिकटेत्यक्तोवरेण्यस्यगृहेसकिम् ॥ चकारतन्ममाचक्ष्वकार्यंविस्तरतोब्जज १ ॥ ॥ कउवाच ॥ ॥ सम्यक्पृष्टंत्वयावत्सहृदयानंदकारक
म् ॥ कथयिष्येविधानेनतत्सर्वंपापनाशनम् २ तस्यांनिशायांव्युष्टायांददर्शपुष्पिकासुतम् ॥ चतुर्बाहुंरक्तवर्णंगजवक्त्रमलंकृतम् ३ कस्तूरीतिलकंमु
क्तामालयासुविराजितम् ॥ पीतवस्त्रपरीधानंचारुचंदनचर्चितम्४देदीप्यमानंवपुषानानालंकारसंयुतम् ॥ ततःसापुष्पिकादृष्ट्वाबालकंतुतथाविधं ॥ विस्मिता
दुःखिताचापिभयभीताभवत्तदा ॥ ६तीवक्षोबहिर्यातापाणिभ्यांशोककर्शिता६तदाक्रंदितमाकर्ण्यमीलिताःपरिचारिकाः ॥ ताभिरत्यद्भुतंदृष्ट्वाबालकंतंतथावि
धम् ७ नृपोपिज्ञातवृत्तांतःसगणोभिययौगृहे ॥ ततस्तेपिभयोद्विग्नादृष्ट्वाबालंतथाविधम् ८ अधीराःपपलुस्तस्यकेचिन्मूर्छामुपाययुः ॥ केचिन्नृप
तिंप्राहुर्नजातोनभविष्यति ९ नदृष्टोनश्रुतःक्वापिबालएतादृशोनृणाम् ॥ नैवायंस्थापनीयस्तेवंशच्छेदकरोगृहे १० एवमाकर्ण्यसर्वेषांवाक्यंमेने
सभूपतिः ॥ दूतानुवाचबालोयंत्यज्यतांगहनेवने ११ ततोदूतागतामध्येगृहीत्वाबालकंतुतत् ॥ गहनंकाननंदृष्ट्वावायुस्पर्शविवर्जितम् १२ तीरे
तुसरसस्तत्रक्षिप्त्वातेपर्णसंचयैः ॥ आच्छाद्यप्रययुःशीघ्रंवरेण्यंनृपतिंपुनः १३ सभामध्येनृपंदृष्ट्वानमस्कृत्वाब्रुवंस्तदा ॥ आज्ञयातवराजेंद्रसिंहव्याघ्र
निषेविते १४ त्यक्त्वाबालंसमायाताभक्षितस्स्याद्वनेचरैः ॥ ॥ कउवाच ॥ ॥ यावत्तेभक्षितुंयाताजंबुकास्तावद्देवतम् १५ पराशरो

मुनिवरोददर्शकरुणानिधिः ॥ चतुर्भुजंगजास्यंतंकोटिसूर्यनिभांशिशुम् १६ नानालंकारसंयुक्तंदिव्यांबरविभूषितम् ॥ सर्पवेष्टितसन्नाभिंचिंतामणि
विभूषितम् १७ मुमोहमाययातस्यसर्वज्ञाननिधिर्मुनिः ॥ शुशोचकिमिदंविघ्नंममनाशायनिर्मितम् १८ इंद्रेणमेतपोनाशकांक्षतास्वार्थसाधनम् ॥
अकारिनमयाकिंचिद्दुष्कृतंपापभीरुणा १९ दीननाथचंद्रचूडरक्षमांमहतोभयात् ॥ एवंशोचंतमालोक्यगजास्यःकरुणायुतः २० निराकरोन्मोहजा
लंततोलक्षयत्पुरः ॥ तमेवपरमात्मानंपरब्रह्मस्वरूपिणम् २१ भक्तानांरक्षणंकर्तुंईदृशंवेषमास्थितम् ॥ धन्यंमेद्यजनुर्माता पितरौचतपोमहत् ॥ निरस्तौ
जन्ममृत्यूमेप्राप्तंवांछितमुत्तमम् ॥ केनायंहतभाग्येनबालस्त्यक्तोवनांतरे २३ ॥ कउवाच ॥ एवमुक्त्वामुनिःसोथनिन्येबालंस्वमाश्रमम् ॥ वत्सलास्यततःप
त्नीदृष्ट्वाबालंतथाविधं २४ आनीतंस्वामिनाज्ञात्वाननंदस्नेहनिर्भरा ॥ त्वद्दयेविनिवेश्यैनंप्राहप्राणपतिंतदा २५ बहुकालकृतंस्वामिंस्तपस्तेफलितंगुरु ॥ यस्य
स्वरूपंनब्रह्मानहरोनश्रियःपतिः २६ मुनयोनविदुःसाक्षाद्दर्शनंजातमद्यनौ ॥ यःकर्तारक्षिताहंतासर्वस्यजगतःप्रभुः २७ अवतीर्णोभुवोभारंहर्तुंनानावतारकृत्
॥ महद्भाग्यंहिनौस्वामिन्ननायासेनविश्वभृत् २८ अक्षिगोचरतांयातोमनोवाचामगोचरः ॥ ॥ कउवाच ॥ ॥ तस्यबालस्यस्पर्शेनस्तनौपीनपयोधरौ २९
जातौपपौततोबालःसाचानंदमवापह ॥ ततःशुश्रावराजासौवरेण्योबालकंतुतं ३० पराशरेणमुनिनापालितंदिव्यचक्षुषा ॥ वाद्यघोषेणमहताशर्करांचगृहेगृहे
३१ दापयामासहर्षेणब्राह्मणान्सुहृदोपिच ॥ तोषयामास वस्त्राद्यैःकांचनैरत्नसंचयैः ३२ गावःकामदुघाजाताःशुष्कवाप्योजलान्विताः ॥ आश्रमेतुमुनेस्तस्य
शुष्कवृक्षाःफलान्विताः ३३ यइदंशृणुयान्मर्त्यःपुत्रवान्धनवान्भवेत् ३४ ॥ इतिश्रीग०उ०पराशरदर्शनंनामत्रयस्त्रिंशोत्तरशततमोध्यायः १३३ ॥ कउवाच ॥
बालःसववृधेतत्रदिवसेदिवसेशशी ॥ आनंदंजनयन्मातुःपितुश्चचरितैःस्वकैः १ व्यासउवाच ॥ वदब्रह्मन्गुणेशस्यचरितंद्वापरोद्भवं ॥ श्रुत्वापूर्वचरित्राणिनतृ
प्तिर्मेभवत्प्रभो २ गजाननेतिनामास्यवाहनंमूषकःकथम् ॥ एतत्सर्वंसविस्तारंवदमेचतुरानन ॥ ३ कउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ प्रऱ्हा
दस्यचसंवादंभार्गवस्यकवेरपि ४ एवमेवपुरापृष्टःप्रऱ्हादेनमहामुनिः ॥ तस्मैप्रोवाचभगवान्कविस्तच्छृणुसांप्रतम् ५ शृणुप्रऱ्हादयेनास्यवाहनंमूषको
भवत् ॥ तदहंसंप्रवक्ष्यामिश्रवणात्सर्वकामदं ६ पुराशक्रसभामध्येक्रौंचोगंधर्वसत्तमः ॥ वामदेवमुनिंसोथत्वरावान्प्रपदाहनत् ७ सशशापचगंधर्वंमूषक
स्त्वंभविष्यसि ॥ कल्पयिष्यतिवाहत्वेत्वामाक्रम्यगुणेश्वरः ८ सएवकरुणायुक्तोमोक्षंनेष्यतिविश्वकृत् ॥ पराशराश्रमेसोथपपातमूषकाकृतिः ९ गिरिशृंगनि
भोघोरोमहारोमामहानखः ॥ महावीर्योमहादंष्ट्रोमहास्वनविराजितः १० तस्याश्रमेमहाघोरमुपद्रवमथाकरोत् ॥ भक्षयामासधान्यानिभंक्त्वामृत्पात्रसंचयान्
११ पुस्तकानिचवस्त्राणिवल्कलानिमहांत्यपि ॥ मसारभूतंयत्सर्वंभक्षयामासमूषकः १२ पुच्छाघातेनवृक्षान्सपातयामासभूतले ॥ चुंचुंकारेणशब्देनगर्जयामास
विष्टपम् १३ ज्ञात्वातथाविधंतंतुचिंतामापमुनीश्वरः ॥ दुर्जनस्यबलात्कारैःस्थानंत्याज्यंनसंशयः १४ अधुनाक्कानुगंतव्यंकस्मिंस्थानेसुखंभवेत् ॥ प्राणत्यागेमह

दोषंवदंतिशास्त्रचिंतकाः १५ कथंसुखाश्रमेदुःखंप्राप्तंकर्मप्रसंगतः ॥कस्यवास्मरणंकार्यंकोवादुःखात्प्रमोक्ष्यति १६ कएनंनाशयेदत्रकःसमर्थोभवेद्वधे ॥ कमद्य
शरणंयायांकोनस्त्राताभविष्यति१७एवंपितृवचःश्रुत्वाबालकोनंतविक्रमः॥उवाचमधुरंवाक्यंचिंतांमाकुरुसर्वथा १८मयितिष्ठतिदुष्टानांसंहारिणिमहाप्रभौ ॥
पुत्रतांतेप्रयातोस्मिविधास्येतेप्रियंतुयत् १९ यस्यमेक्रंदितेनेयंपृथिवीशीर्णतामियात् ॥ पर्वताश्चूर्णतामापुःपादाघातेनमेमुने २०पश्यमेकौतुकंतातनयाम्येनं
तुवाहताम् ॥ एवमुक्त्वासृजत्पाशंकोटिसूर्यनिभंशिशुः २१ मेघेष्विवतडित्पुंजःशुशुभेसोंतरिक्षगः ॥ तस्यजुंभयतोदेवास्त्वानिधिष्ण्यानितत्क्षणात् २२ सय
यौवह्निवद्गनोदर्शादिग्भ्रमणेरतः ॥ पाताले मूषकंकंठेबध्वाबहिरकाशयत् २३ मूर्छामवापमहतीमाखुःपाशबलार्दितः॥ शुशोचपरमक्रुद्धोनिरुद्धश्वासमारुतः
२४ कथंकालस्यमरणमागतंदैवनिर्मितम् ॥ भवितव्यंभवत्येवपुरुषार्थोनिरर्थकः २५ येनदंष्ट्राग्रमात्रेणदारिताःपर्वताबहु ॥ नमयागणितादेवानासुराराक्ष
सानराः २६ तस्यमेकेनपाशेनकंठोक्रामिगतायुषः ॥ कउवाच ॥ मूषकेप्रब्रुवत्येवंयावत्तावद्गजाननः २७ चकर्षमनसातंससोगान्मूषकसंयुतः ॥ यथागारु
डशास्त्रज्ञःसर्पंकर्षतितत्क्षणात् २८ सतंदृष्ट्वापाशकंठोमूषकोलब्धधीःक्षणात् ॥ नमस्कृत्यविभुंदेवंगजाननमनामयम् २९ तुष्टावपरयाभक्त्याचिदानंदघ
नंप्रभुम् ॥ त्वमेवजगतांनाथःकर्ताहर्ताप्रपालकः ३० गुणत्रयविहीनश्चगुणत्रयसहायकृत् ॥ मायातीतोपिमायावीमायिनामपिमोहकृत् ३१ ब्रह्मादीना
मगम्यस्त्वंमुनिहृत्पद्मसंस्थितः ॥ कारणंकरणंकर्ताकारणानांचकारणम् ३२ सोद्यदृष्टःस्वचक्षुर्भ्यामतोधन्यंजनुर्मम ॥ धन्यौमेपितरौनेत्रेतपोविद्याव्रतं
जपः ॥ ३३ ॥ ॥ कउवाच ॥ ॥ एवमाकर्ण्यतद्वाक्यंप्रीतोसौद्विरदाननः ॥ प्राहभक्तिंदृढांज्ञात्वाभक्तंतंमूषकंविभुः ३४ तवैवपुरुषार्थेनदेवद्वि
जद्रुहोनघ ॥ निर्गुणोहंगुणीजातोदुष्टनाशनहेतवे ३५ साधूनांरक्षणार्थाययतस्त्वंशरणंगतः ॥ अतस्तेदत्तमभयंवरंवृणुयामिच्छसि ३६ ॥ ॥ मूष
कउवाच ॥ ॥ नाहंवृणेगजास्यत्वांत्वमेवब्रूगुवांछितम् ॥ ॥ कउवाच ॥ ॥ इत्युक्तोमूषकेनासौगर्वितेनगजाननः ३७ वाहतांममयाहित्वंयदि
सत्यंवचस्तव ॥ तथेत्युक्तेसर्पिंगाक्षोरुरोहाक्रम्यतत्क्षणात् ३८ आरोहणचूर्णयंस्तंतुपुनर्देवंसयाचत ॥ अहंतेवाहनंजातोलघुभूतोभवप्रभो ३९ याचतस्त
स्य वचसालघुभारोभवद्विभुः ॥ एतदृष्ट्वामहाश्चर्यंप्रणम्यमुनिरब्रवीत् ४० नबालेपौरुषंकापिमयादृष्टंजगत्त्रये ॥ यच्छब्दात्पर्वताशीर्णालोकपालाश्च्युतस्थ
लाः ४१ सत्वयाक्षणमात्रेणनीतोवाहनतांबलात् ॥ ततआगत्यमातास्यवत्सलागृह्यतंशिशुम् ४२ प्रस्नुतौपाययामासस्तनौमातासुदायुता ॥ उवाचनचजा
नेतेस्वरूपंचपराक्रमम् ४३ जन्मजन्मांतरीयेणपुण्येननौगृहंगतः ॥ ततःसमूषकंबध्वाचिक्रीडेप्राकृतोयथा ४४ एवंतेकथिताचास्ययथामूषकवाहता ४५
इतिश्रीगणेशपुराणेउत्तरखण्डेचतुस्त्रिंशाधिकशततमोध्यायः ॥ १३४ ॥ ॥ ७ ॥ ॥ व्यासउवाच ॥ किमनेनकृतंपूर्वंपुण्यंपापंचपद्मज ॥ येनायंमौ
षकंजन्मप्रापदेवस्यवाहताम् १ ॥ कउवाच ॥ सम्यक्पृष्टंत्वयावत्सममापिमनसःप्रियम् ॥ ब्रवीमिसकलंतत्ततादृहैकमनाःशृणु २ सुमेरुशिखरेरम्यःसौभ

रेराश्रमोमहान् ॥ अभूद्वृक्षसमाकीर्णोनानापक्षिगणान्वितः ३ वसिष्ठाद्यामुनिगणादेवाइंद्रपुरोगमाः ॥ आयांतिसौभरेस्तस्यदर्शनार्थंदिनेदिने ४ महत्तपोवृ
द्धिदीप्तेरस्याग्निरवितेजसः ॥ ख्यातस्यसर्वलोकेषुध्याननिष्ठस्यचेश्वरे ५ तस्यपत्नीमहाभागामनोमयीतिविश्रुता ॥ पतिव्रतासुसर्वासुविख्याताभर्तृवल्लभा
६ रम्भतातुरतेस्तस्याजितारम्यतयाखिला ॥ शचीप्रभृतयःसर्वानप्रापुःसमतालवम् ७ कदाचित्सौभरिर्होमशालायांप्रातरुत्थितः ॥ कृत्वाहोमंवनंयातःस
मिदर्थंगृहेस्थिता ८ मनोमयीसुशीलासागृहकार्यरताभवत् ॥ तदादुष्टस्तुगंधर्वःक्रौंचनामासमागतः ९ विश्रांतिरभवत्तस्यदृष्ट्वाश्रममनुत्तमम् ॥ नाना
शालासमाकीर्णंबहुच्छायंसुशीतलम् १० एतादृशोरम्यतरआश्रमोयस्यसप्रभुः ॥ धन्यंजपस्तपस्तस्यक्षणेनायंसुखप्रदः ११ चिरस्थानान्मुक्तिदःस्यादि
त्युक्त्वातद्गृहंययौ ॥ ददर्शमुखचंद्रंसमनोमय्यामनोरमम् १२ यस्यादर्शनमात्रेणहरोपिस्मरसाद्भवेत् ॥ तस्याःकटाक्षपातेनमदनानिलविह्वलः १३ स
बभूवतदासक्तोदधारसहसाकरे ॥ तत्करस्पर्शमात्रेणचकंपेसामुमूर्छच १४ मनोमयीनशशापभर्तृस्मरणतत्परा ॥ म्लानाचशुष्ककंठाचसस्वेदाश्रिसवजला १५
बभूवपरमोद्विग्नामुमोहचशुशोचच ॥ कमद्यशरणंयामिकोस्माद्दुष्टात्प्रमोक्ष्यते १६ नकृतंदुष्कृतंकिंचिदिहजन्मनिसंस्मरे ॥ जन्मांतरीयपापेनसुखदुःखमु
पस्थितम् १७ दुष्टभावंतुतंज्ञात्वासांत्वयंत्यब्रवीदिदम् ॥ अहंदुहितृतुल्यातेजनकेनसमोसिमे १८ ज्ञानवानसिपापेत्वंमावर्तस्वगतत्रप ॥ पापिनोयांति
नरकंवर्षकोटिगणान्बहून् १९ तस्मान्मुंचमहाभागक्षपणांपुत्रिकोपमाम् ॥ नोचेदहंकरिष्यामिप्राणत्यागंनसंशयः २० स्त्रीहत्यादोषसंभूतंपापंतेस्यान्महत्तर
म् ॥ ममभर्तामहाभागोवनादायास्यतेधुना २१ तस्यक्रोधानलस्त्वांहिभस्मत्वंनेष्यतेक्षणात् ॥ विनाज्ञांतस्यनोकिंचित्कार्यंकार्यंमयालघु २२ नोचेत्त्वांभस्मसात्कु
र्यात्सृष्टिंचब्रह्मणोपिच ॥ एवंवदंत्यांतस्यांतुसौभरिःसमुपागतः २३ तंदृष्ट्वास्वांगणगतंसंध्याह्नरविसन्निभम् ॥ मुमोचतेजसातत्रधर्षितोसौकरंतदा २४ अधो
पश्यच्चकंपेचमम्लायचबिभायच ॥ मुनिःप्रोवाचसहसाप्रलयाग्निरिवज्वलन् २५ उत्ससर्जतदाशापंगंधर्वंप्रतिदुःसहम् ॥ मुनिरुवाच ॥ असमक्षंयतोमेत्वं
पत्नींधर्षितवानसि २६ असमक्षचरोमूढमूषकस्त्वंभविष्यसि ॥ चौरवत्पृथिवींदार्यस्वोदरंपूरयिष्यसि २७ ॥ क्रौंचउवाच ॥ नमयाबुद्धिपूर्वंतेधर्षितेयंमनोम
यी ॥ प्रसंगादभवत्संगोदृष्ट्वेमांचारुरूपिणीं २८ करमात्रधृताचेयंतावत्त्वमपिदृष्टवान् ॥ तेजसातेप्रभीतेनमयामुक्तानघामुने २९ अतोपराधंमेक्षंतुमर्हसि
त्वंकृपानिधे ॥ कुरुष्वानुग्रहंमह्यंशरणागतवत्सल ३० अहंत्वांशरणंयामिकृपांकुरुममोपरि ॥ त्रैलोक्येनेदृशीदृष्टापातिव्रत्यगुणान्विता ३१ ॥ मुनिरुवाच ॥
प्लवतेसागरेमेरुरुदियात्पश्चिमेरविः ॥ नमेवचोन्यथाभूयाद्वह्निःशीतत्वमाप्नुयात् ३२ अथापिप्रब्रवीम्यद्य दुष्टतच्छृणुसादरम् ॥ पराशरगृहेदेवोद्वापरेवतरि
ष्यति ३३ गजाननइतिख्यातस्तस्यवाहत्वमेष्यसि ॥ तदाब्रह्मादयोदेवामानयिष्यंतिसादरम् ३४ तस्यहस्तगतःस्वर्गंपुनरेष्यसिसत्वरम् ॥ एवमाकर्ण्यतद्वा
क्यंदुःखहर्षसमन्वितः ३५ ॥ कउवाच ॥ पपातपृथिवीपृष्ठेमहामूषकरूपधृक् ॥ पराशरस्याश्रमेतुद्वापरेसमुपस्थिते ३६ महाबलोमहावीर्योमहापर्वतस

निभः ॥ मुनेराशीर्बलेनासौगजाननसमीपगः ३७ अभवद्वाहरूपेणमूषकोसौमहाबलः ॥ एतत्तेकथितंसर्वंयन्मेपृष्टंत्वयानघ ३८ गजाननस्यवाहत्वंमूषकस्य
यथाभवत् ॥ मुनिरुवाच ॥ सिंदरस्यवधंब्रह्मन्कथंसकृतवान्विभुः ३९ गणेशस्तन्ममाचक्ष्वविस्तराच्चतुरानन ॥ श्रुत्वावाचोनमेतृप्तिर्जायतेमृतपानवत् ४०
भक्त्याशृणोमिदेवेशसर्वज्ञस्त्वंवदस्वमे ४१ ॥ इतिश्रीगणेशपु०उत्त०क्रौंचशापवर्णनंनामपंचात्रिंशोत्तरशततमोऽध्यायः ॥ १३५ ॥ कउवाच ॥ एकस्मिन्नदि
सेदेवोजगादमुनिसत्तमम् ॥ पराशरंमहाभागंपरदुःखप्रपीडितः १ ॥ गजाननउवाच ॥ सिंदूरेणतुदुष्टेनपीडितंसकलंजगत् ॥ स्वाहास्वधावषट्कारैर्वर्जितंवेद
घोषतः २ स्थानभ्रष्टादेवगणाभ्रष्टाऋषिगणास्तथा ॥ गजाननस्वरूपेणकरिष्येदुष्टनाशनम् ३ साधूनांपालनंचैवभूभारहरणंतथा ॥ स्थापनंसर्वदेवानामानंदंज
गतोपिच ४ निधेहिमस्तकेतातपाणिंमेभयदंशुभम् ॥ अनुग्रहप्रसादात्तेहनिष्येदुष्टदानवान् ५ ॥ मुनिरुवाच ॥ आश्चर्यंपरमंबालबालभावात्प्रभाषसे ॥ बा
लकःकौतुकाविष्टोयाचतेचंद्रमंडलम् ६ असाध्यंत्रिदशैःसर्वैःकर्मकर्तुंतथेच्छसि ॥ यस्यश्वासेनगिरयःपतंतिशतशोभुवि ७ पादाघातेनयस्याशुकंपतेभुवन
त्रयं ॥ कथंत्वंशुध्यसेतेनबिसतंतुशरीरवान् ८ चरित्वानववर्षाणिपूर्णानितवसाप्रतम् ॥ ममानुग्रहमात्रेणत्वंचेच्छक्तोभविष्यसि ९ तदायंनिहितोहस्तोमस्त
केभयदायकः ॥ कउवाच ॥ ततोहर्षयुतोदेवोनमस्कृत्यमुनिंतदा १०जननीमपिदुर्गांचश्रीहारिंहरमेवच ॥ ययौयोद्धुंमूषकंतमारुह्यसगजाननः ११ अंकुशंपरशुं
पाशंकमलंचचतुर्भुजैः ॥ दधानोगर्जनेनाशुकंपयन्भुवनत्रयम् १२ प्रज्वलंस्तेजसास्वेनप्रलयानलसन्निभः ॥ क्षणेनप्रापसिंदूरनगरंसगजाननः १३ घृष्णेश्वरसान्नि
ध्यात्सिद्धंसिंदरवाडकम् ॥ तत्रस्थःप्रशशासासौसिंदूरोभुवनत्रयम् १४ तदुत्तरेस्थितोदेवोजगर्जगर्जयन्दिशः ॥ चुक्षुभुःसागराःसप्तविशीर्णागिरयोपिच १५श्रुत्वा
निनादंतस्याशुसर्वेदैत्याश्चकंपिरे ॥मुमूर्च्छुर्भीरवःसर्वेकेचिन्मृत्युमुपाययुः १६सिंदूरोपिमुमूर्च्छाशुक्षणेनप्रकृतिंययौ ॥ उवाचसेवकान्सर्वान्कोयंगर्जतिदृश्यताम्
१७मूर्छाप्राप्तामयाकस्माद्यच्छब्देनपुरःकथम् ॥ स्थास्यामितत्पुरःस्थातुंकस्यशक्तिर्भविष्यति १८ ततस्तेसेवकाजग्मुस्तदाबालसमीपतः॥ तद्रूपंतेनिरीक्ष्यै
वसिंहस्यकरिणोयथा १९ बिभ्युश्चैवचकंपुश्चकेचिद्धैर्यात्तमब्रुवन् ॥ कस्यत्वंकुतआयातःकिमर्थंतवनामकिं २० सिंदूरोविश्वसंहाररसिकःक्रोधसंयुतः॥श्रुत्वा
तेक्रंदितंसर्वंकंपितंचससिंदुरः २१ बालोपिबलवान्भासिचतुःपंचाब्दिकोपिच ॥ दृश्यसेसर्वसंहारकरणायक्षमःक्षणात् २२ एवमाकर्ण्यतद्वाक्यंप्रोवाच
सचतान्विभुः ॥ अहंशिवसुतःख्यातःपराशरगृहेवसन् २३ दुष्टसंहाररसिकोभक्तपालनतत्परः ॥ नानावतारकुशलोब्रह्मादीनामगोचरः २४ गजाननेति
मेनामयुद्धंकर्तुंसमागतः ॥ स्वामिनंवोथगच्छंतुतस्मैसर्वंब्रुवंतुच २५ तस्मिन्हतेमानसंमेतोषमेष्यतिदुर्जये ॥ कउवाच ॥ ततस्तेनिर्ययुःशीघ्रंसिंदूरंप्राब्रुव
न्वचः २६ ॥ दूताऊचुः ॥ वयंशीघ्रतरंयाताःपुरुषंभवदाज्ञया ॥ कृतांतसदृशंतंतुदृष्ट्वासर्वेचकंपिताः २७ ततोभवत्प्रतापेनतदग्रेप्राब्रुवामच ॥ तत
स्तेनसमाख्यातंनिजंसर्वंसमासतः २८ गजाननेतिनामास्यशिवपुत्रत्वमेवच ॥ दुष्टदैत्यविनाशायसाधूनांपालनायच २९ सांप्रतंतुत्वयासार्द्धंयुद्धाय

समुपागतः ॥ सचतुर्वार्षिकोबालोवल्गतेबहुविस्तरम् ३० इदानींस्वस्वभावेनजाहिशत्रुंनिजंलघुम् ॥ तवतुश्वासमात्रेणदूरंगच्छेदयंशिशुः ३१ यस्यतेदर्श
नास्वामिंश्चकंपुःशिवकादयः ॥ तस्यतेगणनाकास्तिबालकस्याल्पमेधसः ३२ ॥ कउवाच ॥ एवंदूतवचःश्रुत्वासिंदूरश्चिंतयातुरः ॥ बभूवम्लानतुंडश्च
क्रोधारुणविलोचनः ३३ उद्वमन्नयनाद्वह्निंप्रलयानलसन्निभम् ॥ उवाचदूतान्क्रोधेनहर्षेणचसमन्वितः ३४ ॥ सउवाच ॥ आश्चर्यंपरमंदूताभवद्वचसिमेभ
वत् ॥ सिंहेनसहयोद्धुंवैमशकःकथमेष्यति ३५ चतुर्वर्षेणबालेनयोद्धव्यंकिंमयासह ॥ यूयंततःकथंभीतानजानेतत्रकारणम् ३६ मयिक्रुद्धेजगन्नश्येत्तत्रका
गणनाऽस्यह ॥ जगर्जगर्जयन्व्योमदिशोपिविदिशोपिच ३७ धृत्वाशस्त्राणिचास्त्राणिनिर्ययौयुद्धलालसः ॥ ततऊचुरमात्यास्तंनमस्कृत्यासुराधिपं ३८
सत्सुबलेष्वमात्येषुकथंयासिस्वयंरणं ॥ वयंतंहिहनिष्यामःप्रतापात्तवदैत्यप ३९ समथार्थंमहत्सैन्यंपाल्यतेसोयमागतः ॥ प्राणांस्त्यक्ष्यामहेसर्वेतवहेतो
र्महाप्रभो ४० अनुजानीहियास्यामोहंतुंबालंरिपुंतव ॥ सिंदूरउवाच ॥ यामिसर्वेप्रपश्यंतुपौरुषंममसैनिकाः ४१ इत्युक्त्वाप्रययौशीघ्रंबालंहंतुंसमुत्सुकः ॥
सप्रापक्षणमात्रेणयत्रबालःस्थितोभवत् ४२ ॥ इतिश्रीग०उ०बा०सिंदूरनिर्गमोनामषट्त्रिंशोत्तरशततमोध्यायः ॥ १३६ ॥ कउवाच ॥ तंदृष्ट्वाबालकंप्राह
सिंदूरोमदगर्वितः ॥ लज्जामेजायतेमंदयुध्यतोबालकेनह १ याहिशीघ्रंगृहंबालपिबमातुःस्तनंमुदा ॥ वृथामच्छरपातेनसद्योमृत्युमुपैष्यसि २ पलायंतेहिमां
दृष्ट्वाकेशाद्यास्त्रिदिवौकसः ॥ मृतेत्वयितवस्नेहात्पितरौतेमरिष्यतः ३ अतोगच्छनमेस्वास्थ्यंदर्शयस्वकिशोरक ॥ यस्यमेतलघातेनब्रह्मांडंशतधाभवेत् ॥ देवउवा
च ॥ सत्यमुक्तंत्वयादुष्टनचेतसिविचारितं ॥ नज्ञातंममसामर्थ्यंरूपंवाविविधंत्वया ५ यस्यमेक्रोधदृष्ट्यैवभ्रष्टाःस्युःसुरनायकाः ॥ स्वेच्छयाहंसृजेभावैस्त्रिभिरेव
हरामिच ६ विश्वंचराचरंनानारूपवांस्तुयुगेयुगे ॥ भूमिभारंमहाघोरंहरामिदुष्टनाशनात् ७ नलघुर्लघुतामेतिपराक्रमयुतोपिचेत् ॥ अणुमात्रोदहेद्वह्निः
सकलंनगरंमहत् ८ जिजीविषुश्चेद्गच्छत्वंनत्वामांनिजमंदिरं ॥ मानिनोनैवनिघ्नंतिनतंचशरणागतं ९ नोचेन्मच्छस्त्रपातेनस्वर्गलोकंगमिष्यसि ॥ हतेत्व
यिसुखंयास्येत्वयायत्पीडितंजगत् १० ब्रह्मणोवरदानेनमागर्वंकुरुदैत्यपट् ॥ विपरीतंभवेत्सर्वंविपरीतंयथापुरा ११ स्तंभेवतीर्यन्यहनद्धाहिरण्यकशिपुं
विभुः ॥ सुग्रीवेणहतोबंधूराममाश्रित्यकालतः १२ विपरीतामतिर्जातातवापिकालयोगतः ॥ अतिस्थूलोलघुतरोभासतेममसांप्रतं १३ धृत्वाधैर्यंचल
ज्जांचयुद्धंकुरुमयासह ॥ ॥ कउवाच ॥ ॥ एवमुक्त्वादधाराशुविराड्रूपंगजाननः १४ ब्रह्मांडादूर्ध्वमगमन्मस्तकश्चरणौतथा ॥ पातालानिच
सप्तानिभित्त्वायातौश्रुतीदिशः १५ पश्यतिस्मयदादैत्योबालंतंविश्वरूपिणं ॥ सहस्रशिरसंदेवंसहस्राक्षंदिवोभुवं १६ सहस्रपादंव्याप्याशुस्थितंव्या
प्यदिशोदश ॥ दिव्यांबरंदिव्यगंधंदिव्यालंकारभूषितम् १७ असंख्यसूर्यसदृशमसंख्यरूपिणंविभुम् ॥ एवंदृष्ट्वाविराड्रूपंचकंपेदैत्यमानसम् १८ धृत्वाधै
र्यंपुनर्दैत्योययौदेवस्यसन्निधौ ॥ जगर्जगर्जयन्व्योमदिशश्चविदिशोपिच १९ उद्यम्यखड्गंमहसादेवंहंतुमियेषसः ॥ ययौतत्पुरतःक्रोधात्पतंगोज्वलनं

यथा २० ॥ ॥ देवउवाच ॥ ॥ नायंमूढोविजानीतेस्वरूपंममदुर्लभम् ॥ अहमेवविमोक्ष्यामीत्युक्त्वाकंठेदधारतम् २१ ममर्दसिंदुरंतंसकराभ्यां
बलवत्तरं ॥ ततस्तदसृजांगानिविलिलिंपारुणेनसः २२ ततःसिंदूरवदनःसिंदूरप्रियएवच ॥ अभवज्जगतीख्यातोभक्तकामप्रपूरकः २३ सिंदूरेनिहतेदे
वासुदापुष्पाण्यवाकिरन् ॥ अवाद्यञ्जयवाद्यानिननृतुश्चाप्सरोगणाः २४ आययुस्तत्रमुनयोवसिष्ठप्रमुखाःसुराः ॥ ब्रह्माद्याःसकलाःशक्रपुरोगाव
स्तुपाणयः २५ जयशब्दैर्नमःशब्दैःपूरयंतोदिशोदश ॥ ततःसर्वेभूमिपालाययुस्तत्रमुदान्विताः २६ षोडशैरुपचारैस्तमानर्चुःपरमेश्वरं ॥ गजाननं
चतुर्बाहुंसर्वाभरणभूषितं २७ दिव्यांबरंदिव्यगंधमाखुवाहनमीश्वरं ॥ प्रार्थयामासुरिंद्राद्यास्तोतुंत्वांनहिशक्नुमः २८ यत्रकुंठाश्चतुर्वेदाब्रह्माद्याश्चमु
नीश्वराः ॥ त्वंकर्ताकारणंकार्यंरक्षकःपोषकोपिच२९संहर्तामोहनश्चास्यविश्वस्यज्ञानदःक्वचित् ॥ सरितःसागरावृक्षाःपर्वताःपशवोखिलाः ३० वायुराकाश
पृथिवीवह्निर्वारित्वमेवच ॥ ब्रह्माविष्णुःशिवःशक्रोमरुतोमुनयोपिच ३१ गंधर्वाश्चारणाःसिद्धायक्षराक्षसपन्नगाः ॥ अप्सरःकिन्नरादेवत्वमेवसचरा
चरं ३२ वयंधन्यायतोदृष्टःप्रत्यक्षंमोक्षसाधनः॥ सिंदूरेतुहतेदेवसुखंप्राप्ताःसुरोत्तमाः ३३ राजानोमुनयोलोकाःस्वस्वकार्येमुदारताः ॥ भविष्यंतिस्वधास्वाहा
वषट्काराश्रिताःक्रियाः ३४ नानावतारैःकुरुषेपालनंत्वंविशेषतः ॥ दुष्टानांनाशनंसद्योभक्तानांकामपूरकः ३५ ॥ ॥ कउवाच ॥ एवमुक्त्वासुरास्तंतुव्यदधुःस
र्वेएवते ॥ प्रासादंरम्यशिखरंस्थापयित्वागजाननं ३६ यस्यदर्शनमात्रेणमुच्यतेपातकाज्जनः ॥ कुलानितारयेत्सप्तस्मरणादस्यमानवः ३७ पूजयित्वाप्रणम्यै
नंपरिक्रम्ययियुःसुराः ॥ ततस्तंमुनयःसर्वेपुपूजुःपरमादरात् ३८ सिंदूरहेतिनामास्यचक्रुःसिंदूरनाशनात् ॥ अतिसंतुष्टमनसोनत्वाजग्मुःस्वमाश्रमं ३९
ततःसर्वेमुनिवरानत्वादेवंसुभक्तितः ॥ पुपूजुःपरमात्मानंनानाद्रव्यैरनेकशः ४० राजसदनमितितेक्षेत्रंख्यातिमुपैष्यति ॥ वरेण्यस्तंविलोक्यैवनिजपुत्रम
बुध्यत ४१ यतोराज्ञांपदान्याशुहत्वादैत्यंसुदारुणं ॥ दत्तानिभवतानाथसिंदूरंलोककंटकम् ४२ दैत्यविमर्दनइतिनामख्यातिमुपैष्यति ॥ पुपूजतनयंस्नेहा
त्तदादृष्टपराक्रमम् ४३ मुमोचस्नेहजंचाश्रुनशशाकप्रभाषितुम् ॥ अतिगद्गदकंठत्वाद्रुरोदभृशदुःखितः ४४ ॥ वरेण्यउवाच ॥ मूढभावेनसंत्यक्तोविघ्नभी
तेनपापिना ॥ यंत्वांपूजयितुंयाताब्रह्मशक्रपुरोगमाः ४५ अनंतकोटिब्रह्मांडनायकंत्वांनविद्महे ॥ कामधेनुंनिधिंकल्पवृक्षंमूढोयथात्यजेत् ४६ मायया
मोहितस्तेहमत्यजंत्वांतथागृहात् ॥ कउवाच ॥ इतितच्छ्रुत्वमाकर्ण्यकृपयापरमेश्वरः ४७ आलिलिंगवरेण्यंतंचतुर्बाहुभिरादरात् ॥ उवाचपरयाभक्त्या
वरेण्यनृपतिंविभुः ४८ ॥ देवउवाच ॥ पुराकल्पेमहारण्येतपस्तप्तंसुदारुणम् ॥ उभाभ्यांपक्वपर्णानिभक्षयित्वावटस्यह ४९ दिव्यवर्षसहस्रेणप्रसन्नोहंत
दाभवम् ॥ भवद्भ्यांहिवृतःपुत्रोनमोक्षोमूढभावतः ५० सोहंपुत्रत्वमापन्नोभूभारहरणायच ॥ सिंदूरस्यवधंकर्तुंसाधूनांपालनंतथा ५१ अन्यथानशरीरंमे
निराकारस्यसाक्षिणः ॥ वचनंतुकृतंसत्यंत्रैलोक्यस्यापितोषणम् ५२ यास्येधुनानिजंधामनत्वंशोकेमनःकृथाः ॥ वरेण्यउवाच ॥ संसारेबहुदुःखानिदृष्टानि

दुःसहानिच ५३ इदानींमोक्षमार्गमेकृपयादिशदुःखहन् ॥ साक्षात्कारेकथंबंधस्तवस्याद्विरदानन ५४ येनोपदेशेनमुक्तिंयास्यामितद्वदस्वमे ॥ योगंतंयेनसं
त्यक्ष्येकामंक्रोधंमृतेर्भयम् ५५ ॥ कउवाच ॥ एवमाकर्ण्यतद्वाक्यंकृपयासगजाननः ॥ उपवेश्यस्वासनेतंहस्तांशिरसिचादधत् ५६ गणेशगीतांतस्मैसउप
देष्टुंप्रचक्रमे ॥ निरस्यसर्वसंदेहान्विश्वरूपंप्रदर्श्यच ५७ गीतासारंसबुध्वैवगणेशस्योपदेशतः ॥ स्थाप्यराज्यममात्येषुतपसेवनमाययौ ५८ अतिवैराग्य
संयुक्तोदध्यौतंचगजाननम् ॥ आवर्त्तयत्सदागीतामनन्यविषयःकृती ५९ यथाजलंजलेक्षिप्तंजलमेवहिजायते ॥ तथातद्ध्यानतःसोपितन्मयत्वमुपाययौ ६०
मुनिरुवाच ॥ चतुराननदेवेशकृपयापरयावद ॥ गीतांतांतुगणेशस्यसर्वाज्ञानविनाशनीम् ६१॥ ॥ इतिश्रीगणेशपुराणेउत्त०वरेण्योपदेशोनाम०अध्यायः
१३७ ॥ कउवाच ॥ एवमेवपुरापृष्टःशौनकेनमहात्मना ॥ ससूतःकथयामासगीतांव्यासमुखाच्छ्रुताम् १ ॥ सूतउवाच ॥ अष्टादशपुराणोक्तममृतंप्राशितं
त्वया ॥ ततोतिरसवत्पातुमिच्छाम्यमृतमुत्तमम् २ येनामृतमयोभूत्वापुमान्ब्रह्मामृतंयतः ॥ योगामृतंमहाभागतन्मेकरुणयावद ३ ॥ व्यासउवाच ॥
अथगीतांप्रवक्ष्यामियोगमार्गप्रकाशिनीम् ॥ नियुक्तापृच्छतेसूतराज्ञेगजमुखेनया ४ ॥ वरेण्यउवाच ॥ विघ्नेश्वरमहाबाहोसर्वविद्याविशारद ॥ सर्वशास्त्रा
र्थतत्वज्ञयोगंमेवक्तुमर्हसि५ ॥ गजाननउवाच ॥ सम्यग्व्यवसिताराजन्मतिस्तेनुग्रहान्मम ॥ शृणुगीतांप्रवक्ष्यामियोगामृतमयींनृप६नयोगंयोगमित्याहुर्यो
गोयोगोनचश्रियः ॥ नयोगोविषयैर्योगोनचमात्रादिभिस्तथा ७ योगोयःपितृमात्रादेर्नसयोगोनराधिप ॥ योयोगोबंधुपुत्रादेर्यश्चाष्टभूतिभिःसह ८ नसयो
गःस्त्रियायोगोजगदद्भुतरूपया ॥ राज्ययोगश्चनोयोगोनयोगोगजवाजिभिः ९ योगोनेंद्रपदस्यापियोगोयोगार्थिनःप्रियः ॥ योगोयःसत्यलोकस्यनसयोगो
मतोमम १० शैवस्ययोगोनोयोगोवैष्णवस्यपदस्ययः ॥ नयोगोभूपसूर्यत्वंचंद्रत्वंनकुबेरता ११ नानिलत्वंनानलत्वंनामरत्वंनकालता ॥ नवारुण्यंननैर्ऋत्यं
योगोनसार्वभौमता १२ योगंनानाविधंभूपयुंजंतिज्ञानिनस्तुतं ॥ भवंतिवितृषालोकेजिताहाराविरेतसः १३पावयंत्याखिलाँल्लोकान्वशीकृतजगत्त्रयाः ॥ करु
णापूर्णहृदयाबोधयंत्यपिकांश्चन ॥ जीवन्मुक्तान्हृदेमग्नाःपरमानंदरूपिणि १४ निमील्याक्षीणिपश्यंतःपरंब्रह्महृदिस्थितम् ॥ ध्यायंतःपरमंब्रह्मचित्तेयो
गवशीकृतम् १५ भूतानिस्वात्मनातुल्यंसर्वाणिगणयंतिते ॥ येनकेनाचिदाच्छिन्नायेनकेनाचिदाहताः १६ येनकेनचिदाकृष्टायेनकेनाचिदाश्रिताः ॥ करु
णापूर्णहृदयाभ्रमंतिधरणीतले १७ अनुग्रहायभूतानांजितक्रोधाजितेंद्रियाः ॥ देहमात्रभृतोभूपसमलोष्टाश्मकांचनाः १८ एतादृशामहाभागास्युश्चक्षुर्गोच
राःप्रिय ॥ तमिदानीमहंवक्ष्येशृणुयोगमनुत्तमम् १९श्रुत्वायंमुच्यतेजंतुःपापेभ्योभवसागरात् ॥ शिवेविष्णौचशक्तौचसूर्येमयिनराधिप २० याऽभेदबु
द्धिर्योगःससम्यग्योगोमतोमम २१ अहमेवजगद्यस्मात्सृजामिपालयामिच ॥ कृत्वानानाविधंवेषंसंहरामिस्वलीलया २२ अहमेवमहाविष्णुरहमेवसदा
शिवः ॥ अहमेवमहाशक्तिरहमेवार्यमाप्रिय ॥ २३ ॥ अहमेकोनृणांनाथोजातःपंचविधःपुरा ॥ अज्ञानान्मांनजानंतिजगत्कारणकारणम् ॥ २४ ॥

मत्तोग्निरापोधरणीमत्तआकाशमारुतौ ॥ ब्रह्माविष्णुश्चरुद्रश्चलोकपालादिशोदश २५ वसवोमनवोगावोमुनयःपशवोपिच ॥ सरितःसागरायक्षावृक्षाःप
क्षिगणाअपि २६ तथैकविंशतिस्वर्गानागाःसप्तवनानिच ॥ मनुष्याःपर्वताःसाध्याःसिद्धारक्षोगणास्तथा ॥ २७ ॥ अहंसाक्षीजगच्चक्षुरलिप्तःसर्वकर्म
भिः ॥ अविकारोप्रमेयोहमव्यक्तोविश्वगोव्ययः २८ अहमेवपरंब्रह्माव्ययानंदात्मकंनृप ॥ मोहयत्यखिलान्मायाश्रेष्ठान्ममनरानमून् ॥ २९ ॥ सर्व
दाषड्विकारेषुतानियंयोजयेद्दृशम् ॥ हित्वाजापटलंजंतुरनेकैर्जन्मभिःशनैः ३० विरज्यविंदातिब्रह्मविषयेषुसुबोधतः ॥ अच्छेद्यंशस्त्रसंघातैरदाह्यमनलेन
च ३१ अक्लेद्यंभूपभुवनैरशोष्यंमारुतेनच ॥ अवध्यंवध्यमानेपिशरीरेस्मिन्नराधिप ३२ यामिमांपुष्पितांवाचंप्रशंसंतिश्रुतीरितां ॥ त्रयीवादरतामूढास्त
तोन्यन्मन्वतेपिन ३३ कुर्वंतिसततंकर्मजन्ममृत्युफलप्रदम् ॥ स्वर्गैश्वर्यरताध्वस्तचेतनाभोगबुद्धयः ३४ संपादयंतितेभूपस्वात्मनानिजबंधनम् ॥
संसारचक्रंयुंजंतिजडाःकर्मपरानराः ३५ यस्ययद्विहितंकर्मतत्कर्तव्यंमदर्पणम् ॥ ततोस्यकर्मबीजानामुच्छिन्नाःस्युर्महांकुराः ३६ चित्तशुद्धिश्चमहती
विज्ञानसाधिकाभवेत् ॥ विज्ञातेनहिविज्ञातंपरंब्रह्ममुनीश्वरैः ३७ तस्मात्कर्माणिकुर्वीतबुद्धियुक्तोनराधिप ॥ नत्वकर्माभवेत्कोपिस्वधर्मत्यागवांस्त
था ३८ जहातियदिकर्माणिततःसिद्धिंनविंदति ॥ आदौज्ञानेनाधिकारःकर्मण्येवसयुज्यते ॥ ३९ कर्मणाशुद्धहृदयोभेदबुद्धिमुपेष्यति ॥ सचयो
गःसमाख्यातोमृतत्वायहिकल्पते ४० योगमन्यंप्रवक्ष्यामिश्रृणुभूपतमुत्तमम् ॥ पशौपुत्रेतथामित्रेशत्रौबंधौसुहृज्जने ४१ बहिर्दृष्ट्याचसमयात्तत्स्थ
यालोकयेत्पुमान् ॥ सुखेदुःखेतथामर्षेहर्षेभीतौसमोभवेत् ॥ ४२ ॥ रोगाप्तौचैवभोगाप्तौजयेवाविजयेपिच ॥ श्रियोयोगेचयोगेचलाभालाभेमृताव
पि ॥ ४३ ॥ समोमांवस्तुजातेषुपश्यन्नंतर्बहिस्स्थितम् ॥ सूर्येसोमेजलेवह्नौशिवेशक्तौतथानिले ॥ ४४ ॥ द्विजेहृदिमहानद्यांतीर्थेक्षेत्रेघनाशि
नि ॥ विष्णौचसर्वदेवेषुतथायक्षोरगेषुच ॥ ४५ ॥ गंधर्वेषुमनुष्येषुतथातिर्यग्भवेषुच ॥ सततंमांहियःपश्येत्सोयंयोगविदुच्यते ॥ ४६ ॥ संपरात्हृत्स्वा
र्थेभ्यइंद्रियाणिविवेकतः ॥ सर्वत्रसमताबुद्धिःसयोगोभूपमेमतः ४७ आत्मानात्मविवेकेनयाबुद्धिर्दैवयोगतः ॥ स्वधर्मासक्तचित्तस्यतद्योगोयोगउच्यते ॥
४८ धर्माधर्मौजहातीहतयात्यक्तउभावपि ॥ अतोयोगाययुंजीतयोगोवैधेषुकौशलम् ४९ धर्माधर्मफलेत्यक्त्वामनीषीविजितेंद्रियः ॥ जन्मबंधविनिर्मुक्तः
स्थानंसंयात्यनामयम् ५० यदाह्यज्ञानकालुष्यंजंतोर्बुद्धिःक्रमिष्यति ॥ तदासौयातिवैराग्यंवेदवाक्यादिषुक्रमात् ५१ त्रयीविप्रतिपन्नस्यस्थाणुत्वंयास्यते
यदा ॥ परात्मन्यचलाबुद्धिस्तदासौयोगमाप्नुयात् ५२ मानसानखिलान्कामान्यदाधीमांस्त्यजेत्प्रिय ॥ स्वात्मनिस्वेनसंतुष्टःस्थिरबुद्धिस्तदोच्यते ५३
वितृष्णाःसर्वसौख्येषुनोद्विग्नोदुःखसंगमे ॥ गतसाध्वसरुड्रागःस्थिरबुद्धिस्तदोच्यते ५४ यथायंकमठोंगानिसंकोचयतिसर्वतः ॥ विषयेभ्यस्तथाखानिसंक
र्षेद्योगतत्परः ५५ व्यावर्त्तंतेस्यविषयास्त्यक्ताहारस्यवर्ष्मिणः ॥ विनारागंचरागोपिदृष्ट्वाब्रह्मविनश्यति ५६ विपश्चिद्यततेभूपास्थितिमास्थाययोगिनः ॥ मं

थयित्वेंद्रियाण्यस्यहरंतिबलतोमनः ५७ युक्तस्तानिवशेकृत्वामत्परोभवेत् ॥ संयतानींद्रियाणीहयस्यासौकृतधीर्मतः ५८ चिंतयानस्यविषयान्संगस्ते
षूपजायते ॥ कामःसंजायतेतस्मात्ततःक्रोधोभिवर्द्धते ५९ क्रोधादज्ञानसंभूतिर्विभ्रमस्तुततःस्मृतेः ॥ भ्रंशाद्स्मृतेर्मतेर्ध्वंसस्तद्ध्वंसात्सोपिनश्यति ६० वि
नाद्वेषंचरागंचगोचरान्यस्तुखैश्चरेत् ॥ स्वाधीनहृदयोवश्यैःसंतोषंससमृच्छति ६१ त्रिविधस्यापिदुःखस्यसंतोषेक्षेपणंभवेत् ॥ प्रज्ञयासंस्थितश्चायंप्रसन्नहृद
योभवेत् ६२ विनाप्रसादंनमतिर्विनामत्यानभावना ॥ विनातांनशमोभूपविनातेनकुतःसुखम् ६३ इंद्रियाश्वान्विचरतोविषयाननुवर्तते ॥ यन्मनस्तन्म
तिंहन्याद्प्सुनावंमरुद्यथा ६४ यारात्रिःसर्वभूतानांतस्यांनिद्रातिनैवसः ॥ नस्वपंतीहतेयत्रसारात्रिस्तस्यभूमिप ६५ सरितांपतिमायांतिवनानिसर्वतोयथा
आयांतितंतथाकामाःसनाशांतिंकचिल्लभेत् ६६ अतस्तानीहसंरुद्ध्यसर्वतःखानिमानवः ॥ स्वस्वार्थेभ्यःप्रधावंतिबुद्धिरस्यस्थिरातदा ६७ ममताहंकृतीत्य
क्त्वासर्वान्कामांश्चयस्त्यजेत् ॥ नित्यंज्ञानरतोभूयात्ज्ञानान्मुक्तिंप्रयास्यति ६८ एनांब्रह्मधियंभूपयोविजानातिदैवतः ॥ तुरीयावस्थांप्राप्यापिशीलान्मुक्तिं
प्रयास्यसि ६९ ॐतत्सदितिश्रीगणेशगीतासूपनिषदार्थगर्भासुयोगामृतार्थशास्त्रेश्रीमन्महागणेशपुराणेउत्तरखंडेगणेशवरेण्यसंवादेसांख्यसारार्थयोगोना
मप्रथमोध्यायः १ ॥ १३८ ॥ वरेण्यउवाच ॥ ज्ञाननिष्ठाकर्मनिष्ठाद्वयंप्रोक्तंत्वयाविभो ॥ अवधार्यवदैकंमेनिश्रेयसकरंनुकिम् १ गजाननउवाच ॥ अस्मिंश्च
राचरेस्थित्यौपुरोक्तेद्वेमयाप्रिय ॥ सांख्यानांबुद्धियोगेनवैधयोगेनकर्मिणां २ अनारंभेणवैधानांनिष्क्रियःपुरुषोभवेत् ॥ नसिद्धिंयातिसंत्यागात्केवलात्क
र्मणोनृप ३ कदाचिदक्रियःकोपिक्षणंनैवावतिष्ठते ॥ अस्वतंत्रःप्रकृतिजैर्गुणैःकर्मचकार्यते ४ कर्मकारींद्रियग्रामंनियम्यास्तेस्मरन्पुमान् ॥ तद्गोचरान्मंदचि
त्तोधिगाचारःसभण्यते ५ तद्ग्रामंसंनियम्यादौमनसाकर्मचारभेत् ॥ इंद्रियैःकर्मयोगंयोवितृष्णःसपरोनृप ६ अकर्मणःश्रेष्ठतमंकर्मानीहाकृतंतुयत् ॥ व
र्ष्मणःस्थितिरप्यस्याकर्मणोनैवसेत्स्यति ७ असमर्प्यनिबध्यंतेकर्मतेनजनामयि ॥ कुर्वीतसततंकर्मानाशोसंगोमदर्पणम् ८ मदर्थंयानिकर्माणितानिबध्नं
तिनकर्हिचित् ॥ सवासनमिदंकर्मबध्नातिदेहिनंबलात् ९ वर्णान्सृष्ट्वावदंचाहंसयज्ञांस्तान्पुराप्रिय ॥ यज्ञेनऋध्यतामेषकामदःकल्पवृक्षवत् १० सुरांश्चानेनप्री
णध्वंसुरास्तेप्रीणयंतुवः ॥ लभध्वंपरमंस्थानमन्योन्यप्रीणनात्स्थिरम् ११ इष्टादेवाःप्रदास्यंतिभोगानिष्टान्सुतर्पिताः ॥ तैर्दत्तांस्तान्नरस्तेभ्योदत्वाभुंक्तेसतस्क
रः १२ हुतावशिष्टभोक्तारोमुक्ताःस्युःसर्वपातकैः ॥ अदंत्येनोमहापापाआत्महेतोःपचंतिये १३ ऊर्जोभवंतिभूतानिदेवादन्नस्यसंभवः ॥ यज्ञाच्चदेवसंभूतिस्तदुत्प
त्तिश्चवैधतः १४ ब्रह्मणोवैधमुत्पन्नंमत्तोब्रह्मसमुद्भवः ॥ अतोयज्ञेचविश्वस्मिन्स्थितंमांविद्धिभूमिप १५ संसृतीनांमहाचक्रंक्रामितव्यंविचक्षणैः ॥ समुदा
प्रीणतेभूपेंद्रियक्रीडोघमोजनः १६ अंतरात्मनियःप्रीतआत्मारामोखिलप्रियः ॥ आत्मतृप्तोनरोयःस्यात्तस्यार्थोनैवविद्यते १७ कार्याकार्यकृतीनांसनैवाप्नोति
शुभाशुभे ॥ किंचिदस्यनसाध्यंस्यात्सर्वजंतुषुसर्वदा १८ अतोसक्ततयाभूपकर्तव्यंकर्मजंतुभिः ॥ सक्तोगतिमवाप्नोतिमामवाप्नोतिताहशः १९ परमांसि

द्भिमापन्नाःपुराराजर्षयोद्विजाः ॥ संग्रहायहिलोकानांतादृशंकर्मचाचरेत् २० श्रेयान्यत्कुरुतेकर्मतत्करोत्यखिलोजनः ॥ मनुतेयत्प्रमाणंसतदेवानुसरत्य
सौ २१ विष्टपेमेनसाध्योस्तिकश्चिदर्थोनराधिप ॥ अनालब्धश्चलब्धव्यःकुर्वेकर्मतथाप्यहम् २२ नकुर्वेहंयदाकर्मस्वतंत्रोलसआवितः ॥ करिष्यंतिमम
ध्यानंसर्वेवर्णामहामते २३ भविष्यंतिततोलोकाउच्छिन्नाःसंप्रदायिनः ॥ हंतास्यामस्यलोकस्यविधातासंकरस्यच २४ कामिनोहिसदाकामैरज्ञाना
त्कर्मकारिणः ॥ लोकानांसंग्रहायैतद्विद्वान्कुर्यादसक्तधीः २५ विभिन्नत्वमतिंजह्यादज्ञानांकर्मचारिणाम् ॥ योगयुक्तःसर्वकर्माण्यर्पयेन्मयिकर्मकृत् २६
अविद्यागुणसाचिव्यात्कुर्वन्कर्माण्यतंद्रितः ॥ अहंकाराद्भिन्नबुद्धिरहंकर्तेतितयोब्रवीत् २७ यस्तुवेत्त्यात्मनस्तत्वंविभागाद्गुणकर्मणोः ॥ करणंविषयेवृत्तमि
तिमत्वानसज्जते २८ कुर्वंतिसफलंकर्मगुणैस्त्रिभिर्विमोहिताः ॥ अविश्वस्तस्वात्मद्रुहोविश्वविन्नैवलंघयेत् २९ नित्यंनैमित्तिकंतस्मान्मयिकर्मार्पयेद्बुधः ॥
त्यक्त्वाहंममताबुद्धिंपरांगतिमवाप्नुयात् ३० अनीर्ष्यंतोभक्तिमंतोयेमयोक्तमिदंशुभम् ॥ अनुतिष्ठंतियेसर्वेमुक्तास्तेखिलकर्मभिः ३१ येचैवनानुतिष्ठंति
अशुभाहतचेतसः ॥ ईर्ष्यमाणान्महामूढान्नष्टांस्तान्विद्धिमेरिपून् ३२ तुल्यंप्रकृत्याकुरुतेकर्मयज्ज्ञानवानपि ॥ अनुयातिचतामेवाग्रहस्तत्रमुधामतः ३३
कामश्चैवतथाक्रोधःस्वानामर्थेषुजायते ॥ नैतयोर्वश्यतांयायादस्यविध्वंसकौयतः ३४ श्रेयानस्वोऽगुणोनिजोधर्मःसांगादन्यस्यधर्मतः ॥ निजेतस्मिन्मृतिः
श्रेयोपरत्रभयदःपरः ३५ ॥ वरेण्यउवाच ॥ पुमान्यत्कुरुतेपापंसहिकेननियुज्यते ॥ अकांक्षन्नपिहेरंबप्रेरितःप्रबलादिव ३६ ॥ श्रीगजाननउवाच ॥
कामक्रोधौमहापापौगुणद्वयसमुद्भवौ ॥ नयंतौवश्यतांलोकान्विद्ध्येतौद्वेषिणौवरौ ३७ आवृणोतियथामायाजगद्बाष्पोजलंयथा ॥ वर्षाभेवोयथाभानुंतद्व
त्कामोखिलांचरुट् ३८ प्रतिपत्तिमतोज्ञानंछादितंसततंद्विषा ॥ इच्छात्मकेनतरसादुष्पोष्येणचशुष्मिणा ३९ आश्रित्यबुद्धिमनसीइंद्रियाणिसतिष्ठति ॥ तै
रेवाच्छादितप्रज्ञोज्ञानिनंमोहयत्यसौ ४० तस्मान्नियम्यतान्यादौसमनांसिनरोजयेत् ॥ ज्ञानविज्ञानयोःशांतिकरंपापंमनोभवम् ४१ यतस्तानिपराण्या
हुस्तेभ्यश्चपरमंमनः ॥ ततोपिहिपराबुद्धिरात्माबुद्धेःपरोमतः ४२ बुध्वैवमात्मनात्मानंसंस्तभ्यात्मानमात्मना ॥ हत्वाशत्रुंकामरूपंपरंपदमवाप्नुयात् ४३
॥ ॥ ॐतत्सदितिश्रीमद्गणेशगीता०कर्मयोगोनामाद्वितीयोध्यायः ॥ २ ॥ १३९ ॥ ॥ ७ ॥ ॥ श्रीगणेशउवाच ॥ ॥ पुरासर्गादिसमये
त्रैगुण्यंत्रितनूरहम् ॥ निर्मायचैनमवदंविष्णवेयोगमुत्तमम् १ अर्यम्णेसोब्रवीत्सोपिमनवेनिजसूनवे ॥ ततःपरंपरायातंविदुरेनंमहर्षयः २ कालेनबहुनाचा
यंनष्टःस्याच्चरमेयुगे ॥ अश्रद्धेयोह्यविश्वास्योविगीतव्यश्चभूमिप ३ एवंपुराभवंयोगंश्रुत्वानासिमन्मुखात् ॥ गुह्याद्गुह्यतरंवेदरहस्यंपरमंशुभम् ४ ॥ वरेण्य
उवाच ॥ सांप्रतंचावतीर्णोसिगर्भतस्त्वंगजानन ॥ प्रोक्तवान्कथमेतंत्वंविष्णवेयोगमुत्तमम् ५ ॥ गजाननउवाच ॥ अनेकानिचतेजन्मान्यतीतानिममापिच ॥
संस्मरेतानिसर्वाणिनस्मृतिस्तववर्ततेद्विमत्तएवमहाबाहोजाताविष्ण्वादयःसुराः ॥ मय्येवचलयंयांतिप्रलयेषुयुगेयुगे ७ अहमेवपरोब्रह्मामहारुद्रोहमेवच ॥

अहमेवजगत्सर्वंस्थावरंजंगमंचयत् ८ अजोऽव्ययोहंभूतात्मानादिरीश्वरएवच ॥ आस्थायत्रिगुणांमायांभवामिबहुयोनिषु ९ अधर्मोपचयोधर्मापचयोहि
यदाभवेत् ॥ साधूंन्संरक्षितुंदुष्टांस्ताडितुंसंभवाम्यहं १० उच्छिद्याधर्मनिचयंधर्मंसंस्थापयामिच ॥ हन्मिदुष्टांश्चदैत्यांश्चनानालीलाकरोमुदा ११ वर्णाश्र
मान्मुनीनसाधून्पालयेबहुरूपधृक् ॥ एवंयोवेत्तिसंभूमिर्ममदिव्यायुगेयुगे १२ तत्तत्कर्मचवीर्यंचममरूपंसमासतः ॥ त्यक्त्वाहंममताबुद्धिंनपुनर्भूःसजायते १३
निरीहानिर्भयारोषामत्परामद्व्यपाश्रयाः ॥ विज्ञानतपसाशुद्धाअनेकेमामुपागताः १४ येनयेनहिभावेनसंसेवंतेनरोत्तमाः ॥ तथातथाफलंतेभ्यःप्रयच्छा
म्यव्ययःस्फुटम् १५ जनाःस्युरितरेराजन्मममार्गानुयायिनः ॥ तथैवव्यवहारंतेस्वेषुचान्येषुकुर्वते १६ कुर्वंतिदेवताप्रीतिंकांक्षंतःकर्मणांफलम् ॥ प्राप्नुवं
तीहतेलोकेशीघ्रंसिद्धिंहिकर्मजाम् १७ चत्वारोहिमयावर्णारजःसत्वतमोंशतः ॥ कर्मांशतश्चसंसृष्टामर्त्यलोकेमयानघ १८ कर्तारमपिमांतेषामकर्तारंविदुर्बु
धाः ॥ अनादिमीश्वरंनित्यमलिप्तंकर्मजैर्गुणैः १९ निरीहंयोभिजानातिकर्मबध्नातिनैवतम् ॥ चक्रुःकर्माणिबुध्वैवंपूर्वैःपूर्वंमुमुक्षवः २० वासनासहितादाद्या
त्संसारकारणाद्दृढात् ॥ अज्ञानबंधनाज्जंतुर्बुध्वायंमुच्यतेखिलात् २१ तदकर्मचकर्मापिकथयाम्यधुनातव ॥ यत्रमोहंगतामोहात्ऋषयोबुद्धिशालिनः २२
तत्त्वंमुमुक्षुणाज्ञेयंकर्माकर्मविकर्मणाम् ॥ त्रिविधानीहकर्माणिसुनिम्नेषांगतिःप्रिय २३ क्रियायामक्रियाज्ञानमक्रियायांक्रियामतिः ॥ यस्यस्यात्सहिमर्त्येस्मिन्
लोकेमुक्तोखिलार्थकृत् २४ कर्मांकुरवियोगेनयःकर्माण्यारभेन्नरः ॥ तत्वदर्शननिर्दग्धक्रियमाहुर्बुधाबुधम् २५ फलतृष्णांविहायस्यात्सदातृप्तोविसाधनः ॥ उद्यु
क्तोपिक्रियांकर्तुंकिंचिन्नैवकरोतिसः २६ निरीहोनिगृहीतात्मापरित्यक्तपरिग्रहः ॥ केवलंवैगृहंकर्माचरन्नाप्नोतिपातकं २७ अद्वंद्वोमत्सरोभूत्वासिद्ध्यसिद्ध्योः
समश्चयः ॥ यथाप्राप्येहसंतुष्टःकुर्वन्कर्मनबध्यते २८ अखिलैर्विषयैर्मुक्तोज्ञानविज्ञानवानपि ॥ यज्ञार्थंतस्यसकलंकृतंकर्मविलीयते २९ अहमग्नि
र्हविर्होताहुतंयत्त्वयिचार्पितम् ॥ ब्रह्मात्पव्यंचतेनाथब्रह्मण्येवयतोरतः ३० योगिनःकेचिदपरेदिष्टंयज्ञंवदंतिच ॥ ब्रह्माग्निरेवयज्ञोवैइतिकेचनमेनिरे ३१ सं
यमाग्नौपरेभूपइंद्रियाण्युपजुह्वति ॥ स्वाग्निष्वन्येतद्विषयान्शब्दादीनुपजुह्वति ३२ प्राणानामिंद्रियाणांचपरेकर्माणिकृत्स्नशः ॥ निजात्मरतिरूपेग्नौज्ञानदीप्ते
प्रजुह्वति ३३ द्रव्येणतपसावापिस्वाध्यायेनापिकेचन ॥ तीव्रव्रतेनयतिनोज्ञानेनापियजंतिमाम् ३४ प्राणेपानंतथाप्राणमपानेप्रक्षिपंतिये ॥ रुध्वागतीश्चोभयो
स्तेप्राणायामपरायणाः ३५ जित्वाप्राणान्प्राणगतौरुपजुह्वातितेषुच ॥ एवंनानायज्ञरतायज्ञध्वंसितपातकाः ३६ नित्यंब्रह्मप्रयांत्येतेयज्ञशिष्टामृताशिनः ॥
अयज्ञकारिणोलोकोनायमन्यःकुतोभवेत् ३७ कायिकादित्रिधाभूतान्यज्ञान्वेदेप्रतिष्ठितान् ॥ ज्ञात्वातानखिलान्भूपमोक्ष्यसेखिलबंधनात् ३८ सर्वेषां
भूपयज्ञानांज्ञानयज्ञःपरोमतः ॥ अखिलंलीयतेकर्मज्ञानेमोक्षस्यसाधने ३९ तज्ज्ञेयंपुरुषव्याघ्रप्रश्नेननतितःसताम् ॥ शुश्रूषयावादिष्यंतिसंतस्तत्त्वविशारदाः ॥

१ इंद्रियाग्नावथपरेरूपादीनुपजुह्वति इति पाठः ॥ २ ॥ ज्ञानेनेति पाठः ॥

४० नानासंगान्जनःकुर्वन्नैकंसाधुसमागमं ॥ करोतितेनसंसारेबंधनंसमुपैतिसः ४१ सत्संगाद्गुणसंभूतिरापदांलयएवच ॥ स्वहितंप्राप्यतेसर्वैरिहलोकेपर
त्रच ४२ इतरत्सुलभंराजन्सत्संगोतीवदुर्लभः ॥ यज्ज्ञात्वानपुनर्बंधमेतिज्ञेयंततस्ततः ४३ ततःसर्वाणिभूतानिस्वात्मन्येवाभिपश्यति ॥ अतिपापरतोजं
तुस्ततस्तस्मात्प्रमुच्यते ४४ विविधान्यपिकर्माणिज्ञानाग्निर्दहतिक्षणात् ॥ प्रसिद्धोग्निर्यथासर्वंभस्मतांनयतिक्षणात् ॥ नज्ञानसमतामेतिपवित्रमितरन्नृप
४५ आत्मन्येवावगच्छंतियोगात्कालेनयोगिनः ॥ भक्तिमानिंद्रियजयीतत्परोज्ञानमाप्नुयात् ४६ लब्ध्वातत्परमंमोक्षंस्वल्पकालेनयात्यसौ ॥ भक्तिही
नोऽश्रद्दधानःसर्वत्रसंशयीतुयः ४७ तस्यशंनापिविज्ञानमिहलोकोथवापरः ॥ आत्मज्ञानरतंज्ञाननाशिताखिलसंशयं ४८ योगास्ताखिलकर्माणंबध्नंतिभू
पतानिन ॥ ज्ञानखड्गप्रहारेणसंभूतामज्ञतांबलात् ४९ छित्वांतःसंशयंतस्माद्योगयुक्तोभवेन्नरः ५० ॥ ॥ ॐतत्सदितिश्रीमद्गणेशगीता०ज्ञानप्रतिपा
दनोनामतृतीयोध्यायः ३ ॥ ॥ १४० ॥ ॥ ६४ ॥ ॥ वरेण्यउवाच ॥ ॥ संन्यस्तिश्चैवयोगश्चकर्मणांवर्ण्यतेत्वया ॥ उभयोर्निश्चितं
त्वेकंश्रेयोयद्वदमेप्रभो १ ॥ ॥ गजाननउवाच ॥ ॥ क्रियायोगोवियोगश्चाप्युभौमोक्षस्यसाधने ॥ तयोर्मध्येक्रियायोगस्त्यागात्तस्यविशिष्यते २
द्वंद्वदुःखसहोद्वेष्टायोनकांक्षतिकिंचन ॥ मुच्यतेबंधनात्सद्योनित्यंसंन्यासवान्सुखं ३ वदंतिभिन्नफलकौकर्मणस्त्यागसंग्रहौ ॥ मूढाल्पज्ञानतश्चैकंसं
युंजीतविचक्षणः ४ यदेवप्राप्यतेत्यागात्तदेवयोगतःफलं ॥ संग्रहंकर्मणोयोगंयोविंदातिसविंदति ५ केवलंकर्मणांन्यासंसंन्यासंनविदुर्बुधाः ॥ कु
र्वन्ननिच्छयाकर्मयोगीब्रह्मैवजायते ६ निर्मलोयतचित्तात्माजितखोयोगतत्परः ॥ आत्मानंसर्वभूतस्थंपश्यन्कुर्वन्नलिप्यते ७ तत्त्वविद्योगयुक्तात्मा
करोमीतिनमन्यते ॥ एकादशानींद्रियाणिकुर्वंतिकर्मसंख्यया ८ तत्सर्वंमर्पयेद्ब्रह्मण्यपिकर्मकरोतियः ॥ नलिप्यतेपुण्यपापैर्भानोर्भानुर्यथार्थगः
९ कायिकंवाचिकंबौद्धमैंद्रियंमानसंतथा ॥ त्यक्त्वाशांकर्मकुर्वंतियोगज्ञाश्चित्तशुद्धये १० योगहीनोनरःकर्मफलेहयाकरोत्यलं ॥ बद्ध्यतेकर्मबीजैः
सततोदुःखंसमश्नुते ११ मनसासकलंकर्मत्यक्त्वायोगीसुखंवसेत् ॥ नकुर्वन्कारयन्वापिनंदन्स्वभ्रेसुपत्तने १२ नाक्रियानचकर्तृत्वंकस्यचित्सृज्यतेमया
॥ नाक्रियाबीजसंपर्कःशक्त्यार्तांक्रियतेखिलं १३ कस्यचित्पुण्यपापानिनस्पृशामिविभुर्नृप ॥ ज्ञानमूढाविमुह्यंतिमोहेनावृतबुद्धयः १४ विवेकेनात्मनो
ज्ञानंयेषांनाशितमात्मना ॥ तेषांविकाशमायातिज्ञानमादित्यवत्परं १५ मन्निष्ठामद्धियोत्यंतंमच्चित्तामयितत्पराः ॥ अपुनर्भवमायांतिविज्ञानान्नाशितैनसः
१६ ज्ञानविज्ञानसंयुक्तेद्विजेगविगजादिषु ॥ समेक्षणामहात्मानःपंडिताःश्वपचेशुनि ॥ वश्यःस्वर्गोजगत्तेषांजीवन्मुक्ताःसमेक्षणाः १७ यतोदोषंब्रह्मसमंत
स्मात्तैर्विषयीकृतं ॥ प्रियाप्रियेप्राप्यहर्षद्वेषौयेप्राप्नुवंतिन १८ ब्रह्माश्रिताअसंमूढाब्रह्मज्ञाःसमबुद्धयः ॥ वरेण्यउवाच ॥ किंसुखंत्रिषुलोकेषुदेवगंधर्वयोनिषु
१९ भगवन्कृपयातन्मेवदविद्याविशारद ॥ गणेशउवाच ॥ आनंदमश्नुतेसक्तःस्वात्मारामोनिजात्मनि २० अविनाशिसुखंतद्धिनसुखंविषयादिषु ॥ वि

षयोत्थानिसौख्यानिदुःखानांतानिहेतवः २१ उत्पत्तिनाशयुक्तानितत्रासक्तोनतत्त्ववित् ॥ कारणेसतिकामस्यक्रोधस्यसहतेचयः २२ तौजेतुंवर्ष्मविरहात्ससु
खंचिरमश्नुते ॥ अंतर्निष्ठोंतःप्रकाशोंतःसुखोंतोरतिर्लभेत् २३ असंदिग्धोक्षयंब्रह्मसर्वभूतहितार्थकृत् ॥ जेतारःषड्रिपूणांयेशमिनोदमिनस्तथा २४
तेषांसमंततोब्रह्मस्वात्मज्ञानांविभात्यहो ॥ आसनेषुसमासीनस्त्यक्त्वेमान्विषयान्बहिः २५ संस्तभ्यभ्रूकुटीमास्तेप्राणायामपरायणः ॥ प्राणायामंतुसं
रोधंप्राणापानसमुद्भवम् २६ वदंतिमुनयस्तंचत्रिधाभूतंविपश्चितः ॥ प्रमाणभेदतोविद्धिलघुमध्यममुत्तमम् २७दशभिर्द्वादशभिर्वर्णैःप्राणायामोलघुःस्मृतः ॥
चतुर्विंशत्यक्षरोयोमध्यमःसउदाहृतः २८ षट्त्रिंशल्लघुवर्णोयउत्तमःसोभिधीयते ॥ सिंहंशार्दूलकंवापिमत्तेभंमृदुतांयथा २९ नयंतिप्राणिनस्तद्वत्प्रा
णापानौसुसाधयेत् ॥ पीडयंतिमृगांस्तेनलोकान्वश्यंगतान्नृप ३० दहत्येनस्तथावायुःसंस्तब्धोनचतत्तनुम् ॥ यथायथानरःकश्चित्सोपानावलिमाक्रमे
त् ३१ तथातथावशीकुर्यात्प्राणापानौहियोगवित् ॥ पूरकंकुंभकंचैवरेचकंचततोभ्यसेत् ३२ अतीतानागतज्ञानीततःस्याज्जगतीतले ॥ प्राणायामैर्द्वा
दशभिरुत्तमैर्धारणामता ३३ योगस्तुधारणेद्वेस्याद्योगीशस्तेसदाभ्यसेत् ॥ एवंयःकुरुतेराजंस्त्रिकालज्ञःसजायते३४अनायासेनतस्यस्याद्वश्यंलोकत्रयंनृप ॥
ब्रह्मरूपंजगत्सर्वंपश्यतिस्वांतरात्मनि ३५ एवंयोगश्चसंन्यासःसमानफलदायिनौ ॥ जंतूनांहितकर्तारंकर्मणांफलदायिनम् ३६ मांज्ञात्वामुक्तिमाप्नोतित्रैलो
क्यस्येश्वरंविभुम् ३७ ॥ ॥ ॐतत्सदितिश्रीमद्गणेशगीता०द्वैधसंन्यासयोगोनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ १४१ ॥ ॥ छ ॥ ॥ गजान
नउवाच ॥ ॥ श्रौतस्मार्त्तानिकर्माणिफलंनेच्छन्समाचरेत् ॥ शस्तःसयोगीराजेंद्रअक्रियाद्योगमाश्रिताद् १ योगप्राप्त्यैमहाबाहोहेतुःकर्मैवमेमतम् ॥
सिद्धयोगस्यसंसिद्ध्यैहेतूशमदमौमतौ २ इंद्रियार्थांश्चसंकल्प्यकुर्वन्स्वस्यरिपुर्भवेत् ॥ एतानानिच्छन्यःकुर्वन्सिद्धिंयोगीससिद्ध्यति ३ सुहृत्त्वेचारित्वेच
उद्धारेचैवबंधने ॥ आत्मनैवात्मनोह्यात्मानात्माभवतिकश्चन ४ मानेपमानेदुःखेचसुखेसुहृदिमाधुषु ॥ मित्रेऽमित्रेप्युदासीनेद्वेष्येलोष्टेचकांचने ५ समोजिता
त्माविज्ञानीज्ञानींद्रियजयावहः ॥ अभ्यसेत्सततंयोगंयदायुक्ततमोहिमः ६ तमःश्रांतोव्याकुलोवाक्षुधितोव्यग्रचित्तकः ॥ कालेतिशीतेत्युष्णेवानिलाग्न्यं
बुसमाकुले ७ साध्वनावतिजीर्णेगोस्थानेसाग्नौजलांतिके ॥ कूपकूलेश्मशानेचनद्यांभित्तौचमर्मरे ८ चैत्येसवल्मिकेदेशेपिशाचादिसमावृते ॥ नाभ्यसेद्यो
गविद्योगंयोगध्यानपरायणः ९ स्मृतिलोपश्चमूकत्वंबाधिर्यंमंदताज्वरः ॥ जडताजायतेसद्योदोषाज्ञानाद्धियोगिनः १० एतेदोषाःपरित्याज्यायोगाभ्यस
नशालिना ॥ अनादरेहिचैतेषांस्मृतिलोपादयोध्रुवम् ११ नातिभुंजन्सदायोगीनाभुंजन्नातिनिद्रितः ॥ नातिजाग्रत्सिद्धिमेतिभूपयोगंमदाभ्यसन् १२
संकल्पजांस्त्यजेत्कामान्नियताहारजागरः ॥ नियम्यखगणंबुद्ध्याविरमेतशनैःशनैः १३ ततस्ततःक्षवेदेतद्यत्रयत्रानुगच्छति ॥ धृत्यात्मवशगंकुर्याच्चित्तंचंचलमा
द्दतः १४ एवंकुर्वन्सदायोगीपरांनिर्वृतिमृच्छति ॥ विश्वस्मिन्ननिजमात्मानंविश्वंचस्वात्मनीक्षते १५ योगेनयोमामुपैतितस्मुपैम्यहमादरात् ॥ मोचया

मिनमुंचामितमहंमांनसंत्यजेत् १६ सुखेदुःखेतरेद्वेषेक्षुधितोपेममस्त्वपि ॥ आत्मसाम्येनभूतानिसर्वगंमांचवेत्तियः १७ जीवन्मुक्तःसयोगींद्रःकेवलंमयि
संगतः ॥ ब्रह्मादीनांचदेवानांसवंद्यःस्याज्जगत्त्रये १८ ॥ ॥ वरेण्यउवाच ॥ द्विविधोपिहियोगोयमसंभाव्योहिमेमतः ॥ यतोंतःकरणंदुष्टंचंचलंदुर्ग्रहंविभो
१९ ॥ श्रीगजाननउवाच॥योनिग्रहंदुर्ग्रहस्यमनसःसंप्रकल्पयेत् ॥ घटीयंत्रसमादस्मान्मुक्तिःसंसृतिचक्रकात् २० विषयैकककैरेतत्संसृष्टंचक्रकंदृढम्॥ जनश्छे
त्तुंनशक्नोतिकर्मकीलैःसुसंवृतम् २१ अतिदुःखंचवैराग्यंभोगाद्वैतृष्ण्यमेवच॥ गुरुप्रसादःसत्संगउपायास्तज्जयेअमी २२ अभ्यासाद्वावशीकुर्यान्मनोयोगस्यसिद्ध
ये ॥ वरेण्यदुर्लभोयोगोविनास्यमनसोजयात् २३ ॥ ॥ वरेण्यउवाच ॥ ॥ योगभ्रष्टस्यकोलोकःकागतिःकिंफलंभवेत् ॥ विभोसर्वज्ञमेछिं
धिसंशयंबुद्धिचक्रभृत् २४ ॥ ॥ श्रीगजाननउवाच ॥ ॥ दिव्यदेहधरोयोगाद्भ्रष्टःस्वर्भोगमुत्तमम् ॥ मुक्त्वायोगिकुलेजन्मलभेच्छुद्धिमतांकुले २५
पुनर्योगीभवत्येषसंस्कारात्पूर्वकर्मजात् ॥ नहिपुण्यकृतांकश्चिन्नरकंप्रतिपद्यते २६ ज्ञाननिष्ठात्तपोनिष्ठात्कर्मनिष्ठान्नराधिप ॥ श्रेष्ठोयोगीश्रेष्ठतमोभ
क्तिमान्मयितेषुयः २७ ॥ ॥ ॐतत्सदिति०योगावृत्तिप्रशंसनायोगोनामपंचमोऽध्यायः ॥ ५ ॥ ॥ १४२ ॥ ॥ छ ॥ ॥ गजाननउवाच ॥
ईदृशंविद्धिमेतत्त्वंमद्गतेनांतरात्मना ॥ यज्ज्ञात्वामामसंदिग्धंवेत्सिमोक्ष्यसिसर्वगम् १ तत्तेहंशृणुवक्ष्यामिलोकानांहितकाम्यया ॥ अस्तिज्ञेयंयतो
नान्यन्मुक्तेश्चसाधनंनृप २ ज्ञेयामत्प्रकृतिःपूर्वंततःस्याज्ज्ञानगोचरः ॥ ततोविज्ञानसंपत्तिर्मयिज्ञातेनृणांभवेत् ३ कनलौखमहंकारःकंचित्तंधीसमी
रणौ ॥ रवींदूयागकृत्तैकादशधाप्रकृतिर्मम ४ अन्यांमत्प्रकृतिंवृद्धांमुनयःसंगिरंतिच ॥ तथात्रिविष्टपंव्याप्तंजीवत्वंगतयानया ५ आभ्यामुत्पाद्यते
सर्वंचराचरमयंजगत् ॥ संगाद्विश्वस्यसंभूतिःपरित्राणंलयोप्यहम् ६ तत्वमेतन्निबोद्धुंमेयततेकश्चिदेवहि ॥ वर्णाश्रमवतांपुंसांपुराचीर्णेनकर्मणा
७ साक्षात्करोतिमांकश्चिद्यत्नवत्स्वपितेषुच ॥ मत्तोन्यन्नेक्षतेकिंचिन्मयिसर्वंचवीक्षते ८ क्षितौसुगंधरूपेणतेजोरूपेणचाग्निषु ॥ प्रभारूपेणपूष्ण्य
ब्जेरसरूपेणचाप्सुच ९ धीरूपोबलिनांचाहंधीस्तपोबलमेवच ॥ त्रिविधेषुविकारेषुमदुत्पन्नेष्वहंस्थितः १० नमांविंदंतिपापीयामायामोहितचेतसः ॥
त्रिविकारामोहयतिप्रकृतिर्मेजगत्त्रयम् ११ योमेतत्त्वंविजानातिमोहंत्यजतिसोखिलम् ॥ अनेकैर्जन्मभिश्चैवंज्ञात्वामांमुच्यतेततः १२ अन्येनानाविधा
न्देवान्भजंतेतान्व्रजंतिते ॥ यथायथामतिंकृत्वाभजतेमांजनोखिलः १३ तथातथास्यतंभावंपूरयाम्यहमेवतम् ॥ अहंसर्वंविजानामिमांनकश्चिद्विबुध्य
ते १४ अव्यक्तंव्यक्तिमापन्नंनविदुःकाममोहिताः ॥ नाहंप्रकाशतांयामिअज्ञानांपापकर्मणाम् १५ यःस्मृत्वात्यजतिप्राणमंतेमांश्रद्धयान्वितः ॥ सयात्यपुनरावृ
त्तिंप्रसादान्ममभूभुज १६ यंयंदेवंस्मरन्भक्त्यात्यजतिस्वंकलेवरम् ॥ तत्तत्सालोक्यमायातितत्तद्भक्त्यानराधिप १७ अतश्चाहानशंभूपस्मर्तव्योनेकरूपवा
न् ॥ सर्वेषामप्यहंगम्यःस्रोतसामर्णवोयथा १८ ब्रह्मविष्णुशिवेंद्राद्याँल्लोकान्प्राप्यपुनःपतेत् ॥ योमामुपैत्यसंदिग्धःपतनंतस्यनक्वचित् १९ अनन्यशर

णोयोमांभक्त्याभजतिभूमिप ॥ योगक्षेमौचतस्याहंसर्वदाप्रतिपादये २० द्विविधागतिरुद्दिष्टाशुक्लाकृष्णानृणांनृप ॥ एकयापरमंब्रह्मपरयायातिसंसृति
म् २१ ॥ ॥ ॐतत्सदितिश्रीमद्गणेशगीता०बुद्धियोगोनामषष्ठोध्यायः ॥ ६ ॥ १४३ ॥ ॥ ध ॥ ॥ वरेण्यउवाच ॥ ॥ काशुक्लागतिरुद्दि
ष्टाकाचकृष्णागजानन ॥ किंब्रह्मसंसृतिःकामेवक्तुमर्हस्यनुग्रहात् १ ॥ ॥ गजाननउवाच ॥ ॥ अग्निर्ज्योतिरहःशुक्लकर्माहेमयनंगतिः ॥ चांद्रं
ज्योतिस्तथाधूमोरात्रिश्चदक्षिणायनम् २ कृष्णेतेब्रह्मसंसृत्योरवाप्तेःकारणंगती ॥ दृश्यादृश्यमिदंसर्वंब्रह्मैवेत्यवधारय ३ क्षरंपंचात्मकंविद्धितदंतरक्षरंस्मृत
म् ॥ उभाभ्यांयदतिक्रांतंशुद्धंविद्धिसनातनम् ४ अनेकजन्मसंभूतिःसंसृतिःपरिकीर्तिता ॥ संसृतिंप्राप्नुवंत्येतेयेतुमांगणयंतिन ५ येमांसम्यगुपा
संतेपरंब्रह्मप्रयांतिते ॥ ध्यानाद्यैरुपचारैर्मांतथापंचामृतादिभिः ६ स्नानवस्त्राद्यलंकारसुगंधधूपदीपकैः ॥ नैवेद्यैःफलतांबूलैर्दक्षिणाभिश्चयोर्चयेत् ७
भक्त्यैकचेतसाचैवतस्येष्टंपूरयाम्यहम् ॥ एवंप्रतिदिनंभक्त्यामद्भक्तोमांसमर्पयेत् ८ अथवामानसींपूजांकुर्वीतस्थिरचेतसा ॥ अथवाफलपत्राद्यैःपुष्पमू
लजलादिभिः ९ पूजयेन्मांप्रयत्नेनतत्तदिष्टफलंलभेत् ॥ त्रिविधास्वपिपूजासुश्रेयसीमानसीमता १० साप्युत्तमामतापूजाऽनिच्छयायाकृतामम ॥ ब्रह्म
चारीगृहस्थोवावानप्रस्थोयतिश्चयः ११एकांपूजांप्रकुर्वाणोप्यन्योवासिद्धिमृच्छति ॥ मदन्यदेवंयोभक्त्याद्विषन्मामन्यदेवताम् १२ सोपिमामेवयजतेपरंत्व
विधितोनृप ॥ योह्यन्यदेवतांमांचद्विषन्नन्यांसमर्चयेत् १३ यातिकल्पसहस्रंसनिरयान्दुःखभाक्सदा ॥ भूतशुद्धिंविधायादौप्राणानांस्थापनंतथा १४
आकृष्यचेतसोवृत्तिंततोन्यासमुपक्रमेत् ॥ कृत्वांतर्मातृकान्यासंबहिश्चाथषडंगकम् १५ न्यासंचमूलमंत्रस्यततोध्यात्वाजपेन्मनुम् ॥ स्थिरचित्तोज
पेन्मंत्रंयथागुरुमुखागतम् १६ जपंनिवेद्यदेवायस्तुत्वास्तोत्रैरनेकधा ॥ एवंमांयउपासीतसलभेन्मोक्षमव्ययम् १७ यउपासनयाहीनोधिङ्नरोव्यर्थ
जन्मभाक् ॥ यज्ञोहमौषधंमंत्रोग्निराज्यंचहविर्हुतं १८ ध्यानंध्येयःस्तुतिःस्तोत्रंनतिर्भक्तिरुपासना ॥ त्रयीज्ञेयंपवित्रंचपिताचप्रपितामहः १९ ॐकारःपा
वनःसाक्षीप्रभुर्मित्रंगतिर्लयः ॥ उत्पत्तिःपोषकोबीजंशरणंवासएवच २० असन्मृत्युःसदमृतमात्माब्रह्माहमेवच ॥ दानंहोमस्तपोभक्तिर्जपःस्वाध्यायएवच
२१ यद्यत्करोतितत्सर्वंसमेमायिनिवेदयेत् ॥ योषितोथदुराचाराःपापास्त्रैवर्णिकास्तथा ॥ मदाश्रयाद्विमुच्यंतेकिंमद्भक्त्याद्विजादयः २२ नविनश्यतिम
द्भक्तोज्ञात्वेमामद्विभूतयः ॥ प्रभवंमेविभूतींश्चनदेवाऋषयोविदुः २३ नानाविभूतिभिरहंव्याप्यविश्वंप्रतिष्ठितः ॥ यद्यच्छ्रेष्ठतमंलोकेसाविभूतिर्निबोधमे
२४ ॐतत्सदितिश्री०उपासनायोगोनामसप्तमोऽध्यायः ७ ॥ १४४ ॥ वरेण्यउवाच ॥ भगवन्नारदोमह्यंतवनानाविभूतयः ॥ उक्तवांस्ताअहंवेदनसर्वाःसो
पिवेत्तिताः १ त्वमेवतत्त्वतःसर्वावेत्सिताद्विरदानन ॥ निजंरूपमिदानींमेव्यापकंचाहदर्शय २ ॥ ॥ श्रीगजाननउवाच ॥ ॥ एकस्मिन्मयिपश्यत्वं
विश्वमेतच्चराचरम् ॥ नानाश्चर्याणिदिव्यानिपुराद्दृष्टानिकेनचित् ३ ज्ञानचक्षुरहंतेद्यसृजामिस्वप्रभावतः ॥ चर्मचक्षुःकथंपश्येन्मांविभुंह्यजमव्य

यम् ४ ॥ कउवाच ॥ ततोराजावरेण्यःसदिव्यचक्षुरवैक्षत ॥ ईशितुःपरमंरूपंगजास्यस्यमहाद्भुतम् ५ असंख्यवक्त्रंललितमसंख्यांघ्रिकरंमहत् ॥ अनु
लिप्तंसुगंधेनदिव्यभूषांबरस्रजम् ॥ असंख्यनयनंकोटिसूर्यरश्मिधृतायुधम् ६ तद्वर्ष्माणित्रयोलोकादृष्टास्तेनपृथग्विधाः ॥ दृष्ट्वैश्वरंपरंरूपंप्रणम्यसनृपो
ब्रवीत् ७ ॥ ॥ वरेण्यउवाच ॥ ॥ वीक्षेहंतवदेहेस्मिन्देवानृषिगणान्पितॄन् ॥ पातालानांसमुद्राणांद्वीपानांचैवभूभृताम् ८ महर्षीणांसप्तकंचनानार्थैःसं
कुलंविभो ॥ भुवोंतरिक्षंस्वर्गांश्चमनुष्योरगराक्षसान् ९ ब्रह्मविष्णुमहेशेंद्रान्देवान्जंतूननेकधा ॥ अनाद्यनंतंलोकादिमनंतभुजशीर्षकं १० प्रदीप्तानलसंका
शमप्रमेयंपुरातनम् ॥ किरीटकुंडलधरंदुर्निरीक्ष्यंमुदावहम् ११ एतादृशंचवीक्षेत्वांविशालवक्षसंप्रभुम् ॥ सुरविद्याधरैर्यक्षैःकिन्नरैर्मुनिमानुषैः १२ नृत्यद्भि
रप्सरोभिश्चगंधर्वैर्गानतत्परैः ॥ वसुरुद्रादित्यगणैःसिद्धैःसाध्यैर्मुदायुतैः १३ सेव्यमानंमहाभक्त्यावीक्ष्यमाणंसुविस्मितैः ॥ वेत्तारमक्षरंवेद्यंधर्मगोप्तारमीश्वरम्
१४ पातालानिदिशःस्वर्गान्भुवंव्याप्याखिलंस्थितम् ॥ भीतालोकास्तथाचाहमेवंत्वांवीक्ष्यरूपिणम् १५ नानादंष्ट्राकरालंचनानाविद्याविशारदम् ॥
प्रलयानलदीप्तास्यंजटिलंचनभःस्पृशम् ॥ दृष्ट्वागणेशतेरूपमहंभ्रांतइवाभवम् १६ देवामनुष्यानागाद्याःखलास्त्वदुदरेशयाः ॥ नानायोनिभुजश्चांतेत्व
य्येवप्रविशंतिच १७ अब्धेरुत्पद्यमानास्तेयथाजीमूतबिंदवः ॥ त्वमिंद्रोग्निर्यमश्चैवनिर्ऋतिर्वरुणोमरुत् १८ गुह्यकेशस्तथेशानःसोमःसूर्योखिलंजगत् ॥
नमामित्वामतःस्वामिन्प्रसादंकुरुमेधुना १९ दर्शयस्वनिजंरूपंसौम्यंयत्पूर्वमीक्षितम् ॥ कोवेदलीलास्तेभूमन्क्रियमाणानिजेच्छया २० अनुग्रहान्मया
दृष्टमैश्वरंरूपमीदृशम् ॥ ज्ञानचक्षुर्यतोदत्तंप्रसन्नेनत्वयामम २१ ॥ ॥ श्रीगजाननउवाच ॥ ॥ नेदंरूपंमहाबाहोममपश्यंतियोगिनः ॥ सनकाद्याना
रदाद्याःपश्यंतिमदनुग्रहात् २२ चतुर्वेदार्थतत्वज्ञाश्चतुःशास्त्रविशारदाः ॥ यज्ञदानतपोनिष्ठानमेरूपंविदंतिते २३ शक्योहंवीक्षितुंज्ञातुंप्रवेष्टुंभक्तिभाव
तः ॥ त्यजभीतिंचमोहंचपश्यमांसौम्यरूपिणम् २४ मद्भक्तोमत्परःसर्वसंगहीनोमदर्थकृत् ॥ निष्क्रोधःसर्वभूतेषुसमोमामेतिभूभुज ॥ २५ ॥ ॥ ॐ
तत्सदितिश्रीगणेशगीता०विश्वरूपदर्शनंनामअष्टमोध्यायः ॥ ८ ॥ ॥ १४५ ॥ ॥ ७ ॥ ॥ वरेण्यउवाच ॥ अनन्यभावस्त्वांसम्यक्मूर्ति
मंतमुपासते ॥ योक्षरंपरमंव्यक्तंतयोःकस्तेमतोधिकः १ असित्वंसर्ववित्साक्षीभूतभावनईश्वरः ॥ अतस्त्वांपरिपृच्छामिवदमेकृपयाविभो २ ॥ ॥ श्री
गजाननउवाच ॥ ॥ योमांमूर्तिधरंभक्त्यामद्भक्तःपरिसेवते ॥ समेमान्योऽनन्यभक्तिर्नियुज्यस्वहृदयंमयि ३ स्वगणंस्ववशंकृत्वाखिलभूतहितार्थकृत् ॥
ध्येयमक्षरमव्यक्तंसर्वगंकूटगंस्थिरम् ४ सोपिमामेत्यनिर्देश्यंमत्परोयउपासते ॥ संसारसागरादस्मादुद्धरामितमप्यहम् ५ अव्यक्तोपासनादुःखमधिकंतेन
लभ्यते ॥ व्यक्तस्योपासनासाध्यंतदेवाव्यक्तभक्तितः ६ भक्तिश्चैवादरश्चात्रकारणंपरमंमतम् ॥ सर्वेषांविदुषांश्रेष्ठोह्यकिंचिज्ज्ञोपिभक्तिमान् ७ भ
जनभक्त्याविहीनोयःसचांडालोभिधीयते ॥ चांडालोपिभजनभक्त्याब्राह्मणेभ्योधिकोमम ८ शुकाद्याःसनकाद्याश्चपुरामुक्ताहिभक्तितः ॥ भक्त्यैवमामनु

प्राप्तानारदाद्याश्चिरायुषः ९ अतोभक्त्यामयिमनोनिधेहिबुद्धिमेवच ॥ भक्त्यायजस्वमांराजंस्ततोमामेवयास्यसि १० असमर्थोर्पितुंस्वांतंध्रुवंमायिनराधि
प ॥ अभ्यासेनचयोगेनततोगंतुंयतस्वमां ११ तत्रापित्वमशक्तश्चेत्कुरुकर्ममदर्पणम् ॥ ममानुग्रहतश्चैवंपरांनिर्वृतिमेष्यसि १२ अथैतदप्यनुष्ठातुनशक्तो
सितदाकुरु ॥ प्रयत्नतःफलत्यागंत्रिविधानांहिकर्मणां १३ श्रेयसीबुद्धिरावृत्तेस्ततोध्यानंवरंमतम् ॥ ततोखिलपरित्यागस्ततःशांतिर्गरीयसी १४ निरहंम
मताबुद्धिरद्वेषःकरुणासमः ॥ लाभालाभेसुखेदुःखेमानामानेसमेप्रियः १५ यंवीक्ष्यनभयंयातिजनस्तस्मान्नचस्वयं ॥ उद्वेगभीःकोपमुद्भीरहितोयःसमोप्रि
यः १६ रिपौमित्रेथगर्हायांस्तुतौशोकेसमःसमुत् ॥ मौनीनिश्चलधीभक्तिरसंगःसचमेप्रियः १७ संशीलयतियश्चैनमुपदेशंमयाकृतम् ॥ सर्वज्ञःसर्वलोके
षुमुक्तात्मामेप्रियःसदा ॥ १८ ॥ अनिष्टाप्तौचनद्वेष्टीष्टप्राप्तौनचतुष्यति ॥ क्षेत्रतज्ज्ञौचयोवेत्तिसमेप्रियतमोभवेत् १९ ॥ वरेण्यउवाच ॥ किंक्षेत्रंकश्चतद्वे
त्तिकिंतज्ज्ञानंगजानन ॥ एतदाचक्ष्वमह्यंत्वंपृच्छतेकरुणांबुधे २० ॥ ॥ गणेशउवाच ॥ ॥ पंचभूतानितन्मात्राःपंचकर्मेंद्रियाणिच ॥ अहंकारोमनो
बुद्धिःपंचज्ञानेंद्रियाणिच ॥ इच्छाव्यक्तंधृतिर्द्वेषौसुखदुःखेतथैवच २१ चेतनासहितश्चायंसमूहःक्षेत्रमुच्यते ॥ तज्ज्ञंत्वंविद्धिमांभूपसर्वांतर्यामिणंविभुम् ॥
२२ अयंसमूहोहंचापियज्ज्ञानविषयौनृप ॥ आर्जवंगुरुशुश्रूषाविरक्तिश्चेंद्रियार्थतः २३ शौचंक्षांतिरदंभश्चजन्मादिदोषवीक्षणम् ॥ समदृष्टिर्दृढाभक्तिरेकांति
त्वंशमोदमः २४ एतैर्यत्तुयुतंज्ञानंतज्ज्ञानंविद्धिबाहुज ॥ तज्ज्ञानविषयंराजन्ब्रवीमित्वंशृणुष्वमे २५ यज्ज्ञात्वैतिचनिर्वाणंमुक्त्वासंसृतिसागरं ॥ यदनादींद्रि
यैर्हीनंगुणभुग्गुणवर्जितं २६ अव्यक्तंसदसद्भिन्नमिंद्रियार्थावभासकं ॥ विश्वभृत्चाखिलव्यापिएकंनानेवभासते २७ बाह्याभ्यंतरतःपूर्णमसंगंतमसःपरम् ॥
दुर्ज्ञेयंचातिसूक्ष्मत्वाद्दीप्तानामपिभासकं २८ ज्ञेयमेतादृशंविद्धिज्ञानगम्यंपुरातनं ॥ एतदेवपरंब्रह्मज्ञेयमात्मापरोव्ययः २९ गुणान्प्रकृतिजान्भुंक्तेपुरुषःप्र
कृतेःपरः ॥ गुणैस्त्रिभिरियंदेहेबध्नातिपुरुषंदृढं ३० यदाप्रकाशःशांतिश्चवृद्धेसत्वंतदाधिकं ॥ लोभोशमःस्पृहारंभःकर्मणांरजसोगुणः ३१ मोहोऽप्रवृत्तिश्चाज्ञा
नंप्रमदस्तमसोगुणः ॥ सत्वाधिकःसुखंज्ञानंकर्मसंगोरजोधिकः ३२ तमोधिकश्चलभतेनिद्रालस्यंसुखेतरत् ॥ एषुत्रिषुप्रवृद्धेषुमुक्तिसंसृतिदुर्गतीः ३३ प्रयां
तिमानवाराजंस्तस्मात्सत्वयुतोभव ॥ ततश्चसर्वभावेनभजत्वंमांनरेश्वर ३४ भक्त्याचाव्यभिचारिण्यासर्वत्रैवचसंस्थितं ॥ अग्नौसूर्येतथासोमेयच्चतारासुसं
स्थितं ३५ विदुषिब्राह्मणेतेजोविद्धितन्मामकंनृप ॥ अहमेवाखिलंविश्वंसृजामिविसृजामिच ३६ ओषधीरतेजसासर्वाविश्वंचाप्याययाम्यहं ॥ सर्वेंद्रिया
ण्यधिष्ठायजाठरंचधनंजयं ३७ भुनज्मिचाखिलान्भोगान्पुण्यपापविवर्जितः ॥ अहंविष्णुश्चरुद्रश्चब्रह्मागौरीगणेश्वरः ३८ इंद्राद्यालोकपालाश्चममैवांश
समुद्भवाः ॥ येनयेनहिरूपेणजनोमांपर्युपासते ३९ तथातथादर्शयामितस्मैरूपंसुभक्तितः ॥ इतिक्षेत्रंतथाज्ञाताज्ञानंज्ञेयंमयेरितं ४० अखिलंभूपतेसम्यगुप

१ उद्वेगभीकोपमदैः रहितोयइतिपाठः । २ बुद्धेःसत्वमि० पा० ।

पन्नायप्रच्छते ४१ ॐतत्सदितिश्रीगणेशगीता० क्षेत्रज्ञातृज्ञेयविवेकयोगोनामनवमोध्यायः ॥ ९ ॥ ॥ १४६ ॥ ॥ ७ ॥ ॥ श्रीगजाननउवाच ॥ दैव्या
सुरीराक्षसीचप्रकृतिस्त्रिविधानृणां ॥ तासांफलानिचिह्नानिसंक्षेपात्तेब्रुवेनृप १ आद्यासंसाधयेन्मुक्तिंद्वेपरेबंधनंनृप ॥ चिह्नंब्रवीमिचाद्यायास्तन्मेनिगदतः
शृणु २ अपैशून्यंदयाक्रोधश्चापल्यंधृतिरार्जवम् ॥ तेजोभयमहिंसाचक्षमाशौचममानिता ३ इत्यादिचिह्नमाद्यायाआसुर्याःशृणुसांप्रतम् ॥ अतिवादो
भिमानश्चदर्पोज्ञानंसकोपता ४ आसुर्याएवमाद्यानिचिह्नानिप्रकृतेर्नृप ॥ निष्ठुरत्वंमदोमोहोहंकारोगर्वएवच ५ द्वेषोहिंसादयाक्रोधऔद्धत्यंदुर्विनीतता ॥
आभिचारिककर्तृत्वंक्रूरकर्मरतिस्तथा ६ अविश्वासःसतांवाक्येऽशुचित्वंकर्महीनता ॥ निंदकत्वंचवेदानांभक्तानामसुरद्विषाम् ७ मुनिश्रोत्रियविप्राणांतथा
स्मृतिपुराणयोः ॥ पाखंडवाक्येविश्वासःसंगतिर्मलिनात्मनां ८ सदंभकर्मकर्तृत्वंस्पृहाचपरवस्तुषु ॥ अनेककामनावत्त्वंसर्वदानृतभाषणम् ९ परोत्कर्षास
हिष्णुत्वंपरकृत्यपराहतिः ॥ इत्याद्याबहवश्चान्येराक्षस्याःप्रकृतेर्गुणाः १० पृथिव्यांस्वर्गलोकेचपरिभ्रम्यवसंतिते ॥ मद्भक्तिरहितालोकाराक्षसींप्रकृतिंश्रिताः
११ तामसींयेश्रिताराजन्यांतितेरौरवंध्रुवम् ॥ अनिर्वाच्यंचतेदुःखंभुंजतेतत्रसंस्थिताः १२ दैवान्निःसृत्यनरकाज्जायंतेभुविकुब्जकाः ॥ जात्यंधाःपंगवोदीना
हीनजातिषुतेनृप १३ पुनःपापसमाचारामय्यभक्ताःपतंतिते ॥ उत्पतंतिहिमद्भक्तायांकांचिद्योनिमाश्रिताः १४ लभंतेस्वर्गतिंयज्ञैरन्यैर्धर्मैश्चभूमिप ॥ सु
लभास्ताःसकामानांमयिभक्तिःसुदुर्लभा १५ विमूढामोहजालेनबद्धाःस्वेनचकर्मणा ॥ अहंहंताअहंकर्ताअहंभोक्तेतिवादिनः १६ अहमेवेश्वरःशास्ताअहं
वेत्ताअहंसुखी ॥ एतादृशीमतिर्नृणामधःपातयतीहतान् १७ तस्मादेतत्समुत्सृज्यदैवींप्रकृतिमाश्रय ॥ भक्तिंकुरुमदीयांत्वमनिशंदृढचेतसा १८ सापिभ
क्तिस्त्रिधाराजन्सात्विकीराजसीतरा ॥ यद्देवान्भजतेभक्त्यासात्विकीसामताशुभा १९ राजसीसातुविज्ञेयाभक्तिर्जन्ममृतिप्रदा ॥ यद्यक्षांश्चैवरक्षांसियजंते
सर्वभावतः २० वेदेनाविहितंक्रूरंसाहंकारंसदंभकम् ॥ भजंतेप्रेतभूतादीन्कर्मकुर्वंतिकामुकम् २१ शोषयंतोनिजंदेहमंतरस्थंमांदृढाग्रहाः ॥ तामस्येतादृशीभ
क्तिर्नृणांसानिरयप्रदा २२ कामोलोभस्तथाक्रोधोदंभश्चत्वारइत्यमी ॥ महाद्वाराणिवीचीनांतस्मादेतांस्तुवर्जयेत् २३ ॐतत्सदितिश्रीमद्गणेशगीता०
योगोपदेशोनामदशमोध्यायः ॥ १० ॥ ॥ १४७ ॥ श्रीगजाननउवाच ॥ तपोपित्रिविधंराजन्कायिकादिप्रभेदतः ॥ ऋजुतार्जवशौचाश्चब्रह्मचर्यमहिंसन
म् १ गुरुविज्ञद्विजातीनांपूजनंचासुरद्विषाम् ॥ स्वधर्मपालनंनित्यंकायिकंतपईदृशम् २ मर्मास्पृक्चप्रियंवाक्यमनुद्वेगंहितंऋतम् ॥ अधीतिर्वेदशास्त्राणांवा
चिकंतपईदृशम् ३ अंतःप्रसादःशांतत्वंमौनमिंद्रियनिग्रहः ॥ निर्मलाशयतानित्यंमानसंतपईदृशम् ४ अकामतःश्रद्धयाचयत्तपःसात्विकंचतत् ॥ रुद्ध्वेस
त्कारपूजार्थंसदंभंराजसंतपः ५ तदास्थिरंजन्ममृतीप्रयच्छतिनसंशयः ॥ परात्मपीडकंयज्ञतपस्तामसमुच्यते ६ विधिवाक्यप्रमाणार्थंसत्पात्रेदेशकालतः ॥
श्रद्धयादीयमानंयद्दानंतत्सात्विकंमतम् ७ उपकारंफलंवापिकांक्षद्भिर्दीयतेनरैः ॥ क्लेशतोदीयमानंवाभक्त्याराजसमुच्यते ८ अकालदेशतोपात्रेवज्ञयादीय

तेतुयत् ॥ असत्कारान्वयद्दत्तंतद्दानंतामसंस्मृतम् ९ ज्ञानंचत्रिविधंराजन्शृणुष्वस्थिरचेतसा ॥ त्रिधाकर्मचकर्तारंब्रवीमितेप्रसंगतः १०नानाविधेषुभूतेषुमामे
कंवीक्षतेतुयः॥नाशवत्सुचनित्यंमांतज्ज्ञानंसात्विकंनृप ११तेषुवेत्तिपृथग्भूतंविविधंभावमाश्रितः॥मामव्ययंचतज्ज्ञानंराजसंपरिकीर्तितम् १२हेतुहीनमसत्यं
चदेहात्मविषयंचयत् ॥ असदल्पार्थविषयंतामसंज्ञानमुच्यते १३ भेदतस्त्रिविधंकर्मविद्धिराजन्मयेरितम् ॥ कामनाद्वेषदंभैर्यद्रहितंनित्यकर्मयत् १४ कृतंवि
नाफलेच्छांयत्कर्मसात्विकमुच्यते ॥ यद्बहुक्लेशतःकर्मकृतंयच्चफलेच्छया १५ क्रियमाणंनृभिर्दंभात्कर्मराजसमुच्यते ॥ अनपेक्ष्यस्वशक्तिंयदर्थक्षयकरंचय
त् १६ ॥ अज्ञानात्क्रियमाणंयत्कर्मतामसमीरितम् ॥ कर्तारंत्रिविधंविद्धिकथ्यमानंमयानृप १७ धैर्योत्साहीसमोऽसिद्धौसिद्धौचाविक्रियस्तुयः ॥ अहंका
रविमुक्तोयःसकर्तासात्विकोनृप १८ कुर्वन्हर्षंचशोकंचहिंसाफलस्पृहांचयः ॥ अशुचिर्लुब्धकोयश्चराजसोसौनिगद्यते १९ प्रमादाज्ञानसहितःपरोच्छेदपरः
शठः ॥ अलसस्तर्कवान्यस्तुकर्तासौतामसोमतः २० सुखंचत्रिविधंराजन्दुःखंचक्रमतःशृणु ॥ सात्विकंराजसंचैवतामसंचमयोच्यते २१ विषवद्भास
तेपूर्वंदुःखस्यांतकरंचयत् ॥ इच्छयमानंतथावृत्त्यायदंतेमृतवद्भवेत् २२ प्रसादात्स्वस्यबुद्धेर्यत्सात्विकंसुखमीरितम् ॥ विषयाणांतुयोभोगोभासतेमृतवत्पुरा
२३ हालाहलमिवांतेयद्राजसंसुखमीरितम् ॥ तंद्रिप्रमादसंभूतमालस्यप्रभवंचयत् २४ सर्वदामोहकंस्वस्यसुखंतामसमीदृशम् ॥ नतदस्तियदेतैर्यन्मुक्तं
स्यात्त्रिविधैर्गुणैः २५ राजन्ब्रह्मापित्रिविधमोंतत्सदितिभेदतः ॥ त्रिलोकेषुत्रिधाभूतमखिलंभूपवर्तते २६ ब्रह्मक्षत्रियविट्शूद्राःस्वभावाद्भिन्नकर्मिणः ॥ ता
नितेषांतुकर्माणिसंक्षेपात्तेधुनावदे २७ अंतर्बाह्येंद्रियाणांचवश्यत्वमार्जवंक्षमा ॥ नानातपांसिशौचंचद्विविधंज्ञानमात्मनः २८ वेदशास्त्रपुराणानांस्मृ
तीनांज्ञानमेवच ॥ अनुष्ठानंतदर्थानांकर्मब्राह्ममुदाहृतम् २९ दार्ढ्यंशौर्यंचदाक्ष्यंचयुद्धेपृष्ठाप्रदर्शनम् ॥ शरण्यपालनंदानंधृतिस्तेजःस्वभावजम् ३०
प्रभुतामनजौन्नत्यंसुनीतिर्लोकपालनं ॥ पंचकर्माधिकारित्वंक्षत्रकर्मसमीरितं ३१ नानावस्तुक्रयोभूमेःकर्षणंरक्षणंगवां ॥ त्रिधाकर्माधिकारित्वंवैश्यकर्मसमी
रितं ३२ दानंद्विजानांशुश्रूषासर्वदाशिवसेवनं ॥ एतादृशंनरव्याघ्रकर्मशौद्रमुदीरितं ३३ स्वस्वकर्मरताएतेमय्यर्प्याखिलकारिणः ॥ मत्प्रसादात्स्थिरंस्थानं
यांतितेपरमंनृप ३४ इतितेकथितोराजन्प्रसादाद्योगउत्तमः ॥ सांगोपांगःसविस्तारोनादिसिद्धोमयाप्रिय ३५ युंक्ष्वयोगंमयाख्यातंनाख्यातंकस्यचिन्नृप ॥
गोपयैनंततःसिद्धिंपरांयास्यस्यनुत्तमाम् ३६ ॥ ॥ कउवाच ॥ ॥ इतितस्यवचःश्रुत्वाप्रसन्नस्यमहात्मनः ॥ गणेशस्यवरेण्यःसचकारचयथोदितं ३७
त्यक्त्वाराज्यंकुटुंबंचकांतारंप्रययौरयात् ॥ उपदिष्टंयथायोगमास्थायमुक्तिमाप्तवान् ॥ इमंयोगोत्तमंयोगंशृणोतिश्रद्धयातुयः ३८ सोपिकैवल्यमाप्नोतियथा
योगीतथैवसः ॥ यइमंश्रावयेद्योगंकृत्वाऽस्यार्थंसुबुद्धिमान् ३९ यथायोगतिथासोपिपरंनिर्वाणमृच्छति ॥ योगीतांसम्यगभ्यस्यज्ञात्वाचार्थंगुरोर्मुखात्
४० कृत्वापूजांगणेशस्यप्रत्यहंपठतेतुयः ॥ एककालंद्विकालंवात्रिकालंवापियःपठेत् ४१ब्रह्मीभूतस्यतस्यापिदर्शनान्मुच्यतेतरः ॥ नयज्ञैर्नव्रतैर्दानैर्नाग्निहोत्रैर्म

हाधनैः ४२ नवेदैःसम्यगभ्यस्तैःसम्यक्ज्ञातैःसहांगकैः ॥ पुराणश्रवणैर्नैवनशास्त्रैःसाधुचिंतितैः ४३ प्राप्यतेब्रह्मपरममनयाप्राप्यतेनरैः ॥ ब्रह्मघ्नोम
द्यपःस्तेयीगुरुतल्पगमोपियः ४४ चतुर्णांयस्तुसंसर्गीमहापातककारिणां ॥ स्त्रीहिंसागोवधादीनांकर्तारोयेचपापिनः ४५ तेसर्वेप्रतिमुच्यंतेगीतामे
तांपठंतिचेत् ॥ यःपठेत्प्रयतोनित्यंसगणेशोनसंशयः ४६ चतुर्थ्यांयःपठेद्भक्त्यासोपिमोक्षायकल्पते ॥ तत्तत्क्षेत्रंसमासाद्यस्नात्वाभ्यर्च्यगजाननं ४७
सकृद्गीतांपठेद्भक्त्याब्रह्मभूयायकल्पते ॥ भाद्रेमासेसितेपक्षेचतुर्थ्यांभक्तिमान्नरः ४८ कृत्वामहीमयींमूर्तिंगणेशस्यचतुर्भुजां ॥ सवाहनांसायुधांचसम
भ्यर्च्ययथाविधि ४९ यःपठेत्सप्तकृत्वस्तुगीतामेतांप्रयत्नतः ॥ ददातितस्यसंतुष्टोगणेशोभोगमुत्तमं ५० पुत्रान्पौत्रान्धनंधान्यंपशुरत्नादिसंपदः ॥
विद्यार्थिनोभवेद्विद्यासुखार्थीसुखमाप्नुयात् ५१ कामान्यॉल्लभेत्कामीमुक्तिमंतेप्रयांतिते ५२ ॥ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेद्वादशसाहस्र्यांसंहि
तायांॐतत्सदितिश्रीमद्गणेशगीतासूपनिषदर्थासुश्रीमद्योगामृतार्थशास्त्रेश्रीगणेशवरेण्यसंवादेत्रिविधवस्तुनिरूपणंनामैकादशोध्यायः ११ ॥ ॥ १४८
कउवाच ॥ ॥ एवंपूजांसंप्रगृह्यतत्रैवन्यवसद्विभुः ॥ भक्तानांपूरयन्कामान्सदनेराजपूजिते १ ॥ ॥ मुनिरुवाच ॥ ॥ विनायकस्यमाहात्म्येक
थाभिन्नानिरूपिताः ॥ अवतीर्यवरेण्यस्यगृहेविघ्नासुरोहतः २ गजासुरमुखप्राप्तिर्वर्णिताचतुरानन ॥ अत्रैवपार्वतीगर्भादाविर्भावोनिरूपितः ३ गजान
नतयादेवसंशयोतोममाभवत् ॥ त्वदन्यःसंशयच्छेत्तानास्त्येवभुवनत्रये ॥ ४ ॥ ॥ कउवाच ॥ ॥ नकार्यःसंशयोऽत्रासनानाशक्तियुतेविभौ ॥ निजे
च्छावशतोनेकरूपकःकल्पभेदतः ५ शंभुवक्त्राच्चक्रोधाच्चप्रादुर्भूतोगजाननः ॥ गौर्याश्चतेजसोजातउदराच्चक्वचिन्मुने ६ क्वचिद्गौरीमलाच्चापिद्विमुखोद्वि
करःक्वचित् ॥ क्वचित्पंचमुखःक्वापिषण्मुखोदशबाहुकः ७ क्वचिद्द्वादशहस्तश्चसहस्रभुजमंडितः ॥ आगमेषुसमस्तेषुनानाध्यानानिसंतिहि ८ नचा
त्रसंशयःकार्योविस्मयोवामुनेप्रभौ ॥ शिवाद्ब्रह्माचविष्णुश्चलैंगेजातौनिरूपितौ ९ स्कांदेविधातुर्नेत्राच्चशिवोत्पत्तिर्निरूपिता ॥ विष्णुःशिवंध्याय
तिचशिवोपिविष्णुमेवच १० पंचाक्षरंसमंत्रंचतारकंवदतिप्रभुः ॥ शतकोटिमितंरामचरितंचत्रिधाकृतं ११ मर्त्यलोकेतारकंसस्थापयामासशंकरः ॥
क्वचिच्छिवात्सृष्टिरुक्ताब्रह्मणश्चक्वचिद्धरेः १२ भगवत्याःक्वचित्प्रोक्ताक्वचित्सूर्याद्गजाननात् ॥ क्वचिच्चब्राह्मणःप्रोक्तासर्वंतच्छास्त्रसंमतं १३ संशयंकुरुते
यस्तुसयातिनरकंध्रुवं ॥ ॥ कउवाच ॥ ॥ एवंत्रेतायुगकथाप्रोक्तासर्वामुनेतव १४ इदानीमभिधास्यामिकथांकलियुगाश्रितां ॥ कलिप्रांतेमुनेलो
काभ्रष्टाचारास्तथानृताः १५ ब्राह्मणावेदरहिताःस्नानसंध्याविवर्जिताः ॥ यजनंयाजनंदानंनकरिष्यंतिकर्हिचित् १६ प्रतिग्रहंचदुष्टानांकरिष्यंतिसुदुर्लभ
म् ॥ परापवादंतन्निंदांपरस्त्रीधर्षणंतथा १७ करिष्यंतिजनाःसर्वेविधिलोपंचसर्वशः ॥ विश्वासघातंसर्वत्रकुर्वंतिचजनाध्रुवं १८ विधिलोपेचश
पथंकरिष्यंतिधरातले ॥ नकरिष्यंतिमेघाश्चवृष्टिंक्वापिमुनीश्वर ॥ १९ ॥ महानदीतीरदेशेकरिष्यंतिकृषिंजनाः ॥ योबलीसोप्यबलिनोहरिष्यतिधनं

बलात् २० हरिष्यतस्ततोद्वौचत्रयस्ताभ्यांबलात्पुनः ॥ शूद्रावेदंपठिष्यंतिब्राह्मणाःशूद्रकर्मिणः २१ क्षत्रियावैश्यकर्माणोवैश्याश्चशूद्रकर्मिणः ॥ प्र
तिग्रहंकरिष्यंतिचांडालस्यद्विजातयः २२ दरिद्राश्चभविष्यंतिहाहाभूताविचेतसः ॥ वदिष्यंतिचनमयागृहीतंधनमण्वपि ॥ २३ ॥ गृहीत्वापिचकृत्या
यथाचितारोधनंपरात् ॥ उत्कोचंचगृहीत्वैवमृथासाक्ष्यंब्रुवंतिच २४ मतांनिंदांकरिष्यंतिमैत्रींचासद्भिरेवच ॥ वृथामांसस्यभक्ष्यंचकरिष्यंतिद्विजातयः ॥
॥ २५ ॥ उच्छेदःसज्जनानांस्यादितरेषांचवैभवम् ॥ हित्वादेवान्भविष्यंतिजनाःसर्वेतथैंद्रिकान् २६ ॥ भूतप्रेतपिशाचानांभजनेसक्तमानसाः ॥
वेषान्नानाविधान्कृत्वामक्षयिष्यंतिवाडवाः २७ केचिच्चक्षत्रियाभिक्षांचरिष्यंत्यकुलोचितां ॥ व्रतानिनियमांश्चापिनाचरिष्यंतिकर्हिचित् २८ वर्णसंकरका
रीणिकर्ताकर्माणिभूजनः ॥ पतिव्रताभ्रष्टव्रताभविष्यंतिकलौयुगे २९ म्लेछप्रायाःसर्वलोकाःपरद्रव्यापहारिणः ॥ निर्दयाःकुपथासक्ताःसर्वदासत्यवर्जिताः
३० धरित्रीसस्यहीनाचरसहीनामहीरुहाः ॥ पंचमेवाथषष्ठेवावर्षेकन्याप्रसूयते ३१ षोडशाब्दपरंचायुर्भविष्यतितदायुगे ॥ तीर्थानिगुप्तरूपाणिदेवतायतना
निच ३२ एवंपापेप्रवृद्धेतुधर्मेविश्वार्थमात्रकः ॥ भविष्यंतितदादेवाउपवासपरायणाः ३३स्वधास्वाहावषट्कारैर्वर्जिताभयविह्वलाः ॥ यास्यंतिशरणंदेवंगजा
ननमनामयं ३४ स्तुतिंनानाविधांतस्यकरिष्यंतिनतिंबहु ॥ प्रार्थयिष्यंतिदेवेशंसर्वविघ्नविनाशनं ३५ एवंसर्वेविचार्यासौआविर्भावंकरिष्यति ॥ गजाननःशू
र्पकर्णोधूम्रवर्णोपिनामतः ३६ नीलमश्वंसमारुह्यखङ्गहस्तोरुषाज्वलन् ॥ कल्पयिष्यतिसेनांसनानारूपांनिजेच्छया ३७शस्त्राणिचमहास्त्राणिकल्पयिष्यत्यय
ततः ॥ वधिष्यतिमहाम्लेछान्सेनयास्वेनतेजसा ३८ म्लेच्छभूतांस्तथालोकान्वधिष्यतितदाखिलान् ॥ लीनान्कंदरदेशेषुब्राह्मणान्वन्यभक्षिणः ३९समाना
य्यप्रपूज्यैतान्भूमिंदास्यतिदेवराट् ॥ सत्कर्मकारिणःसर्वान्विधास्यतिचसज्जनान् ४० तदाधर्ममयंविश्वंभविष्यतिकृतेयुगे ॥ एवंकृत्वाधूम्रवर्णस्ततोंतर्द्धान
मेष्यति ४१ एवंचतुर्युगेव्यासविघ्नेशस्यमहात्मनः ॥ कथितानिचनामानिरूपाणिचतवानघ ४२ कर्माण्यद्भुतरूपाणितस्यचोक्तानिसर्वशः ॥ येषांश्रवणमा
त्रेणमुच्यंतेसर्वजंतवः ४३ अन्यान्यस्यापिरूपाणिनवक्तुंशक्तिरस्तिमे ॥ यत्रवेदाश्चचत्वारोविकुंठास्तत्रकाकथा ४४ ममवामद्यीशस्यापिमहिम्नस्तस्यवर्णने
अनुष्ठानायगच्छत्वंव्यवसायंकरोम्यहम् ४५ ॥ भृगुरुवाच ॥ एवंश्रुत्वासोमकांतव्यासोब्रह्ममुखात्कथाम् ॥ अतिप्रीतमनाःप्राहसर्वपापप्रणाशिनीम् ४६
मुनिरुवाच ॥ नतृप्तिमधिगच्छामिश्रुत्वाख्यानंमहाद्भुतम् ॥ धन्योस्म्यनुग्रहीतोस्मियत्त्वयासर्वसंशयाः ४७ दूरीकृताःकथासंगाद्गणेशचरिताश्रयात् ॥
अमृतस्येवमेतृप्तिःश्रुत्वाश्रुत्वानजायते ४८ अस्यश्रवणमात्रेणजन्मजन्मांतरार्जितम् ॥ वृजिनंनाशमायातिसर्वेकामाभवंतिच ४९ पूर्वपुण्यबलादस्यश्रव
णंजायतेनृणाम् ॥ नश्राव्यंदुर्जनायेदंपुराणंसर्वसिद्धिदम् ५० एवमुक्त्वानमस्कृत्यपरिक्रम्यस्वयंभुवम् ॥ गृहीत्वाज्ञांययौव्यासस्तपसेवनमुत्तमम् ५१ यत्र
कंदफलान्यासन्नुत्तमानिजलानिच ॥ नवायुःप्रबलोयत्रनातपोनाग्निरेवच ५२ तत्रापविष्टैकनिष्ठोजपन्नेकाक्षरंमनुम् ॥ व्यतीयुर्द्वादशाब्दानिमुनेस्तस्यतप

स्यतः ॥ ततःप्रादुरभूत्तस्यपुरतस्तुगजाननः ५३ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेमुनिविसर्जनंनामैकोनपंचाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥ ॥ सो
मकांतउवाच ॥ ॥ कथंप्रादुरभूद्देवःपुरस्तस्यमहात्मनः ॥ भृगोतत्सर्वमाख्याहिश्रुत्वापापक्षयोयतः १ ॥ ॥ भृगुरुवाच ॥ ॥ यथातत्पुरतःप्रादु
रासीद्देवोगजाननः ॥ तत्सर्वंकथयिष्येहंसादरंशृणुभूमिप २ रक्तमाल्यांबरधरोरक्तगंधानुलेपनः ॥ गजाननोब्जनयनःसिंदूरारुणमस्तकः ३ अनेकसूर्यसंका
शोदिव्यकुंडलमंडितः ॥ अंगदेमुकुटंबिभ्रत्कंकणेशेषमेवच ४ मुनिरित्थंनिरीक्ष्यैनंनिर्मील्यनयनेपुनः ॥ चकंपेभयसंत्रस्तःस्मृत्वामंत्रंमुमूर्छच ५
ततोब्रवीन्नागमुखोमाभैस्त्वंमुनिसत्तम ॥ यंध्यायसिदिवारात्रौसोहंत्वांसमुपागतः ६ ब्रह्मादीनामगम्योयोवरंदातुंमुनेतव ॥ ॥ भृगुरुवाच ॥ ॥
श्रुत्वेत्थंमधुरांवाणींजहर्षमुनिपुंगवः ७ मूर्द्धानंन्यस्यतत्पादेधन्योहंपितरौतपः ॥ धन्योहंधरणीवृक्षाःपुनःपुनरवीवदत् ८ यतोदृष्टःसर्वरूपोगुणातीतो
खिलाश्रयः ॥ चिदानंदघनोनंतोखिलकारणकारणम् ९ एवंस्तुत्वाप्रार्थयन्सवरदंतंगजाननम् ॥ ॥ मुनिरुवाच ॥ ॥ निरस्यभ्रांतिसर्वांमेयच्छभ
क्तिंदृढांत्वयि १० अष्टादशपुराणानांयथास्यांकरणेक्षमः ॥ तवापिस्तवनेशक्तिःस्याद्यथातत्कुरुष्वभोः ११ हृदयेवसदेवेशप्रसन्नश्चेन्ममानघ ॥ ॥ गजा
ननउवाच ॥ ॥ त्वयायत्प्रार्थितंवत्ससर्वमद्यभविष्यति १२ सर्वमान्योव्यासनामासर्वपावनपावनः ॥ अपरोक्षज्ञानवांश्चभविष्यसिगुरोर्गुरुः १३ ना
रायणपरःख्यात्यागुणैःकीर्त्याश्रियापिच ॥ अष्टादशपुराणानांकर्तात्वंहिभविष्यसि १४ तथैवोपपुराणानांतावतांचमुनीश्वर ॥ त्वयापूर्वंदंभवशात्कृतं
ममपूजनम् १५ स्मरणंवाततःस्तंभोजातोवाण्यामहाद्भुतः ॥ धातुर्मुखाच्च्युतोयस्मान्महिमातेनमेनघ १६ विलीनंसर्वमधुनाप्रविशामितवोदरम् ॥
भृगुरुवाच ॥ ॥ एवमुक्त्वाप्राविशत्सतन्मुनेरुदरंविभुः १७ प्रकाशमतुलंलेभेसूर्यकोटिसमंमुनिः ॥ दीपयामासककुभस्ततोमूर्तिंविधायसः १८
गजाननस्यमहतींप्रासादेस्थापयच्चसः ॥ पूजयामासविविधैरुपचारैःपृथक्पृथक् १९ सिद्धिक्षेत्रमिदंसर्वलोकानांपावनंदशोः ॥ अनुष्ठानवतांमंत्रनाना
सिद्धिप्रदंशुभम् २० एवमुक्त्वाप्यनुज्ञाप्यव्यासोनारायणस्तदा ॥ पुराणंतद्गणेशस्ययच्छ्रुतंब्रह्मणोमुखात् २१ प्राहवैशंपायनायततस्तद्भुविपप्रथे ॥
तदेतदखिलंतेद्यमयापिकथितंनृप २२ नानेनसदृशंकिंचित्शास्त्रंत्रिषुविद्यते ॥ लोकेषुपरमानंददायकंनृपसत्तम २३ सोमकांतनचाख्येयमिदंदुष्टज
नेत्वया ॥ विनीतेषुचभक्तेषुत्वयाख्येयंप्रयत्नतः २४ मयानिरंतरमिदंजप्यतेस्मर्यतेपिच ॥ तवापिकरुणायोगात्कथितंराजसत्तम २५ गजाननध्यान
परोनित्यंजपपरोभव २६ ॥ इतिश्रीगणेशपुराणेउत्तरखंडेव्यासानुग्रहसिद्धिक्षेत्रवर्णनंनामपंचाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ ॥ सूतउवाच ॥
एवंश्रुत्वाकथांनित्यंसोमकांतोमुनीश्वरात् ॥ शुष्काम्रमूलेतत्पुण्यंन्याक्षिपज्जलतोनृपः १ गतेसंवत्सरेचूतःपल्लवैःकुसुमैःफलैः ॥ शुशुभेतीवरुचिरःपु
राणश्रुतिपुण्यतः २ सोमकांतोदिव्यकांतिस्त्यक्त्वाकुष्ठभवांरुजम् ॥ अक्षतश्चाभवत्पूतिगंधंत्यक्त्वासुगंधवान् ३ निःस्वेदःसुरभेर्गंधाद्दशदिक्षुप्रसारिणः ॥

बलात् २० हरिष्यतस्ततोह्यौचत्रयस्ताभ्यांबलात्पुनः ॥ शूद्रावेदंपठिष्यंतिब्राह्मणाःशूद्रकर्मिणः २१ क्षत्रियावैश्यकर्माणोवैश्याश्चशूद्रकर्मिणः ॥ प्र
तिग्रहंकरिष्यंतिचांडालस्यद्विजातयः २२ दरिद्राश्चभविष्यंतिहाहाभूताविचेतसः ॥ वदिष्यंतिचनमयागृहीतंधनमण्वपि ॥ २३ ॥ गृहीत्वापिचकृत्या
यथाचितारोधनंपरात् ॥ उत्कोचंचगृहीत्वैवतथासाक्ष्यंब्रुवंतिच २४ मतांनिंदांकरिष्यंतिमैत्रींचासद्भिरेवच ॥ वृथामांसस्यभक्ष्यंचकरिष्यंतिद्विजातयः ॥
॥ २५ ॥ उच्छेदःसज्जनानांस्यादितरेषांचवैभवम् ॥ हित्वादेवान्भविष्यंतिजनाःसर्वेतथैंद्रिकान् २६ ॥ भूतप्रेतपिशाचानांभजनेसक्तमानसाः ॥
वेषान्नानाविधान्कृत्वाभक्षयिष्यंतिवाडवाः २७ केचिच्चक्षत्रियाभिक्षांचरिष्यंत्यकुलोचितां ॥ व्रतानिनियमांश्चापिनाचरिष्यंतिकर्हिचित् २८ वर्णसंकरका
रीणिकर्ताकर्माणिभूजनः ॥ पतिव्रताभ्रष्टव्रताभविष्यंतिकलौयुगे २९ म्लेछप्रायाःसर्वलोकाःपरद्रव्यापहारिणः ॥ निर्दयाःकुपथासक्ताःसर्वदासत्यवर्जिताः
३० धरित्रीसस्यहीनाचरसहीनामहीरुहाः ॥ पंचमेवाथषष्ठेवावर्षेकन्याप्रसूयते ३१ षोडशाब्दपरंचायुर्भविष्यतितदायुगे ॥ तीर्थानिगुप्तरूपाणिदेवतायतना
निच ३२ एवंपापेप्रवृद्धेतुधर्मेविश्वार्थमात्रकः ॥ भविष्यंतितदादेवाउपवासपरायणाः ३३स्वधास्वाहावषट्कारैर्वर्जिताभयविह्वलाः ॥ यास्यंतिशरणंदेवंगजा
ननमनामयं ३४ स्तुतिंनानाविधांतस्यकरिष्यंतिनतिंबहु ॥ प्रार्थयिष्यंतिदेवेशंसर्वविघ्नविनाशनं ३५ एवंसर्वैर्विचार्यासौआविर्भावंकरिष्यति ॥ गजाननःशू
र्पकर्णोधूम्रवर्णोपिनामतः ३६ नीलमश्वंसमारुह्यखड्गहस्तोरुषाज्वलन् ॥ कल्पयिष्यतिसेनांसनानारूपांनिजेच्छया ३७शस्त्राणिचमहास्त्राणिकल्पयिष्यत्यय
लतः ॥ वधिष्यतिमहाम्लेछान्सेनयास्वेनतेजसा ३८ म्लेच्छभूतांस्तथालोकान्वधिष्यतितदाखिलान् ॥ लीनान्कंदरदेशेषुब्राह्मणान्वन्यभक्षिणः ३९समाना
य्यप्रपूज्यैतान्भूमिंदास्यतिदेवराट् ॥ सत्कर्मकारिणःसर्वान्विधास्यतिचसज्जनान् ४० तदाधर्ममयंविश्वंभविष्यतिकृतेयुगे ॥ एवंकृत्वाधूम्रवर्णस्ततोंतर्द्धान
मेष्यति ४१ एवंचतुर्युगेव्यासविघ्नेशस्यमहात्मनः ॥ कथितानिचनामानिरूपाणिचतवानघ ४२ कर्माण्यद्भुतरूपाणितस्यचोक्तानिसर्वशः ॥ येषांश्रवणमा
त्रेणमुच्यंतेसर्वजंतवः ४३ अन्यान्यस्यापिरूपाणिनवक्तुंशक्तिरस्तिमे ॥ यत्रवेदाश्चचत्वारोविकुंठास्तत्रकाकथा ४४ ममवामहीधस्यापिमहिम्नस्तस्यवर्णने
अनुष्ठानायगच्छत्वंव्यवसायंकरोम्यहम् ४५ ॥ भृगुरुवाच ॥ एवंश्रुत्वासोमकांतव्यासोब्रह्ममुखात्कथाम् ॥ अतिप्रीतमनाःप्राहसर्वपापप्रणाशिनीम् ४६
मुनिरुवाच ॥ नतृप्तिमधिगच्छामिश्रुत्वाख्यानंमहाद्भुतम् ॥ धन्योस्म्यनुग्रहीतोस्मियत्त्वयासर्वसंशयाः ४७ दूरीकृताःकथासंगाद्गणेशचरिताश्रयात् ॥
अमृतस्येवमेतृप्तिःश्रुत्वाश्रुत्वानजायते ४८ अस्यश्रवणमात्रेणजन्मजन्मांतरार्जितम् ॥ वृजिनंनाशमायातिसर्वेकामाभवंतिच ४९ पूर्वपुण्यबलादस्यश्रव
णंजायतेनृणाम् ॥ नश्राव्यंदुर्जनायेदंपुराणंसर्वसिद्धिदम् ५० एवमुक्त्वानमस्कृत्यपरिक्रम्यस्वयंभुवम् ॥ गृहीत्वाज्ञांययौव्यासस्तपसेवनमुत्तमम् ५१ यत्र
कंदफलान्यासन्नुत्तमानिजलानिच ॥ नवायुःप्रबलोयत्रनातपोनाग्निरेवच ५२ तत्रोपविष्टैकनिष्ठोजपन्नेकाक्षरंमनुम् ॥ व्यतीयुर्द्वादशाब्दानिमुनेस्तस्यतप